BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW ERIES, No 1260.

# तत्त्वचिन्तामणि दीधिति-विवृति




# TATTVACINTĀMANI DIDHITI-VIVRITI

BY

GADADHARA BHATTACHARYYA

WITH TATTVACINTAMANI AND DIDHITI

EDITED BY

MAHĀMAHOPĀDHYĀYA KAMAKHYANATHA TARKAVAGISA,

*Professor, Sanskrit College.*

VOLUME I. FASCICULUS I.




PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.
5, Nandakumar Choudhury's 2nd Lane.

AND PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL, 1, PARK STREET.

1910.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,
11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| Title | Rs. |
|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each ... ... | Rs. 1 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... ... .. | 1 |
| *Agni Purāṇa, Fasc. 6-14 @ /10/ each ... ... ... | 5 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each ... ... ... | 14 |
| Aitereya Lochana. ... ... ... ... ... | 2 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each ... ... ... | 2 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 @ 1/- ... ... ... | 1 |
| Aṣtasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 |
| *Atharvana Upanishad, Fasc 4-5 @ /10/ each ... ... ... | 1 |
| Atmatattaviveka, Fasc. I. @ /10/ each ... ... ... ... | 0 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... ... | 3 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-7; Vol. II. Fasc. 1-6 @ 1/ each ... ... ... ... | 13 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2, Vol 2, Fasc. 1 @ /10/ each ... ... | |
| Baudhāyana S'rauta Sūtra, Fasc. 1-3 Vol. II, Fasc 1-2 @ /10/ each ... | 3 |
| *Bhāmatī, Fasc. 4-8 @ /10/ each ... ... ... ... | 3 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-6; Vol. 2, Fasc. 1, @ /10 each ... | 4 |
| Baudhyostatrasangraha (Tib. & Sans.) ... ... ... | 2 |
| Brahma Sutra, Fasc. 1 @ /10/ each ... ... ... ... | 0 |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... ... ... ... | 2 |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... ... ... | 3 |
| Bodhicaryāvatāra of Çāntideva, Fasc. 1-5 @ /10/ each ... ... | 5 |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... ... ... | 0 |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... ... ... ... | 1 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... ... | 8 |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. I-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each ... ... ... | 14 |
| Ditto Vol. 6, Fasc. 1-3 @ 1/4/ each ... ... ... | 3 |
| Ditto Vol. VII, Fasc. 1-3 @ /10/ ... ... ... | 1 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc. 1-12 @ /10/ each... ... | 8 |
| *Caturvarga Chintāmaṇi, Vol. II, Fasc. 1-25; Vol. III. Part I, Fasc. 1-18. Part II, Fasc. 1-10. Vol. IV. Fasc. 1-6 @ /10/ each .. ... | 36 |
| Ditto Vol. 4, Fasc. 7, @ 1/4/ each ... ... ... | 1 |
| Ditto Vol. IV, Fasc. 8-9 @ /10/ ... ... ... | 1 |
| Çlockavartika, (English) Fasc. 1-7 @ 1/4/ each ... ... ... | 8 |
| *Çrauta Sūtra of Āpastamba, Fasc. 12-17 @ /10/ each ... ... | 3 |
| Ditto Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4, Vol. III, Fasc. 1-4; Vol 4, Fasc. 1 @ /10/ each ... ... | 10 |
| Çrī Bhāshyam, Fasc 1-3 @ /10/ each ... ... ... ... | 1 |
| Dāna Kriyā kaumudī, Fasc 1-2 @ /10/ each ... ... ... | 1 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc. 1-7 @ /10/ each ... ... | 4 |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each ... ... | 3 |
| Gobhiliya Grihya Sutra, Vol. I. @ /10/ each ... ... ... | 3 |
| Ditto Vol. II. Fasc. -2 @ 1/4/ each ... ... ... | 2 |
| Ditto (Appendix) Gobhila Parisista ... ... ... ... | 2 |
| Ditto Grihya Sangraha ... ... ... ... ... | 0 |
| Haralata ... ... ... ... ... ... ... | 1 |
| Karmapradiph, Fasc. I ... ... ... ... ... ... | 1 |
| Kāla Viveka, Fasc. 1-7 @ /10/ each ... ... ... ... | 4 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each ... ... | 17 |
| *Kūrma Purāṇa, Fasc. 3-9 @ /10/ each ... ... ... ... | 4 |



श्रीरामः

अनुमानखण्डस्य



# तत्त्वचिन्तामणिः ।

प्रत्यक्षोपजीवकत्वात् प्रत्यक्षानन्तरं बहुवादिसम्मतत्वा-
दुपमानात् प्रागनुमानं निरूप्यते ।

तत्त्वचिन्तामणिदीधितिः ।

ओं नमः सर्व्वभूतानि विष्टभ्य परितिष्ठते ।
अखण्डानन्दबोधाय पूर्णाय परमात्मने ॥

अध्ययन-भावनाभ्यां
सारं निर्णीय निखिलतन्त्राणाम् ।
दीधितिमधिचिन्तामणि
तनुते तार्किकशिरोमणिः श्रीमान् ॥

परजुष्टनयान्निवर्त्तमाना
मननास्वाद्यरसा विशुद्धबोधैः ।
रघुनाथकवेरपेतदोषा
कृतिरेषा विदुषां तनोतु मोदम् ॥

न्यायमधीते सर्व्वस्तनुते कुतुकान्निबन्धमप्यत्र ।
अस्य तु किमपि रहस्यं केचन विज्ञातुमीशते सुधियः ॥
मान्यान् प्रणम्य विहिताञ्जलिरेष भूयो-
भूयो विधाय विनयं विनिवेदयामि ।
दूष्यं वचो मम परं निपुणं विभाव्य (१)
भावावबोधविहितो न दुनोति दोषः ॥

---

गादाधरी विवृतिः ।

अभिवन्द्य मुहुः समादरात् पदपाथोजयुगं पुरद्विषः ।
विवृणोति गदाधरः सुधीरतिदुर्ब्बोधगिरः शिरोमणेः ॥

प्रारीप्सितग्रन्थसमाप्तिपरिपन्थिप्रत्यूहव्यूहविध्वंसपटीयसीं परमेश्वर-प्रणतिं शिष्यशिक्षार्थमादौ निबध्नाति, 'ओमिति, समस्तैरकारोकारमकारैः सन्धिवशेन प्रणवभावमावहद्भिरव्ययतया लुप्तचतुर्थीकैः प्रत्येकशक्त्युपस्थापितस्य वासुदेवादिदेवत्रयस्याभेदेन परमात्मनो विशेषणत्वमत्राभिहितम्। अत्र जगतः पालनादिकर्त्तृत्वं नाकारादिपदार्थतावच्छेदकमुद्देश्यतावच्छेदकस्य परमपदार्थोत्कर्षस्यापि तद्रूपतया अन्वयानुपपत्तेः (२)। अपि तु

---

(१) तथाच निपुणतरविभावनया दोषाः स्वयमेव यास्यन्तीति भावः।

(२) घटो घट इति वाक्यात् शाब्दबोधवारणाय उद्देश्यतावच्छेदक-विधेयतावच्छेदकयोरैक्ये शाब्दबोधस्याप्रामाणिकत्वमवश्यमङ्गीकरणीयं तथाच तद्वृत्तिविशेष्यतावच्छेदकतासम्बन्धेन शाब्दं प्रति विधेयतावच्छेदकभेदस्य हेतुत्वात् प्रकृते तन्नास्तीति भावः।

विग्रहविशेषवत्त्वमेव, पदार्थस्य परमात्मन एकत्वेऽपि पदार्थतावच्छेदकानां नारायणादिशरीराणां भेदो द्वन्द्वस्य साधुतामुपपादयति (१)। यद्यपि जातिविशेषावच्छिन्नशरीराणां स्वनिष्ठचेष्टानुकूलयत्नवत्त्वरूपपरम्परासम्बन्धेन प्रवृत्तिनिमित्ततापेक्षया धर्म्मान्तराविशेषितानामेव शरीरवृत्तिजातिविशेषाणाम् समवायेन तत्त्वमुचितं तथापि "सर्व्वं वेत्ति विष्णुः" इत्यादिप्रामाणिकप्रयोगानुरोधात् विष्ण्वादिपदस्यात्मनि शक्तेर्निरूढलक्षणाया वा आवश्यकत्वात् तत्पर्य्यायस्याकारादेरपि शरीरविशेषावच्छिन्नात्मपरता युज्यत एव, न तु तत्तत्स्थले शरीरपरत्वे योग्यता कथञ्चिन्निर्व्वहति शरीरस्य समवायेन ज्ञानाश्रयत्वविरहात्, ईश्वरबुद्धेर्व्याप्यवृत्तितया अवच्छेदकत्वस्य आख्यातार्थतास्वीकारेऽप्यप्रतीकारात्। स्वसमानाधिकरणप्रयत्नासाधारणकारणकचेष्टाश्रयत्वादेराख्यातार्थत्वे (२) गौरवात् शरीरविशेषा एव प्रणवार्थाः, तेषाञ्च निपातार्थतया भेदान्वय एव (३) परमात्मनीति तु न

---

(१) नील-घटयोरभेद इत्यत्र द्वन्द्वस्य साधुत्वनिर्व्वाहाय पदार्थभेदस्येव पदार्थतावच्छेदकभेदस्यापि द्वन्द्वसमासनिर्व्वाहकत्वमवश्यमुपगन्तव्यमिति तात्पर्य्यम्।

(२) प्रयत्नासाधारणकारणकत्वानिवेशे भगवत्प्रयत्नस्य वस्तुमात्रं प्रति साधारणकारणतया सर्व्वविषयकभगवज्ज्ञानसमानाधिकरणप्रयत्ननिष्ठसाधारणकारणताकचेष्टाश्रयत्वस्य भगवत इव पुरुषान्तरस्यापि सत्त्वात सर्व्वं वेत्ति विष्णुरिति प्रयोगस्येव सर्व्वं वेत्ति चैत्र इति प्रयोगस्य प्रामाण्यापत्तिः। प्रयत्नासाधारणकारणत्वञ्च चेष्टात्वावच्छिन्नकार्य्यतानिरूपितप्रयत्ननिष्ठकारणत्वमिति तादृशप्रयोगस्य न प्रामाण्यमापादनीयमिति सुधीभिर्विभाव्यम्।

(३) स्वनिष्ठचेष्टानुकूलप्रयत्नवत्त्वरूपभेदसम्बन्धेनान्वय एवेत्यर्थः।

साधु, ओमित्यस्याद्रव्यपरतायामेव "चादयोऽसत्त्वे" (१) इत्यादिना निपातत्वसम्भवात्। अनिपातत्वेऽव्ययत्वमेव कुत इति चेत्, स्वराद्यन्तर्गतत्वोपगमात् (२) विग्रहीतस्य(३) अकारादेरनव्ययत्वेऽपि समस्तस्य तथात्वं कल्प्यते बाधकविरहात्। ईश्वरस्य सर्गादिकर्त्तृत्वे ब्रह्मादीनां तथात्वबोधकानामागमानामपि प्रामाण्यमिति सूचयितुं तस्य ब्रह्माद्यभेदाभिधानम् इति न तद्वैयर्थ्यमाशङ्कनीयम्। वस्तुतस्तु शरीरविशेषानवच्छिन्न-भगवत्योमितिपदस्य रूढिः, "ॐ तत् सदिति निर्द्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति, "समस्तं व्यस्तं त्वां शरणद ! गृणात्योमितिपदमित्यादिबहुतरतत्साधकसत्त्वात् रूढेश्चावच्छेदकं जगत्कर्त्तृत्वमेव, एवञ्च ओमित्येव विशेष्यपदं तदन्यानि चतुर्थ्यन्तानि च सर्व्वाण्येव विशेषणपराणि(४)। नमःपदं स्वापकर्षबोधकप्रयोक्तृव्यापारार्थकं, तदेकदेशीभूतापकर्षान्वयि अवधित्वं अवधिमत्त्वं वा "नमःस्वस्तीत्यादिसूत्रानुशिष्टचतुर्थ्यर्थः, क्रियान्विततादृशार्थविवक्षायामेवापादानपञ्चमीप्रसक्त्या नमःपदार्थघटकापकर्षान्विततादृशार्थविवक्षायां विशेषतः षष्ठ्येव प्रसज्यते इति सर्व्वाश्चोपपदविभक्तयः (५)

---

(१) "असत्त्वे" अद्रव्यपरत्वे इत्यर्थः।

(२) तथाच निपाताभिन्नाव्ययस्यैव भेदसम्बन्धेनान्वय इति भावः।

(३) असमस्तस्येत्यर्थः।

(४) असति बाधके रूढ्यर्थो विशेष्यतयैव भासते इति नियमसङ्गीकृत्येदमुक्तम्।

(५) कारकभिन्नविभक्तय इत्यर्थः।

षष्ठ्यपवादिका इति न निरुध्यते। वस्तुतस्तु (१) स्वावधिकोत्कर्ष-वत्तया ज्ञापनं नमस्कारः तदेकदेशज्ञानान्वयि विषयत्वं विषयित्वं (२) वा चतुर्थ्यर्थः, गुरुं प्रणमतीत्यादौ तादृशज्ञानविषयतया गुरुप्रभृतेः कर्म्मत्वेऽपि प्रकृते ज्ञानस्य धात्वनुपस्थाप्यतया भगवतो न कर्म्मता, "नारायणं नमस्कृत्य" इत्यादौ नारायणादेः कर्म्मत्वं प्रयत्नेनोप-पादनीयम् (३)। नमस्करोति प्रणमतीत्यादौ समभिव्याहृतस्य कर्त्तुरेव स्वावधिकोत्कर्षबोधको व्यापारः प्रतीयते न तूच्चारयितु-रेव। प्रकृते केवलान्नमःपदात् प्रयोक्तुरेव तादृशव्यापारः प्रतीयते इति मदवधिकोत्कर्षवत्तया भगवज्ज्ञानानुकूलो मदीयो व्यापार-इत्याकारकः शाब्दबोधः। "विष्टम्भेऽरति, विष्टम्भो धृतिः, सा च

---

(१) ननूक्तक्रमेण प्रयोक्तृव्यापारस्य नमस्कारत्वे गुरुं नमस्करोतीत्यादौ का गतिः, एवं गुरुं प्रणमतीत्यादौ द्वितीयानुपपत्तिश्च गुरोर्धात्वर्थतावच्छेदकवत्त्वा-भावात् कर्म्मतानुपपत्तेरित्यत आह, 'वस्तुतस्त्विति'।

(२) विषयत्वस्य चतुर्थ्यर्थत्वे चैत्राय नमो न मैत्राय इति नञ्समभिव्याहार-स्थले मैत्रपदोत्तरचतुर्थ्यर्थविषयत्वस्य अभावो नञा ज्ञाने प्रतीयते तादृशाभावस्य विषयत्वनियामकनिरूपकत्वसंसर्गावच्छिन्नप्रतियोगिताकः अवश्यमुपेयः, परन्तु वृत्त्य-नियामकसंसर्गावच्छिन्नप्रतियोगिताकाभावानभ्युपगन्तृमते तादृशप्रयोगस्य प्रामाण्यं दुरुपपादनीयमिति विषयित्वस्य चतुर्थ्यर्थत्वानुसरणं तत्कल्पे विषयित्वनियामक-स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव तत्र ज्ञाने नञा प्रतीयत इति नानुपपत्तिगन्धोऽपि।

(३) प्रयत्नस्य "नारायणं नमस्कृत्य" इत्यादौ नमःपदं तात्पर्य्यग्राहकं कृधातुरेव उत्कर्षज्ञानानुकूलव्यापारार्थकः, द्वितीयया च धातूपस्थापितज्ञानान्वयि विषयित्वं प्रत्याय्यते। "स्वयम्भुवे नमस्कृत्य" इत्यादौ उत्कर्षवत्तया ज्ञानं नमःपदार्थः, अनु-कूलव्यापारो धात्वर्थः, धात्वनुपस्थापितज्ञानान्वयि विषयित्वं चतुर्थ्या प्रत्याय्यते, इति न तत्र द्वितीयाप्रसक्तिरित्याकारकः।

पतनविरोधिसंयोगः (१)। यथा विहायसि भ्राम्यतां विहङ्गमादीनां शरीरधारकप्रयत्नाधिष्ठानान्न पतनं तथा भूरादिलोकानां गुरुतराणामपि प्रयत्नवदीश्वरसंयोगादेव न तदिति (२) निरुक्तधृतिकर्त्तृत्वं भगवतोऽव्याहतमेव। पतनविरोधित्वं पतनानुत्पादप्रयोजकत्वम् एवञ्च धात्वर्थतावच्छेदकपतनानुत्पादवत्तया भूतानां कर्म्मता मुखं व्यादाय स्वपितीत्यत्रेव समानकालीनत्वमेव क्त्वाप्रत्ययार्थः, न तूत्तरकालीनत्वम्। भगवतो भूतधारकत्वम् "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य विभर्त्त्यव्यय ईश्वरः"॥ इत्याद्युपनिषदोऽपि प्रमाणयन्ति (३)। 'अखण्डेति, अत्र नित्यसुख-ज्ञानवते इति नित्यसुखज्ञानात्मकाय इति वा व्याख्यानं वेदान्तिनामेव शोभते, न तु नैयायिकानां तैर्नित्यसुखस्यात्मनि ज्ञान-सुखाभेदस्य वानभ्युपगमात्। अतस्तन्मते अखण्डा दुःखासङ्गिनः (४) आनन्दो यस्मात् सः अखण्डानन्दः एवम्भूत उपासनारूपो बोधो यस्येत्येव व्याख्येयम्। अथ वा ग्रन्थकृता नित्यसुखाभिव्यक्तिर्मुक्तिरिति भट्टमतस्य परिष्कृतत्वात् तदवलम्बेनैव एतदभिहितं तथाचाखण्डस्य नित्यस्य आनन्दस्य बोधः साक्षात्कारो यस्मादिति व्युत्पत्त्या भगवत उपासनाविषयतया मुक्तिप्रयोजकत्वमेवाखण्डेत्यादिना प्रतिपादितम्। 'पूर्णाय' तृप्ताय,

---

(१) सा च पतनविरोधिव्यापारः, स चेश्वरप्रयत्नस्तत्संयोगो वेति पां।

(२) तथाच तस्य संयोगस्य विजातीयसंयोगत्वेन प्रतिबन्धकत्वमिति भावः।

(३) प्रमापयन्तीति पा०।

(४) दुःखानवच्छेदकीभूतशरीरावच्छिन्न इत्यर्थः।

त्वमिव स्वीयसुखेच्छावदन्यत्वमिति (१) कुसुमाञ्जलिप्रकाशे भगवतोऽङ्गषट्कव्याख्यानावसरे (२) वर्द्धमानोपाध्यायैरभिहितम् । 'परमेति, परमत्वमुत्कर्षः, स चात्मान्तरावधिकः, सर्व्वविषयकनित्यज्ञानादिमत्त्वमेव ईश्वरस्य, एवञ्चार्थत एव तस्यात्मत्वलाभेऽपि आत्मपदसमभिव्याहारेणैव उक्तोत्कर्षपरतालाभ इति न तद्वैयर्थ्यम् । वस्तुतस्तु आत्मपदं ज्ञानावच्छिन्नस्य (३) वाचकं न तु सुखादिसमवायिकारणतावच्छेदकीभूतद्रव्यत्वव्याप्यजातिविशेषावच्छिन्नस्य, सुखादिसमवायिकारणतारहितस्य ईश्वरस्य तादृशजातिसत्त्वे मानाभावात्, सुखत्वावच्छिन्नं प्रति आत्मत्वेन हेतुताया अनभ्युपगमेऽपि (४) धर्म्मादिविरहेणानात्मनि सुखाद्यापादनासम्भवेन तादृशजाताविव युक्तेर्दुर्लभत्वाच्च (५) एवञ्च यथा परमसुन्दर इत्यादौ पदार्थतावच्छेदकसौन्दर्य्यादिगत उत्कर्षः परमपदेन

---

(१) स्वीयसुखेच्छावदन्यत्वमित्यत्र स्वीयत्वं सुखविशेषणं सुखविशिष्टेच्छावदन्यत्वम् इति फलितार्थः । इच्छायां सुखवैशिष्ट्यं स्वसमानाधिकरणत्व-स्वविषयकत्वोभयसम्बन्धेन, भगवदिच्छायाः सुखसमानाधिकरणत्वविरहात् न तस्य सुखविशिष्टेच्छावत्त्वमिति ।

(२) भगवतोऽङ्गषट्कञ्च, "सर्व्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अकुण्ठशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य" इति ॥

(३) अत सातत्यगमने इति गत्यर्थकधातोर्ज्ञानार्थकतायामविवादेन तदुत्तरौणादिकप्रत्ययसाध्यात्मपदेन ज्ञानवान् बोध्यत इति भावः ।

(४) परन्तु आत्मनः समवायिकारणत्वनिर्व्वाहाय द्रव्यत्वेन कारणत्वमवश्यमङ्गीकर्त्तव्यमिति ।

(५) न च "न वारे पत्युः कामाय पतिः प्रियो भवति किन्त्वात्मनस्तु कामाय" इत्यात्मपदगर्भितश्रुतिरेव तादृशजातिसत्त्वे मानमिति वाच्यम् । शक्यतावच्छेदकत्वेन जातिसिद्धेरपसिद्धान्तत्वात् ।

प्रत्याय्यते तथात्रापि आत्मपदार्थतावच्छेदकज्ञाननिष्ठः सर्व्वविषयकत्वादिरूपोत्कर्षः तत्पदेन बोध्यते इति। एवञ्च भगवतउत्कर्षप्रतिपादकत्वेन स्तुतिरूपतया अयमपि श्लोको मङ्गलरूपइति ध्येयम्। नन्वेकानन्तरमपराभिधाने सङ्गतिमत्त्वमपेक्षितं(१) न तु तत्प्रदर्शनं तथाच प्रत्यक्षोपजीवकत्वादित्यादिना कार्य्यत्वरूपसङ्गतिप्रदर्शनमफलम्। न च प्रत्यक्षानन्तरमनुमानं निरूप्यते इत्यभिधाने तत्पूर्व्वमेव किमेतन्न निरूपितमित्याकाङ्क्षोदयात् निरूपणपौर्व्वापर्य्यनियामकस्य प्रत्यक्षानुमानयोरुपजीव्योपजीवकभावस्य प्रदर्शनमावश्यकमिति वाच्यम्। निरूप्ययोरुपजीव्योपजीवकभावस्य निरूपणक्रमनियामकतायाः स्वयं दूषणीयतया स्वमते क्रमनियामकाकाङ्क्षया तदभिधानासङ्गतेरित्याशङ्कां परिजिहीर्षुः सङ्गतिप्रदर्शनस्य प्रत्यक्षानुमानग्रन्थैकवाक्यताप्रतिपत्तिप्रयोजनकत्वं निरूपणप्रतिज्ञाया निष्फलत्वशङ्कानिराचिकीर्षया तस्याः शिष्यावधानफलकत्वञ्च दर्शयति, 'पूर्व्वापरेत्यादि।

## चिन्तामणिदीधितिः।

पूर्व्वापरग्रन्थैकवाक्यताप्रतिपत्तये शिष्याणामवधानाय च सङ्गतिं प्रदर्शयन् अनुमाननिरूपणं प्रतिजानीते, 'प्रत्यक्षेत्यादि। अत्रोपजीव्योपजीवक-

(१) तथाच यन्निरूपणानन्तरं यन्निरूपणीयं भवति तत् तन्निरूपितसङ्गतिमद्भवतीति नियमात् तदपेक्षितमिति भावः।

भावः फलतः स्वरूपतश्च प्रत्यक्षफलस्यानुमित्यनुव्यवसायादेरनुमित्युपजीवकत्वेऽपि न सर्व्वा प्रत्यक्षप्रमितिस्तथा, अनुमितयस्तु सर्व्वाः साक्षात् परम्परया वा व्याप्त्यादिप्रत्यक्षोपजीविकाः पुरस्कृतश्चायमुपजीवकतोत्कर्षः ।

---

गादाधरी विवृतिः ।

'एकवाक्यत्वं' साकाङ्क्षत्वे सति एकार्थप्रतिपत्तिपरत्वं, तथाच जैमिनिसूत्रं, "अर्थैक्यादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्यात्" इति, (१) एकार्थप्रतिपादकयोर्घटोऽस्ति-कलसोऽस्तीत्यादिवाक्ययोरेकवाक्यतावारणाय साकाङ्क्षत्वनिवेशः, तदुत्थाप्याकाङ्क्षानिवर्त्तकत्व-तन्निवर्त्तनीयाकाङ्क्षोत्थापकत्वान्यतररूपवत्त्वमेव तत्साकाङ्क्षत्वं, प्रकृते च प्रत्यक्षग्रन्थोत्थाप्यायाः किमस्योपजीवकमित्याकारिकाया-उपजीवकज्ञानविषयिण्या आकाङ्क्षाया विषयसिद्धिसम्पादनेन निवर्त्तकत्वमनुमानग्रन्थस्येति निरुक्ततत्साकाङ्क्षतानिर्व्वाहः, भूतलं घटवदित्युक्ते को घट इत्याकाङ्क्षया प्रत्युक्तस्य कम्बुग्रीवादिमान् इत्युत्तरस्य तदेकवाक्यतावारणाय अर्थैक्यनिवेशः (२)। यद्यपि तादृशवाक्ययोरपि यं कञ्चिदर्थमादयार्थैक्यमस्ति, तथापि परस्परसहकारेण विशिष्टैकार्थप्रतिपादकत्वं दलद्वयार्थः। प्रकृते च

---

(१) "विभागे" पृथक्पठने इत्यर्थः। विभागे विच्छिद्य पठने इति कस्यचित् पुस्तकस्य पाठः।

(२) एकार्थमुख्यविशेष्यकप्रतिपत्तिप्रयोजकत्वं तदर्थः।

प्रत्यक्षपरिच्छेदानुमानपरिच्छेदयोर्मिलित्वा विशिष्टैकार्थविषयक-शाब्दबोधाजनकत्वेऽपि चत्वारि प्रमाणानीत्यप्रामाण्यशङ्काना-स्कन्दितनिश्चयं प्रति परिच्छेदचतुष्टयस्यैव कथञ्चिदुपयोगितया (१) तादृशप्रतिपत्तिप्रयोजकाभिप्रायविषयत्वरूपं (२) अर्थैक्यं निरा-बाधमेव। एतादृशैकवाक्यताघटकसाकाङ्क्षताज्ञानं सङ्गतिज्ञानाद्-भवति, यत् यदर्थसङ्गतार्थकं भवति तत् तत्साकाङ्क्षमिति व्याप्तिः सङ्गतिज्ञानस्य साकाङ्क्षत्वानुमितिसामग्रीघटकत्वात्, प्रत्यक्षोप-जीवकमित्यनभिधाय प्रत्यक्षोपजीवकत्वादिति पञ्चम्यन्ताभिधानं उपजीवकत्वस्य सङ्गतित्वलाभाय। प्रयोजकजिज्ञासाजनकज्ञान-विषयत्वरूपस्य परम्परया प्रयोजकत्वस्य हेतुपञ्चम्यर्थतया प्रत्यक्षा-नन्तरानुमानाभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपानु-मानसङ्गतित्वस्य लाभात्। वस्तुतो दर्शितपञ्चम्यर्थस्य जिज्ञासा-घटितत्वात् साकाङ्क्षतालाभायैव पञ्चम्यभिधानम्। अतएव सङ्गतित्वेन सङ्गतेरेकवाक्यताव्याप्यत्वे उपजीवकत्वत्वरूपतदवा-न्तररूपेणापि तद्व्याप्यतायाः आवश्यकत्वात् सङ्गतित्वज्ञानं विनापि एकवाक्यताप्रतिपत्तिसम्भवात् सङ्गतित्वलाभाय पञ्चम्य-न्ताभिधानमनर्थकमित्यपि निरस्तम्। न च पञ्चम्यर्थान्वयबलात् प्रत्यक्षोपजीवकत्वज्ञानजन्यजिज्ञासायाः अनुमानाभिधानप्रयोज-

---

(१) प्रत्यक्षादिचतुष्टयस्य प्रमाणत्वमनङ्गीकुर्व्वतां परेषां मतखण्डनेन उप-योगितयेत्यर्थः।

(२) चत्वारि प्रमाणानि इति प्रतिपत्तिप्रयोजकाभिप्रायविषयत्वरूपमित्यर्थः।

कतालाभेऽपि जिज्ञासायां प्रत्यक्षग्रन्थोत्थाप्यत्वस्य अनुमानग्रन्थ-निवर्त्तनीयत्वस्य चालाभान्निरुक्तसाकाङ्क्षत्वलाभो न सम्भवत्येवेति वाच्यम्। जिज्ञासायां प्रत्यक्षोपजीवकत्वज्ञानजन्यत्वलाभे तादृश-ज्ञानप्रयोजकीभूतप्रत्यक्षग्रन्थप्रयोज्यत्वस्यानुमानाभिधानप्रयोजक-त्वलाभे अनुमानप्रतिपादकग्रन्थनिवर्त्तनीयत्वस्य चार्थतो लाभात्। अनुमानग्रन्थे प्रत्यक्षग्रन्थैकवाक्यताप्रतिपत्तिश्च उभयोरेकग्रन्थान्त-र्गतत्वज्ञानसम्पादनेन, समस्तचिन्तामणिग्रन्थज्ञानाधीनप्रत्यक्षादि-चतुष्टयधर्म्मिकप्रमाणेतरभेदपरिच्छेदरूपफलविशेषेच्छावतोऽधीत-प्रत्यक्षपरिच्छेदस्य शिष्यस्य तादृशफलोपयोग्यनुमानपरिच्छेदा-ध्ययनप्रवृत्तावुपयुज्यते।

केचित्तु एकवाक्यत्वं निःश्रेयसरूपैकफलप्रयोजकत्वं, तत्प्रति-पत्तिश्चानुमानग्रन्थज्ञानधर्म्मिकमुक्तिरूपेष्टसाधनताज्ञानरूपा (१) शिष्यप्रवृत्तावुपयुज्यते। जायते च सा सङ्गतिमदर्थप्रतिपादकत्वरूप-हेतुमत्ताज्ञानजनकात् सङ्गतिप्रदर्शनादिति व्याकुर्व्वन्ति। तदसत्, उक्तहेतोस्तादृशैकवाक्यताशून्य-निःश्रेयसानुपयोगि-शास्त्रसाधारण-तया व्यभिचारित्वात्। निःश्रेयसत्वं परित्यज्य फलत्वरूपेण फलप्रवेशे फलस्योत्कटेच्छाप्रयोजकरूपविशेषाज्ञानात् प्रेक्षावत्प्रवृत्त्यनुपयोगि-तापत्तेः (२) एकफलकत्वस्य एकवाक्यतापदार्थताविरहाच्च।

---

(१) अनुमानग्रन्थो मुक्तिरूपेष्टसाधनताज्ञानविषय इत्याकारिका, यथा-श्रुतार्थत्यागश्च निरुक्तहेतुमत्यनुमानग्रन्थे साध्यरक्षार्थै।

(२) इच्छाविषयतावच्छेदकविशेषधर्म्मावच्छिन्नसाधनताज्ञानाधीनप्रवृत्तेरनुप-पत्तेरित्यर्थः। इदमत्रावधेयं, सामान्यतो व्यापकताज्ञानेपि फलस्य मुक्तित्वे लाघव-मितिलाघवज्ञानसहकारात् विशेषरूपेण मुक्तिसाधनताज्ञानमपि सम्भवतीति।

'शिष्याणामिति, 'अवधानं' अनुमाननिरूपणात्मकस्य "तत्र व्याप्तिविशिष्टेत्यादिप्रकृतशब्दस्य विशिष्य शुश्रूषा, निरूपणत्वेन सामान्यतस्तादृशशब्दे प्रमाणतत्त्वप्रतिपादकज्ञानविषयत्वावगतावपि विशिष्य तत्श्रवणे बुभुत्सितार्थप्रतिपादकत्वाग्रहात् (१) विशिष्य तत्शुश्रूषा न सम्भवतीति, (२) अनुमानमिदानीं निरूप्यते इति प्रतिज्ञाय तदभिधाने च विशिष्य प्रकृतनिरूपणे अनुमानविषयकत्वग्रहेण बुभुत्सितप्रमाणतत्त्वप्रतिपादकता प्रकृतशब्दश्रवणे विशिष्य गृह्यत इति तादृशशुश्रूषारूपावधानं निर्व्वहतीति तत्फलकत्वं प्रतिज्ञायाः तादृशावधानञ्च विशिष्य तत्श्रवणे शिष्यप्रवृत्तावुपयुज्यते, विरोधिन्याश्चाक्षुषादिसामग्र्या विघटनेन (३) शब्दश्रवण एव वा। न च सङ्गतिप्रदर्शनानुमाननिरूपणप्रतिज्ञयोः प्रत्येकमुक्तप्रयोजनद्वयान्वये चकारासङ्गतिरिति वाच्यम्। 'प्रत्यक्षोपजीवकत्वादित्यादिसमुदितवाक्यस्यैव प्रतिजानीत इति प्रतिज्ञापदेन विवक्षितत्वात्। अन्यथा 'प्रत्यक्षवित्यादीति क्रियाविशेषणान्वयायोगात्, एकपदार्थ एव तदुभयान्वयेन तत्सङ्गतेः। एकदेशस्यैकवाक्यताप्रतिपत्त्यादिफल-

---

(१) प्रमाणतत्त्वप्रतिपादकत्वाग्रहादित्यर्थः।

(२) यदनुमाननिरूपणं भवति तत् प्रमाणतत्त्वप्रतिपादकज्ञानविषयो भवतीति सामान्यतो ज्ञाने "व्याप्तिविशिष्टेत्यादिशब्दोऽपि अनुमाननिरूपणत्वेन भातः, किन्त्वेतच्छब्दत्वेन प्रमाणतत्त्वप्रतिपादकज्ञानविषयत्वं नावगतमिति विशिष्य तत्श्रवणे इच्छा न निर्व्वहतीति भावः।

(३) इच्छाघटितसामग्र्या बलवत्त्वादिति भावः।

त्वेनापि समुदाये तत्फलकत्वाबाधात्, सङ्गतिभिन्नांशप्रतिपादनद्वारा नैकवाक्यताप्रतिपादकत्वं उक्तप्रतिज्ञावाक्यस्य किन्तु सङ्गत्यंशप्रतिपादनद्वारेति तस्य सङ्गतिप्रदर्शनरूपताप्रतिपत्तये 'सङ्गतिं प्रदर्शयन्' इत्यभिहितम्।"धातुसम्बन्धे प्रत्ययाः"(१) इत्यनेन समभिव्याहृतक्रियासमानकालीनतायामनुशिष्टशतृपदात् सङ्गतिप्रदर्शन-प्रतिज्ञयोरेककालीनत्वलाभेनार्थतस्तदभेदप्रतीतिः । 'प्रतिजानीते' इति अव्यवहितोत्तरकालकर्त्तव्यतया बोधयतीत्यर्थः, लट्प्रत्ययस्य वर्त्तमानसामीप्यार्थकत्वादिति भावः ।

'प्रत्यक्षोपजीवकत्वादिति, पञ्चम्या ज्ञापकत्वरूपहेतुतापरत्वाभिमानेन निरूपणक्रमनियामकाकाङ्क्षया उपजीव्योपजीवकभावप्रदर्शनमिति साम्प्रदायिका वर्णयन्ति, तन्मतमेव प्रथमतोऽनुवर्त्तमानः फलीभूतप्रत्यक्षानुमितिप्रमयोः प्रत्यक्षानुमान-प्रमाणयोश्च कार्य्य-कारणभावस्य प्रमा-तत्करणनिरूपणक्रमनियामकतामाह, 'अत्रेति प्रत्यक्षानुमानग्रन्थपौर्व्वापर्य्ये इत्यर्थः, नियामक इति शेषः, नियामकत्वमेव वा सप्तम्यर्थः । 'फलतः' फलयोः, प्रत्यक्षानुमतिप्रमयोरिति यावत्, 'अत्र' अनयोः प्रत्यक्षानुमानयोरित्यर्थः, 'फलतः' फलघटितपरम्परासम्बन्धेन, 'स्वरूपतः' साक्षात् सम्बन्धेन, वर्त्तत इति शेषः । तथाच उभयथैव स निरूपणक्रमनियामकइति केचित् । 'अत्रेति इदं पदं प्रत्यक्षोपजीवकत्वादिति ग्रन्थ-

---

(१) धातुसम्बन्धे समभिव्याहृतक्रियासमानकालीनत्वरूपार्थे शतृप्रभृतयः प्रत्यया भवन्तीत्यर्थः ।

परं सप्तर्थम्यश्च प्रतिपाद्यत्वं, तथाच फलयोः प्रमाणयोश्च उपजीव्योपजीवकभावः क्रमनियामकतया ग्रन्थप्रतिपाद्य इत्यर्थः, उपजीव्यत्वस्य शब्दतः साक्षादलाभेऽपि उपजीवकतानिरूपकत्वेनार्थतस्तल्लाभान्न विरोध इत्यपरे। ननु प्रत्यक्षानुमित्योरुपजीव्योपजीवकभावस्य तन्निरूपणपौर्व्वापर्य्यनियामकता तदैव सम्भवति यद्युपजीवकत्वमानन्तर्य्याभिधानव्याप्यं भवेत्। व्याप्तिश्च यत् प्रत्यक्षोपजीवकं भवति तत् प्रत्यक्षनिरूपणाव्यवहितोत्तरनिरूपणविषय इति विशेषतः, यत् यदुपजीवकं भवति तत् तन्निरूपणाव्यवहितोत्तरनिरूपणविषयः इति सामान्यतो वा ग्राह्या, उभयत्र प्रत्यक्षानन्तरमनिरूपिते तदुपजीवकपदार्थान्तरे व्यभिचारः (१)। तदव्यवहितनिरूपणविषयत्वे सतीति (२) विशेषणं हेतौ निवेश्य तादृशव्यभिचारवारणेऽपि प्रथमे दृष्टान्ताभावः, व्यतिरेकदृष्टान्तः सुलभ इति चेत्, तदा अनुमानत्वमेव प्रत्यक्षनिरूपणानन्तरनिरूपणनियामकं किं नोच्यते अप्रयोजकत्वशङ्का पुनस्तुल्यैवेति द्वितीयपक्ष एवादरणीयः (३) तत्रापि अनुमित्युपजीवकस्य तदनुव्यवसाय-

---

(१) प्रत्यक्षानन्तरमनिरूपिते प्रत्यक्षजन्यसंस्काररूपपदार्थान्तरे व्यभिचार इत्यर्थः।

(२) साध्याविशेषस्य अप्रयोजत्वशङ्कायाश्च वारणायात्र उत्तरत्वमनिवेश्य अव्यवहितत्वमात्रं निवेशितं भट्टाचार्य्येण, निरूपणाव्यवहितत्वञ्च निरूपणविशिष्टत्वं, वैशिष्ट्यञ्च स्वोत्पत्त्यनधिकरणत्व-स्वध्वंसानधिकरणत्व-स्वप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वरूपत्रितयसम्बन्धेन। स्वोत्पत्तिक्षणस्य, स्वोत्तरतृतीयक्षणस्य, स्वपूर्व्वतृतीयक्षणस्य च वारणाय सम्बन्धत्रयं निवेशितमिति।

(३) सामान्यव्याप्तौ साधनसजातीये साध्यसजातीयव्याप्तिनिश्चयात् अनुमित्या-

तदात्मकोपनयादिजन्योपनीतप्रत्यक्षादेः तन्निरूपणाव्यवहितोत्तरम-निरूपणेन व्यभिचारो दुर्व्वार इत्याशङ्कां निराचिकीर्षुः प्रत्यक्ष-प्रमानिष्ठानुमित्युपजीवकतातो अनुमितिनिष्ठप्रत्यक्षोपजीवक-तायामानन्तर्य्याभिधानव्याप्यतावच्छेदकं विशेषमाह, 'प्रत्यक्ष-फलस्येति, 'तथा' साक्षात् परम्परया वा अनुमित्युपजीविका, 'अनुमितयस्त्विति, यादृशानुमितिकारणमनुमित्यादिरूपमेव तत्र साक्षात् प्रत्यक्षोपजीवकत्वासम्भवात् 'परम्परया वेति, तथाचोप-जीवकत्वमत्र जन्य-जन्यादिव्यावृत्तं कार्य्यत्वरूपं (१) न विवक्षितं अपि तु तत्साधारणं प्रयोज्यत्वमेवेति (२) न दोषः । 'अयं' निरूपणविषयतावच्छेदकप्रमाविभाजकधर्म्मावच्छिन्नत्वरूपः (३) उपजीवकतानिष्ठ उत्कर्षः, 'पुरस्कृतः' आनन्तर्य्याभिधान-प्रयोजकतावच्छेदकतया आदृत इत्यर्थः, त्वर्थेन चकारेणाविभाज-कावान्तररूपावच्छिन्नत्वस्य पुरस्कृतत्वं व्यवच्छिन्नं, तथाच प्रत्यक्ष-त्वावच्छेदेन प्रत्यक्षे नानुमित्युपजीवकता अस्तीति प्रत्यक्षं प्रागेव

---

धायकत्वमितिनियमात् एकविशेषस्थले व्यभिचारसंशयेपि विशेषान्तरस्थले व्याप्ति-निश्चयसम्भवेन तत्र व्यभिचारसंशयनिवृत्त्यर्थं अनुकूलतर्कापेक्षा नास्तीति द्वितीय-पक्षादरस्य तात्पर्य्यम् ।

(१) जन्य-जन्यादिव्यावृत्तं तत्कार्य्यत्वञ्च तन्निष्ठान्यथासिद्धत्वनिरूपकत्वे सति तद्व्याप्यत्वे सति च तन्निष्ठनियतपूर्व्ववर्त्तितानिरूपकत्वरूपम् ।

(२) जन्य-जन्यादिसाधारणं प्रयोज्यत्वञ्च तन्निष्ठनियतपूर्व्ववर्त्तितानिरूपक-त्वमात्रं स्वरूपसम्बन्धविशेषो वेति ।

(३) प्रमाविभाजकत्वञ्च प्रमात्वावान्तरधर्म्मप्रकारकज्ञानगोचरेच्छानिवर्त्तक-ज्ञानविषयतावच्छेदकत्वरूपम् ।

निरूपितं, तथाविधानुमितित्वावच्छेदेन चानुमितौ प्रत्यक्षोपजीवकत्वमस्तीति सा पश्चान्निरूपितेति भावः ।

---

चिन्तामणिदीधितिः ।

**यद्यपि सकलमेव प्रत्यक्षफलमुपजीवत्यदृष्टजननीं समय-मत्कर्त्तव्यतादिपरिच्छेदिकामनुमितिं, ईश्वर-प्रत्यक्षन्तु न फलम् ।**

---

गादाधरी विवृतिः ।

प्रत्यक्षेऽपि निरूप्यतावच्छेदकफलविभाजकधर्म्मावच्छेदेनादृष्ट-द्वारानुमितिप्रयोज्यत्वमस्तीत्याशङ्कते, 'यद्यपीति, 'अदृष्टजननीं' स्वजनकादृष्टप्रयोजिकां, 'समयः' पदसङ्केतः, 'मत्कर्त्तव्यता' स्वकृतिसाध्यता, (१) 'तत्परिच्छेदिकां' तद्विषयिनीं, शब्दाधी-नायामदृष्टजनकयागादिगोचरप्रवृत्तौ प्रवृत्तिपरवाक्याधीनवाक्यार्थ-बोधोऽपेक्षितः (२), तत्र चेदम्पदमत्रार्थे शक्तं शक्तिभ्रमाजन्य-लक्षणाग्रहाजन्यैतद्विषयकशाब्दबोधजनकत्वादित्यनुमानाधीनशक्ति-ग्रहोऽपेक्षितः (३) । अन्यत्र च (४) इदं मत्कर्त्तव्यं मत्कृतिं विना अनुत्पद्यमानत्वे सति मदिष्टसाधनत्वादित्याद्यनुमानाधीन-

---

(१) आदिपदेन मदिष्टसाधनत्वाद्युपपग्रहः । मदिष्टसाधनता च आदिपदाद् ग्राह्या इति मां ।

(२) स्वर्गकामोऽश्वमेधेन यजेतेत्यादिवाक्यं प्रवृत्तिपरम् ।

(३) अपभ्रंशे लाक्षणिकपदे च व्यभिचारवारणाय हेतौ अजन्तान्तविशे-षणद्वयम् ।

(४) शब्दानधीनप्रवृत्तावित्यर्थः ।

कृतिसाध्यताधीरपेक्षितेति प्रवृत्ति-द्वाराऽदृष्ट-प्रयोजिकानुऽमितिः जन्यमात्रं प्रत्येव प्रयोजिका अदृष्टस्य कार्य्यमात्रं प्रति हेतुत्वादिति भावः । नन्वेवमपि प्रमाविभाजकप्रत्यक्षत्वाश्रयस्य भगवत्प्रत्यक्षस्य नित्यतया अनुमित्यनुपजीवकत्वान्न निरूप्यतावच्छेदकधर्म्मावच्छेदेन प्रत्यक्षेऽनुमित्युपजीवत्वसम्भव इत्यत आह, 'ईश्वरेति, 'न फलमिति, तथाच तत्साधारणं प्रत्यक्षत्वं न फलविभाजकमतिप्रसक्तत्वात् अपि तु जन्यप्रत्यक्षत्वमेव तदेव निरूप्यतावच्छेदकं तदवच्छेदेन चानुमित्युपजीवकत्वमक्षतमेवेति भावः (१) ।

---

चिन्तामणिदीधितिः ।

**तथापि दृष्टद्वारकमिह तथात्वमादरणीयमितरस्याविनिगम्यत्वात् सर्वज्ञानुमितिकरणमिन्द्रियापेक्षोत्पत्तिकम् अनुमितिं भावयतोऽपीश्वरज्ञानस्य तत्करणतानिर्व्वाहकप्रत्यासत्तिविरहेणातत्त्वात्, सर्वं पुनरिन्द्रियं नानुमानाधीनजन्म मनः-श्रवणयोरजन्यत्वात् दृष्टद्वारा वा तथात्वमादरणीयम् । नचोत्पत्तिमदपीन्द्रियं दृष्टद्वारकमनुमानमपेक्षते ।**

---

(१) केचित्तु 'अयं' कार्य्यतावच्छेदकप्रमाविभाजकधर्म्मावच्छिन्नत्वरूप उपजीवकतानिष्ठोत्कर्षः, 'पुरस्कृतः' आनन्तर्य्याभिधानप्रयोजकतावच्छेदकतया आदृत इत्यर्थः । ननु नित्यानित्यसाधारणधर्म्मस्य कार्य्यतानवच्छेदकत्वात् जन्यप्रत्यक्षत्वमेव जन्यतावच्छेदकं, तथाच प्रत्यक्षेऽपि कार्य्यतावच्छेदकीभूतप्रमाविभाजकधर्म्मावच्छेदेनादृष्टद्वारा अनुमित्युपजीवकत्वमस्तीत्याशङ्कते, 'यद्यपीति, ननु नित्यानित्य-

## गादाधरी विवृतिः ।

'दृष्टद्वारकम्' दृष्टमात्रद्वारकम्, अदृष्टाद्वारकमिति यावत्, तेन दृष्टस्य यागादेरनुमितिद्वारत्वेऽपि न क्षतिः। अदृष्टाद्वारकत्वञ्च स्वजनकादृष्टजनकानिरूपितत्वं, स्वं हेतुमत्तयाभिमतं, 'तथात्वम्' उपजीवकत्वम्, 'इह' आनन्तर्य्याभिधाने, 'आदरणीयं' नियामकतया स्वीकरणीयं, तथाच (१) यत् स्वजनकादृष्टाजनकयन्निरूपितनिरूपणविषयतावच्छेदकप्रमितिविभाजकधर्म्मावच्छिन्नोपजीवकतावत् तत्तन्निरूपणाव्यवहितोत्तरनिरूपणविषय इत्येव व्याप्तिरादरणीया। तत्र च न व्यभिचारावकाश इति भावः। नन्वदृष्टद्वारकोपजीवकताया आनन्तर्य्याभिधाननियामकत्वमङ्गीकृत्य प्रत्यक्षमेव किं पश्चान्न निरूप्यते इत्यत आह, 'इतरस्येति अदृष्टद्वारकोपजीवकत्वस्येत्यर्थः, 'अविनिगम्यत्वात्' विनिगमनाया अविषयत्वात्, (२) तथाचादृष्टद्वारा प्रवृत्त्यौपयिकोपादानप्रत्यक्षो-

---

साधारणधर्म्मस्य कार्य्यतावच्छेदकत्वे क्षतिविरहात् प्रत्यक्षत्वमेव तादृशो धर्म्मः तथाच कथमुक्तधर्म्मावच्छेदेनानुमित्युपजीवकत्वसम्भव इत्यत आह, 'ईश्वरेति, 'न फलं' न तादृशप्रत्यक्षसाधारणप्रत्यक्षत्वं जन्यतावच्छेदकं, नित्यानित्यसाधारणधर्म्मस्य तथात्वे अपसिद्धान्तप्रसङ्गात् तथाच जन्यप्रत्यक्षत्वमेव कार्य्यतावच्छेदकं तदवच्छेदेनादृष्टद्वारा अनुमित्युपजीवकत्वं सम्भवतीति भावः इति प्राहुः। इति कस्मिंश्चित् पुस्तके अधिकः पाठो वर्त्तते।

(१) पूर्व्वोक्तार्थे निरूपितत्वांशस्याधिक्यात् तत्परित्यागेन नञ्व्यत्यासेन यत्पदार्थे तादृशादृष्टाजनकत्वं विशेषयन् व्याप्तिमाह, तथाचेत्यादिना, फलतोऽदृष्टद्वित्तिजनकत्वाप्रयोज्यत्वमेव उपजीवकतायां देयमतोऽनुमितिजनकादृष्टाजनकत्वस्य प्रत्यक्षेऽसत्त्वेऽपि न दोषः।

(२) एकतरपक्षपातिनी युक्तिर्विनिगमना, तदभावादित्यर्थः।

पजीवकताया अनुमितौ सत्त्वेनादृष्टद्वारकोपजीवकत्वस्य तुल्यतया आनन्तर्य्याभिधाननियामकत्वं न सम्भवतीति भावः। प्रत्यक्ष-प्रमाणस्य चक्षुरादेरप्यदृष्टद्वारा समयादिपरिच्छेदकानुमानोप-जीवकत्वात् स्वरूपनिष्ठोपजीवकतायाः कथमानन्तर्य्याभिधान-नियामकत्वमित्याशङ्कां परिजिहीर्षुरनुमाननिष्ठोपजीवकतायां विशेषं दर्शयति, 'सर्व्वमिति, यत्प्रामाण्यं स्वनिष्ठप्रामाण्यग्रहार्थं यत्प्रमाणान्तरमपेक्षते तदपि तदुपजीवकमुच्यते, प्रकृते च तादृशोपजीवकत्वमविवक्षितं नित्येनापीन्द्रियेण प्रामाण्यग्रहार्थ-मनुमानापेक्षणादिति स्वोत्पत्तौ तदपेक्षितस्वरूपमुपजीवकत्व-मेवेति स्फुटीकर्त्तुं इन्द्रियोपजीवकमित्यनभिधाय 'इन्द्रियापेक्षो-त्पत्तिकमित्यभिहितम् (१)। एतावता(२) एतदेव परीक्षाकृता शङ्कोत्तरभावेन यदभिहितं तत् स्वाभिधानसौष्ठवमादर्शितम् (३)। एवञ्च निरूपणीयतावच्छेदकानुमितिकरणत्वादिरूपप्रमाणविभा-जकरूपावच्छेदेनोपजीवकत्वमेवानन्तर्य्याभिधाननियामकं वाच्य-मित्याशयः। नन्वनुमितिं प्रति भगवज्ज्ञानस्योपादानप्रत्यक्ष-त्वेन (४) व्याप्तिज्ञानत्वेन च कारणत्वात्तदप्यनुमितिकरणम्

---

(१) तथाच यत् यदपेक्षोत्पत्तिकं भवति तत् तन्निरूपणानन्तरं निरूपण-विषयो भवतीत्येव व्याप्तिरादरणीयेति भावः।

(२) ग्रन्थेनेति शेषः।

(३) दीधितिकृतेति शेषः।

(४) समवायेन जन्यत्वावच्छिन्नं प्रति विषयतासम्बन्धेन उपादानप्रत्यक्षत्वेन हेतुत्वात् उपादानप्रत्यक्षविधया ईश्वरज्ञानमपि हेतुः ईश्वरज्ञानस्य सर्व्वविषयक-त्वात्। उपादानं समवायिकारणमिति भावः।

अथ च नित्यतया प्रत्यक्षानुपजीवकम् इति कथमनुमितिकरण-त्वावच्छेदेन प्रत्यक्षोपजीवकतेत्याशङ्कया तस्यानुमित्यसाधारण-कारणत्वाभावं व्यवस्थापयति, 'अनुमितिमिति, 'भावयतोऽपि' उपादानप्रत्यक्षविधया जनयतोऽपि, 'तत्करणतेति अनुमितित्वाव-च्छिन्ननिरूपितकरणतानिर्व्वाहकतत्समवायिसमवेतत्वरूपप्रत्यास--त्तिविरहेण इत्यर्थः। 'अतत्त्वात्' अनुमितित्वावच्छिन्नाकरण-त्वात्। अयमभिप्रायः प्रत्यक्षानुमानोपमान-शब्दाः प्रमाणा-नीत्यत्रात्म-शरीरादिव्यावृत्तं प्रमित्यसाधारणकरणत्वमेव प्रमाण-पदेन विवक्षितं तच्च प्रमितिविभाजकधर्म्मावच्छिन्नकरणत्वम्। एवञ्चानुमानपदेनापि अनुमितित्वावच्छिन्नकरणत्वमेव विवक्षितं तदेव च विभाजकम्, ईश्वरज्ञानञ्च न तथा, तथाहि फलायोग-व्यवच्छिन्नव्यापारवत्कारणत्वं करणत्वं न तु कारणत्वमात्रं, तथासति छिदानुपधायककुठारादिव्यक्तेरपि तत्करणताप्रसङ्गेन तत्कुठारेण छिनत्तीति प्रयोगापत्तेः। तदर्थञ्च स्वनिरूपककार्य्य-तावच्छेदकसम्बन्धेन कार्य्याधिकरणे तत्कार्य्योपधायकव्यापारा-व्यवहितप्राक्क्षणावच्छेदेन स्वावच्छेदकसम्बन्धेन वर्त्तते यत्तद्-वृत्तित्वविशिष्टकारणत्वं (१), स्वं कारणता, इत्यञ्च ईश्वरज्ञानस्य

---

(१) अत्रेदं बोध्यं, चक्षुरादेः प्रत्यक्षकारणतास्थले चक्षुरादेः केन सम्बन्धेन कार्य्य-कारणभावः। यदि च द्रव्यचाक्षुषत्वावच्छिन्नं प्रति संयोगेन चक्षुषो हेतुत्वं लौकिकविषयत्वञ्च कार्य्यस्य सम्बन्धस्तदा न करणत्वनिर्व्वाहः चाक्षुषोपधायक-व्यापाराव्यवहितप्राक्कालावच्छेदेन संयोगसम्बन्धेन चक्षुषो द्रव्येऽवर्त्तमानत्वात्। न च निर्व्विकल्पकद्वारापि चक्षुषो जनकत्वसम्भवात् निर्व्विकल्पकरूपव्यापाराव्यव-हितप्राक्कालावच्छेदेन द्रव्ये चक्षुषो वर्त्तमानतया नानुपपत्तिरिति वाच्यम्। एव-

या उपादानप्रत्यक्षविषया कारणता तदवच्छेदकविषयतासम्ब-न्धेन तस्यानुमितिसमवायिनि वृत्तावपि तस्या जन्यत्वावच्छिन्न-निरूपितायाः अनुमितित्वावच्छिन्नानिरूपितत्वात् अनुमिति-त्वावच्छिन्ननिरूपिता च या व्याप्तिज्ञानत्वावच्छिन्नकारणता

मपि निर्व्विकल्पकं प्रति चक्षुषोऽकारणत्वापत्तेः। यदि च लौकिकालौकिकचाक्षुष-सामान्यं प्रति चक्षुषो हेतुत्वमतेपि तत्र कारणस्य कालिकः सम्बन्धः कार्य्यस्याव्यव-हितपूर्व्वत्वं, तदापि न करणत्वनिर्व्वाहः, स्वनिरूपितकार्य्यतावच्छेदकसम्बन्धेन कार्य्याधिकरणे पूर्व्वक्षणे कार्य्योपधायकसंयोगरूपव्यापाराव्यवहितपूर्व्वकालाव-च्छेदेन कारणस्यासत्वात्। एवं कुठारेपि छिदाकरणत्वमनुपपन्नं तत्रापि संयोग-रूपव्यापाराव्यवहितप्राक्कालावच्छेदेन कुठारादेः काष्ठादावसत्त्वात् कालिकसम्बन्धे-नापि कार्य्यपूर्व्वक्षणे व्यापाराव्यवहितप्राक्कालावच्छेदेन कुठारासत्त्वाच्च इति चेदत्र केचित्, चक्षुरादावव्यवहितपूर्व्वत्व-कालिकसम्बन्धाभ्यां कार्य्य-कारणभावः। तत्राव्यवहितपूर्व्वत्वञ्च तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगित्वं, तच्च स्थूलकाल-वृत्त्यपि, प्रतियोगिवैयधिकरण्यघटितव्यापकत्वञ्च कारणत्वघटकं, एवञ्च कार्य्याधि-करणे स्थूलकाले संयोगरूपव्यापाराव्यवहितप्राक्कालावच्छेदेनापि चक्षुरादेर्वृत्ति-तया न करणत्वहानिः। एवं कुठारस्थलेपि बोध्यमित्याहुः।

परे तु समवायेन चाक्षुषं प्रति स्वजनकादृष्टवत्त्वसम्बन्धेन चक्षुषो हेतुत्वं, तथाच तादृशसम्बन्धेनात्मनि व्यापाराव्यवहितप्राक्कालावच्छेदेन चक्षुषो वर्त्तमानतया चक्षुषो न करणत्वहानिः, कुठारस्थले च संयोगेन हेतुता, कुठारसंयोगोत्तरोत्पन्न-क्रियानन्तरजातावयवविभाग एव छिदापदार्थः, एवञ्च कार्य्योपधायकव्यापारः क्रिया, तत्पूर्व्वकाले संयोगेन कुठारादेः सत्त्वान्नानुपपत्तिः। यद्यपि कार्य्योप-धायकव्यापाराव्यवहितप्राक्कालावच्छेदेन व्यापाराधिकरणवृत्तित्वनिवेशेनैवानुमि-त्युपधायकपरामर्शसामानाधिकरण्यस्य परमेश्वरीयव्याप्तिज्ञानसम्बन्धत्वनिर्व्वाहे किं कुसृष्ट्यादरेणेति, तथापि तादृशव्यापारसामानाधिकरण्यसम्बन्धविशेषानियान्त्रित-त्वानुरोधेनैतावान् प्रयासः। न च व्यापारनिष्ठकार्य्यतावच्छेदकसम्बन्धेन व्यापारा-धिकरणे तादृशकारणतावच्छेदकसम्बन्धेन वर्त्तमानत्वं विवक्षणीयमिति वाच्यम्। तथा सति उपादानप्रत्यक्षविषया जनकत्ववारणाय अनुमितित्वावच्छिन्ननिरूपित-

तदवच्छेदकसमवायसम्बन्धेन तस्यानुमितिसमवायिन्यस्मदाद्यात्मन्यवृत्तेर्नानुमितित्वावच्छिन्नकारणत्वमिति, तथाच तादृशकरणत्वावच्छेदेन प्रत्यक्षप्रमाणोपजीवकत्वमक्षतमेवेति एवं जन्यज्ञानत्वावच्छिन्नकरणस्य मनःप्रभृतेः प्रत्यक्षानुपजीवकत्वेपि न क्षतिः, उक्तरीत्या तस्याप्यनुमितित्वावच्छिन्नाकरणत्वात् ।

केचित्तु प्रमाणतावच्छेदकधर्म्मावच्छिन्नोपजीवकत्वस्य आनन्तर्य्याभिधानप्रयोजकत्वाभिमानेन ईश्वरज्ञानस्य कार्य्याधिकरणाप्रत्यासन्नत्वेनाकरणत्वेपि अनुमितिकरणतावच्छेदकव्याप्तिज्ञानत्ववत्तया निरुक्तोपजीवकत्वस्यानन्तराभिधाननियामकतानुपपत्तिरिति दूर्व्वपक्षयन्ति, नित्यस्येत्यादिनियमस्यानुरोधेन(१) जन्यव्याप्तिज्ञान-

---

जनकताया विवक्षणीयतया फलसामानाधिकरण्यप्रवेशस्यावश्यकतया एतावान् प्रयास इति ध्येयमित्याहुः ।

अत्र केचित् समादधिरे, कुठारेण छिनत्तीत्यादौ कुठारादेः करणत्वानुपपत्तिः, तादृशच्छिदोपहितकुठारादिसंयोगाव्यवहितप्राक्क्षणावच्छेदेन तादृशच्छिदाधिकरणे वृक्षादौ संयोगसम्बन्धेन कुठारादेरवृत्तेरिति चेत्, न, प्रथमसंयोगस्य छिदानुपहितत्वात् । तादृशच्छिदात्वावच्छिन्नं प्रति कालिकसम्बन्धेनैव वा कुठारादित्वेन कारणत्वात् कुठारादिसंयोगत्वेन कारणत्वान्तरकल्पनादेव व्यभिचारविरहादिति ध्येयम् ।

नवीनास्तु अत्राव्यवहितप्राक्क्षणत्वं उत्पत्तिक्षणसाधारणमवश्यं वाच्यं, अन्यथा चाक्षुषादिव्यापारचक्षुःसंयोगाव्यवहितप्राक्क्षणावच्छेदेन स्वावच्छेदकीभूतसंयोगेन चक्षुषोऽवर्त्तमानत्वात् तत्राव्याप्त्यापत्तिः स्मरणात्मकपरामर्शजन्यानुमितिकरणेऽव्याप्तिश्च । तच्च तादृशव्यापारप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वे सति तादृशव्यापाराधिकरणसमयध्वंसानधिकरणत्वं, तदुत्पत्तिक्षणोत्पत्तिकध्वंसप्रतियोगिक्षणोत्पत्तिकक्षतिमत्त्वं वा इति न कोपि दोष इति प्राहुः ।

(१) नित्यस्य स्वरूपयोग्यत्वे फलावश्यम्भाव इति नियमानुरोधेनेत्यर्थः ।

त्वमेवानुमितिकारणतावच्छेदकं, 'अतत्त्वादित्यस्य अनुमितिकरण-
तावच्छेदकरूपत्वाभावादित्यर्थः, प्रत्यासत्तिघटितफलोपधायक-
ताया जन्यत्वविशिष्टताद्दशरूपव्यापकतया तदभावस्य ताद्दशरूपा-
भावहेतुता इति समादधति च। तदसत्, उक्तरीत्यैव साम-
ञ्जस्यात् ।

'सर्व्वं पुनरिति, तथाच प्रत्यक्षत्वावच्छिन्नकारणत्वावच्छेदेन
नानुमानोपजीवकत्वमिति नानुमानानन्तरम् प्रत्यक्षनिरूपणा-
पत्तिरितिभावः । 'नानुमानोपजीवकमिति परित्यज्य नानुमाना-
धीनजन्मेत्यभिधाने वीजं पूर्व्वोपदर्शितमेव । अनुमितिस्वरूपयोग्य-
मात्रस्य तत्कारणत्वमभ्युपेत्याद्दष्टद्वारकोजीवकत्वस्यानन्तर्य्याभिधान-
नियामकत्वामङ्गीकरोति, 'द्दष्टद्वारा वेति, तथाच ईश्वरज्ञानस्यानु-
मितिकरणत्वेपि न क्षतिः, निरूप्यतावच्छेदकसामानाधिकरण्ये-
नाऽद्दष्टाद्वारकोपजीवकताया एवानन्तर्य्याभिधाननियामकत्वोप-
गमात् यावत्तु अनुमितिकरणेषु प्रत्यक्षोपजीवकताविरहेऽपि क्षति-
विरहात् । 'न चोत्पत्तिसदपीति, यद्यपि चक्षुर्घर्षणप्रवृत्त्यौ-
पयिकमनुमानं खण्डचक्षुष्यद्दष्टमद्वारीकृत्यैव महाचक्षुर्नाशकतद-
वयवविभागानुकूलावयवक्रियाजनकघर्षणसम्पादनेन प्रयोजकं
भवति तथापि इदानीं जन्यत्वरूपस्य उपजीवकत्वस्यैव आदरणीय-
तया खण्डचक्षुषस्यानुमाननिष्ठान्यथासिद्धिनिरूपकत्वेन तज्जन्यता-
विरहान्नातिप्रसङ्गः । एवञ्चाद्दष्टद्वारकस्य प्रवर्त्तकानुमानस्यान्यथा-
सिद्धतया चक्षुराद्यहेतुत्वेऽपीश्वरीयव्याप्तिज्ञानरूपानुमाननिरूपित-
चक्षुरादिनिष्ठजन्यतावारणायैव स्वजनकाद्दष्टजनकानिरूपितत्वात्म-

कमदृष्टाद्वारकत्वमुपजीवकताविशेषणमुपगन्तव्यमिति ध्येयम्। अथवा 'पुरस्कृतश्चायमित्यादिग्रन्थ एवं व्याख्येयः, 'अयं' निरूप्यतावच्छेदकावच्छिन्नत्वरूपोत्कर्षः पुरस्कृतः फलस्य स्वरूपस्य चानन्तर्य्याभिधानप्रयोजकतावच्छेदकतया आदृतः, एवञ्च प्रमितिविभाजकधर्म्मावच्छिन्नत्वस्य विशिष्यानिवेशात् दृष्टान्तसौलभ्यमपि बोध्यम्। निरूप्यतावच्छेदकञ्च सर्व्वत्र विभाजकरूपमेव, येन रूपेण विभागः कृतस्तद्रूपावच्छिन्नस्यैव लक्षणादेराकाङ्क्षितत्वात्।'यद्यपीत्यादिकं पूर्व्ववत्। ननु फलस्यानुमितेर्निरूप्यतावच्छेदकानुमितित्वावच्छेदेन प्रत्यक्षफलोपजीवकत्वेऽपि स्वरूपेऽनुमितिकरणे तादृशप्रत्यक्षप्रमाणोपजीवकत्वमसिद्धम् ईश्वरज्ञानस्यापि व्याप्तिज्ञानत्वेनानुमितिकरणत्वात् तस्य च नित्यतया अनुपजीव्रकत्वादतः प्रमाणस्यानन्तराभिधाने विभाजधर्म्मसमानाधिकरणमुपजीवकत्वमेव नियामकं वाच्यं, तच्च न सम्भवति चक्षुरादौ दीपदानादिगोचरप्रवृत्त्यौपयिकानुमानोपजीवकताया अदृष्टाद्वारकत्वविशेषणेन व्यावृत्तावपि खण्डचक्षुरादिनिष्ठायाः चक्षुर्घर्षणादिप्रवृत्त्यौपयिकानुमाननिरूपितमहाचक्षुर्नाशादिद्वारकोपजीवकताया-अदृष्टाद्वारकतया निरुक्तोपजीवकतायाश्चानन्तराभिधानव्यभिचारित्वादित्याशङ्कां अनुमितिं प्रति ईश्वरज्ञानस्य करणत्वनिराकरणेनानुमितिकरणत्वावच्छिन्ने प्रत्यक्षप्रमाणोपजीवकतां व्यवस्थापयन्निराकुरुते, 'सर्व्वमित्यादिना, 'अनुमितिमित्यादेः पूर्व्वोपदर्शित एवार्थः, तथाच निरूप्यताच्छेदकरूपावच्छिन्नोपजीवकत्वमेव सर्व्वत्रानन्तराभिधानप्रयोजकमिति भावः। एतादृशो-

पजीवकत्वस्य प्रत्यक्षेऽसत्त्वं दर्शयन् शङ्कितव्यभिचारविरहं स्फुटयति, 'सर्व्वं पुनरिन्द्रियमिति, 'मनः-श्रवणयोरजन्यत्वादिति, तथाच प्रत्यक्षप्रमितिकरणत्वावच्छेदेन अविशेषितमुपजीवकत्वमेव नास्ति सुतरामेवादृष्टाद्वारकत्वविशेषितं तत्। तादृशस्य जन्येऽपीन्द्रिये क्वचिदेव (१) सत्त्वादिति भावः। यदि च परमेश्वरज्ञानस्यापि स्वरूपयोग्यतामात्रेण करणत्वमुपेयते, तदा स्वरूपेऽवच्छेदकावच्छेदेन उपजीवकत्वमसिद्धमिति अन्यादृशमेवोपजीवकत्वम् (२) अनन्तराभिधानविषयत्वनियामकं वाच्यं तच्चानुमाननिरूपितमदृष्टद्वारा प्रत्यक्षेऽक्षतमिति व्यभिचार इत्याशयेनाह, 'दृष्टद्वारा वेति स्वरूपनिष्ठमदृष्टाद्वारकं प्रयोज्यव्यावृत्तं कार्य्यत्वरूपमुपजीवकत्वमेवादरणीयमित्यर्थः। चक्षुर्घर्षणादिप्रवृत्त्यौपयिकानुमानस्य चान्यथासिद्धतया चक्षुरादिषु न तत्कार्य्यत्वमिति भावः।

---

चिन्तामणिदीधितिः।

**अथोपजीव्यं निरूप्यैवोपजीवकं निरूप्यतइति न नियमः क्वचित्कार्य्यं निरूप्यापि कारणनिरूपणादिति चेत्, किन्नातः, न हि सङ्गतिरनन्तराभिधानव्याप्ता, आनन्तर्य्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयो-**

---

(१) खण्डचक्षुर्व्यक्तावेवेत्यर्थः।

(२) सामानाधिकरण्येनोपजीवकत्वमित्यर्थः। क्वचित् तथैव पाठो वर्त्तते।

ह्यर्थः सङ्गतिः, जायते च कार्य्ये कारणे वा ज्ञाते कारणत्वस्य कार्य्यत्वस्य वा ज्ञानात्किमस्य कारणं कार्य्यं वेति जिज्ञासा अतस्तयोर्द्वयोरपि सङ्गतित्वमित्यस्योपजीवकतायास्तुल्यत्वेऽपि न क्षतिरिति मन्तव्यम् ।

---

गादाधरी विवृतिः ।

एतावता उपजीवकत्वस्य आनन्तार्य्याभिधाननियामकतापक्षं किञ्चित् परिस्कृत्य तं परित्यक्तुकामोदर्शितसामान्यनियमे व्यभिचारमाशङ्कते, 'अथेति, उपजीवकमुपजीव्यनिरूपणानन्तरनिरूपणविषयएवेति नियमोनेत्यर्थः, 'कार्य्यं निरूप्यापीति कारणनिरूपणात् प्रागेव कार्य्यनिरूपणादित्यर्थः। यथा अत्रैव ग्रन्थेऽनुमानात् प्रागेवानुमितिर्निरूपितेति भावः। व्यभिचारस्यान्ततस्तत्तदुपजीवकताभेदात्मकविशेषणान्तरप्रक्षेपेण वारणसम्भवेऽपि अप्रयोजकत्वं दुर्व्वारमेवानुमानात् पूर्व्वमेवानुमितेरिव बाधकाभावेन प्रत्यक्षात् प्रागेवानुमानस्य निरूपणसम्भवात् तावतापि निरूपणीययोस्तयोरुपजीव्योपजीवकभावाव्याघातादिति हृदयम्। ज्ञापकत्वरूपहेतुतायाः प्रत्यक्षोपजीवकत्वादिति पक्षस्यर्थतोपगम एव दर्शितनियमाभावे विरुध्यते स्वज्ञानजन्यजिज्ञासाद्वारा प्रयोजकत्वरूपं हेतुत्वञ्च नियमाभावेप्यविरुद्धमेवेत्याशयेन समाधत्ते 'किञ्चात इति, 'अतः' दर्शितनियमभावात्। किमनिष्टं न किञ्चिदपीत्यर्थः। नन्वेवमुपजीवकत्वस्य सङ्गतित्वानुपपत्तिः सामान्यतोऽनन्तराभिधानव्याप्यस्यैव सङ्गतित्वादि-

त्यत आह 'नहीति, सङ्गतित्वं अनन्तराभिधाननिरूपितदर्शित-प्रकारसामान्यव्याप्तिनिर्व्वाह्यं यतो नेत्यर्थः, अत्र एतदेव कुत इत्याकाङ्क्षायां यद्यदुपजीव्यं भवति तत्तन्निरूपणानन्तरनिरूपणविषय-इति व्याप्तिविरहेऽपि उपजीव्यतायाः सङ्गतित्वमभिधास्यमान-स्तस्याः (१) सङ्गतित्वाभावस्वीकारनिराकरणाय तत्साधारण-सङ्गतिलक्षणमाह, 'आनन्तर्य्येति, 'हि' हेतौ, अनन्तरमेवानन्तर्य्यं चातुर्व्वर्ण्यादित्वात् स्वार्थे ष्यञ्, यन्निरूपणाव्यवहितोत्तरनिरूपण-प्रयोजिका या जिज्ञासा तज्जनकज्ञानविषयीभूतो यो धर्म्मः स तन्नि-रूपितसङ्गतिरित्यर्थः, उपजीवकत्वादावेतल्लक्षणसङ्गमनप्रकारो ग्रन्थकृताग्रे दर्शयिष्यते, प्रयोजकान्तानुपादाने सङ्गतित्वस्य निरू-पकविशेषनियन्त्रितत्वानुपपत्तिः, कथञ्चित्तदुपपादाने (२) यथा अस्य किमुपजीवकमित्यादिजिज्ञासां प्रत्युपजीवकत्वज्ञानं हेतुः तथा घटादिजिज्ञासायां घटत्वादिधीस्तथेति तद्विषयघटत्वादेः प्रत्यक्ष-सङ्गतित्ववारणाय 'प्रयोजकान्तम्। अथ यत्र प्रत्यक्षादौ निरूपिते स्वसामग्रीवशात् को घट इति जिज्ञासया केनचिद्घटो निरूपित-स्तात्दृशनिरूपणप्रयोजकतथाविधजिज्ञासामादाय घटत्वादावपि प्रत्यक्षसङ्गतित्वप्रसङ्गः प्रयोजकान्तमुपादायापि न शक्यते वारयितुं, यदि चैवं सति तत्र घटत्वादेः सङ्गतित्वमिष्टमेव प्रसङ्गमध्ये तस्या-न्तर्भावनीयत्वाच्च न सङ्गतेः षोढात्वव्याघातः अन्यथा तत्र सङ्गत्य-न्तराभावेन तादृशनिरूपणस्यासम्बद्धप्रलापतापत्तेः, न ह्याकाङ्क्ष-

---

(१) उपजीव्यतायां इत्यर्थः ।

(२) यन्निरूपितत्वं धर्म्मे विशेषणीकृत्य तदुपपादने ।

ताभिधानं तथा (१) इत्युच्यते तदा प्रयोजकान्तमनर्थकमिति चेत्, न, यन्निरूपणानन्तरं कदाचिदपि कस्यचिद्यद्धर्म्मावान्तर-धर्म्मप्रकारकज्ञानेच्छा न जायते अपि तु कालान्तर एव जाता तस्य तत्सङ्गतित्ववारणायैव प्रयोजकान्तसार्थक्यात्। न च कालस्यानवधित्वात् पुंसाञ्चासंख्यत्वात् तादृशधर्म्म एव दुर्लभ इति वाच्यम्। तादृशधर्म्मसम्भावनयाऽतिव्याप्तिसन्देहेन तद्वारणविशेषण-दानौचित्यात्। वस्तुतस्तु जिज्ञासुमेकं पुरुषं प्रति सङ्गतमपि अता-दृशमन्यं प्रति असङ्गतमिति यं प्रतिपादयितुम् आनन्तर्य्याभि-धानं तादृशाभिधानप्रयोजकतत्पुरुषीयजिज्ञासाजनकज्ञानविषयो-ऽर्थस्तं प्रति सङ्गतिरिति पुरुषविशेषनियन्त्रितमेव सङ्गतित्वं निर्व्वाच्यं तथाच यन्निरूपणानन्तरं यद्धर्म्मावच्छिन्नस्य विशेष-जिज्ञासा यस्य पुंसो न जाता अपि तु अन्यस्याभिधानानन्तर-मेव तस्य धर्म्मस्य तं प्रति तत्सङ्गतित्ववारणाय तदुपादानमा-वश्यकं, आनन्तर्य्याभिधानप्रयोजकज्ञानविषयत्वस्य निवेशने पटा-दिकं निरूप्य प्रतिपाद्यस्य जिज्ञासामन्तरेणैव यत्रासम्बद्धघटा-भिधानं केनचित् कृतं तत्रास्य घटज्ञानं भवतु इत्याकारकेच्छा-जनकीभूतवक्तृघटादिज्ञानविषयघटत्वादावतिप्रसङ्गः तादृशज्ञान-स्यापि घटादिबुबोधयिषाद्वारा पटाद्यभिधानानन्तरघटाद्यभिधान-प्रयोजकत्वात् अतः प्रयोजकजिज्ञासाजनकेति (२), परकीयज्ञान-

---

(१) असम्बद्धप्रलापः।

(२) ननु जिज्ञासोपादानेपि वक्तुर्घटादिज्ञानानुकूलजिज्ञासामादाय तद्दोष-तादवस्थ्यवारणाय जिज्ञासायां प्रतिपाद्यपुरुषीयत्वनिवेशनमावश्यकं, एवञ्चेत्

गोचरेच्छा च न जिज्ञासा ज्ञातुमिच्छा जिज्ञासा इतिव्युत्पत्त्या स्वीय-ज्ञानगोचरेच्छाया एव तत्त्वात्(१)। जिज्ञासाया आनन्तर्य्याभिधान-प्रयोजकत्वञ्च शब्दप्रयोगात्मकाभिधानानुकूलवक्तृबुबोधयिषानुकूलं यत् प्रतिपाद्यस्यासिद्धत्वज्ञानं तत्सम्पादकीभूतस्यासिद्धत्वव्याप्येच्छा-विषयत्वप्रतिपादकस्य किं प्रत्यक्षोपजीवकमित्यादिप्रश्नवाक्यस्य (२) व्यवहर्त्तव्यज्ञानविधया निर्व्वाहकं यज्जिज्ञासाप्रत्यक्षं विषयविधया तदानुकूल्येन। न च जिज्ञासाजनकत्वोपादानेऽपि उक्तस्थले कथञ्चित् वक्तुर्घटादिज्ञानानुकूलघटादिजिज्ञासाजनकज्ञानविषयेऽतिप्रसङ्गो-दुर्व्वार एवेति वाच्यम्। प्रतिपाद्यपुरुषीयजिज्ञासाया एव तल्ल-क्षणघटकत्वात् (३)। अथैवमपि अनुमानाद्यनन्तरोपमानादि-निरूपणे यथा उपमानादिजिज्ञासायाः प्रयोजकत्वं तथा तादृश-

---

जिज्ञासां निवेश्य तत्र प्रतिपाद्यपुरुषीयत्वनिवेशनमनादृत्य आनन्तर्य्याभिधानप्रयो-जकज्ञाने प्रतिपाद्यपुरुषीयत्वनिवेशनादेव तद्दोषवारणसम्भवेन जिज्ञासापदनिवे-शनसफलमिति चेत्, न, यत्र वक्तुर्घटादिज्ञानं प्रतिपाद्यपुरुषीयघटादिज्ञानजन्य-बुबोधयिषाधीनं तत्र पटाभिधानानन्तरघटाभिधानप्रयोजकीभूतं यत् वक्तृबुबोध-यिषानुकूलघटज्ञानं तद्विषयीभूतघटत्वादावतिप्रसङ्गवारकतया जिज्ञासापदनिवे-शस्यावश्यकत्वात्। न च तथापि तत्रैव आनन्तर्य्याभिधानप्रयोजिका या प्रति-पाद्यपुरुषीयघटज्ञानानुकूलजिज्ञासा तज्जनकज्ञानविषये घटत्वेऽतिप्रसङ्गतादवस्थ्य-मिति वाच्यम्। जिज्ञासया अनिरूपितं यत् प्रयोजकत्वं तस्य तादृशजिज्ञासाया-मसत्त्वान्न तद्दोषतादवस्थ्यमिति विभावनीयम्।

(१) सन्प्रत्ययस्य क्रियैककर्त्तृकेच्छाप्रतिपादकत्वादिति भावः।

(२) जिज्ञासाबोधकवाक्यस्येत्यर्थः।

(३) स्वप्रयोज्यनिरूपणजन्यबोधाश्रयत्वेनाभिप्रायविषयः प्रतिपाद्य इत्यर्थः, स्वपदं वक्तृपरम्।

जिज्ञासानुकूलानुमानादिज्ञानसम्पादनेनानुमानादिजिज्ञासाया-अपीति तज्जनकज्ञानविषयानुमानादिनिष्ठप्रत्यक्षोपजीवकत्वादे-रप्यनुमानादिनिरूपितसङ्गतित्वापत्तिरिति चेत्, न, जिज्ञासा-मद्वारीकृत्य प्रयोजकत्वस्यैव विवक्षणीयत्वात् प्रतिपाद्यपुरुषीय-ज्ञानविषयिणी वक्तुरिच्छा च न जिज्ञासा अतस्तस्याः प्रतिपाद्य-जिज्ञासाद्वारत्वेऽपि न क्षतिः। यदभिधानानन्तराभिधानप्रयोजक-जिज्ञासायां तदभिधानप्रयोज्यत्वं निवेश्यं, अन्यथा घट-पटनिरू-पणानन्तरं यत्र घटसम्बन्धेन दण्डादिस्मरणे को दण्ड इत्यादि-जिज्ञासया दण्डादिनिरूपणं तत्र तादृशजिज्ञासाजनकज्ञानविषयस्य पटादिसङ्गतित्वप्रसङ्गात् (१)। जिज्ञासाजनकसुखादिरूपफले-च्छाविषयेऽतिव्याप्तिवारणाय ज्ञानपदम्। अथैवमपि ज्ञाननिष्ठेष्ट-साधनत्वस्यापि जिज्ञासाजनकज्ञानविषयत्वात्तत्रातिव्याप्तिः। न च

---

(१) यदभिधानेत्यादिः सङ्गतित्वप्रसङ्गादित्यन्तः पाठः कस्मिंश्चित् पुस्तके नास्ति। न च स पाठः प्रामादिकः, तादृशपाठे जिज्ञासामद्वारीकृत्येति विशेषण-मफलं स्यात् किं प्रत्यक्षोपजीवकमिति जिज्ञासाया अनुमानाभिधानप्रयोज्यत्वा-भावेनैव तद्विशेषणवार्य्यदोषवारणसम्भवादिति वाच्यम्। तथा सत्युक्तस्थले दण्डनिष्ठधर्म्मस्य पटसङ्गतित्वे अनुभवविरोधात् तस्य प्रसङ्गसङ्गतित्वे प्रत्यक्षोप-जीवकत्वस्यानुमाननिरूपितसङ्गतित्वे को दोषः इति तद्वारकविशेषणमप्यफलं स्यात् तस्मात् जिज्ञासायां तदभिधानप्रयोज्यत्वनिवेशपक्षे जिज्ञासामद्वारीकृत्येति विशेषणं नास्त्येवेति।

केचित्तु तदभिधानप्रयोजकजिज्ञासायां तदभिधानप्रयोज्यत्वं निवेश्यमिति पाठः प्रामादिकः, प्रत्यक्षादौ निरूपिते स्वसामग्रीवशात् को घट इत्यादिजिज्ञासया प्रत्यक्षनिरूपणानन्तरं घटनिरूपणस्थले घटत्वे सङ्गतित्वस्येष्टापत्तिकथनेन ग्रन्थ-विरोधात् तत्रेष्टापत्तौ अत्रापीष्टापत्तेः कर्त्तुं शक्यत्वादिति प्राहुः।

तस्य कारणतारूपसङ्गतित्वेन लच्यतैवेति वाच्यम्। निरूप्यनिष्ठ-कारणत्वादीनामेव सङ्गतित्वादनुमानादिज्ञाननिष्ठेष्टसाधनतायाः प्रत्यक्षानुमानादिसङ्गतित्वविरहात्। न च जिज्ञासां प्रति असाधारणकारणत्वमेव निवेशनीयं इष्टसाधनताज्ञानन्तु उपायेच्छामात्रं प्रत्येव जनकमिति न तस्य जिज्ञासायामसाधारण्यमिति न तज्जनकतामादाय इष्टसाधनत्वेऽतिव्याप्तिरिति वाच्यम्। जिज्ञासाया असाधारणकारणत्वं हि जिज्ञासात्वघटितधर्म्मावच्छिन्नकार्य्यतानिरूपितकारणत्वं तच्च ज्ञानगोचरेष्टसाधनताज्ञानस्याप्यक्षतमेव ज्ञानगोचरेच्छात्वस्यैव तज्जन्यतावच्छेदकत्वात् एकोपायधर्म्मिकेष्टसाधनताज्ञानात् अन्योपायविषयकेच्छानुदयात् उपायविशेषविषयकत्वमन्तर्भाव्यैव इष्टसाधनताधिय उपायेच्छाहेतुत्वकल्पनात्। यदि च समानविशेष्यताप्रत्यासत्त्यैव इष्टसाधनताज्ञानस्य हेतुत्वकल्पनेनोक्तातिप्रसङ्गवारणसम्भवात् विशिष्टज्ञानादिरूपोपायविषयकत्वमिष्टसाधनताधीजन्यतावच्छेदककोटौ न निविश्यते तथाच जिज्ञासात्वघटितधर्म्मो नेष्टसाधनताज्ञानजन्यतावच्छेदकः फलसमानविषयकान्यवृत्तित्वस्य जनकताविशेषणत्वाद्वा इष्टसाधनताज्ञानजनकताव्यावृत्तिरित्युच्यते तदा असम्भव एव इष्टसाधनताज्ञानानात्मकस्योपजीवकत्वादिप्रकारकज्ञानस्य उपजीवकत्वजिज्ञासाजनकतायां प्रमाणाभावेन निरुक्तजनकताया एवासिद्धेः। न च सामान्यधर्म्मज्ञानस्य विशेषजिज्ञासां प्रति कारणत्वान्तरमन्वय-व्यतिरेकसिद्धमशक्यापह्नवमेव घटत्वादिज्ञानं विना को घट इत्यादिप्रश्नमूलीभूताया अवान्तरधर्म्मप्रकारेण घटादिज्ञाने-

च्छाया अनुत्पादस्यानुभवसिद्धत्वादिति वाच्यम्। विशेषधर्म्म-प्रकारेण घटज्ञानं भवतु इत्याकारकतादृशजिज्ञासाजनकतादृश-ज्ञानत्वावच्छिन्नधर्म्मिकेष्टसाधनताज्ञानस्य घटत्वादिरूपसामान्य-धर्म्मप्रकारकतानियमात् सामान्यधर्म्मप्रकारकज्ञानाभावस्थले तादृ-शेष्टसाधनताज्ञानाभावनियमात्तत एव तथाविधेच्छानुत्पादोपपत्ते-रुक्तयुक्त्या सामान्यधर्म्मप्रकारकज्ञानस्य कारणत्वान्तरासिद्धेरिति चेत्, न, जनकज्ञानविषयेत्यनेन जनकीभूतेष्टसाधनताज्ञानीय-ज्ञाननिष्ठविशेष्यतायां विषयिसम्बन्धेन यदवच्छेदकत्वं तन्निरूपिता-वच्छेदकतात्मकविषयताविशेषस्य विवक्षितत्वात् (१) तादृशविष-यताविशेषलाभायैवार्थपदं, किमस्योपजीवकमित्यादिजिज्ञासा-प्रयोजकीभूतोपजीवकत्वाद्येकदेशोत्तरवर्त्तित्वादिवारणाय तादृश-विषयतापर्य्याप्त्यधिकरणत्वं निवेश्यं तल्लाभायैव वा तत् (२)। यद्यपि जिज्ञासानिरूपितज्ञाननिष्ठविशेष्यतावच्छेदकतावच्छेदकत्वविशेष-

---

(१) ननु एतादृशनिवेशे जिज्ञासेत्यस्य वैयर्थ्यं, अनन्तराभिधानप्रयोजकेच्छा-निवेशेनैव सामञ्जस्यात्। न च फलेच्छामादायातिप्रसङ्गः, जिज्ञासाप्रकारीभूत्ये-त्यनेनैव वारणात्। न च वक्तृबुबोधयिषामादायातिप्रसङ्गः इति वाच्यम्। प्रति-पाद्यपुरुषीयत्वाभावेन तदिच्छाया असंग्रहात्। यत्तु अनन्तराभिधानप्रयोजिका या कण्ठताल्वभिघातविषयिणी प्रतिपाद्यपुरुषेच्छा तामादाय तज्जनकज्ञानविषये अतिप्रसङ्ग इति तत्तुच्छं, तज्जनकज्ञानविशेष्यतायाः ज्ञानावृत्तित्वेन ज्ञाननिष्ठत्वस्य विशेष्यताविशेषणत्वेनैव वारणात् तद्विशेष्यतायाः संयोगवृत्तित्वात् अवच्छेदकताया-विषयतासम्बन्धावच्छिन्नत्वासम्भवात् इति चेत्, न, प्रश्नवाक्यप्रयोजिका या प्रति-पाद्यबुबोधयिषा तस्याः प्रतिपाद्येच्छागोचरवक्तृबोधविषयकत्वेन तामादाय तज्जनकज्ञानविषये अतिप्रसङ्गादिति ध्येयम्।

(२) अर्थपदमित्यर्थः।

स्यापि लघोर्लक्षणत्वं सम्भवति तथाप्यत्र लक्षणे तदनिवेशान्न वैयर्थ्यावकाशः । इच्छानां याचितमण्डनन्यायेन जनकज्ञानविषयतयैव सविषयकत्वमिति प्राचीनमताभिप्रायेणैव वा जनकज्ञाननिवेशनम् । विषयनिष्ठधर्म्मितावच्छेदकतायां येन सम्बन्धेनावच्छेदकीभूतो यो धर्म्मस्तेन सम्बन्धेन तद्वत्त्वमेव सङ्गतिव्यवहारनियामकं तेन स्वरूपादिसम्बन्धेन उपजीवकत्वप्रकारिका या उपजीवकज्ञानं भवत्वित्यादिजिज्ञासा तद्विषयीभूतोपजीवकत्वादेः कालिकादिसम्बन्धेनाधिकरणे कालादौ नातिप्रसङ्गः। 'जायते चेति यतः कार्य्ये ज्ञाते कारणत्वस्य ज्ञानात् कारणज्ञानमिष्टसाधनमित्याकारककारणत्वविषयकज्ञानात् किमस्य कारणमिति प्रश्नप्रयोजिका कारणे ज्ञाते कार्य्यत्वस्य ज्ञानात् कार्य्यज्ञानमिष्टसाधनमिति कार्य्यत्वविषयकज्ञानात् किमस्य कार्य्यमिति प्रश्नमूलीभूता जिज्ञासा जायते, अतः कार्य्य-कारणाभिधानानन्तरं तत्कारण-कार्य्याभिधानप्रयोजकतादृशजिज्ञासाजनकज्ञानविषयत्वात् कारणत्वस्य कार्य्यत्वस्य च सङ्गतित्वं न तु कार्य्यत्वमात्रस्यैवेत्यर्थः । "सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्व्वाहकैक्य-कार्य्यैक्ये षोढ़ा सङ्गतिरिष्यते" इति सङ्गतिपरिगणने हेतुतापदम् अजहत्स्वार्थवृत्त्या कार्य्यत्वकारणत्वोभयसाधारणेन केनचिद्रूपेण तदुभयपरमिति नाधिक्यमिति भावः । अत्र स्मृतस्य उपेक्षानर्हत्वं प्रसङ्ग इति प्रसङ्गलक्षणं, तत्र स्मृतस्य पूर्व्वाभिहितवस्तुसम्बन्धेन स्मृतस्य उपेक्षानर्हत्वं द्वेषज्ञानविषयताविरोधिरूपं जिज्ञासाविषयतावच्छेदकरूपमिति यावत् । स्मृतस्येत्यभिधानं जिज्ञासाया आनन्तर्य्याभिधानप्रयोजकत्व-

लाभाय, उपोद्घातादिपञ्चकभिन्नत्वे सतीति पूरणीयं, तथाच उपोद्घातादिपञ्चकभिन्नसङ्गतिः प्रसङ्ग इति पर्य्यवसितोऽर्थः, तेनाधेयत्वाधिकरणत्वघटत्वादीनामपि स्थलविशेषे सङ्गतिसामान्यलक्षणाक्रान्ततया प्रसङ्गाद्यनन्तर्भावे उक्तसङ्गतिपरिगणनविरोध इति निरस्तम्। तेषां सर्व्वेषामेव यथाव्याख्यातप्रसङ्गलक्षणाक्रान्ततया तत्रैवान्तर्भावात्। उक्तरूपञ्च विभाजकमात्रमतस्तथाविधरूपेण तादृशधर्म्माणां निरूपणप्रयोजकजिज्ञासाविषयतावच्छेदकत्वविरहेऽपि न क्षतिः। एवं सङ्गत्यन्तरेऽपि बोध्यम्। यद्यपि भेदमनिवेश्य सर्व्वा सङ्गतिः प्रसङ्ग एवान्तर्भावयितुं शक्यते तथापि विभाजकस्य स्वतन्त्रेच्छतया न पर्य्यनुयोगावसरः। उपोद्घातः प्रकृतोपपादकत्वं, तदुक्तं "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्ब्बुधाः" इति। प्रकृतसिद्ध्यर्थां प्रकृतोपपादकविषयिणीं किमस्योपपादकमिति चिन्ताम् उपोद्घातम् उपोद्घातसङ्गतिनिर्व्वाहिकां विदुरित्यर्थः। तादृशजिज्ञासामादायैव उपपादकत्वे सङ्गतिलक्षणसमन्वयादिति भावः। उपपादकत्वञ्च निर्व्वाहकत्वं, तच्च क्वचित् प्रकृतघटकसाधकतया यथा विशिष्टपरामर्शत्वस्यानुमितिजनकतावच्छेदकत्वम् अनुमितिलक्षणघटकं तत्साधकतया तदुपपादकत्वं तत्साधकयुक्तेरिति युक्त्यभिधानरूपतद्व्यवस्थापनलक्षणोपोद्घातसङ्गतिः, क्वचिच्च तद्घटकतया यथा आचारप्रयोजकत्वं वेदस्य, साक्षादप्रवर्त्तकस्य वाक्यार्थज्ञानजनकत्वगर्भमिति प्रवर्त्तकज्ञानम् आचारप्रयोजकत्वघटकत्वेन प्रकृतोपपादकमिति उपोद्घातसङ्गत्या विधिवादे प्रवर्त्तकज्ञाननिरूपणम्। सामान्यप्रत्यासत्तेर्विशिष्टपरामर्श-

त्वावच्छिन्नेऽनुमितिनियतपूर्व्ववर्त्तितासम्पादकतया अनुमितिलक्षण-
घटकविशिष्टपरामर्शत्वावच्छिन्नानुमितिकारणताप्रविष्टतत्सम्पाद-
कत्वमेवानुमितिलक्षणोपपादकत्वम्। न तु तादृशलक्षणघटकतया,
तत्सम्पादकत्वञ्च तत्प्रयोजकत्वं तच्च स्वरूपसम्बन्धविशेषः। एव-
मन्यत्रापि द्विविधमुपपादकत्वं यथासम्भवमूह्यम्। अवसर-
सङ्गतिरग्रे विवेचनीया, हेतुता विवेचितैव, निर्व्वाहकैक्यम्
एकनिर्व्वाहकनिर्व्वाह्यत्वं, तदन्यत्वे सति तन्निर्व्वाहकनिर्व्वाह्यत्व-
मिति यावत् (१), कार्य्यैक्यम् एककार्य्यप्रयोजकत्वं, तदन्यत्वे
सति तत्प्रयोज्यकार्य्यप्रयोजकत्वं, निर्व्वाहकैककार्य्यत्व इति पाठे
निर्व्वाहकत्वम्, एकनिर्व्वाह्यनिर्व्वाहकत्वं निर्व्वाहकत्वञ्च प्रयोज-
कत्वम्, एककार्य्यत्वं एककारणप्रयोज्यत्वरूपं एतेन यथाश्रुते
एकनिर्व्वाहकनिर्व्वाह्यत्वालाभात् निर्व्वाहकत्वस्य उपपादकता-
रूपत्वे उपोद्घातेन गतार्थत्वात् प्रयोजकतारूपत्वे हेतुत्वान्तर्भावः
इति परास्तम्। सर्व्वत्र तत्प्रकारकजिज्ञासामादाय लक्षणसमन्वयः
कार्य्य इति कृतं विस्तरेण। इदन्त्ववधातव्यम्। किं प्रत्यक्षोप-
जीवकमिति जिज्ञासया नानुमानमत्र निरूपितम् अपि तु
किमनुमानमिति जिज्ञासयैव तथा सत्येवानुमानत्वरूपलक्ष्यताव-
च्छेदकविशिष्टे लक्षणप्रतिपादकस्य तत्करणमनुमानमित्युक्तस्य
सङ्गतेः अन्यथा अर्थान्तरप्रसङ्गात् किं प्रत्यक्षोपजीवकमिति जिज्ञा-

---

(१) एकनिर्व्वाहकनिर्व्वाह्यत्वस्योदाहरणं गुणनिरूपणानन्तरकर्म्मनिरूपणं, उभयोर्द्रव्यरूपकारणप्रयोज्यत्वात्।

सायाः प्रत्यक्षोपजीवकत्वविशिष्टे अनुमितिकरणत्वरूपविशेष-धर्म्मबोधकवाक्यादेव निवृत्तेः तथाचानन्तर्य्याभिधानप्रयोजक-जिज्ञासाजनकज्ञानविषयत्वरूपसङ्गतित्वं प्रकृते नोपजीवकत्वे सम्भवतीति तादृशजिज्ञासाजनकनिरूप्यतावच्छेदकधर्म्मप्रकारक-स्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धः सङ्गतिरित्येव लक्षणं युक्तं प्रत्यक्षानुमानपदार्थयोरुपजीव्योपजीवकभावसम्बन्धज्ञानादनुमान-पदार्थत्वरूपप्रकृतलक्षणलक्ष्यतावच्छेदकप्रकारेणानुमानस्मरणादनु-मानपदार्थः क इति जिज्ञासया अनुमितिकरणमनुमानपदार्थ-इति निरूपणादुपजीवकत्वे सङ्गतित्वनिर्व्वाहात् एवञ्च पूर्व्वापर-निरूपणविषययोः सम्बन्ध एव सङ्गतिः न तु निरूप्यतावच्छेदकः, एतदनुसारेणैव प्रसङ्गादिसङ्गतिस्वरूपाण्यूह्यानि। इत्यञ्च उप-जीवकत्वस्यानन्तर्य्याभिधानाव्याप्यस्यापि सङ्गतित्वे च तुल्यत्वेऽपि प्रत्यक्षसाधारणत्वेऽपि न व्यभिचारः क्षतिकरः।

---

चिन्तामणिदीधितिः।

लाघवायान्वेवोपमानस्य सङ्गतिं दर्शयति, 'बहु-वादीति, सुप्रसिद्धतया निरसनीयाल्पवादिविप्रति-पत्तिकत्वेन सुप्रतिपदतया चानुमान एव व्युत्पित्सोः प्रथमं जिज्ञासा नोपमानेऽप्रसिद्धत्वात् निरसनीयबहु-वादिविप्रतिपत्तिकत्वेनातिदुरूहत्वाच्च। औत्सर्गिकीं रीतिमनुरुध्य चेदं तेन प्रथमं कस्यचिद्दुरूहे जिज्ञासो-

दयेऽपि न क्षतिः । तथाचात्रावसरसङ्गत्योपमाननिरू-पणमिति भावः । यथा चावसरस्य सङ्गतित्वं तथा व्यक्तमाकरे ।

---

गादाधरी विवृतिः ।

ननु न्यूनतापरिहारायानुमानोपमानयोरपि सङ्गतिप्रदर्शन-मुचितमिति 'बहुवादिसम्मतत्वादुपमानात् प्रागित्यपि तत्सङ्गति-प्रदर्शनपरमेव भविष्यति सा च कथमुपमानग्रन्थे एव न दर्शितेत्या-काङ्क्षायामाह, 'लाघवायेति अनुमानस्येवोपमानस्यापि प्रत्यक्ष-सङ्गततया प्रत्यक्षनिरूपणाव्यवधानेनोपमानमेव किं न निरूप्यते उपमाननिरूपणानन्तरमप्यनुमाननिरूपणसम्भवादिति क्रमनिया-मकाकाङ्क्षाया इदानीमुदयात् तन्निवृत्तये यत् क्रमनियामक-मभिधातव्यं तावतैव सङ्गतिलाभोपि भवतीति ग्रन्थान्तरसङ्गति-प्रदर्शनापेक्षयाऽत्र क्रमनियामकाभिधानस्य सङ्गतिपरत्वे लाघव-मिति भावः । बहुवादिसम्मतत्वस्य प्राथमिकजिज्ञासानिर्व्वाह-कत्वेन प्राङ्निरूपणप्रयोजकत्वं घटयति, 'सुप्रसिद्धतयेति, सुप्रसिद्ध-त्व-सुप्रतिपदत्वे जिज्ञासाप्राथम्ये हेतू, 'विप्रतिपत्तिकत्वेनेत्यन्तं सुप्र-तिपदत्वे हेतुः, 'अनुमान एवेति, स्वोक्तैवकारार्थं विवृणोति, 'नोप मान इति, अप्रसिद्धत्व दुरूहत्वे प्रथमतो जिज्ञासानुत्पादे हेतू, विप्र-पत्तिकत्वेनेत्यन्तं दुरूहत्वे हेतुः, सुप्रसिद्धार्थस्य बहुधा प्रस्तावो भवति अतस्तज्ज्ञानस्य भूयानुपयोगः न त्वप्रसिद्धार्थज्ञानस्येति

तज्ज्ञानस्य बह्वायाससाध्यत्वेन (१) प्रथमतो बलवान्द्वेषो भवतीति सूची-कटाहन्यायादिति तेन तत्सामग्र्या वा प्रतिबन्धान्न तादृशार्थे प्रमतो जिज्ञासा इति भावः। 'औत्सर्गिकीं' प्रायिकीम्, 'इदं' दुरूहत्वज्ञानस्य बलवद्द्वेषसम्पादकतया जिज्ञासाविरोधित्वम्। 'कस्यचिदिति, तज्ज्ञानाधीनसुख-दुःखयोर्न्यूनाधिकभावज्ञानरहितस्येत्यादिः। नन्वेतावता क्रमनियामकलाभेऽपि सङ्गतिर्न लब्धेवोक्तरूपस्य सङ्गतित्वविरहादित्याकाङ्क्षयामाह, 'तथाचेति, अनुमाने उपमानापेक्षया प्रथमिकजिज्ञासाविषयत्वप्रयोजकबहुवादिसम्मतत्वकथनेन विरोधीभूतानुमानजिज्ञासाया विषयसिद्ध्या निवृत्तौ सत्यामुपमानं निरूपणीयमिति सूचनादिति भावः। ननु विरोधिजिज्ञासानिवृत्तिरवसरः स च नोपमानाभिधानप्रयोजकजिज्ञासाविषयतावच्छेदक इति कथं तत्र दर्शितलक्षणसमन्वय इत्यत आह 'यथा चेति, 'तथा व्यक्तमिति, अयमाशयः विरोधिजिज्ञासानिवृत्तिर्नावसरः अपि तु तन्निवृत्तौ सत्यां वक्तव्यत्वमेव तत्र च किमिदानीं वक्तव्यमिति जिज्ञासाजनकज्ञानविषयतामादाय लक्षणसन्वयः। यद्यपि तादृशजिज्ञासाविषयतायां जिज्ञासानिवृत्तिघटितं नावच्छेदकमिति तेन रूपेण सङ्गतित्वं नास्ति अपितु निवृत्त्युपलक्षिततत्तत्कालवक्तव्यत्वरूपेणैव, तथापि न क्षतिः यादृशस्य सङ्गतित्वं तादृशस्यैव विभाजकत्वमित्यनियमात् जिज्ञासानिवृत्तेर्विभाजकधर्म्मघटकत्वे बाधकाभावादिति।

---

(१) वह्वायासानुविद्धत्वे इति पा०।

चिन्तामणिदीधितिः ।

शब्दान्तरसमयग्राहकं सप्रवृत्तिनिमित्तकत्वबोधकं सामान्यतोदृष्टमन्ततोऽदृष्टजनकप्रवृत्त्यौपयिकञ्चानुमानमपेक्षते निखिलमेवोपमानमितीहाप्युपजीवकत्वमेव सङ्गतिरित्यपि केचित् ।

---

गादाधरी विवृतिः ।

सार्व्वभौमानां मतमाह, 'शब्दान्तरेति, द्वितीयान्तस्यानुमानमित्यस्य प्रथमोक्तं तथाविधत्वयं विशेषणं, 'शब्दान्तरसमयग्राहकमिति अतिदेशवाक्यस्थस्य उपमानग्राह्यशक्तिकगवयादिपदभिन्नगवादिपदस्य शक्तिग्राहकं, गोपदं गोत्वविशिष्टवाचकं तद्विशिष्टविषयकशक्तिभ्रमाद्यजन्यशाब्दबोधजनकत्वादित्याद्याकारकमित्यर्थः, तादृशानुमानं विना गोपदशक्त्यग्रहेणातिदेशवाक्यजन्यशाब्दबुद्धेरनुत्पत्त्या उपमानानवतारात् (१) तस्योपमानापेक्षणीयत्वं इति भावः। 'सप्रवृत्तिनिमित्तकत्वेति गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादिति सामान्यतोगवयत्वप्रवृत्तिनिमित्तकत्वसाधकमित्यर्थः। तादृशानुमानेनैव उपमानाप्रामाण्यवादिनस्तत्फलं विशेषतः प्रवृत्तिनिमित्तपरिच्छेदमुपपादयन्ति, गोसादृश्यस्य गवयत्वजातेश्च प्रत्यक्षत उपस्थितौ सादृश्यस्य प्रवृत्तिनिमित्तत्वे

---

(१) गवयो गवयपदवाच्य इत्युपमितिः साम्प्रदायिकमते, अयं गवयपदवाच्य इत्याचार्य्यमते, अयं गवयपदप्रवृत्तिनिमित्तवानिति मणिकारमते।

गौरवं जातिविशेषस्य तथात्वे लाघवमिति लाघवप्रतिसन्धानवशेन सामान्यतः सप्रवृत्तिनिमित्तकत्वव्याप्यतया गृहीतादपि लिङ्गाद्विशेषतो जातिविशेषप्रवृत्तिनिमित्तकत्वानुमितिसम्भवात्। सिद्धान्तिभिस्तु व्यापकतावच्छेदकरूपेणैव साध्यमनुमितौ भासत इति नियममवलम्ब्य उपमानप्रामाण्यं व्यवस्थाप्यते उपमानेन च गवयादिपदे विशेषतः गवयत्वादिप्रवृत्तिनिमित्तकत्वग्रहः सम्भवति, गवयत्वादिप्रकारकसादृश्यज्ञानात् तेन रूपेण पदवाच्यत्वे गृह्यमाणे तदवच्छेदेनैव ग्रहात्तादृशग्रहेपि गवयपदशक्तिरवश्यं किञ्चिद्धर्मावच्छिन्ना तत्रानतिप्रसक्तस्य गोसादृश्यादेस्तत्तद्व्यक्तित्वानाञ्चावच्छेदकत्वे गौरवं जातिविशेषस्य तथात्वे लाघवमित्याकारकस्तर्कोऽपेक्षितः, अन्यथा तत्तद्व्यक्तित्वादिप्रकारेणापि सादृश्यज्ञानसम्भवात् तेषामपि प्रवृत्तिनिमित्ततासिद्धिप्रसङ्गात् तादृशलाघवज्ञानसम्पादनेन दर्शितसामान्यतोदृष्टस्यापि तथाविधोपमानोपजीव्यत्वमित्यवधेयम्। उक्तानुमानयोः सादृश्यज्ञानरूपोपमानानुपजीव्यतया तस्याप्युपजीव्यमनुमानान्तरमाह, 'अन्तत इति, 'अदृष्टेति अदृष्टनियामिका विहितक्रियागोचरप्रवृत्तिस्तत्प्रयोजकसमयादिपरिच्छेदकमनुमानमित्यर्थः, उपमानस्याप्यदृष्टजन्यत्वादिति भावः। निखिलोपमानस्यैव निरूपणीयतया सङ्गतिमत्त्वमपेक्षितमतोनिखिलमित्युक्तं, अनुमानेप्यदृष्टद्वारा समयादिपरिच्छेदकोपमानोपजीवकतायाः क्वचित् सत्त्वादुपमाननिष्ठउपजीवकतायास्ततोविशेषदर्शनाय निखिलमिति तु न सत्, अनादौ संसारे सर्व्वत्रैवानुमानेऽतिपरम्परया कदाचित् कस्यचित् शक्तिपरिच्छेदकोपमानस्य

मूलतासम्भवेन तादृशविशेषासम्भवात् । यत्र प्रत्यक्षादिरूपकृति-साध्यताज्ञानाधीना प्रवृत्तिरुपमानजनकीभूतादृष्टजनिका तत्रानु-मानोपजीवकताया अपि उक्तरीत्यैवोपपादनीयत्वात् । 'केचिदित्य-स्वरससूचनाय, स च बहुवादिसम्मतत्वकथनस्य उपजीवकत्वसङ्गति-लाभासम्पादकतया तस्यानुपयोगितापातात् । नचोपमानापेक्षया अनुमानस्य बहुवादिसम्मतत्वोक्तौ उपमानं कणादादिभिरनुमान-एवान्तर्भावितमिति लभ्यते तावता तन्मतनिराकरणायानुमान-भिन्नत्वेन उपमानं निरूपणीयमित्यस्य लाभेनानुमाननिरूपणोप-जीवकताया उपमाननिरूपणे लाभ इति तदुक्तेरुपजीवकत्वसङ्ग-तिलाभोपयोगिता इति वाच्यम् । निरूपणयोरुपजीव्योपजीवक-भावस्यासङ्गतित्वात्, क्रमनियामकतालाभायैव तदुक्तिर्न तु सङ्गति-लाभायेति चेत्तथापि उपमानसङ्गत्यप्रदर्शनेन मूलस्य न्यूनताया-दुर्व्वारत्वात् ।

---

चिन्तामणिदीधितिः ।

**सम्भवति चेह निरूपणयोरपि कार्य्य-कारणभावः ।** अथ तत्पूर्वकमित्यादिसूत्रे प्रत्यक्षपूर्वकत्वेनानुमाननिरू-पणात्तच्छब्देन व्याप्त्यादिप्रत्यक्षपरामर्शात्, अत्रापि सह-चारप्रत्यक्षजन्यत्वादिना तन्निरूपणात् तस्य च प्रत्यक्ष-निरूपणाधीनत्वात्, एवमनुमानभिन्नत्वेनोपमाननिरू-पणमप्यनुमाननिरूपणापेक्षमिति सङ्क्षेपः ।

## गादाधरी विवृतिः ।

स्वमते सङ्गतेर्निरूपणपौर्व्वापर्य्यानियामकतया तन्नियामकाकाङ्क्षया निरूपणयोः कार्य्य-कारणभावं दर्शयति, 'सम्भवति चेति, 'इह' प्रत्यक्षानुमानयोः, सप्तम्यर्थोनिरूपणान्वयि विषयत्वं, 'निरूपणयोः' 'निरूपणपदार्थघटकज्ञानयोः। 'अथ तत्पूर्व्वकमित्यादीति "अथ तत्पूर्व्वकमनुमानं त्रिविधं पूर्व्ववत् शेषवत् सामान्यतो दृष्टञ्चेति विभाजकसूत्र इत्यर्थः, 'तत्पूर्व्वकमित्यादेः कारणलिङ्गकं कार्य्यलिङ्गकं तदन्यलिङ्गकञ्चेत्यर्थः (१)। ननु-सौत्रं क्रमनियामकं प्राप्तं प्रकृते तु किं तथा इत्याकाङ्क्षायामाह, 'अत्रापीति चिन्तामणिग्रन्थेऽपीत्यर्थः। यद्यपि व्यभिचारज्ञानाभावसहकृतं सहचारदर्शनं व्याप्तिग्राहकं इत्युक्तं अत्र च प्रत्यक्षमेव विशेष्यमिति कथं तन्निरूपणस्य हेतुत्वं, तथापि प्रत्यक्षमप्रतिपाद्य प्रत्यक्षं व्याप्तिग्राहकमिति परो बोधयितुं न शक्यते इति तत्रापि प्रत्यक्षनिरूपणं हेतुरिति भावः। 'तस्य चेति प्रत्यक्षघटितविशेषणपुरस्कारेणानुमाननिरूपणस्य चेत्यर्थः, 'प्रत्यक्षनिरूपणेति, विशिष्टज्ञानस्य विशेषणज्ञानाधीनत्वादिति भावः। 'अनुमानभिन्नत्वेनेति वैशेषिकादिमतनिराकरणाय, तेन रूपेणैवोपमानस्य निरूपणीयत्वादिति भावः।

---

(१) देशोऽयं दृष्टया सम्प्लुतते मेघोन्नतिमत्त्वादित्यनुमानं कारणलिङ्गकम्। देशोऽयं दृष्ट्या सम्पन्नः नदीवृद्धिमत्त्वात् इत्यनुमानं कार्य्यलिङ्गकम्। इदं द्रव्यं पृथिवीत्वादित्याद्यनुमानं तदन्यलिङ्गकम्।

## अनुमानचिन्तामणिः ।

तत्र व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमनुमितिस्तत्करणमनुमानं तच्च लिङ्गपरामर्शो न तु परामृश्यमाणं लिङ्गमिति वक्ष्यते ।

---

## चिन्तामणिदीधितिः ।

तत्र लक्षण-स्वरूप-प्रामाण्यादिभिरनुमाने निरूपणीये करणस्य क्रियाभेदभिन्नमूर्त्तिकतया क्रियालक्षणपूर्व्वकं तल्लक्षणमाह 'व्याप्तीत्यादिना ।

---

## गादाधरी विवृतिः ।

'तत्रेत्यादिराहेत्यन्त एकोग्रन्थः, 'तत्र' प्रतिज्ञायां, सप्तम्यर्थो-निरूपणान्वयि विषयत्वं, 'लक्षणेति, 'लक्षणं' इतरभेदानुमापकरूपम्, 'स्वरूपं' लक्षणग्रहोपयोगि अनुमितिकारणतावच्छेदकरूपं (१) तच्च लिङ्गपरामर्शत्वं, (२) 'प्रामाण्यं' प्रत्यक्षाद्यतिरिक्तप्रमितिकरणत्वम्, 'आदिपदात् विभाजकरूपपरिग्रहः, (३) 'निरूपणीये' प्रतिपादनीये, (४) 'तल्लक्षणम्' अनुमानलक्षणम्,

---

(१) अवच्छेद्यज्ञानं प्रति अवच्छेदकज्ञानस्य हेतुतया अवच्छेदकस्यापि उपयोगित्वम् ।

(२) लिङ्गविशेष्यकव्याप्तिज्ञानत्वमित्यर्थः ।

(३) विभाजकं केवलान्वयित्वादिरूपम् ।

(४) निरूपणस्य यथाश्रुतार्थकत्वे तृतीयान्तवैयर्थ्यमतो व्याचष्टे प्रतिपादनीय इति ।

'आह' इत्यन्वयः, सतिसप्तम्याः प्रयोजकत्वमर्थः (१) लक्षणाभिधानस्य निरूपणात्मकतया प्रयोज्य-प्रयोजकभावासम्भवेऽपि "सविशेषणे हीति न्यायात् (२) निरूपणघटकप्रतिपत्त्यंशे लक्षणाभिधानस्य प्रयोज्य-प्रयोजकभावे तात्पर्य्यं, स्वरूपादिप्रतिपत्तावपि (३) तदभिधानप्रयोजकाकाङ्क्षोत्थापकतया लक्षणाभिधानस्य प्रयोजकत्वं बोध्यम्। ननु प्रमाणलक्षणात् प्रागेव कथं प्रमा लक्षिता। न च प्रमाणलक्षणस्य प्रमाघटिततया तामपरिज्ञाय तज्ज्ञातुं न शक्यते इति प्रमालक्षणप्राथम्ये वीजं, तथा सति अनुमितिलक्षणघटकव्याप्त्यादेरपि प्रथमं निरूपणापत्तेरित्याकाङ्क्षायामनुमितिलक्षणप्राथम्ये वीजान्तरमाह, 'करणस्येति अनुमानस्येत्यर्थः, 'क्रियाभेदेति क्रियाया अनुमितेर्यो भेदः प्रत्यक्षविजातीयत्वं तद्भिन्नमूर्त्तिकतया तदधीनं यत्प्रत्यक्षकरणताभिन्नं प्रमाणान्तरव्यवहारौपयिकं प्रमित्यन्तरकरणतात्मकं स्वरूपं तद्वत्तया, तथाच प्रत्यक्षानन्तरम् अनुमानं निरूप्यते इति प्रतिज्ञातः प्रत्यक्षतोऽनुमानं प्रमाणान्तरमित्यस्य लाभात् तत्र कथन्तानिवृत्तये (४) तत्प्रमाणान्तरतानिर्व्वाहकप्रमितिवैलक्षण्यलाभाय तल्लक्षणाभिधानमेव प्रथमत उचितमिति भावः।

---

(१) यथा पीते पाथसि तृष्णाशान्तिरित्यत्र सतिसप्तम्याः प्रयोजकत्वमर्थः।

(२) "सविशेषणे हि विधि-निषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः" इति न्यायादित्यर्थः। सविशेषणे विशेषणविशिष्टे इत्यर्थः।

(३) आदिपदेन प्रामाण्यपरिग्रहः।

(४) जिज्ञासानिवृत्तये इत्यर्थः।

केचित्तु 'तत्रेति मूलपाठधारणं, 'लक्षणेत्यादि निरूपणीय-इत्यन्तं तस्य व्याख्येति, 'तत्र' अनुमाने निरूपणीये, इत्युपाध्याय-व्याख्यामालोच्य वदन्ति । तदसत्, लक्षण-स्वरूप-प्रामाण्यादि-प्रकारकत्वेन निरूपणस्याप्राक्रान्ततया व्याख्यामध्ये तृतीयान्त-भागकथनविरोधात् । न च पूरणसम्बलितेयं व्याख्येति युज्यते, तत्पदोपस्थाप्यैकदेशे निरूपणे पूरणीयतृतीयान्तार्थान्वयासम्भवात् पूरणस्यानुपयुक्तत्वाच्च । न च सप्तम्यर्थोऽनुमित्यन्वयि तद्विषयक-निरूपणप्रकारत्वं, तल्लाभाय पूरणमुचितमिति वाच्यम् । तादृशार्थे क्वचिदपि सप्तम्यदर्शनात् मूलस्थतत्पदस्यानुमानपदार्थपरतया घटकत्वस्य निरूपणपरतया विषयत्वस्य वा तत्रत्यसप्तम्यर्थत्वात् ।

यत्तु सतिसप्तम्येवेयं, तदर्थश्च प्रयोजकत्वम्, एवञ्चानुमाननिरू-पणानुमितिनिरूपणयोः प्रयोज्य-प्रयोजकभावलाभायैव पूरण-मिति, तदत्यन्तमसत्, निरूपणस्य तत्पदोपस्थाप्यत्वे क्रियात्वा-भावेन "यस्य च भावेनेत्यादिसूत्राविषयतया सतिसप्तम्यनुपपत्तेः । न च निरूपणीय इत्यपि पूरणीयमतो नेयमनुपपत्तिरिति वाच्यम् । एवमपि अनुमितिनिरूपणस्यानुपस्थिततया तत्र प्रयो-जकत्वान्वयासम्भवात् (१) । न च मूलेऽनुमितिरित्यनन्तरं निरू-प्यत इत्यपि पूरणीयमिति वाच्यम् । तदकथनेन दीधितिकृतो न्यूनतापातात् लक्षणमध्ये निरूपणप्रतिज्ञान्तरासङ्गतेश्च इत्यलम-सदावेशेन ।

---

(१) पदानुपस्थितनिरूपणे पदार्थस्यान्वयोऽव्युत्पन्नः अपदार्थस्य शाब्दबोधे भानासम्भवादिति भावः ।

चिन्तामणिदीधितिः ।

**अत्र व्याप्तिविशिष्टत्व-पक्षधर्म्मत्वसामानाधिकरण्याव-गाहिज्ञानजन्यत्वमर्थः, कर्म्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्यवचनत्वात् । ज्ञान-पदोपसन्धानेन च बाधिताबाधितसाधारणज्ञानलाभात् न भ्रान्तानुमित्यव्याप्तिरित्याहुः ।**

---

गादाधरी विवृति ।

उपाध्यायव्याख्यामुपन्यस्यति 'अत्रेत्यादिना 'आहुरित्यन्तेन, 'अत्र' एतल्लक्षणे, 'अर्थ इत्यनेनान्वयः, एतल्लक्षणवाक्यप्रतिपाद्यार्थ इत्यर्थः । अथवा व्याचक्षते इत्यर्थकेनाहुरित्यनेनान्वयः । 'व्याप्तीति (१) व्याप्तिविशिष्टत्वसमानाधिकरणपक्षधर्म्मत्वावगाहिज्ञानजन्यत्वमर्थः । प्रकृत्यर्थतावच्छेदकरूपभावार्थ एव तल्प्रत्ययस्यानुशिष्टत्वात् सामानाधिकरण्यस्यातथाभूतस्य प्राधान्येन ज्ञानान्वयासम्भवात् यथाश्रुतासङ्गतेः, उक्तार्थेऽपि सामानाधिकरण्यान्तं नोपलक्षणं किन्तु विशेषणमतो ज्ञानेन समं तस्यान्वयात् केवलपक्षधर्म्मताविषयकधीनिरासः । व्याप्तिवैशिष्ट्यसामानाधिकरण्यं व्याप्तिविशिष्टसम्बन्धित्वं तत्प्रतियोगिकत्वपर्य्यवसितं, पक्षधर्म्मत्वं पक्षानुयोगिकसम्बन्धः, पक्षसम्बन्धपदस्य प्रतियोगितया पक्षानुयोगिकसम्बन्धावच्छिन्नमात्रबोधकत्वात् । प्रतियोगित्वानुयोगित्वयोः सम्बन्ध-

---

(१) इत आरभ्य अतिप्रसक्त्यानुधावनेनेत्यन्तं उपाध्यायमतस्य क्रोड़पत्रम् । स पाठः क्वचित् क्वचित् पुस्तके नास्ति ।

सम्बन्धतया विशेषण-विशेष्यांशे भानोपगमात्, प्रतियोगित्वादे-र्ज्ञानान्वयेऽपि पक्ष-व्याप्ययोः सम्बन्धसंसर्गविधयाऽवगाहमानस्य परामर्शस्य नासंग्रहः। व्याप्तिविशिष्टप्रतियोगिकत्वादेः सम्बन्ध-विशेषणतया तन्निष्ठविषयतायामवच्छेदकतया ज्ञानेनान्वयः, न तु विषतया साक्षादेव। तथासति विशृङ्खलतावत्समूहावलम्ब-नजन्येऽतिप्रसङ्गात्, विषयांशे सम्बन्धविधया यद्भासते प्रकार इव तत्रापि विषयतावच्छेदकत्वं विषयतानिरूपितविषयतापर्य्यसित-मक्षतमेवेति सम्बन्धविषयताया व्याप्तिविशिष्टप्रतियोगिकत्वाद्य-वच्छिन्नत्वनिर्व्वाहः। यदि च ताद्रूप्येणैव पक्षसम्बन्धः स्वाव-च्छिन्नबोधकपदोत्तरतत्प्रत्ययार्थः, प्रकृत्यर्थस्य तत्प्रतियोगिक-त्वन्तु सम्बन्ध एव न तु प्रकारस्तथाच व्याप्तिविशिष्टप्रतियोगि-कत्वस्य विषयत्वान्वयिपक्षसम्बन्धविशेषणताविरहेण तत्पारत-न्त्र्येण विषयत्वान्वयासम्भवात् सम्बन्धविषयतायां न तदवच्छिन्न-त्वलाभसम्भव इति मन्यते, तदा व्याप्तिविशिष्टस्यैव सम्बन्धविषय-तायामवच्छेदकतयाऽन्वयो विवक्षणीयः, तस्यैव सम्बन्धविशेषण-तया लक्षणार्थे प्रवेशात्। यद्यपि कर्म्मधारयलभ्यस्याभेदेन व्याप्ति-विशिष्टविशिष्टस्य पक्षधर्म्मस्यैव पक्षसम्बन्धांशे विशेषणतया तादृ-शस्यैव ज्ञानान्वयो दर्शितदिशा स्वीकार्य्यः तथाच यादृशपरामर्शः पक्षधर्म्मे व्याप्तिरिष्टाभेदमवगाहते तस्यैव संग्रहः न तु व्याप्ति-संसर्गावगाहिन इति तज्जन्येऽव्याप्तिः, एवं लक्षणवाक्यजन्यबुद्धौ व्याप्तिवैशिष्ट्यस्य पदार्थतावच्छेदकतया प्रकारत्वेन तत्सम्बन्ध-सम्बन्धस्यापि भानमावश्यकं सम्बन्धसम्बन्धस्यापि नियमेन विशिष्ट-

बुद्धौ भानवादिनाम्। तथाच विशिष्टपदार्थघटकस्य तस्यापि ज्ञानान्वयध्रौव्यं विशेषणान्तर्गतस्योपलक्षणत्वायोगादिति व्याप्ति-वैशिष्ट्यं यत्र संसर्ग एव तादृशपरामर्शस्य दुःसंग्रहतैव तादृशपरा-मर्शे संसर्गसंसर्गसंसर्गान्तरभानस्यातिनिर्युक्तिकतया अनवस्थाभयेन च केनाप्यनभ्युपगमात्। तथापि व्याप्तिविशिष्टे धर्म्मिणि प्रका-रतया भासमानवैशिष्ट्यविशेषणतापन्ना व्याप्तिरपि तेन संसर्गेण तत्प्रकारतया भासते विशेषणतयोपस्थितस्य स्वान्वेशणेव अन्यत्र विशेशणत्वानभ्युपगमात्, एवं व्याप्यविशेषितस्य प्रतियोगितया सम्बन्धविशेषणत्वे इतरविशेषणतापन्नस्य व्याप्यस्यापि प्रतियोगि-तया सम्बन्धविशेषणत्वमिति स्वोक्तत्वैवं व्याख्यातम्, एवं सति व्याप्तिविशेषितधर्म्मिणो ज्ञानान्वयमाप्नुवाने सम्बन्धे विशेषणत्वं व्याप्तिवैशिष्ट्यविशेषितधर्म्मिणोऽभेदेन व्याप्यविशेषितस्य पक्षसम्ब-न्धविशिष्टस्य चोपलक्षणत्वमित्यतः सर्व्वसामञ्जस्यात्। इत्थमेव दण्डांशे लौहित्यप्रकारकज्ञाने विशिष्टविषयान्वयपरस्य लौहित्य-विशिष्टदण्डं जानातीति वाक्यस्य प्रामाण्यनिर्व्वाह इत्यलमति-सूक्ष्मानुधवनेन। उपाध्यायमतस्य क्रोड़पत्रमिदम्।

अत्र उभयसामानाधिकरण्यावगाहित्वं एकधर्म्मिण्युभयसम्ब-न्धावगाहित्वं, सम्बन्धसम्बन्धस्यापि विशिष्टधीविषयतायाः प्राची-नैरुपगमात् अनुमितिजनकविशिष्टपरामर्शे व्याप्त्यादिसम्बन्ध-तया भासमानस्यापि तत्सम्बन्धस्य सम्बन्धो हेतौ भासते इति व्याप्तिवैशिष्ट्य-पक्षधर्म्मत्वयोः सामानाधिकरण्यावगागाहिता तत्र निर्व्वहतीति लक्षणसमन्वयः। पक्षधर्म्मता च पक्षानुयोगिको

हेतुतावच्छेदकसम्बन्धः न तु पक्षवृत्तित्वं, पक्षविशेष्यकपरामर्शस्य पक्षवृत्तितानवगाहित्वात् तत्रापि सम्बन्धतया पक्षनिरूपिताधेयत्वभानोपगमे पक्षस्य प्रकारतापत्तेः। न च पक्षानुयोगिकसम्बन्धविवक्षणे पक्षविशेष्यकपरामर्शे तादृशसम्बन्धस्य सम्बन्धः पक्ष एव भासते व्याप्तिसम्बन्धस्य सम्बन्धश्च हेताविति नैककस्मिंश्चुभयसम्बन्धावगाहित्वरूपसामानाधिकरण्यावगाहितानिर्व्वाह इत्याशङ्क्यम्। विशिष्टबुद्धौ विशेष्ये सम्बन्धस्यानुयोगित्वरूपसम्बन्धो विशेषणे च तस्य प्रतियोगित्वरूपसम्बन्धो भासते इति सिद्धान्तात्, पक्षविशेष्यकपरामर्शेऽपि हेतौ व्याप्तिसम्बन्धानुयोगित्वस्य पक्षानुयोगिकसम्बन्धप्रतियोगित्वस्य च भानेनैकत्र तदुभयसम्बन्धावगाहितया अक्षतत्वात्। न चैवं व्याप्यविशेष्यकपरामर्शासंग्रहः तत्र हि हेतौ पक्षानुयोगिकसंयोगादिरूपहेतुतावच्छेदकसम्बन्धो न पक्षरूपविशेषणस्य सम्बन्धतया भासते विशेष्ये सम्बन्धानुयोगित्वस्य विशेषणे च तत्प्रतियोगित्वस्य भाननियमात् तादृशज्ञानस्य हेतु-पक्षयोर्बाधितसंयोगाद्यनुयोगित्व-प्रतियोगित्वावगाहितया भ्रमत्वप्रसङ्गात् (१) तद्वैपरीत्ये च विशेष्य-विशेषणभाववैपरीत्यप्रसङ्गात् (२) भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वयोरेव विशेष्यत्व-विशेषणत्वात्मकत्वात्, परन्तु स्वानुयोगिक-संयो

---

(१) तादृशपरामर्शसंग्रहाय प्रतियोगिनि अनुयोगित्वस्य अनुयोगिनि प्रतियोगित्वस्यावगाहितास्वीकारे भ्रमत्वप्रसङ्गादित्यर्थः।

(२) पक्षे अनुयोगित्वस्य व्याप्ये प्रतियोगित्वस्य भानोपगमे तादृशज्ञानस्य पक्षे विशेष्यत्वस्य व्याप्ये विशेषणत्वस्य च प्रसङ्गादित्यर्थः।

गादिप्रतियोगित्वरूपमाधेयत्वमेव तथा भासते (१) स च न हेतुतावच्छेदकसम्बन्धः न वा पक्षानुयोगिक इति वाच्यम्। सम्बन्धसम्बन्धतया तत्र संयोगादिरूपहेतुतावच्छेदकसम्बन्धप्रतियोगित्वस्य हेतावभानेऽपि विशेषणीभवत्पक्षसम्बन्धतया तत्र तद्भानादेव एकत्र व्याप्तिवैशिष्ट्यानुयोगित्व–पक्षानुयोगिकहेतुतावच्छेदकसम्बन्धप्रतियोगित्वभानेन उभयसामानाधिकरण्यावगाहितानिर्व्वाहात् पक्षविशेष्यक एव वा परामर्शः सर्व्वत्रानुमितिहेतुः। नन्वेवमपि धूमो वह्निव्याप्यो द्रव्यवान् पर्व्वत इति ज्ञानजन्येऽतिव्याप्तिस्तादृशज्ञानस्यापि धूमाद्यात्मकैकहेतौ तदुभयसम्बन्धावगाहित्वात् एकविषयतानिरूपितोभयसम्बन्धविषयतापर्य्यन्तस्य लक्षणवाक्यतोऽलाभात् तद्विवक्षणे च तथाविधव्याप्तिवैशिष्ट्य-पक्षसम्बन्धविषयतानिवेशनेनैवोपपत्तौ मिश्रोक्तद्वन्द्वोपेक्षायां निर्व्वीजतापत्तेः (२)। न चोभयसामानाधिकरण्यमेकनिष्ठापरसामानाधिकरण्यं तथाच पक्षसम्बन्धनिष्ठव्याप्तिवैशिष्ट्यवत्सम्बद्धत्वावगाहिज्ञानजन्यत्वमर्थः, तत्सम्बद्धत्वञ्च तत्प्रतियोगिकत्वमेव, उक्तसमूहालम्बनस्य केवलपक्षधर्म्मतादिज्ञानस्य च वस्तुगत्या व्याप्तिवैशिष्ट्यवान् यो धूमादिः पक्षसम्बन्धनिष्ठतत्प्रतियोगिकत्वावगाहित्वेऽपि नातिप्रसङ्गः, तल्प्रत्ययान्तेन यादृशविशिष्टमुपस्थाप्यते तादृशविशिष्ट-

---

(१) पक्षरूपविशेषणस्य सम्बन्धतया भासत इत्यर्थः।

(२) द्वन्द्वोपेक्षाया वीजस्य वह्निव्याप्योधूमोद्रव्यवान् पर्व्वत इत्यादि ज्ञानजन्ये अतिव्याप्तिः, एकविषयतानिरूपिततादृशविषयताविवक्षणे द्वन्द्वपक्षेऽपि तत्र नातिव्याप्तिरिति द्वन्द्वोपेक्षानिर्वीजेति भावः।

स्यैव वैशिष्ट्यमवगाहित्वे विशेषणं विवक्षितमिति (१) कथित-ज्ञानस्य (२) व्याप्त्यादिघटिततादृशविशिष्टनिरूपितविषयिताशून्य-त्वेन लक्षणाघटकत्वादिति वाच्यम्। व्याप्तिविशिष्टहेतुमान् पक्ष इत्येतादृशपरामर्शे संयोगाद्यंशे भासमानहेतुप्रतियोगिकत्व-निरूपितविषयिताया व्याप्तिवैशिष्ट्यवत्प्रतियोगिकत्वरूपविशिष्ट-विषयनिरूप्यत्वेऽपि पक्षसम्बन्धनिष्ठत्वस्य विशेषणकोटावप्रवेशेन तद्घटितोक्तविशिष्टविषयनिरूपितत्वाभावेन (३) तदसंग्रहात्। पक्षसम्बन्धनिष्ठत्वस्योपलक्षणत्वे च तदविषयकज्ञानवारणासम्भ-वात्, (४) भावप्रत्ययेन वा अवगाहित्वविशेषणतया एकपदार्थता-वच्छेदकनिष्ठमपरतत्सामानाधिकरण्यं कथं प्रतिपादनीयं भाव-रूपार्थ एव तदनुशासनात्, प्रकृत्यर्थासाधारणधर्म्मस्यैव च भावार्थ-त्वात्, न हि नीलोत्पलत्वमित्यादौ उत्पलत्वनिष्ठनीलिमादि-सामानाधिकरण्यं प्रकृत्यर्थासाधारणधर्म्मः, तस्य नीलोत्पलादि-रूपप्रकृत्यर्थेऽवर्त्तमानत्वात्। न चैकपदार्थनिष्ठापरपदार्थतावच्छे-दकसम्बन्ध एव पदार्थतावच्छेदकद्वयसामानाधिकरण्यं प्रकृते च

(१) व्याप्तिविशिष्टपक्षधर्म्मतापदेन पक्षसम्बन्धनिष्ठव्याप्तिवैशिष्ट्यवत्प्रति-योगिकत्वमुपस्थाप्यते तादृशप्रतियोगिकत्वस्य वैशिष्ट्यनिरूपितत्व अवगाहित्वे विवक्षितमित्यर्थः।

(२) समूहालम्बनस्य केवलपक्षधर्म्मताज्ञानस्य वेत्यर्थः।

(३) पक्षसम्बन्धनिष्ठत्वघटितपक्षसम्बन्धनिष्ठव्याप्तिवैशिष्ट्यवत्प्रतियोगिकत्व-निरूपितत्वाभावेनेत्यर्थः।

(४) पक्षतावच्छेदकरूपेण पक्षाविषयकत्वात्तत्वपक्षसम्बन्धविषयकवह्निव्याप्ति-विशिष्टहेतुमानित्याकारकनिर्द्धर्म्मितावच्छेदककज्ञानवारणासम्भवात् तस्यापि तादृश-व्याप्तिविशिष्टप्रतियोगिकत्वावगाहित्वादिति भावः।

पक्षसम्बन्धप्रतियोगिनिष्ठव्याप्तिवैशिष्ट्यानुयोगित्वमेव (१) तथा (२) तच्च प्रकृत्यर्थासाधारणधर्म्म एवेति वाच्यम्। पृथिवीत्वमित्यादितो गन्धाद्यप्रतीतेः, प्रकृत्यर्थतावच्छेदकधर्म्मस्यैव भावार्थत्वस्वीकारेण कथितस्य (३) प्रकृत्यर्थधर्म्मत्वेऽपि प्रकृतिजन्यबोधे प्रकारताविरहेण भावार्थत्वानुपपत्तेः। न च "कृत्तद्धितसमासेभ्यः सम्बन्धावगमस्त्व-तल्भ्याम्" इत्यनुशासनात् भावार्थभिन्नोप्युक्तसम्बन्धः (४) तल्-प्रत्ययार्थ एवेति वाच्यम्। तथा सत्यत्र उत्पलत्वं नास्तीत्यादि-वाक्यजबोधस्यात्र नीलोत्पलत्वमित्यादिवाक्यजबोधे ग्राह्याभावा-नवगाहितया स्वतो विरोधितानुपपत्तेः। न चेष्टापत्तिः, अनुभव-विरोधापत्तेः। परामर्शविषयव्याप्तिवैशिष्ट्यानुपयोगित्वस्य विशे-षणकोटौ पक्षसम्बन्धप्रतियोगिनिष्ठत्वाभानात् तस्य निरुक्तविशि-ष्टविषयकत्वासम्भवेन तल्प्रत्ययेन तादृशविशिष्टार्थप्रत्यायनसम्भवे-ऽप्यप्रतीकाराच्च (५)। अथ सामानाधिकरण्यान्तेन (६) व्याप्ति-वैशिष्ट्यसामानाधिकरण्यावच्छिन्नपक्षधर्म्मत्वमेव विवक्षितं पदार्थ-

---

(१) तथाच पक्षसम्बन्धप्रतियोगिनिष्ठव्याप्तिवैशिष्ट्यानुयोगित्वत्वावच्छिन्न-विषयकत्वं ज्ञाने विवक्षितमिति न पूर्व्वोक्तदोषः। न चैतत्कल्पे विशिष्टपरा-मर्शासंग्रहः इच्छितत्वान्तस्योपलक्षणत्वे तद्विषयकज्ञानसंग्रह इत्यादिकं कथं नोक्त-मिति वाच्यम्। भावप्रत्ययस्येदृशार्थबोधकतैव न सम्भवतीति किमपरदूषणे-नेत्यभिप्रायेणेदमिति, उत्तरत्र पुनरेतद्दोषोदर्शित इति।

(२) एकपदार्थनिष्ठापरपदार्थतावच्छेदकसम्बन्ध इत्यर्थः।

(३) पक्षसम्बन्धप्रतियोगिनिष्ठव्याप्तिवैशिष्ट्यानुयोगित्वस्य।

(४) पक्षसम्बन्धप्रतियोगिनिष्ठव्याप्तिवैशिष्ट्यानुयोगित्वरूपः सम्बन्ध इत्यर्थः।

(५) तथाच व्याप्तिविशिष्टहेतुमान् पक्ष इत्यादिपरामर्शासंग्रह इति भावः।

(६) व्याप्तिविशिष्टत्व-पक्षधर्म्मत्वोभयसामानाधिकरण्यभागेन।

तावच्छेदकद्वयसामानाधिकरण्यवचनत्वात् (१) इत्यस्यापि एक-पदार्थतावच्छेदकसमानाधिकरणापरपदार्थतावच्छेदकबोधकत्वा-दित्यर्थः इति न विरोधः। उक्तञ्च (२) यज्ञपत्युपाध्यायैरेव तदुत्तरतल्प्रत्ययस्य व्याप्तिविशिष्टत्वे सति पक्षधर्म्मत्वं भावमाहेति (३)। एवञ्च सामानाधिकरण्यान्तर्भावेन न भावप्रत्ययार्थता (४) नीलोत्पलत्वमित्यादित उत्पलादौ नीलाद्यभेदान्वये नीलाभिन्नोत्पलादेः प्रकृतितो लाभात्, तादृशोत्पलादीतरावृत्तित्वसहितसकलतादृशोत्पलवृत्तित्वेन चान्यलभ्यप्रकृत्यर्थं परित्यज्य इतराद्यंशे शक्त्या भावप्रत्ययेन बोधनात्, (५) नीलाभिन्नोत्-

---

(१) ननु सामानाधिकरण्यान्तस्य उक्तार्थकत्वे तत्र पदार्थतावच्छेदकद्वय-सामानाधिकरण्यार्थकत्वादितिहेत्वभिधानविरोधः एकपदार्थतावच्छेदकसामाना-धिकरण्यावच्छिन्नापरपदार्थतावच्छेदकवचनत्वादित्येव वक्तुमुचितत्वादित्यत आह, पदार्थतावच्छेदकेत्यादि ।

(२) तादृशतल्प्रत्ययस्य तादृशार्थबोधकत्वे प्रामाणिकसंवादमाह, उक्तञ्चेति ।

(३) व्याप्तिविशिष्टत्वसामानाधिकरणपक्षधर्म्मत्वबोधक इत्यर्थः ।

(४) विशेषणतावच्छेदकसामानाधिकरण्यघटितावच्छिन्ने न कर्म्मधार-योत्तरतल्प्रत्ययशक्यतेत्यर्थः, परन्तु केवलं तदितरावृत्तित्वसहितसकलतद्वृत्तित्वे-नैव, तर्हि कथं नीलोत्पलत्वमित्यादितो विशेषणतावच्छेदकनीलत्वसामानाधि-करण्यावच्छिन्नत्वस्योत्पलत्वादौ विशेष्यतावच्छेदके लाभ इत्यत आह, नीलोत्पल-त्वमित्यादित इति, तथाच विशिष्टान्वयबलेन लाभनिर्व्वाह इति भावः ।

(५) निरुक्तवृत्तित्वरूपेणेत्यर्थः, तच्च भावप्रत्ययेन बोधनादित्यन्वयि, अन्य-लभ्यं प्रकृतिलभ्यं प्रकृत्यर्थमित्यर्थः, तथाच तदितरावृत्तित्वसहितसकलतद्वृत्तित्व-विशिष्टरूपे प्रकृत्यर्थासाधारणधर्म्मे भावे शक्तिर्न किन्तु प्रकृतिलभ्यं प्रकृत्यर्थं परि-त्यज्य इतरादिषु भावप्रत्ययस्य खण्डशः शक्तिः, तेषां वैशिष्ट्यञ्च अन्वयबललभ्यं, तथाच नीलोत्पलत्वमित्यादौ नीलोत्पलवृत्तित्वेनोपस्थिते भावे सुतरां नीलसामा-नाधिकरण्यभानमिति भावः ।

पत्वादिवृत्तित्वरूपनीलिमादिसामानाधिकरण्यस्य उत्पलत्वादौ लाभनिर्व्वाहात् प्रकृते च (१) तदितरावृत्तित्वांशः साकल्यांशश्च उपलक्षणतयैव विवक्षितः न तु ज्ञानान्वयिविषयविशेषणतया अतः परामर्शस्य तदविषयकत्वेऽपि न क्षतिः। व्याप्तिवैशिष्ट्यसामानाधिकरण्यञ्च व्याप्तिविशिष्टप्रतियोगिकत्वमेव, पक्षधर्म्मपदस्य प्रतियोगितासम्बन्धेन पक्षानुयोगिकसमभिव्याहृतव्याप्तिघटकहेतुसम्बन्धावच्छिन्नपरतया प्रकृत्यर्थतावच्छेदकताघटकसम्बन्धेनैव च प्रकृत्यर्थवृत्तिताया भावप्रत्ययेन बोधनात् (२) प्रतियोगितासम्बन्धेन प्रकृत्यर्थवृत्तिताया एव तत्पदोत्तरभावप्रत्ययतोलाभात् तस्या एव च तत्प्रतियोगिकत्वरूपत्वात्, तत्सम्बन्धविधया भासमाने संयोगादौ तत्प्रतियोगिकत्वस्य तदीयसम्बन्धविधया भानात्। व्याप्तिविशिष्टप्रतियोगिकत्वमपि सम्बन्धविषयतायामवच्छेदकमिति व्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्नपक्षधर्म्मपदार्थतावच्छेदकपक्षसम्बन्धविषयताकत्वरूपं विशिष्टविषयकत्वं परामर्शेऽप्यक्षतमेवेति चेदेवमपि व्याप्तिविशिष्टोयः पक्षधर्म्मस्तस्य तत्त्वेन तत्प्रतियोगिकत्वरूपसम्बन्धे विशेषणतया पक्षधर्म्मत्वावच्छिन्नविशेषिततत्प्रतियोगिकत्वावच्छिन्नविषयताया एव विशिष्टान्वयबलेन लाभात् परामर्शे च पक्षधर्म्मत्वावच्छिन्नस्य पक्षांशेऽप्रकारतया तदवच्छिन्नप्रतियोगिकत्वावच्छिन्नसम्बन्धविषयताकत्वविरहेण तद-

(१) एवञ्च लक्षणवाक्यप्रतिपाद्यावगाहितां परामर्शे सङ्गमयति, प्रकृते चेत्यादिना परामर्शेऽक्षतमित्यन्तेन।

(२) भावरूपार्थे इत्यादिः।

संग्रहात्। यदि च पक्षधर्म्मत्वमप्युपलक्षणमुच्यते तदापि अभेद सम्बन्धेन उपक्षधर्म्मांशे प्रकारीभवतो व्याप्तिविशिष्टत्वावच्छिन्नस्य उपलक्षणत्वे तदन्तर्गतव्याप्तेरपि तथात्वेन तदविषयकज्ञानात्वत्तेः तस्य विशेषणत्वध्रौव्यात्(१)पक्षांशे प्रकारीभवति हेतौ व्याप्तिप्रकारकपरामर्शस्यासंग्रहः अभेदसम्बन्धेन व्याप्तिविशिष्टस्य हेतुविषयतानवच्छेदकत्वात् एवं भावप्रत्ययार्थप्रविष्टं सकलतद्वृत्तित्वं तन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपं साकल्यघटितस्य तस्यान्यादृशस्य दुर्व्वचत्वात्, नानाव्यक्तिकस्य गुरुत्वादेर्यत्र प्रकृत्यर्थतावच्छेदकता तत्र प्रत्येकं प्रकृत्यर्थनिष्ठभेदप्रतियोगितावच्छेदकस्यापि तस्यानुगततदवच्छेदकावच्छिन्नस्य(२) तादृशभेदप्रतियोगितानवच्छेदकत्वमुपेयते ऽतस्तदसंग्रहः, अन्यथा यथाश्रुतेऽप्यनिस्तारात् कस्याश्चिदपि गुरुत्वादिव्यक्तेः सकलगुरुत्वादिमदवृत्तित्वात्। न चैवं गुरुत्वमित्यादितो गन्धादेरपि बोधापत्तिः तस्यापि गुणत्वाद्यवच्छिन्नस्य गुर्व्वादिनिष्टभेदप्रतियोगितानवच्छेदकत्वात् इति वाच्यम्। गुणत्वाद्यवच्छिन्ने तदितरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वरूप-

---

(१) व्याप्तिविशिष्टत्वावच्छिन्नस्य विशेषणतायाः स्थिरत्वादित्यर्थः, तथाच तादृशविशिष्टत्वावच्छिन्नविशेषितप्रतियोगिकत्वावच्छिन्नपक्षसम्बन्धविषयताकत्वस्य विशिष्टान्वयतोलाभात् तादृशपरामर्शे च व्याप्तिविशिष्टत्वावच्छिन्नस्य पक्षांशे अप्रकारतया तदवच्छिन्नप्रतियोगिकत्वावच्छिन्नपक्षसम्बन्धविषयताकत्वविरहात् तदसंग्रह इति भावः।

(२) प्रकृतार्थतावच्छेदकतावच्छेदकावच्छिन्नस्येत्यर्थः। कुत्रचित्तथैव पाठो वर्त्तते।

तदितरावृत्तित्वासत्त्वेन तदापत्त्ययोगात् (१) तदितरत्वव्यापकभेद-प्रतियोगितावच्छेदकत्वावच्छिन्नतन्निष्ठभेदप्रतियोगितानवच्छेदक-त्वस्य भावप्रत्ययप्रवृत्तिनिमित्तत्वात्। तदितरावृत्तित्वन्तु न तथाश्रुतं प्रकृत्यर्थतावच्छेदकतावच्छेदकसम्बन्धेन वृत्तेर्विवक्षणीतया सत्त्वमित्यादौ समवायेन तदितरवृत्तित्वाप्रसिद्धेः, महानसीयवह्नि-त्वमित्यादौ शुद्धवह्नित्वाद्यनतिरेकिणो महानसीयवह्नित्वादेर्महा-नसीयवह्न्यादिरूपप्रकृत्यर्थेतरपर्व्वतीयवह्न्यादिवृत्तित्वेन तदितरा-वृत्तित्वबोधासम्भवात् (२)। तथाच कर्म्मधारयोत्तरभावप्रत्ययेन विशेष्यपदार्थतावच्छेदके विशेषणपदार्थतावच्छेदकसामानाधिक-रण्यं कथं बोधनीयं प्रकृत्यर्थतावच्छेदकनिष्ठाया वृत्तेस्तदर्थाप्रवे-शात् (३) इतिमहदसमञ्जसम्। उच्यते। निरुक्ततदितरावृत्ति-त्वसहितसकलतद्वृत्तित्वस्य (४) शक्त्यानन्त्यभयेन प्रकृत्यर्थमन-न्तर्भाव्य भावप्रत्ययप्रवृत्तिनिमित्तत्वे सामान्यत इतरत्वव्यापकत्वस्य केवलान्वयिमात्रवृत्तितया घटत्वाद्यवच्छिन्नभेदसाधारण्यविरहेण

---

(१) यद्रूपावच्छिन्ने तादृशभेदप्रतियोगितानवच्छेदकत्वं तद्रूपावच्छिन्न एव तदितरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वस्य विवक्षितत्वादिति भावः।

(२) महानसीयवह्नित्वमित्यादितः प्रकृत्यर्थतावच्छेदकमहानसीयवह्नित्वादौ महानसीयवह्नीतरावृत्तित्वस्य बाधेन तस्मिन् तद्बोधासम्भवादित्यर्थः।

(३) भावप्रत्ययार्थेऽनन्तर्भावादित्यर्थः, यदि तदर्थे अन्तर्भावः स्यात् तदैव विशेष्य-पदार्थतावच्छेदके विशेषणपदार्थतावच्छेदकसामानाधिकरण्यं तादृशभावप्रत्ययेन प्रतिपादयितुं शक्यत इति भावः।

(४) तदितरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वसहिततन्निष्ठभेदप्रतियोगि-तानवच्छेदकत्वरूपस्येत्यर्थः।

घटत्वादौ प्रथमदलस्य बाधः । वृत्तिमद्भेदप्रतियोगितानवच्छेदकत्वरूपद्वितीयदलमपि प्रमेयत्वाद्यनवच्छिन्ने तत्र बाधितं घटेतरत्वव्यापकत्वादेश्चाशक्यतया न बोधनिर्व्वाहः, अतो लाघवाच्च (१) धर्म्मित्वमेव प्रवृत्तिनिमित्तमुच्यते, धर्म्मित्वञ्च प्रकृत्यर्थतावच्छेदकताघटकसम्बन्धेन सम्बद्धत्वमेव, घटत्वमित्यादितो द्रव्यत्वादिबोधप्रसङ्गः रूपादिबोधप्रसङ्गश्च भवतामपि समानः (२) द्रव्यत्वादेरपि घटत्वादिविशिष्टतया घटेतरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वात् घटरूपादेरपि घटरूपत्वाद्यवच्छिन्नस्य घटनिष्ठभेदप्रतियोगितानवच्छेदकत्वात्, एवं गुरुत्वमित्यादितो गुरुत्वसमनियतरसादिबोधो भवतामपि दुर्व्वारः, तदितरावृत्तित्वादिना भासमाने धर्म्मे तत्तत्प्रकृत्यर्थतावच्छेदकनिष्ठाधेयत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयमुपगम्य तद्वारणे च धर्म्मित्वेन शक्तिमतेऽपि धर्म्मित्वे प्रकृत्यर्थतावच्छेदकनिष्ठत्वसहितनिरूपितत्वसम्बन्धेन प्रकृत्यर्थान्वयमुपगम्य तत्तत्प्रकृत्यर्थतावच्छेदकनिष्ठाधेयताया धर्म्मान्तरेष्वसत्त्वेन तादृशातिप्रसङ्गो वारणीयः (३) । एवञ्च व्याप्तिविशिष्टाभिन्न-

---

(१) ननु इतरत्वादौ भावप्रत्ययस्य खण्डशक्तिः, न तु विशिष्टे, तेषां वैशिष्ट्यञ्चान्वयबललभ्यं तथाच एकधर्म्मावच्छेदेन अवच्छेदकत्वानवच्छेदकत्वे विवक्षणीये, एवं कुत्रचित् भागविशेषः परित्यज्यते च अतोनोक्तदोषाणामवसरः इत्यत आह, लाघवाच्चेति ।

(२) उक्तातिप्रसङ्गः उभयमते समानः, परन्तु मन्मते शक्यतावच्छेदकस्य लाघवं विनिगमकमिति भावः ।

(३) नन्वत्र कल्पे लाघवेन प्रकृत्यर्थतावच्छेदकनिष्ठाधेयतासम्बन्धेन प्रकृत्यर्थान्वयः कथं न स्वीकृतः । न च घटे घटत्वमित्यादिवाक्यस्य निराकाङ्क्षतापत्तिरिति

पक्षधर्म्मप्रतियोगिकत्वेन पक्षसम्बन्धे व्याप्तिविशिष्टपक्षधर्म्मतापदेन बोध्यमाने अभेदेन पक्षधर्म्मान्वयिनि व्याप्तिविशिष्टे विशेषणतापन्न-व्याप्तिवैशिष्ट्यस्यापि पक्षधर्म्मे विशेषणतया भानमुपेयं एकविशेषण-तयोपस्थितस्य पदार्थतावच्छेदकस्य स्वातन्त्र्येणैव इतरविशेषण-तया अभानात् अन्यथा घटं जानातीत्यादौ घटत्वादिविशिष्टनिरू-पितविषयिताशालिज्ञानपर्य्यन्तस्य तात्पर्य्यविषयत्वेऽपि लाभासम्भ-वात् पदार्थतावच्छेदकघटत्वादेः स्वावच्छिन्ननिरूपितत्वसम्बन्धेन विषयितायामन्वयेनैव तल्लाभनिर्व्वाहात्। एवञ्च व्याप्तिवैशिष्ट्य-विशेषित-व्याप्तिविशिष्टाभिन्नत्वोपलक्षित-पक्षधर्म्मप्रतियोगिकत्व-मेव विषयतावच्छेदकतया विवक्षितमिति पक्षधर्म्मे व्याप्तिवि-शिष्टाभेदानवगाहिपरामर्शस्यापि संग्रहः। वह्निव्याप्यधूमवान् इतिज्ञाने व्याप्तिवैशिष्ट्यस्य धूमांशेऽप्रकारत्वेऽपि तदंशे सम्बन्धतया भानादेव धूमनिष्ठावच्छेदकतारूपविषयितायामवच्छेदकत्वसम्भ-वात् तद्घटितव्याप्तिविशिष्टधूमप्रतियोगिकत्वविशिष्टहेतुतावच्छेद-कसम्बन्धविषयकत्वमव्याहतं (१)। न च व्याप्तिविशिष्टस्य हेतोः

---

वाच्यम्। घटत्वमित्यनेन आधेयतावद्घटीयमित्याकारकस्याधेयत्व-घटोभय-प्रकारकस्य बोधस्य जननात् घटे इत्यनेन च घटप्रकारकाधेयताविशेष्यकबोध-जननात् घटे घटत्वमित्यनेन घटाधेयत्वोभयधर्म्मितावच्छेदकक-घटविशिष्टाधेयता-प्रकारकबोधजनने बाधकाभावः विधेयांशे अधिकावगाहिबोधस्योपगमात् अन-भ्युपगमे भवन्मतेऽपि समानम्। अत्रेदं बोध्यं, घटत्वत्वं नास्तीत्यनुगतप्रतीत्यनुप-पत्तिः, घटत्वत्वस्य आधेयतासम्बन्धेन घटत्वविशिष्टाधेयताघटोभयात्मकतया तद-भावस्य अनुगतसम्बन्धेन निर्वक्तुमशक्यत्वादिति ध्येयम्।

(१) व्याप्तिवैशिष्ट्यविषयताघटितव्याप्तिवैशिष्ट्यविषयतानिरूपितविषयतानि-रूपितप्रतियोगिकत्वविषयतानिरूपितपक्षसम्बन्धविषयताकत्वरूपं व्याप्तिविशिष्टा-

संयोगादिरूपसम्बन्धांशे सम्बन्धतया भासमाने तत्प्रतियोगिकत्वे तादृशहेतोः सम्बन्धान्तराभानात् तस्यापि च संयोगादौ सम्बन्धान्तराभानात् तदीयसम्बन्धान्तरघटित(१) व्याप्तिविशिष्टप्रतियोगिकत्वविशिष्टसंयोगादिविषयकत्वं (२) वह्निव्याप्यधूमवानिति बुद्धेर्दुरुपपादमेवेति वाच्यम्। तदवच्छिन्नविषयताकत्वरूपतद्विशिष्टविषयकत्वस्य तदीयसम्बन्धाभानेऽप्यव्याहतेः। अन्यथा गुरुमते ज्ञानस्य विशिष्टविषयकत्वानुपपत्तेस्तैर्विशिष्टबुद्धौ सम्बन्धभानानुपगमात्। न च वैशिष्ट्यांशे विशेषणीभवन्त्या व्याप्तेर्व्याप्तिविशिष्टेत्यादिवाक्यजन्यबुद्धौ सम्बन्धस्य सम्बन्धोऽप्येतन्मते विषय इति तद्घटितमेव विशिष्टं (३) व्याप्तिविशिष्टपक्षधर्म्मतापदार्थः, एवं व्याप्तिविशिष्टस्य हेतोः संयोगादिसम्बन्धांशे भासमानतत्प्रतियोगिकत्वांशेऽपि सम्बन्धान्तरभानमावश्यकं तथाच तद्घटितव्याप्तिविशिष्टप्रतियोगिकत्वस्य पक्षसम्बन्धनिष्ठविषयतावच्छेदकत्वं लक्षणवाक्यलभ्यमिति

---

भिन्नत्वोपलक्षितव्याप्तिवैशिष्ट्यविशेषितहेतुप्रतियोगिकत्वविशिष्टहेतुतावच्छेदकसम्बन्धावगाहित्वं लक्षणवाक्यैकदेशप्रतिपाद्यं तादृशपरामर्शात्मकज्ञानेऽक्षतमित्यर्थः।

(१) तादृशधूमीयसम्बन्धान्तरं निरूपितत्वं प्रतियोगिकत्वस्य स्वरूपं तद्घटितेत्यर्थः।

(२) लक्षणवाक्यप्रतिपाद्यं व्याप्तिविषिष्टधर्म्मिनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपितप्रतियोगिकत्वनिष्ठावच्छेदकतानिरूपितस्वरूपसम्बन्धनिष्ठावच्छेदकतानिरूपितसंयोगादिनिष्ठसंसर्गताकत्वरूपम्।

(३) वैशिष्ट्यांशे व्याप्तेः सम्बन्धः प्रतियोगित्वं तस्य सम्बन्धोऽनुयोगित्वं प्रतियोगित्वं तद्घटितमेव विशिष्टं व्याप्तिप्रतियोगिकप्रतियोगिकत्वविशिष्टवैशिष्ट्याश्रयनिरूपितप्रतियोगिकत्वावच्छिन्नहेतुतावच्छेदकसम्बन्ध इत्यर्थः।

तादृशविशिष्टस्य च कथं व्याप्यादेः संसर्गतया तद्वैशिष्ट्यावगाहि-परामर्शीयविषयतावच्छेदकता तत्र वैशिष्ट्यांशे व्याप्तिप्रतियोगिक-त्वमात्रस्य (१) तत्सम्बन्धतया भानेन तत्र तदीयसम्बन्धान्तरा-भानात्। पक्षसम्बन्धांशे भासमानहेतुप्रतियोगिकत्वांशेऽपि हेतोः सम्बन्धान्तराभानादिति वाच्यम्। लक्षणवाक्यजन्यबोधे वैशि-ष्ट्यांशे(२) व्याप्यादेः सम्बन्धान्तरस्याधिकस्य भानेऽपि तस्य वैशिष्ट्य-निष्ठविषयतावच्छेदकत्वाविवक्षणेन सामञ्जस्यात्। नहि यस्मिन् विषये यस्य यत्सम्बन्धस्य भानं तन्निष्ठविषयतायां तदीयतत्सम्बन्धा-वच्छिन्नत्वं विशिष्टवैशिष्ट्यबोधे भासते एव इति नियमः प्रामा-णिकः, घटं जानातीत्यादिवाक्यजन्यघटत्वादिविशिष्टवैशिष्ट्यबोधे घटादिविषयतायां समवायानुयोगित्वावच्छिन्नत्वभानस्यापि निय-मेनाभ्युपगमात्। अथ व्याप्तिघटकहेतुतावच्छेदसम्बन्धावच्छिन्न-परपक्षधर्मपदोत्तरभावप्रत्ययस्य उक्तरीत्या(३)प्रकृत्यर्थतानवच्छेदक-सम्बन्धान्तर(४) व्यावृत्तहेतुप्रतियोगिकत्वबोधकतया सम्बन्धान्त-रस्यातद्वत्त्वेन(५) तत्संसर्गकहेतुमत्ताज्ञानवारणेऽपि हेतुतावच्छेदक-सम्बन्धसंसर्गकनिर्धर्म्मितावच्छेदकज्ञानवारणमशक्यमेव, तस्यापि

---

(१) मात्रपदेन प्रतियोगिकत्वे व्याप्तिनिरूपितत्वस्य व्यवच्छेदः।

(२) वैशिष्ट्यांशे प्रतियोगिकत्वरूपवैशिष्ट्यांशे, व्याप्यादेरित्यादिपदेन व्याप्ति-विशिष्टहेतोः परिग्रहः।

(३) प्रकृतार्थतावच्छेदकतिष्ठत्वसहितनिरूपितत्वसम्बन्धेन प्रकृत्यर्थस्य स्वाव-च्छेदकतावच्छेदकधर्म्मे अन्वयमुपगम्येत्यर्थः।

(४) व्याप्तिघटकसम्बन्धातिरिक्तसम्बन्धेत्यर्थः।

(५) तादृशहेतुप्रतियोगिकत्ववद्भिन्नत्वे नेत्यर्थः।

विशिष्टप्रतियोगिकत्वावच्छिन्नतादृशसम्बन्धविषयकत्वात् । न च पक्षपदस्य धर्म्मितावच्छेदकविशिष्टार्थकतया पक्षधर्म्मतापदेन धर्म्मितावच्छेदकविशिष्टधर्म्मानुयोगिकत्वावच्छिन्नसंसर्गबोधनात् तदवच्छिन्नसंसर्गावगाहिज्ञानमेव ज्ञानान्तार्थ इति निर्धर्म्मितावच्छेदकज्ञानव्यावृत्तिरिति वाच्यम् । पक्षधर्म्मतापदेन पक्षधर्म्मप्रतियोगिकत्वेनैव पक्षसम्बन्धबोधनात् पक्षानुयोगिकत्वेन सम्बन्धस्य तदबोध्यत्वात् । मैवम् । यतः संशयवारणाय ज्ञानपदस्य निश्चयार्थकत्वमावश्यकं, निश्चयत्वञ्च विपरीतकोटिधर्म्मितावच्छेदकतानापन्नधर्म्मावच्छिन्नविशेष्यताकज्ञानत्वं, तथाच तादृशविशेष्यताकत्वावच्छेदेन व्याप्तिविशिष्टप्रतियोगिकसम्बन्धावगाहित्वस्य विवक्षणात् (१) हेतुमत्तांशे निर्धर्म्मितावच्छेदकज्ञानं न लक्षणघटकमिति, एवञ्च पक्षपदस्यानुपादानेऽपि सामञ्जस्यात्तदुपादानं धर्म्मपदस्य हेतुतावच्छेदकसम्बन्धप्रतियोगिपरत्वलाभायेत्यवधेयम् (२) । अथवा (३)

---

(१) यथाश्रुते पर्व्वतो वह्निव्याप्यवान्न वा महानसं धूमवन्नेत्यादिसंशयवारणमशक्यमेव तादृशव्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्नतादृशसम्बन्धविषयकत्वात् विपरीतकोटिधर्म्मितावच्छेदकतानापन्नधर्म्मावच्छिन्नविशेष्यताकत्वाञ्चेत्यतस्तादृशविशेष्यताकत्वावच्छेदेन तादृशावगाहित्वस्य विवक्षणं, तथाच तादृशज्ञाने तादृशावगाहित्वाभावात् तद्वारणं, यादृशविषयतायां यादृशविषयतायाः साक्षान्निरूप्यनिरूपकभावः तादृशविषयताघटितावगाहिताद्वयोरेव ज्ञाननिष्ठयोरवच्छेद्यावच्छेदकभाव इति सिद्धान्तात् ।

(२) प्रतियोगितासम्बन्धेन हेतुतावच्छेदकसम्बन्धावच्छिन्नपरत्वलाभाय सम्बन्धसामान्यावच्छिन्नपरत्वे प्रकृत्यर्थतावच्छेदकनिष्ठाधेयतायाः सम्बन्धान्तरे सत्त्वेन तादृशाधेयत्वविशेषितनिरूपितत्वसम्बन्धेन प्रकृत्यर्थविशेषितप्रतियोगिकत्वावच्छिन्नसंसर्गान्तरावगाहिज्ञानजन्ये दोषवारणं दुःशक्यमेवेत्यवधेयम् ।

(३) पक्षपदसार्थक्याय कल्पान्तरमाह, अथवेति ।

धर्म्मान्तरविशिष्टावच्छिन्नबोधकप्रकृतिकभावप्रत्ययः प्रकृत्यर्थताव-च्छेदकधर्म्मांस्ताद्रूप्येणैव बोधयति (१)। गुरुत्वमेकत्वमित्यादि-तोजातिविशेषपुरस्कारेणैव गुरुत्वैकत्वादिगुणबोधनात्। उक्तञ्च गुणविवृतौ (२) दीधितिकृता "प्रतीतिस्तु ताद्रूप्येण धर्म्मत्वेन वा" इति, न च शक्त्यानन्त्यप्रसङ्गान्नायं पक्षः साधुरिति वाच्यम्। तदादीनामुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वेन प्रवृत्तिनिमि-त्तघटत्वाद्यनुगमेन शक्त्यैक्यवत् प्रकृतेऽपि प्रकृत्यर्थतावच्छेद-कतावच्छेदकत्वरूपोपलक्षणेन प्रकृत्यर्थतावच्छेदकतावच्छेदक-जातिविशेषादीनामनुगमसम्भवेन शक्त्यैक्यसम्भवाद्विशेषरूपेण लक्षणाया एव वोपगन्तव्यत्वात्। तादृशभावप्रत्ययार्थे च प्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकताघटकसम्बन्धेन (३) सम्बद्धत्वं संसर्गतया भासते तथाच प्रकृते पक्षानुयोगिकसम्बन्धावच्छिन्न-विशिष्टानुयोगिकसम्बन्धावच्छिन्नबोधकपक्षधर्म्मपदोत्तरभावप्रत्य-यस्य पक्षानुयोगिकसम्बन्धत्वेनैव तादृशसम्बन्धबोधकतया पक्ष-पदस्य च धर्म्मितावच्छेदकावच्छिन्नपरतया धर्म्मितावच्छेदक-विशिष्टानुयोगिकत्वावच्छिन्नव्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्न-सम्बन्धावगाहिज्ञानलाभात् सामञ्जस्यम्। सम्बन्धांशे विशेषण-

---

(१) न तु प्रकृत्यर्थविशेषितधर्म्मत्वेनेति शेषः।

(२) उदयनाचार्य्यप्रणीतगुणकिरणावलीविवृतौ।

(३) प्रकृत्यर्थतावच्छेदकताघटकसम्बन्धः प्रतियोगित्वं तेन सम्बद्धत्वं प्रति-योगिकत्वमेव, एतेनान्वयबलेन व्याप्तिविशिष्टधर्म्मिप्रतियोगिकत्वावच्छिन्नसम्बन्ध-लाभो दर्शितः।

प्रतियोगिकत्वं यथा विशेषणस्य सम्बन्धतया भासते तथा विशेष्यानुयोगिकत्वमपि विशेष्यस्य सम्बन्धतया भासते। अतः पक्षहेतुसम्बन्धविधया भासमानस्य संयोगादेर्व्विषयता हेतुप्रतियोगिकत्वेनेव पक्षतावच्छेदकावच्छिन्नानुयोगिकत्वेनाऽप्यवच्छिन्नेति न किञ्चिदनुपपन्नम्। 'पदार्थतावच्छेदकद्वयेति अन्वयबलेन एकपदार्थतावच्छेदकविशेषितधर्म्मिसंसर्गोपरागेणापरपदार्थतावच्छेदकबोधकत्वादित्यर्थः। ननु कर्म्मधारयलभ्यव्याप्तिविशिष्टाभिन्नपक्षधर्म्मरूपप्रकृत्यर्थान्वितपक्षसम्बन्धरूपतल्प्रत्ययान्तार्थस्य लक्षणवाक्यार्थघटकस्याप्रसिद्धा ह्रदोवह्निमानित्यादिभ्रमानुमितावव्याप्तिरित्याशङ्कायां समाधत्ते, 'ज्ञानपदेति, 'ज्ञानपदोपसन्धानेन' ज्ञानबोधकपदसमभिव्याहारनियन्त्रितव्युत्पत्तिविशेषेण, 'बाधिताबाधितसाधारणतज्ज्ञानलाभात्' पक्षधर्म्मतांशे बाधिताबाधितसाधारणस्य व्याप्तिवैशिष्ट्यसामानाधिकरण्यस्य ज्ञानलाभात्। अयमाशयः। ज्ञानबोधकपदसमभिव्याहृतस्य विषयविशेषणतया स्वार्थबोधकस्याऽपि पदस्य विषये स्वार्थानन्वयनिश्चयदशायां विषयाविशेषणतयैव ज्ञानविषयतावच्छेदकतया स्वार्थबोधकत्वं व्युत्पत्तिसिद्धं, कथमन्यथा विशेषदर्शिनोऽपि भ्रान्तिज्ञालोहितवह्निज्ञानवानयमित्यादिवाक्यं प्रयुञ्जते, तथाच वह्निव्याप्तिविशिष्टप्रतियोगिकत्वविषयतानिरूपितह्रदसम्बन्धविषयताशालिज्ञानत्वेन भ्रमात्मकपरामर्शस्याऽप्युक्तलक्षणवाक्याल्लाभः। अथ लोहितवह्निं जानातीत्यादौ लोहितवह्न्यादिपदार्थस्याभेदेनान्वये तात्पर्य्यानुपगमे समासासाधुत्वेन तात्पर्य्यस्यावश्यकत्वेऽपि तद्वाक्य-

प्रामाण्यनिर्व्वाहाय लोहितपदस्य तत्र लौहित्यादिना भासमाना-र्थकत्वमुपेयते, तत्र तत्पदशक्तिविरहेऽपि ज्ञानविषयबोधकतत्त-दर्थकपदस्य तत्त्वेन भासमाने निरूढ़लक्षणोपगमात्। तेन रूपेण भासमानत्वञ्च तत्प्रकारतानिरूपकविषयतावत्त्वं तादृशविषयता-वच्छेदेन च वह्न्यादेर्विषयतानिरूपकत्वं विषयितार्थकविभक्ति-समभिव्याहारात् प्रतीयते, अतो वह्निः शुक्ल इत्यादि प्रमाया-लोहितो वह्निरित्यादिज्ञानान्तरीयलौहित्यादिप्रकारतानिरूपक-विषयतावद्वह्न्यादिविषयकत्वेऽपि न तज्ज्ञानपरोक्तवाक्यस्य प्रामाण्यापत्तिः लौहित्यादिविशेष्यतापन्नवह्न्याद्यविषयकवह्न्यादि-ज्ञाननिष्ठतद्विषयितायाः लौहित्यादिविशेष्यतापन्नानिरूपितत्वात्। द्रव्यत्वादिनिष्ठघटाद्यनुयोगिकाधिकरणतानिरूपकत्वे घटाद्याधे-यतावच्छेदकतायां यादृशमवच्छेदकत्वं विषयितायास्तादृशं विष-यितानिरूपकतावच्छेदकत्वं विषयतानात्मकमपि विषयताया-मविरुद्धमेव। एवञ्च प्रकृतेऽपि व्याप्तिविशिष्टपदं व्याप्तिप्रकारेण भासमानपरं तस्य पक्षधर्म्मे अभेदेनान्वयः, तस्य भावप्रत्ययार्थे पक्षसम्बन्धे स्वप्रतियोगिकत्वेन भासमानत्वं सम्बन्धः, यस्य विशे-षणस्य येन सम्बन्धेन विशेष्ये अन्वयः ज्ञानविषयतया भासमाने विशेष्ये स्वीयतत्सम्बन्धोपरागेण भासमानत्वस्यैव तद्विशेषणसम्बन्ध-तया भानमिति व्युत्पत्तेः, अराजकीये धननिष्ठस्वत्वे राजकीयत्व-भ्रमरूपज्ञानपरे राज्ञो धनं जानातीत्यादिविशेषदर्शिवाक्ये षष्ठ्यर्थ-स्वत्वे निरूपितत्वसम्बन्धेन राज्ञोऽन्वये योग्यतानुपपत्त्या निरूपित-त्वेनैव भासमानत्वस्य तत्र तत्सम्बन्धताया उपगन्तव्यत्वात्।

तथाच व्याप्तिप्रकारेण यद्भासते तत्प्रतियोगिकत्वेन भासमान-पक्षसम्बन्धावगाहिज्ञानजन्यत्वलाभान्न भ्रान्तानुमित्यव्याप्तिर्न वा तत्र लक्षणवाक्याल्लक्षणबोधानुपपत्तिरिति चेत्, न, एवमपि पक्ष-धर्म्मपदस्य यथाश्रुतार्थपरतायाः आवश्यकत्वाद्वह्निव्याप्यजलवान् ह्रद इत्यादिपरामर्शजन्यभ्रमानुमितिसंग्रहेऽपि वह्निव्याप्यधूमवान् ह्रद इत्यादिभ्रमजन्यानुमितेर्दुःसंग्रहत्वात्। तत्र व्याप्तिप्रकारेण भासमानधूमे वास्तवपक्षधर्म्मताविरहात् पक्षधर्म्मपदस्य पक्षधर्म्म-त्वेन भासमानार्थकत्वे पक्षसम्बन्धस्य प्रकृत्यर्थतानवच्छेदकतया तदुत्तरभावप्रत्ययेन बोधनासम्भवात्, तेन रूपेण भासमानत्वरूप-प्रकृत्यर्थतावच्छेदकस्य भावप्रत्ययेन विवक्षणे परामर्शस्य तद-नवगाहितया असामञ्जस्यात् (१)। एवञ्च गुणादिरूपपक्षानु-योगिकहेतुतावच्छेदकसंयोगादिसम्बन्धाप्रसिद्धावपि गुणादिरूप-पक्षे संयोगादिना हेतुमत्ताभ्रमजन्यानुमितौ नाव्याप्तिः। पक्षा-नुयोगिकत्वविषयतानिरूपितसंयोगादिविषयताशालित्वेन तादृश-भ्रमस्यापि लक्षणवाक्यतो लाभात्। इदन्त्वापाततः पदार्थद्वया-भेदविवक्षायामेव कर्म्मधारयस्य साधुतया अत्र पक्षधर्म्मे व्याप्ति-विशिष्टाभेदाविवक्षायां कर्म्मधारयानुपपत्तिः, तद्विवक्षायाञ्च भ्रमस्थले विवक्षितलक्षणवाक्यार्थाप्रसिद्धयाऽव्याप्तिः स्फुटैव, एतदभिप्रेत्यैव भ्रमानुमित्यव्याप्त्या मतमेतदग्रे दूषयिष्यति,

---

(१) अथ लोहितवह्निमित्यादि असामञ्जस्यादित्यन्तं क्रोड़पत्रम्। अयं पाठो-बहुषु पुस्तकेषु नास्ति।

उक्तवाक्यस्य (१) चाप्रामाण्यमिष्टमेव, किन्तु लोहितं वह्निं जानातीत्यस्यैव प्रमाणत्वम् ।

---

चिन्तामणिदीधितिः ।

तन्न परामर्शेन नियमतो व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यग्रहे मानाभावात् गौरवेण च तद्विषयत्वेनाहेतुत्वात्, सम्बन्धसम्बन्धाग्रहेऽपि विशिष्टज्ञानत्वस्योपपादितत्वात्, भ्रमस्थले च तादृशसामानाधिकरण्याप्रसिद्ध्या तज्ज्ञानासम्भवात्, असत्ख्यातिनिरासात् । अवान्तरवाक्यार्थायोग्यत्वनिर्णये महावाक्यार्थज्ञानानुदयात् विषाणे शशसम्बन्धाभावनिश्चयदशायां शशविषाणजन्यमिदं कार्मुकं इति शाब्दबुद्धेर्ब्रह्मणापि दुरुपपादत्वात् ।

---

गादाधरी विवृतिः ।

सांसर्गिकविषयतायाः संसर्गावच्छिन्नत्वं निर्युक्तिकमित्याशयेन दूषयति, 'परामर्शेनेति परामर्शत्वस्य व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यग्रहत्वव्याप्यत्वे मानाभावादित्यर्थः । व्याप्तिविशिष्टधूमसंयोगी वह्निव्याप्यधूमवांश्च पक्ष इत्यादिसमूहालम्बनपरामर्शस्य व्याप्तिसम्बन्ध-पक्षसम्बन्धप्रकारकतया तत्सम्बन्धावगाहित्वं प्रामाणिकमेव

---

(१) लोहितवह्निं जानातीति वाक्यस्येत्यर्थः ।

इति नियमत इत्युक्तं, तथाच यत्र व्याप्तिवैशिष्ट्यं पक्षधर्म्मता च संसर्गतयैव भासते तज्जन्यानुमितावव्याप्तिर्यथाश्रुतलक्षण इति भावः। ननु तादृशज्ञानादनुमितिर्न भवत्येव तादृशसामानाधिकरण्यविषयकत्वेनैव परामर्शस्यानुमितिहेतुत्वात्तथाच क्वाव्याप्तिरित्यत आह, 'गौरवेण चेति, व्याप्तिविशिष्टहेतुविशिष्टपक्षज्ञानत्वेनैव लाघवेन हेतुत्वात् व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यविषयकत्वेन हेतुत्वे सामानाधिकरण्यविषयकत्वस्याधिकस्य निवेशात्, तथाच तदुभयसामानाधिकरण्यानवगाहिनोऽपि विशिष्टज्ञानादनुमित्युपपत्तिर्निष्प्रत्यूहैवेति भावः। ननु सम्बन्धसम्बन्धावगाहिज्ञानत्वमेव विशिष्टज्ञानत्वं न तु सम्बन्धज्ञानत्वमेव दण्डपुरुष-संयोगा इत्यादिसमूहालम्बनस्यापि तथात्वापातात् तथाचानुमितिजनकज्ञाने विशेषणीभूतव्याप्ति-साधनयोः संसर्गसंसर्गानवगाहित्वे तद्विशिष्टज्ञानत्वमेव तस्य नोपपद्यत इति कथमनुमितिजनकत्वमित्यत आह, 'सम्बन्धसम्बन्धेति, 'अग्रहेऽपि' अविषयीकरणेऽपि, 'विशिष्टज्ञानत्वस्येति। अयमाशयः। सम्बन्धसम्बन्धावगाहिज्ञानत्वमपि न विशिष्टज्ञानत्वं सम्बन्धसम्बन्धमादायापि समूहालम्बनसम्भवात् (१) अपि तु तत्प्रकारकत्वमेव तद्विशिष्टधीत्वं, प्रकारत्वञ्च विषयताविशेषः। न च संसर्गप्रतियोगित्वादेर्विशिष्टबुद्धावभाने प्रकारतात्वादिकं दुर्व्वचं स्यात् तथाहि प्रकारतात्वं सां-

---

(१) तथाच दण्ड-पुरुष-संयोग-समवाया इति समूहालम्बनस्यापि दण्डविशिष्टज्ञानत्वापत्तिरिति भावः।

संसर्गिकविषयतानिरूपितविषयतात्वं यदि तदा विशेष्यताया अपि तथात्वादतिप्रसङ्गः अपि तु संसर्गविषयतानिरूपितप्रतियोगित्व-विषयतानिरूपितविषयतात्वमेव, विशेष्यता च तादृशानुयोगित्व-विषयतानिरूपितैव न तु तादृशप्रतियोगित्वविषयतानिरूपिता विशेषणांश एव संसर्गप्रतियोगिताभानादिति नातिप्रसङ्गः (१) एवं प्रतियोगित्वस्थानेऽनुयोगित्वं निवेश्य विशेष्यतात्वं निर्व्वाच्यमिति संसर्गीयप्रतियोगित्वानुयोगित्वरूपसंसर्गान्तरभानं विशिष्टबुद्धावा-वश्यकमिति वाच्यम्। संसर्गतात्ववत्प्रकारतात्व-विशेष्यतात्वयोरपि स्वरूपसम्बन्धविशेषात्मकत्वात्। विशिष्टबुद्धेः संसर्गसंसर्गावगाहि-तानियमेऽपि उक्तरीत्या भ्रमानुमितावव्याप्तिर्निष्प्रत्यूहैवेत्याशये-नाह, 'भ्रमस्थले चेति, 'तज्ज्ञानासम्भवादिति व्याप्तिवैशिष्ट्यसमा-नाधिकरणपक्षधर्म्मत्वज्ञानासम्भवादित्यर्थः। तथाच तादृशविशिष्ट-ज्ञानजन्यत्वं लक्षणवाक्यार्थः, तस्य भ्रमानुमितिसाधारण्यमशक्य-मेव भ्रमस्य व्याप्तिवैशिष्ट्यसमानाधिकरणपक्षधर्म्मताविषयकत्वा-सम्भवेन लक्षणवाक्यार्थानन्तर्भावादिति भावः। ननु भ्रमेऽसदेव वैशिष्ट्यं भासते इति टीकाकारानुमतं (२) तथाच वह्निव्याप्यधूमवान् ह्रद इति भ्रमस्य व्याप्तिविषिष्टधूमादिप्रतियोगिक-ह्रदानुयोगिका-सद्वैशिष्ट्यविषयकत्वमव्याहतमेवेति कथं तादृशज्ञानासम्भव उच्यते इत्यत आह, 'असदिति, 'असतः' 'ख्यातिनिरासात्' ज्ञानविषयत्व-

---

(१) न विशेष्यतादौ प्रकारतात्वापत्तिरित्यर्थः।

(२) षड्दर्शनटीकाकृद्वाचस्पतिमिश्रानुमतमित्यर्थः।

निरासात्, ज्ञानविषयताव्यापकत्वस्य सत्त्वे व्यवस्थापनादिति यावत् । यदि चासतो ज्ञानविषयत्वसत्त्वेऽपि अभावाधिकरण-ताया अपसिद्धान्तत्वात् ज्ञानविषयत्वसमानाधिकरणाभावाप्रति-योगित्वरूपं तद्व्यापकत्वं सत्त्वेऽक्षतमेव इति नार्थतोऽसत्ख्याति-निराससम्भव इति मन्यते तदा सद्वृत्तित्वे ज्ञानविषयतात्वव्यापक-त्वमेव विवक्षणीयम्, असत्ख्यातिवादिनाम् (१) असद्वैशिष्ट्यज्ञान-विषयत्वस्य पारमार्थिकत्वात् । न च भ्रमस्य सन्मात्रविषयकत्वे भ्रमत्वव्याघात इत्याशङ्क्य (२) तथात्वेऽपि व्यधिकरणप्रकारकत्वेन भ्रमत्वनिर्व्वाहात् । इदञ्च वस्तुगतिमनुरुध्याभिहितं (३) वस्तुतो-ऽसद्वैशिष्ट्यभानेऽपि न प्रकृते निस्तारः अलीकस्य (४) संसर्गतयैव विषयताया वाचस्पत्यनुमतत्वात् तन्मतानुसरणेऽपि असत्या-व्याप्तिवैशिष्ट्यसमानाधिकरणपक्षधर्म्मतायाः तल्प्रत्ययान्तेन प्रति-पादनासम्भवात् (५) अपरमार्थिकधूमप्रतियोगिकह्रदानुयोगिक-

---

(१) नन्वसद्वैशिष्ट्यविषयत्वमप्यसत् तत्राभावाधिकरणताया अपसिद्धान्त-त्वात् विषयतावृत्त्यभावाप्रतियोगित्वरूपं व्यापकत्वं सद्वृत्तित्वेऽक्षतमेवेति नार्थ-तोऽसत्ख्यातिनिरास इत्याशङ्क्याह, असदिति ।

(२) असत्सम्बन्धविषयकत्वं भ्रमत्वं इत्यभिमानेनेयमाशङ्का, तथाच तदभाववद्-विशेष्यकत्वावच्छिन्न-तत्प्रकारकत्ववज्ज्ञानत्वं भ्रमत्वं न त्वसद्वैशिष्ट्यविषयकज्ञानत्व-मिति भावः ।

(३) अत्रासतः ख्यातिविषयत्वनिरसनमेवोद्देश्यमतस्तदर्थमेवासत्ख्याति-निरासादित्युक्तम् ।

(४) वस्तुतस्तस्य ख्यातिविषयत्वेपि भ्रमानुमित्यव्याप्तेरनुद्धार इत्याह, अलीकस्येति ।

(५) असतः पदशक्यत्वाभावादिति भावः ।

वैशिष्ट्यावगाहिभ्रमात्मकपरामर्शजन्यत्वस्य लक्षणवाक्यतोऽलाभात् लक्षणस्यासङ्घटितत्वेनाभ्रान्तस्य तत इतरभेदानुमानासम्भवाच्च। भ्रान्तपुरुषीयानुमानस्य (१) चातिप्रसक्तादिनापि सम्भवात्। ननु व्याप्तिविशिष्ट-पक्षधर्म्मयोरभेदो लक्षणवाक्यतः प्रतीयतां तथापि न तदंशस्य लक्षणघटकत्वमुपेयते अतिव्याप्त्याद्यवारकत्वादवश्य-विवक्षणीयव्याप्तिविशिष्टप्रतियोगिकत्वादिविषयतानिरूपितसंसर्गी-यविषयतामात्रनिवेशेनैव सामञ्जस्यात्, लक्षणवाक्यप्रतिपाद्य-ताया लक्षणघटकतानियतत्वे ज्ञानान्तकर्म्मधारयपक्षेऽपि अवश्य-विवक्षणीयस्य ज्ञानविशेषणव्याप्तिप्रकारकत्वांशे पक्षधर्म्मताविषय-कत्वावच्छिन्नत्वस्य निवेशेनैव सामञ्जस्यात् लक्षणवाक्यलभ्यस्य ज्ञानांशे पक्षधर्म्मताविषयकत्वविशेषणस्य वैयर्थ्येन लक्षणदोषात्। एवञ्च भ्रमानुमितौ न लक्षणाव्याप्तिशङ्का इत्याशयेनायोग्यता-ज्ञानादिविशेषदर्शिनां नोक्तवाक्याद्भ्रमानुमितौ लक्षणग्रहः सम्भव-तीति विशेषदर्शिनं प्रति प्रकृतवाक्यानर्थक्यमिति दूषणान्तर-माह, 'अवान्तरेति पक्षधर्म्माद्यंशेऽविशेषणस्य व्याप्तिवैशिष्ट्यादेर्न स्वातन्त्र्येण ज्ञानान्वयसम्भवः व्युत्पत्तिविरोधात्, अपि तु तत्त-द्विशेषणतापन्नस्यैव इति तत्र तदनन्वयनिश्चयोऽवान्तवाक्यार्थायो-ग्यतानिश्चयः तस्मिन् सति समुदायलक्षणवाक्यजन्यमहावाक्या-र्थज्ञानासम्भवादित्यर्थः। महावाक्यार्थयोग्यताज्ञानस्य अवान्तर-वाक्यार्थविषयकत्वनैयत्येनावान्तरवाक्यार्थधीविरोधिनोऽयोग्यता–

(१) ननु भ्रान्तपुरुषीयेतरभेदानुमानार्थमेव लक्षणमिदं वक्तव्यमित्यत आह, भ्रान्तेत्यादि।

ज्ञानस्य महावाक्यार्थयोग्यताज्ञानविरोधित्वादिति भावः । एतदेव दृष्टान्तेन द्रढ़यति, 'विषाण इति, 'शशसम्बन्धाभावेति, शशस्य विषाणजन्यमिति वाक्यजन्यसम्बन्धप्रकारकबोधाभिप्रायेणेदं, शशविषाणजन्यमिति वाक्यजन्यबोधस्य विषाणांशेऽभेदेन शशपदलक्ष्यशशसम्बन्धिप्रकारकतया सम्बन्धिभेदनिश्चयस्यैव तद्विरोधित्वात् । समास-व्यासयोः समानप्रकारकानुभवजनकत्वानुरोधेन षष्ठीतत्पुरुषस्थले पूर्व्वपदस्य सम्बन्ध एव लक्षणा, समासे व्युत्पत्तिवैचित्र्येण नामार्थयोरपि भेदान्वयबोधाभ्युपगमादित्याशयेनेदमित्यपि कश्चित् । शशसम्बन्धविशिष्टविषाणपरसर्व्वनामघटितवाक्यजन्यबोधपरतया व्याख्यानं पुनरसदेव, तथा सति विषाणे शशसम्बन्धस्य पदार्थतया अवान्तरवाक्यार्थत्वायोगात् ।

---

चिन्तामणिदीधितिः ।

न चात्र प्रमाणप्रस्तावात् प्रमैव लक्ष्या यदि च सल्लिङ्गकपरामर्शादपि भ्रान्तानुमितिस्तदा चरमज्ञानपदं प्रमापरमिति वाच्यम् । अव्याप्यपक्षधर्म्मयोस्तत्त्वावगाहिना परामर्शेन जनितायां वस्तुतः साध्यवत्पक्षावगाहितया प्रमायामव्याप्तेर्लिङ्गोपहितलैङ्गिकभाननिरासेनांशिकभ्रमत्वस्याप्ययोगात्, परमेश्वरतादृशज्ञानजन्यत्वस्य चातिप्रसञ्जकत्वात् । अतएव व्याप्तिविशिष्टे पक्षधर्म्मता तज्ज्ञानं वेत्यादिकमपास्तम् ।

गादाधरी विवृतिः ।

भ्रमानुमितेरलक्ष्यतया नाव्याप्तिप्रसक्तिरित्याशङ्कते, 'न चेति, 'प्रमाणप्रस्तावात्' प्रमाणतत्त्वमत्र विविच्यते इत्युपक्रमेण प्रमाणस्य निरूपणीयत्वात्, तन्निरूपणोपयोगितया प्रमैवानुमितिर्लक्षणीया । यद्यपि ह्रदो वह्निमानित्याद्यनुमितेरपि ह्रदत्वाद्यंशे प्रमात्वमेव विधेयांशे प्रमात्वविवक्षणे लिङ्गोपधानमतेऽपि धूलीपटलादौ व्याप्यत्वावगाहिज्ञानजन्यायां पर्व्वतादिपक्षकवह्न्याद्यनुमितौ विधेयांशे प्रमात्वस्याक्षततया लिङ्गोपहितेत्याद्यग्रिमग्रन्थासुस्थितेर्यावद्-भ्रमभेदकूटविवक्षणे तु ह्रदो वह्निमान् पर्व्वतश्च वह्निमानित्यादि-समूहालम्बनानुमितेरलक्ष्यतापातेनातिप्रसङ्गस्तथापि भ्रमान्यवृत्ति-विषयितावत्त्वमेव प्रमात्वमिह विवक्षणीयं उक्तसमूहालम्बनज्ञा-नीयवह्निमत्पर्व्वतादिविषयिता समूहालम्बनात्मिकायां पर्व्वतो वह्निमान् इत्यनुमितावपि वर्त्तते, ज्ञानव्यक्तिभेदेन विषयिता-भेदानुपगमादतस्तस्या लक्ष्यतैव, ह्रदो वह्निमानित्यनुमितिनिष्ठाया ह्रदादिविषयताया अपि भ्रमत्वघटकतया भ्रमत्वनैयत्यमेवातो न तस्याः लक्ष्यत्वम् ।

यद्यपि अत्रापि 'लिङ्गोपहितेत्यादिग्रन्थासङ्गतिरस्ति, तथाहि लिङ्गोपाधानपक्षेऽपि शुद्धपर्व्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपित-वह्न्यादिप्रकारतायाः तादृशप्रकारताशालिसंशयनिवृत्त्यर्थं तादृश-सिद्धिप्रतिबन्धकत्वार्थञ्च स्वीकरणीयत्वात् तादृश्याश्च उक्तरूप-त्वात् तादृशानुमितेर्लक्ष्यत्वं दुष्परिहरमेवेति तथापि तादृशविष-यितायां परामर्शजन्यतावच्छेदकत्वमपि विवक्षणीयं अन्यथा

क्तदत्वादिविषयतामादाय भ्रान्तानुमितेरपि लक्ष्यतापातात् तथाच तादृश्यास्त्र बाधाभावादेरेव जन्यतावच्छेदकत्वात् इत्यवधेयम् ।

ननु गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्याद्यसङ्कीर्णबाधस्थले या पक्षतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाहिन्यनुमितिस्तत्रैवातिव्याप्तिः तादृशानुमितेः साध्यस्य पक्षतावच्छेदकावच्छिन्नांशे भ्रमरूपतया अलक्ष्यत्वात् पक्षतावच्छेदकविशिष्टेऽपि पक्षे गन्धव्याप्यतया पृथिवीत्वादिरूपहेतुमत्तावगाहिनः परामर्शस्य प्रमात्वेन व्याप्तिविशिष्टप्रतियोगिक-पक्षसम्बन्धावगाहित्वादुक्तलक्षणस्यापि सत्त्वादित्यत आह, 'यदि चेति, सर्व्वत्र पक्षधर्म्मताबलात् पक्षतावच्छेदक-साध्ययोः सामानाधिकरण्यमेव भासते न तु तयोरवच्छेद्यावच्छेदकभावोपि तेन विनापि हेतोर्व्याप्तिपक्षधर्म्मत्वोपपत्तेस्तद्भासकबलाभावादित्यभिधाय उक्तबाधासङ्करस्थलस्य यज्ञपतिना दूषितत्वात् तन्मते न सल्लिङ्गकपरामर्शाद्भ्रमानुमितिः अपि तु मिश्रादिमत एवेत्यतः 'यदि चेत्युक्तम् । न च बाधितवह्नौ लाघवज्ञानसत्त्वे सल्लिङ्गकपरामर्शादपि बाधितो वह्निः पक्षे भासते इति सर्व्वेषामेवानुमतम् परन्तु तादृशानुमितेर्व्यापकतानवच्छेदकविशेषधर्म्मप्रकारकत्वं प्राचीना नानुमन्यन्ते, अतएव सामान्यधर्म्मावच्छिन्ननिरूपितव्याप्तिबलप्रवृत्तानुमाने विशेषबाधस्यादोषत्वं समानप्रकारकत्वेन विरोधित्वं व्यवस्थाप्य व्युत्पादितमुपाध्यायैर्बाधग्रन्थे, तावतापि च बाधितविषयकलाघवज्ञानजन्यानुमितेस्तदभाववति तत्प्रकारत्वरूपभ्रमत्वावच्छिन्नभेदघटितप्रमात्वं दुरुपपादमेवेति यदि चेत्यसङ्गतमेवेति वाच्यम् ।

तदवच्छिन्नाभाववति तदवच्छिन्नप्रकारकत्वावच्छिन्नभेदघटितप्रमात्वस्य लक्ष्यताप्रयोजकत्वोपगमे पर्व्वतादौ वह्नित्वादिना बाधितवह्न्यादिविषयकानुमितेर्लक्ष्यतासम्भवेन तत्सङ्गतेः। न चोक्तस्य प्रमात्वस्य लक्ष्यतानियामकत्वे जलपर्व्वतो वह्निमान्, पर्व्वतो जलवह्निमान् इत्याद्यनुमितौ स्वरूपतो भासमानविषयांशे भ्रमरूपायां विशिष्टपक्षाद्यप्रसिद्ध्याऽव्याप्तिर्दुर्व्वारैव तत्रापि तादृशप्रमात्वसत्त्वादिति वाच्यम्। तदभाववति स्वरूपतस्तत्प्रकारकभ्रमभेदमपि प्रमात्वशरीरे निवेश्य तद्वारणसम्भवात्।

केचित्तु यत्किञ्चिद्विधेयतावच्छेदकावच्छिन्नवत्पक्षावगाहित्वलक्षणपारिभाषिकप्रमात्वेनैव लक्ष्यताया विवक्षितत्वात् लाघवज्ञानाधीनोक्तानुमितौ मह्रानसीयत्वादेः प्रकारत्ववादिमतेऽपि वह्नित्वस्यैव विधेयतावच्छेदकतया पक्षस्य तदवच्छिन्नवत्त्वमेव तादृशप्रमात्वानपायात्,गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् इत्यादौ नव्यनये तादृशकालावच्छिन्नगन्धसमवायस्य संसर्गत्वात्, तेन सम्बन्धेन पक्षे विधेयाभावान्न तस्य लक्ष्यत्वम्। न चेदृशप्रमात्वस्य लक्ष्यतानियामकत्वे लिङ्गोपधानमतेऽप्यव्याप्यादिलिङ्गकानुमितेरलक्ष्यत्वाप्रसक्त्या लिङ्गोपहितेत्याद्ययिमग्रन्थोनावतरतीति वाच्यम्। इदानीं लाघवज्ञानजन्यानुमितेरलक्ष्यत्वे क्षतिविरहात्, भ्रमान्यवृत्तिविषयतावत्त्वमेव लक्ष्यतानियामकं वाच्यमित्याशयादित्याहुः (१)।

'प्रमापरमिति, अत्रापि लक्ष्यतानियामकं यादृशप्रमात्वं तदेव

(१) केचित्त्वित्यादिः आहुरित्यन्तः पाठो बहुषु पुस्तकेषु नास्ति।

विवक्षणीयं अतः किञ्चिदंशे प्रमात्वमादाय नातिप्रसङ्गस्य दुर्व्वारता । 'अव्याप्यापक्षधर्म्मयोरिति अव्याप्यधूलीपटलादौ व्याप्यत्वावगाहिना अपक्षधर्म्मे च महानसत्वादौ पक्षधर्म्मत्वावगाहिना परामर्शेन जनितायां वस्तुगत्या वह्न्यादिमति पर्व्वतादौ वह्निमत्त्वाद्यवगाहिन्यां प्रमानुमितावव्याप्तिरित्यर्थः । तज्जनकपरामर्शस्य व्याप्तिविशिष्टप्रतियोगिक-पक्षानुयोगिकसम्बन्धानवगाहित्वात् धूलीपटलादिसम्बन्धस्य व्याप्याप्रतियोगिकत्वात् महानसत्वादिसम्बन्धस्य पक्षाननुयोगिकत्वादिति भावः । नन्वनुमितौ पक्षांशे व्याप्यत्वेन लिङ्गभानोपगमादुक्तानुमितेर्यथायोगं व्याप्ति–पक्षधर्म्मतांशे भ्रमरूपतयाऽलक्ष्यतैवेति कथमव्याप्तिरत आह, 'लिङ्गोपहितेति लिङ्गविशिष्टपक्षे साध्यभानस्य अन्यक्कृता (१) निराकार्य्यत्वेन उक्तानुमितेर्व्याप्त्याद्यंशे भ्रमत्वस्याप्ययोगादित्यर्थः । लिङ्गोपहितभाने परामर्शजन्यतावच्छेदककोटावव्यहितोत्तरत्वादिकं न निवेश्यते लिङ्गविषयतायाजन्यतावच्छेदकत्वोपगमेनैव व्यभिचारवारणसम्भवादित्यादिरीत्या (२) लाघवसम्भवेऽपि मणिकृतां तत्रासम्मतेः तदीयलक्षणं तन्मतमवलम्ब्य व्याख्यातुमुचितमिति भावः । ननूक्तानुमितिष्वपि व्याप्तिविशिष्टधूमादिप्रतियोगिकपर्व्वतानुयोगिकसम्बन्धावगाहिभगवज्ज्ञानजन्यत्वसत्त्वान्नाव्याप्तिरित्यत आह,

---

(१) मणिकृतेति पा० ।

(२) वह्निव्याप्यालोकपरामर्शोत्तरानुमितेः पूर्व्वं वह्निव्याप्यधूमपरामर्शसत्त्वनिबन्धनव्यभिचारवारणं सम्भवतीति भावः ।

'परमेश्वरेति, 'तादृशेति व्याप्तिविशिष्टप्रतियोगिकपक्षसम्बन्धावगाहीत्यर्थः, 'अतिप्रसञ्जकत्वात्' प्रत्यक्षादावतिव्याप्तत्वात्, तथाचातिप्रसङ्गवारणाय तादृशसम्बन्धावगाहिनिश्चयत्वावच्छिन्नकारणता जन्यत्वानवच्छिन्नकार्य्यता वा निवेशनीया, तथाचोक्तभ्रमजन्यानुमितौ भगवज्ज्ञानस्य उपादानप्रत्यक्षविधयैव कारणत्वं तस्याश्च जन्यत्वेनैव जन्यतेति (१) नाव्याप्तिनिरासस्सम्भवः। न च भगवज्ज्ञानस्य परामर्शत्वेनापि जनकता नित्यस्येत्यादिव्याप्त्यनभ्युपगमात् परामर्शहेतुतायां जन्यत्वस्याधिकस्यानिवेशादिति तादृशजनकतानिरूपितानुमितित्वावच्छिन्नजन्यतामादायैव कूटलिङ्गकानुमितौ(२) अव्याप्तिवारणसम्भव इति वाच्यम्। तादृशानुमित्यव्यहितपूर्व्वं तदधिकरणात्मनि व्याप्तिविशिष्टप्रतियोगिकपक्षानुयोगिकसम्बन्धावगाहिनिश्चयासत्त्वेन व्यभिचारप्रसक्त्या तादृशनिश्चयत्वावच्छिन्नजन्यतावच्छेदकस्य तादृशानुमितितो व्यावर्त्तनीयतया (३) तद्रूपावच्छिन्नजन्यतामादाय लक्षणसमन्वयासम्भवादिति भावः। इदमत्रावधेयं वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शस्यापि न व्याप्तिविशिष्टप्रतियोगिकपक्षसम्बन्धावगाहित्वेन हेतुता धूमत्वादिना धूलीपटलाद्यवगाहितदाकारभ्रमासंग्रहात्, तथाच तद्रूपा-

---

(१) तथाच समवायेन जन्यत्वावच्छिन्नं प्रति विषयतया उपादानप्रत्यक्षत्वेन भगवज्ज्ञानसाधारणेन कारणत्वमिति भावः।

(२) भ्रमपरामर्शजन्यप्रमानुमितावित्यर्थः।

(३) तथाच सामानाधिकरण्याव्यवहितोत्तरत्वोभयसम्बन्धेन तादृशनिश्चयविशिष्टानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन हेतुत्वस्य वक्तव्यत्वादिति भावः।

वच्छिन्नकारणताघटितलक्षणस्य प्रत्यक्षविशेषाद्यतिव्याप्तिवारणा-
योपगमेऽसम्भव एव स्यात् कथमुक्ताव्याप्त्यभिधानम्। यदि किञ्चि-
ल्लिङ्ग-साध्यकानुमितिः प्रमात्मकपरामर्शादेव तदा तत्तोक्तरूपेण
हेतुतासम्भवान्नासम्भव इत्युच्यते, तदा तादृशानुमितिजनकपरामर्श-
कारणताघटितजातिघटितलक्षणोपगमेनोक्ताव्याप्तेरपि नावकाशः।
वस्तुतस्तु विषयतायां विशिष्टान्वयबलात् उक्तवाक्यतो व्याप्यवच्छिन्न-
हेतुनिष्ठावच्छेदकताकपक्षसम्बन्धविषयताकत्वेनापि परामर्शला-
भात् तद्रूपस्यैव कारणतावच्छेदकत्वविवक्षया नासम्भवो नाप्युक्त-
स्थलेऽव्याप्तिः तद्रूपस्य भ्रमसाधारणत्वात् वास्तवव्याप्तिविशिष्ट-
प्रतियोगिकपक्षसम्बन्धस्य लक्षणवाक्यजन्यबोधेऽवश्यं भानेन तद्वि-
षयकत्वेन परामर्शोपस्थितावपि तस्य न कारणतावच्छेदकत्वम्,
अपि तु कारणतासामानाधिकरण्यमेव, कूटलिङ्गकपरामर्शसाधा-
रणोक्तरूपावच्छिन्नकारणताया भगवज्ज्ञाने वास्तवव्याप्यप्रतियो-
गिकतादृशसम्बन्धावगाहित्वसामानाधिकरण्यसत्त्वेन कूटलिङ्गक-
प्रमानुमितिपरलक्षणवाक्ये नावान्तरवाक्यार्थायोग्यत्वमपि लक्षण-
वाक्यतो व्याप्तिविशिष्टप्रतियोगिकत्वविशिष्टपक्षसम्बन्धावगाहि-
ज्ञानवृत्तित्वेन कारणत्वे भासमाने व्याप्तिविशिष्टप्रतियोगिकत्वाव-
च्छिन्नपक्षसम्बन्धावगाहिज्ञानत्वावच्छिन्नत्वेनापि तद्भासते तथाच
व्याप्तिविशिष्टप्रतियोगिकत्वविशिष्ट-पक्षसम्बन्धावगाहिज्ञानवृत्ति-
त्वोपलक्षितव्याप्तिविशिष्टप्रतियोगिकत्वावच्छिन्नपक्षसम्बन्धावगाहि-
ज्ञानत्वावच्छिन्नत्वविशेषितजनकताया लक्षणघटकत्वादीश्वरज्ञान-
वृत्तिजनकतायाश्च तादृशत्वात् तादृशानुमितौ लक्षणसमन्वयः

प्रत्यक्षादावतिव्याप्तिवारणञ्च सम्भवतीति ध्येयम्। 'अतएव' भ्रमजन्यानुमितावव्याप्तेरेव, व्याप्तिविशिष्टे या पक्षधर्म्मतेति सप्तमीतत्पुरुषेण वास्तवव्याप्तिविशिष्टप्रतियोगिकपक्षसम्बन्धावगाहित्वरूपकर्म्मधारयपक्षीयार्थ एव पर्य्यवसानात् व्याप्तिविशिष्टे यत्पक्षधर्म्मताज्ञानमिति ज्ञानान्तेन विषयत्वार्थकसप्तमीतत्पुरुषसमासेन च वास्तवव्याप्तिविशिष्टविषयकपक्षसम्बन्धज्ञानस्य लाभाद्वह्निव्याप्यधूलीपटलवान् पर्व्वत इत्यादिज्ञानासंग्रहादिति भावः। 'आदिपदाद्व्याप्तिविशिष्टा व्याप्तिसमानाधिकरणा या पक्षधर्म्मता इत्यादिसमासपरिग्रहः। यद्यपि वक्ष्यमाणज्ञानान्तकर्म्मधारयपक्षे प्रकारितारूपस्येव तत्प्रकारकज्ञानविषयत्वरूपस्य वैज्ञानिकस्य वैशिष्ट्यस्य विवक्षया ज्ञानान्तसप्तमीतत्पुरुषपक्षेऽपि व्याप्तिविशेष्यतापन्नहेतुविषयकत्वावच्छेदेन पक्षधर्म्मताविषयकज्ञानपर्य्यवसानादुक्ताव्याप्तिपरीहारः सम्भवति यत्र व्याप्तेरप्रसिद्धिः तत्रापि व्याप्तिपदस्य वक्ष्यमाणकल्पे विलक्षणप्रकारितायामिव एतत्कल्पे विलक्षणप्रकारतानिरूपितविशेष्यतायां लक्षणामुपगम्याव्याप्तिपरीहारसम्भवः, पक्षधर्म्मत्वाप्रसिद्धिस्थलेऽपि वक्ष्यमाणैव गतिस्तथापि व्याप्तिपदलक्षणाया आवश्यकत्वे तत्पुरुषमपेक्ष्य लाघवात् (१) कर्म्मधारय एवाश्रयितुमुचित इत्याशयेन तत्पुरुष-उपेक्षितः।

---

(१) तथाच ज्ञानान्ततत्पुरुषे लक्षणाद्वयं कर्म्मधारये पुनरेका लक्षणेति लाघवमिति भावः।

चिन्तामणिदीधितिः।

व्याप्तिविशिष्टस्य पक्षधर्म्मस्येति द्वन्द्वाश्रयणाद्व्याप्ति-विशिष्टत्व-पक्षधर्म्मत्वावगाहिज्ञानजन्यत्वं लभ्यते पदार्थ-योरभेदेऽपि पदार्थतावच्छेदकभेदेनैव प्रमाण-प्रमेये-त्यादिसूत्रे अन्यत्र च द्वन्द्वस्य दर्शनात् पदार्थद्वयाभेद-बोधकाच्च कर्म्मधारयाद्भेदाभेदोदासीनपदार्थद्वयबोध-जनकत्वेनैव द्वन्द्वस्य भेदात्। विशिष्टपदस्य धर्म्म-परतया वा व्याप्तिवैशिष्ट्य-पक्षधर्म्मत्वयोर्लाभात्। न चैवमालोको वह्निव्याप्यो धूमवान् पर्व्वत इति ज्ञान-जन्येऽतिप्रसङ्गः, एकत्र तदुभयावगाहित्वस्योक्तत्वा-दिति केचित्।

---

गादाधरी विवृतिः।

मिश्रोक्तद्वन्द्वपक्षं दूषयितुमुपन्यस्यति, 'व्याप्तीति, 'व्याप्तिवि-शिष्टत्व-पक्षधर्म्मत्वावगाहीति व्याप्तिसम्बन्ध-पक्षसम्बन्धविषयकेत्यर्थः, "द्वन्द्वात् पर इत्यादिन्यायेन (१) भावप्रत्ययार्थेन व्याप्तिविशिष्टस्या-प्यन्वयादिति भावः। एवञ्च सम्बन्धविधया व्याप्तिवैशिष्ट्याद्यवगाहि-ज्ञानस्य तत्सामानाधिकरण्यानवगाहित्वेऽपि तदवगाहित्वस्या-क्षतत्वान्नासंग्रहः। यद्यपि व्याप्तिवैशिष्ट्यादेः ज्ञानविषयत्वान्वये

---

(१) द्वन्द्वात्परः पूर्व्वो वा यः श्रूयते स लभते प्रत्येकसम्बन्धं इति न्यायादित्यर्थः।

व्याप्त्यादेरुपलक्षणत्वेऽतिप्रसङ्गात् (१) विशेषणतैवोपगन्तव्या तथाच तद्विशिष्टस्य वैशिष्ट्यादेर्ज्ञानविषयत्वान्वये वैशिष्ट्यानुयोगिक-विशेषणवैशिष्ट्यस्यापि तदन्वय आवश्यक इति संसर्गतया व्याप्त्यादेर्वैशिष्ट्यावगाहिज्ञानं दुःसंग्रहमेव, विशेषणसंसर्गस्य तदन्वयोपगमे च उपाध्यायमतेऽपि नोक्तपरामर्शसंग्रहः उक्त-रीत्या लक्षणवाक्यजन्यबोधे व्याप्तिवैशिष्ट्यादिसामानाधिकरण्यस्य तत्संसर्गतयैव भानात्। तथापि संसर्गभानोपगमे एतन्मते सकल-परामर्शसंग्रहः, उपाध्यायमते च व्याप्त्यादिवैशिष्ट्यं यत्र संसर्गतया भासते तस्य तावता संग्रहेपि भ्रमस्थले उभयसामानाधिकरण्या-प्रसिद्धा अव्याप्तिर्दुर्व्वारैवेति विशेषः। अथास्तुपगम्यतां संसर्गे विशे-षणप्रतियोगिकत्वस्य संसर्गतया भानं तथापि तद्विषयताया अनु-मितिकारणतावच्छेदककोटिनिवेशे मानाभाव इति वक्ष्यमाणाति-प्रसङ्गस्य वारणाय येन रूपेण परामर्शस्य लक्षणवाक्याल्लाभस्तस्य जनकतावच्छेदकताया विवक्षणीयतया संसर्गानुयोगिकसंसर्गविषय-त्वघटितलक्षणवाक्यप्रतिपाद्यतावच्छेदकरूपस्य चानुमितिजनकता-नवच्छेदकतया असम्भव इति चेन्न, प्रकारतात्वस्य संसर्गप्रतियोगि-त्वविषयतानिरूपितविषयतात्वरूपतया प्रकारतात्वेन व्याप्तिप्रकार-तानिवेशेन संसर्गप्रतियोत्वविषयताया अपि कारणतावच्छेदक-गर्भे निवेशात् वैशिष्ट्यानुयोगिकसंसर्गविशेषावच्छिन्नत्वेनोपस्थित-व्याप्तिविषयताघटितसमुदाये तादृशसम्बन्धावच्छिन्नत्वस्योपलक्षण-

(१) वैशिष्ट्यवह्निमान् पर्व्वत इत्यादिज्ञानजन्ये अतिप्रसङ्गादिति भावः।

त्वोपगमेन तदंशं परित्यज्य इतरांशे कारणतावच्छेदकत्वविवक्षण-सम्भवाच्च। ननु पदार्थयोरभेदे न द्वन्द्वस्य साधुता "पदार्थानां प्रधानत्वे परस्परविभेदतः। एकदैकक्रियायोगात् भवति द्वन्द्वसञ्ज्ञकः" इत्यभियुक्तैरभिधानात् एकघटादिपरघट-कलसादिपदे तददर्शनात् (१) तथाच प्रकृते व्याप्तिविशिष्टपक्षधर्म्मपदयोर्द्वन्द्वसाधुत्वानुरोधेन विभिन्नधर्म्मिपरत्वोपगमे एकधर्म्मिनिष्ठव्याप्तिवैशिष्ट्यपक्षधर्म्मत्वावगाहिपरामर्शासंग्रह इत्याशङ्का एकधर्म्मिपरत्वेऽपि द्वन्द्वमुपपादयति, 'पदार्थयोरिति, 'पदार्थयोः' पदजन्यप्रतीतिविशेष्यतयाऽभिप्रेतयोः, 'पदार्थतावच्छेदकभेदेनेति तथाच पदजन्यप्रतीतिविषयतया अभिप्रेतत्वरूपपदार्थतावच्छेदकादिसाधारणपदार्थत्वाश्रयस्य भेद एव द्वन्द्वनियामक इति भावः। एतेन (२) नानार्थेतर (३) स्वरूपैकशेषस्थलेऽपि विशेष्यघटादिव्यक्तिभेदेन द्वन्द्वप्रसक्त्या स्वरूपैकशेषस्य द्वन्द्वापवादकताप्रवादसङ्गतिः। घटत्वेनैकघटतात्पर्य्यकघट-कलसपदयोः प्रतिपाद्यघट-घटत्वयोर्भेदेऽपि न द्वन्द्वः, एकपदप्रतिपाद्येऽपरपदप्रतिपाद्यत्वावच्छिन्नभेदस्यापेक्षितत्वात्। वस्तुतस्तु (४) पदार्थयोर्भेदः पदार्थवैलक्षण्यं एकपदप्रतिपाद्यविशिष्टार्थस्यापरपदप्रतिपाद्यविशिष्टार्थपर्य्याप्तविषयताश्रयत्वं पर्य्यवसितं द्वन्द्व-

(१) व्यक्तिद्वयादिपरघट-कलसादिपदघटितद्वन्द्वो भवत्येवेति व्यञ्जितम्।

(२) एतादृशपदार्थत्वाश्रयभेदस्य द्वन्द्वनियामकत्वेनेत्यर्थः।

(३) नानार्थकस्वरूपैकशेषस्थले पदार्थतावच्छेदकभेदमात्रस्य द्वन्द्वनियामकत्वेऽपि द्वन्द्वप्रसक्त्या तदपवादकताप्रवादसङ्गतेरित्यतो नानार्थेतरेति।

(४) नन्वेवं मेय-वाच्ययोरभेद इत्यादौ मेयादिपदप्रतिपाद्ये वाच्यादिपदप्रतिपाद्यत्वावच्छिन्नभेदासत्त्वात् द्वन्द्वाप्रसक्तिरित्यत आह, वस्तुतस्त्विति।

नियामकम्। एतेन मेय-वाच्ययोरभेद इत्यादौ मेयादिपदप्रतिपाद्ये वाच्यादिपदप्रतिपाद्यत्वावच्छिन्नभेदासत्त्वेऽपि न क्षतिः (१) गगनाकाशयोरभेद इत्यादौ च गगनादिपदं तद्वाच्यत्वावच्छिन्नपरमिति पदार्थतावच्छेदकभेदेन द्वन्द्वः। अथ द्वन्द्वबाधार्थं स्वरूपैकशेषानुशासनमित्ययुक्तं समस्यमानपदानामानुपूर्व्वीभेदरूपवैरूप्यस्य द्वन्द्वनियामकतां स्वीकृत्यैव स्वरूपाणां द्वन्द्ववारणसम्भवादिति चेन्न, न हि द्वन्द्वबाध एव स्वरूपैकशेषफलं ; किन्तु तदननुशासने घटा इत्यादौ बहुत्वान्वयानुपपत्तिः सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति व्युत्पत्तेरेकघटपदेन बहुघटबोधनासम्भवात्,(२) सकृदर्थं गमयतीत्यस्यानेकशक्तिविषयाबोधकत्वार्थकत्वेऽपि इन्द्र-चन्द्रादिपरे हरय इत्यादावगतिः, एकशेषानुशासने तु तत्र बहुपदेभ्य एव बहूनां बोधः। बहुपदाश्रवणञ्च इतरेषां लोपात्, एकशेषस्य इतरलोपपर्य्यवसितत्वात्। अत्राहुः स्वरूपैकशेषः कृतद्वन्द्वानामेव न तु द्वन्द्वापवादकता तस्य तथा सति सविभक्तिकानामेव द्वन्द्वसम्भवात् सविभक्तिकानामेकशेषस्य वाच्यतया श्रूयमाणपदोत्तरं सुब्विभक्तेरवस्थानापत्तेः, लुप्तपदानां श्रूयमाणबहुवचनाप्रकृतितया तदर्थान्वितबहुत्वबोधकतायास्तत्रानुपपत्तेश्च। समासोत्तरं बहुवचनोपगमे च समासान्तर्गतसकलपदानामेव विभक्तिप्रकृतितया सामञ्जस्यात्। न च कृतद्वन्द्वानामेकशेषोपगमे पादाः

---

(१) मेयपदप्रतिपाद्यविशिष्टपर्य्याप्तविषयताया वाच्यपदप्रतिपाद्यविशिष्टापर्य्याप्तत्वादिति भावः।

(२) एकव्यक्तिमात्रबोधने तत्र बहुत्वस्य बाधादन्वयानुपपत्तिः।

मसकाः इत्यादौ द्वन्द्वश्च प्राणितूर्य्य-सेनाङ्गानां क्षुद्रजन्तवः इत्यादि-सूत्रैरेकवद्भावप्रसक्त्या बहुवचनानुपपत्तिरिति वाच्यम्। तत्र सूत्रे द्वन्द्वपदस्य एकशेषाविषयो यो द्वन्द्वस्तत्परत्वोपगमात्। वस्तुतस्तु नेष्यत एवैकशेषः। उक्तव्युत्पत्तेरप्रामाणिकत्वात्, सति तात्पर्य्ये सकृदनुसंहितादप्येकपदात् युगपदनेकार्थबोधस्येष्टत्वादिति। 'अन्यत्र' नीलघटयोरभेद इत्यादौ, अत्र पदार्थतावच्छेदकगतमेव द्वित्वादिकं द्विवचनादिना प्रत्याय्यते साधुत्वार्थकमेव वा द्विवचनादिकं, उर्व्वस्यप्सरस इत्यादौ बहुवचनवत्, तत्रापि प्रकृत्यर्थगत-गुणादिकमादाय बहुत्वबोधकत्वमिति तु न युक्तं गुणादेरप्रकृत्यर्थ-त्वात् तत्साधारणबहुत्वबोधोपगमेऽतिप्रसङ्गात् (१) अजहत्स्वार्थ-लक्षणया गुणादीनामपि प्रकृत्यर्थतोपगमे मुख्यार्थपरपदोत्तर-बहुवचनस्य पदसाधुत्वमात्रार्थकतायामविवादात् इत्यलमप्रस्तुता-नल्पजल्पनेन। नन्वेकधर्म्मिबोधकपदयोरपि द्वन्द्वोपगमे द्वन्द्वस्य कर्म्मधारयभेदानुपपत्तिः, तादृशपदद्वयसमासस्यैव कर्म्मधारय-त्वादित्यत आह, 'पदार्थेति, तथाच वस्तुतोऽभिन्नधर्म्मिबोध-कपदद्वयकसमासत्वं न कर्म्मधारयत्वम् अपि तु एकपदार्थेऽपरपदा-र्थाभेदबोधकसमासत्वमेवेति भावः। 'भेदाभेदोदासीनत्वं' भेदा-भेदज्ञानाविषयत्वं, भेदोपादानं दृष्टान्तविधया, अभेदबोधव्यवच्छे-देनैव कर्म्मधारयविशेषोपपत्तेः, कर्म्मधारयस्थलेऽभेद इव द्वन्द्वस्थले पदार्थस्य तत्त्वाच्छेदकस्य वा भेदो यथायोगं भासते इति भ्रम-

(१) घटगतगुणादिकमादाय एकघटतात्पर्य्येऽपि घटा इति प्रयोगापत्तेः।

निराकरणाय वा तदुपादानम्। आस्तां वा पदार्थभेदेनैव द्वन्द्वः, तथापि तल्प्रत्ययान्तेन विशिष्टान्तस्य द्वन्द्वोपगमादुक्तार्थतासम्भव-इत्याशयेनाह, 'विशिष्टपदस्येति, भावक्तान्तत्वोपगमेनेति शेषः, 'धर्म्मपरतया' वैशिष्ट्यपरतया। 'ज्ञानजन्ये' अनुव्यवसायादौ, 'अतिप्रसङ्ग इति, तादृशसमूहालम्बनस्यापि व्याप्तिवैशिष्ट्यपक्षधर्म्म-त्वोभयावगाहितायाः सत्त्वादिति भावः। इदञ्च यथाश्रुताभि-प्रायेण, तत्त्वेन जनकत्वविवक्षणे त्वऽसम्भवो बोद्धव्यः। अनुमित्य-जनकोपदर्शितसमूहालम्बनसाधारणस्य तदुभयावगाहिज्ञानत्वस्य तज्जनकतानवच्छेदकत्वात्। 'एकत्रेति एकधर्म्मिविषयकत्वावच्छे-देनेत्यर्थः। तथाच व्याप्तिवैशिष्ट्यावगाहितावच्छेदकविषयितानि-रूपकधर्म्मिविषयकत्वावच्छेदेनैव पक्षधर्म्मतावगाहित्वं पर्य्यवसितं, एतादृशार्थस्य लक्षणवाक्ये एकत्रेति पूरणादिना लाभो बोध्यः।

---

चिन्तामणिदीधितिः।

तदप्यसत्, एवमपि धूमो वह्निव्याप्यो द्रव्यं पर्व्वतवृत्ति इति ज्ञानजन्येऽतिप्रसङ्गात्, एक-रूपेण तदुभयावगाहित्वस्योक्तौ च मीमांसकमतानु-प्रवेशात्। मिथस्तदुभयोपश्लेषावगाहित्वस्य च परा-मर्शाव्यापकत्वात्। न च तदुभयविषयत्वनियत-धर्म्मावच्छिन्नकारणताप्रतियोगिककार्य्यताशालित्वमर्थः, पक्षधर्म्मतापदोपादानवैयर्थ्यात्।

गादाधरी विवृतिः।

'एवमपि' एकत्रोभयावगाहिताविवक्षणेपि। नन्वेकधर्म्मावच्छिन्नधर्म्मिण्युभयावगाहित्वविवक्षणान्न धूमो वह्निव्याप्यो द्रव्यं पर्व्वतवृत्ति इति ज्ञानजन्येऽतिप्रसङ्ग इत्यत आह, 'एकरूपेणेति, 'मीमांसकमतानुप्रवेशादिति, मीमांसकैर्यथा वह्निव्याप्यवानयमित्यादिव्याप्यतावच्छेदकानवगाहिपरामर्शादनुमितिरुपलप्यते धूमो वह्निव्याप्यो धूमवान् पर्व्वत इत्यादिसमूहालम्बनाच्चानुमितिरुपेयते तेषामेकरूपेण व्याप्ति-पक्षधर्म्मताज्ञानस्यानुमितिहेतुत्वात् तथोक्तरीत्या लक्षणं व्याचक्षाणेनाऽपि तत्र तत्रानुमितिरुपलपनीया स्वीकार्य्या च। अन्यथा (१) अव्याप्त्यतिव्याप्त्योः प्रसङ्गादित्यर्थः। तथाच विशिष्टपरामर्शत्वेनानुमितिहेतुत्ववादिनां नैयायिकानां नोक्तरूपावच्छिन्नहेतुताया लक्षणे प्रवेशसम्भव इति न्यायमतेऽव्याप्त्यादिदोष आवश्यक एवेति भावः। यद्यपि धर्म्मिनिरूपकैकविषयत्वावच्छिन्नतदुभयविषयताविवक्षणे (२) न समूहालम्बनजन्येऽतिप्रसङ्गः न वा व्याप्यतावच्छेदकानवगाहिपरामर्शजन्यानुमित्यसंग्रहः, तथापि व्याप्तिपक्षधर्म्मत्वाप्रसिद्धिस्थलेऽव्याप्ति-

(१) लक्षणे यथाश्रुततादृशज्ञाननिष्ठजनकतानिरूपितजत्वप्रवेशे तद्रूपेण कारणत्वस्याविवक्षणे चेत्यर्थः। वह्निव्याप्यवान् इति ज्ञानजन्यानुमितावव्याप्तिः समूहालम्बनानुव्यवसायेऽतिव्याप्तिरपीत्यर्थः।

(२) यद्यपि अवच्छेद्यावच्छेदकभावापन्नधर्म्मिविषयतानिरूपिततदुभयविषयताविवक्षणे इति पा०। एतच्च अन्तराभासमानप्रकारिताविशेष्यितयोरैक्याभिप्रायेण। भेदे तु स्वावच्छिन्नत्व-स्वावच्छिन्नविषयित्वावच्छिन्नत्वान्यतरसम्बन्धेन धर्म्मिनिरूपितैकविषयितावत्तदुभयावगाहित्वं विवक्षणीयमिति बोध्यम्।

रेव एतत्कल्पोपिच्चाबीजमित्यवधेयम् । ननु परस्परोपश्लेषिणोभयावगाहित्वविवक्षणान्न समूहालम्बनजन्येऽतिप्रसङ्गः, तच्चैकतरसम्बन्धविषयकत्वावच्छेदेनापरावगाहित्वं सम्बन्धः सामानाधिकरण्यमित्यत आह, 'मिथ इति, 'परामर्शाव्यापकत्वादिति, सम्बन्धसम्बन्धावगाहिताया विशिष्टबुद्धावप्रामाणिकतया व्याप्तिवैशिष्ट्याद्यप्रकारकपरामर्शस्य तत्सामानाधिकरण्यानवगाहित्वादिति भावः । यद्यप्युभयसामानाधिकरण्यावगाहितायाः परामर्शाव्यापकत्वस्य प्रागेवाभिहितत्वादिदानीमुक्तशङ्का नावतरितुमर्हति, तथापि पूर्व्वमुपाध्यायमते भ्रान्तानुमित्यव्याप्तावेव निर्भरस्य कृतत्वात् सम्बन्धसम्बन्धावगाहिताभ्युपगमेन शङ्कासम्भवो बोद्धव्यः । 'परामर्शाव्यापकत्वादित्युपलक्षणं उक्तार्थस्य लक्षणवाक्यादलाभोऽपि दोषो बोध्यः, उभयविषयकत्वविशिष्टस्य निरूपकत्वेन जन्यताया मन्वयो विवक्षितः, इत्युभयविषकत्वस्य जनकतावच्छेदककोटिप्रविष्टत्वलाभान्नानुव्यवसायादावतिव्याप्तिरिति शङ्कते, 'न चेति, उभयविषयकत्वे तद्विशिष्टज्ञानत्वे चावच्छेदकत्वपर्य्याप्तिनिवेशेऽसम्भवः, संशयान्यत्वादेरधिकस्यानुमितिजनकतावच्छेदककोटौ निवेशादतस्तत्पर्य्याप्त्यनिवेशसूचनाय घटितार्थकं नियतपदम् । एतेनोभयविषयकत्वनियतत्वं यदि तद्व्याप्यत्वं तदा व्याप्तिवैशिष्ट्यविषयकत्व-पक्षधर्म्मताविषयकत्वोभयाभाववदवृत्तित्वरूपायां उभयविषयकत्वव्याप्तौ केवलव्याप्तिवैशिष्ट्यविषयकत्वाभाववदवृत्तित्वस्यानिवेशात् व्याप्तिवैशिष्ट्यविषयकत्वाभाववदवृत्तित्वाघटितस्य उभयत्वावच्छिन्नाभावघटितनिरुक्तरूपस्य निवेशादग्रिमपक्षधर्म्मत्वांश-

वैयर्थ्यप्रदर्शनासङ्गतिः, यदि च ज्ञानत्वस्य तदुभयाभाववद्वृत्तितया विशेषणान्तरविशिष्टज्ञानत्वरूपपरामर्शत्वे तदभावो दुर्घट इति स्वव्यापकतत्कत्वरूपव्याप्तिरेव निवेशनीया इत्युच्यते, तदाप्युभयत्वावच्छिन्नविशेषणतया व्यापकताप्रवेशे व्याप्तिवैशिष्ट्यविषयकत्वत्वावच्छिन्नविशेषणतया तदप्रवेशाद्वैयर्थ्यं दुर्व्वारमेव, एवमुभयविषयकत्वनियतकारणतानिवेशेऽप्युपपत्तेः तन्नियतधर्म्मावच्छिन्नत्वनिवेशनमप्यफलं, नियतत्वांशस्य लक्षणवाक्यादनुपस्थित्या तद्घटितलक्षणालाभश्चेति दूषणमप्यपास्तम्। एवं केषाञ्चित् उभयविषयकत्वव्याप्यतत्तद्व्यक्तित्वावच्छिन्नविषयादिकारणतामादाय परामर्शानुव्यवसायादावतिव्याप्तिवारणायानेकवृत्तित्वं विषयताघटितधर्म्मावच्छिन्नत्वं वा कारणतायां कार्य्यतायां वा अधिकं निवेश्यं इत्यपि प्रलपितमनुपादेयम्। यत्राङ्कुरविशेषसाध्यकस्थले एक एव परामर्शः तत्रानेकवृत्तित्वस्य उभयविषयकत्वावच्छिन्नत्वस्य च कारणताविशेषणत्वेऽव्याप्तिरेव तद्व्यक्तित्वेनैव हेतुत्वात्। न च योगिनां तद्विषयकज्ञानस्यावश्यं सत्त्वात् तत्साधारणतद्विषकत्वेन हेतुत्वं कल्पनीयं तच्चोभयवृत्त्यपीति वाच्यम्। यत्र भ्रमरूप एव तादृशपरामर्शस्तत्र तद्व्यक्तित्वेनैव हेतुत्वादव्याप्तेर्दुर्व्वारत्वादिति तत्र जातिघटितलक्षणमेव शरणीयम्। पक्षधर्म्मताविषयकत्वमात्रनियतधर्म्मावच्छिन्नकारणताप्रवेशे साधारणधर्म्मवत्ताज्ञानजन्यतामादाय संशये प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानजन्यतामादाय धूमवत्पर्व्वतो नास्तीत्यभावप्रत्यक्षे घटवानित्यादिविशिष्टवैशिष्ट्यबोधे चातिव्याप्तेः व्याप्तिवैशिष्ट्यविषयकत्वो-

पादानमावश्यकमित्याशयेन पक्षधर्म्मतांशवैयर्थ्यमाह, 'पक्षेति, न च व्याप्तिवैशिष्ट्यविषयकत्वनियतधर्म्मावच्छिन्नकारणतानिवेशे वह्निव्याप्यो धूमो द्रव्यं न वेत्याकारकसंशये व्याप्तिविषयकधर्म्मि-ज्ञानजन्यतामादायातिव्याप्तिरिति वाच्यम्। पक्षधर्म्मतापदोपा-दानेऽपि तद्दोषतादवस्थ्यात् तादृशधर्म्मिज्ञानादेरपि धर्म्मितावच्छेदके धर्म्मिवृत्तित्वावगाहित्वात्। न च स्वधर्म्मितावच्छेदकतापर्य्याप्त्यधि-करणधर्म्मावच्छिन्नवृत्तितावगाहित्वनिवेशान्न दोष इति वाच्यम्। तादृशधर्म्मितावच्छेदकावच्छिन्ने कोटिद्वयसहचरितधर्म्मवत्ता-ज्ञानस्य तथात्वाद्व्याप्तिविषयकत्वाच्च तज्जन्यतामादायातिप्रसङ्गस्य दुर्व्वारत्वात्। न च तादृशदोषवारणाय विशेषणान्तरप्रक्षेप आव-श्यकस्तथाच व्याप्तिवैशिष्ट्यविषयकत्वघटितलक्षणे व्याप्यविषयक-त्वस्य चरमज्ञाने व्याप्यविषयकवृत्तित्वस्य जन्यतायां वा निवेशेनेव पक्षधर्म्मत्वघटितलक्षणेऽपि यदंशे पक्षधर्म्मतावगाहिज्ञानं जनकं तदंशे पक्षधर्म्मत्वानवगाहित्वस्य चरमज्ञाने, तदनवगाहिवृत्तित्वस्य जन्यतायां वा निवेशनेन प्रतीकारः सम्भवतीति, धूमवत्पर्व्वतो नास्तीत्याद्यभावप्रत्यक्षादौ धूमाद्यंशे पक्षधर्म्मताज्ञानत्वेन हेतुत्वेऽपि तादृशप्रत्यक्षादेरपि तदंशे पक्षधर्म्मत्वावगाहित्वात् साधारण-धर्म्माद्यंशे पक्षधर्म्मतावगाहिज्ञानजन्ये संशयेऽपि सामग्रीवशेन साधारणधर्म्मांशे पक्षधर्म्मताभानात् प्रत्यक्षे उपस्थितवस्तुभान-सामग्र्या नियतत्वात् चरमज्ञानपदस्य निश्चयपरत्वात् संशय-त्वस्यार्थसमाजग्रस्ततया कार्य्यतानवच्छेदकत्वमिति मते च संशयातिव्याप्त्यप्रसक्तेश्चेति एकतरपदोपादानवैयर्थ्यादित्यभिधान-

न्नैवोचितमिति वाच्यम्। एवं सति सादृश्यांशे स्वविषयधर्म्मि-वृत्तिताज्ञानजन्यायां तत्र तदनवगाहिन्यामुपमितौ अतिव्याप्ते-र्दुर्व्वारत्वात्।

चिन्तामणिदीधितिः।

**व्याप्तिविशिष्टं व्याप्तिप्रकारकं यत्पक्षधर्म्मताज्ञानं तज्जन्यमिति तु स्यात्। यद्यप्यत्रापीन्धनसमाना-धिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छि-न्नसमानाधिकरणेन्धनवानित्यादिपरामर्शजन्येऽव्याप्तिर-खण्डव्याप्तेरप्रसिद्धेः भ्रमानुमितेर्लक्ष्यत्वे चात्राकाश-मात्मन इत्यादौ सुतरां तथा, तथापि तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगाहित्वं विवक्षितम्।**

**न च व्यतिरेकिण्यव्याप्तिः, व्यभिचारधीविरोधि-धीविषयत्वेनान्वय-व्यतिरेकव्याप्त्योरनुगमात्।**

गादाधरी विवृतिः।

मिश्राद्युक्तज्ञानान्तकर्म्मधारयपक्षमवलम्ब्य समाधातुमुप-क्रमते, 'व्याप्तिविशिष्टमिति, व्याप्तिविशिष्टत्वं यदि व्याप्त्या-श्रयत्वं तदानुमितिजनकज्ञानमात्रस्य न तथात्वम् अपि तु लिङ्ग-स्यैव इत्यसङ्गतिरतस्तद्व्याचष्टे, 'व्याप्तिप्रकारकमिति, विशिष्ट-पदेन प्रकारितारूपवैशिष्ट्याश्रयस्य व्याप्तिपदेन वा लक्षणया व्याप्ति-प्रकारिताया विवक्षितत्वादिति भावः। नन्वेवं व्याप्तेः पक्ष-

धर्म्मताया वा भ्रमजन्यानुमितावव्याप्तिपरीहारेऽपि धूमो वह्नि-व्याप्यो द्रव्यवान्पर्व्वत इत्यादिज्ञानजन्येऽतिव्याप्तिर्दुर्व्वारैव। अथ व्याप्तिप्रकारकत्व-पक्षधर्म्मताविषयकत्वयोरवच्छेद्यावच्छेदकभावविवक्षणान्नायं दोषः विशृङ्खलरीत्या भासमानपदार्थविषयतयोरवच्छेद्यावच्छेदकभावविरहात्, पक्षधर्म्मताविषयकत्वावच्छिन्ने ज्ञान-रूपोद्देश्ये व्याप्तिप्रकारकत्वस्य विधेयतया तयोरवच्छेद्यावच्छेदक-भावलाभोव्युत्पत्तिसिद्ध एवेति चेदेवमपि, वह्निव्याप्यकालीनधर्म्म-वानयमित्यादिज्ञानव्यावर्त्तनमशक्यं, येन सम्बन्धेन यस्य प्रकारता तत्सम्बन्धविषयकत्वेनैव तत्प्रकारकत्वस्यावच्छेद्यावच्छेदकभावोप-गमे पक्षानुयोगिकसम्बन्धस्यानुमितिजनकज्ञाने व्याप्यस्यैव संसर्ग-तया भानात् तद्विषयकत्वेन व्याप्यप्रकारकत्वस्यैवावच्छेद्यावच्छे-दकभावः स्यात् न तु व्याप्तिप्रकारकत्वस्येत्यसम्भव एव, एवं यत्रा-न्यानुयोगिक एव सम्बन्धो व्याप्यस्य पक्षांशे भातः तादृशभ्रमजन्या-नुमितावव्याप्तिरपि दुर्व्वारा तादृशभ्रमे वास्तवपक्षानुयोगिक-सम्बन्धस्य पक्षधर्म्मतापदार्थस्याभानात् पक्षांशे हेतुतावच्छेदकसम्ब-न्धेन हेतुप्रकारकज्ञानपर्य्यन्तञ्च पक्षधर्म्मताया ज्ञानमिति समासे-नाशक्यप्रतिपादनमिति न तस्य पक्षधर्म्मताज्ञानशब्दार्थता। शब्द-व्युत्पत्त्यनादरे चालं समासविशेषमाश्रित्य व्याख्ययेति। अत्राहुः, पक्षे धर्म्मतया हेतुतावच्छेदकसम्बन्धेन यज्ज्ञानमिति तृतीया-समासगर्भसप्तमीसमासादरात् (१) पक्षविशेष्यकत्वावच्छिन्नहेतुता-

(१) धर्म्मतया ज्ञानं धर्म्मताज्ञानं पक्षे धर्म्मताज्ञानं पक्षधर्म्मताज्ञानमिति समासादरादित्यर्थः।

वच्छेदकसम्बन्धावच्छिन्नप्रकारताकत्वविशिष्टज्ञानं पक्षधर्म्मताज्ञान-पदार्थः । पक्षधर्म्मतयेत्यत्र तृतीयाया अवच्छिन्नप्रकारताकत्वार्थक-त्वात् तत्र व्याप्तिप्रकारकत्वान्वये च हेतुनिष्ठनिरुक्तप्रकारताक-त्वावच्छिन्नव्याप्तिप्रकारकत्ववज्ज्ञानलाभः । व्याप्ति-हेत्वोः साक्षात् विशेष्य-विशेषणभावेन तद्विषयकत्वयोरनुमितिजनकपरामर्शेऽव-च्छेद्यावच्छेदकभावोऽक्षत एवेति सर्व्वत्रानुमितौ लक्षणसम-न्वयः । एवमपि व्याप्तिपदप्रतिपाद्यविशिष्टार्थाप्रसिद्धिस्थलेऽव्या-प्तिरित्याशङ्कते, 'यद्यपीति, वह्निव्याप्येन्धनवानित्याकारकज्ञान-विषयः साध्याभाववदवृत्तित्वरूपव्याप्तिरपि सा च हेत्वन्तरे प्रसिद्धैव इति हेतुसमानाधिकरणेत्यादिव्याप्तेर्विशेषशब्देनोल्लेखः । 'अखण्ड-व्याप्तेरिति विशेषण-विशेष्यभावापन्नप्रकृतहेत्वादिसामानाधिकर-ण्यान्त-तत्तत्पदार्थस्तोमात्मकव्याप्तिपदार्थाप्रसिद्धेरित्यर्थः । अखण्डे-त्यनेन व्याप्तिघटकहेत्वादिपदार्थानां खण्डशः प्रसिद्धिमात्रमिति सूचितं, तावतैव समाधानमुपपत्स्यते इत्यपि । अत्र व्याप्यप्रसिद्धिः साध्यतावच्छेदके स्वविशिष्टहेतुसमानाधिकरणाभावप्रतियोगि-तानवच्छेदकत्वासत्त्वेन, अत्र हेतुव्यापकतावच्छेदकत्वस्य इन्धन-त्वादौ वह्नित्वावच्छिन्नसामानाधिकरण्यस्य प्रकृतहेतावपि प्रसिद्ध्या व्याप्तिविशिष्टेत्यनेन साध्यतावच्छेदके प्रकृतहेतुव्यापकतावच्छे-दकत्वावगाहित्वे सति प्रकृतहेतौ तादृशसाध्यतावच्छेदकावच्छि-न्नसामानाधिकरण्यावगाहित्वविवक्षणे न दोष इत्यतो व्यापकत्वा-दिघटकपदार्थानामपि खण्डशो निवेशायावृत्तिसाध्य-हेतुकस्थले-ऽव्याप्तिं शङ्कते, 'भ्रमानुमितेरिति, भ्रमस्य पूर्व्ववदलक्ष्यत्वसम्भवात्

'लक्ष्यत्वे चेति, भावसाध्यकानुमितौ साध्यस्य नियमतो विशेषणतया इदमाकाशवदित्याकारिकैवानुमितिर्बोध्या, प्रतिज्ञाजन्यबोधस्यानुमितिसमानाकारत्वानियमेन शब्दलाघवायात्राकाशमित्युक्तम्। 'सुतरां' हेतुव्यापकत्व-साध्यसामानाधिकरण्ययोः खण्डश उपादानेऽपि, 'तथा' अव्याप्तिः, हेत्वधिकरण-साध्याधिकरणयोरप्रसिद्ध्या हेतुव्यापकत्व-साध्यसामानाधिकरण्ययोरपि खण्डशोऽप्रसिद्धेरिति भावः। भ्रमानुमितेरलक्ष्यत्वेऽपि वास्तवव्यापकत्वाद्यवगाहित्वनिवेशे धूमत्वादिना पदार्थान्तरावगाहिधूमव्यापकवह्निसमानाधिकरणधूमवानयमित्यादिज्ञानजन्यायां प्रमानुमितावव्याप्तिः धूमाधिकरणाद्यनवगाहनेन तादृशज्ञानस्य वास्तवधूमाधिकरणादिघटितव्यापकत्वाद्यनवगाहित्वादिति तु नाशङ्कनीयं, तादृशभ्रमजन्यानुमितावपि भ्रमानात्मकस्य वह्निव्याप्यधूमवान् पर्व्वत इत्याकारकवास्तवव्यापकत्वाद्यवगाहिपरामर्शस्य स्वरूपयोग्यतामादाय यथाश्रुतलक्षणसमन्वयात्। इदञ्च जात्यघटितयथाश्रुतलक्षणाभिप्रायेण, जातिघटितनिष्कृष्टलक्षणस्य प्रमात्मकपरामर्शजन्यानुमितिवृत्तिजातिमादाय सर्व्वत्र लक्षणसमन्वयसम्भवात्। न च (१) परामर्शानुव्यवसायादावतिव्याप्तिवारणाय व्याप्तिप्रकारकपक्षधर्म्मतानिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतायाः विवक्षणीयतया धूमलिङ्गकपरामर्शस्यापि उक्तभ्रमसाधारण्याय व्याप्तिघटकतावत्पदार्थानामपि परस्परोपश्लेषावगाहिनिश्चयत्वेनैव जनकत्वस्योपगम्यत्वात् न वास्तवव्याप्यवगा-

(१) जातिघटितलक्षणस्याप्यप्रसिद्धिमाशङ्कते न चेति।

हिताघटितलक्षणसमन्वयः क्वापीति वाच्यम् । सर्व्वत्र विषये भ्रमस्य भ्रमजन्यानुमितेश्चाप्रामाणिकतया यत्साध्य-लिङ्ग-पक्षकः परामर्शोऽनुमितिजनकपरामर्शो वा प्रमारूप एव तत्साध्य-पक्ष-लिङ्गकानुमितौ लाघवेन व्याप्तिघटकतत्तत्पदार्थान् खण्डशोऽनिवेश्य विशिष्टव्याप्त्यादेरेव विषयताया अनुमितिजनकतावच्छेदकत्वोपगमात् तादृशजनताघटितजातिघटितलक्षणस्य व्याप्तिपदार्थघटितस्य निष्प्रत्यूहत्वात् । न च प्रमेयत्व-केवलसामानाधिकरण्यत्वादिना व्याप्त्यवगाहिज्ञानवारणाय तादृशानुमितिजनकतायामपि हेत्वादिपदार्थानां परस्परोपश्लेषावगाहित्वमेवावच्छेदकमुपगन्तव्यमिति वाच्यम् । प्रमेयत्वाद्यवच्छिन्ननिरूपितविषयिताया अनुमितिजनकतावच्छेदकतापर्य्याप्त्यधिकरणहेत्वादि-सामानाधिकरण्यान्तपदार्थस्तोमघटितविशिष्टपदार्थप्रतियोगिकसम्बन्धत्वविरहेण विषयतासम्बन्धेन तादृशविशिष्टविषयस्य प्रमेयत्वादिना व्याप्त्यवगाहिज्ञानव्यावर्त्तकतया ततोऽनुमित्यप्रसङ्गात्, स्वरूपतो येषां व्याप्तिघटकता रूपान्तरेण तदवगाहितावत्पदार्थस्तोमात्मकव्याप्तिज्ञानवारणाय स्वरूपतस्तत्तत्पदार्थप्रकारकत्वनिवेशस्यावश्यकत्वात् न विशिष्टव्याप्तिनिवेशसम्भव इत्यपि न वाच्यं विशेषणानवच्छिन्नतत्तत्पदार्थघटितविशिष्टनिरूपितविलक्षणविषयताया एव विषयितात्वेन जनकतावच्छेदकतापर्य्याप्त्यधिकरणतादृशविशिष्टविषयसम्बन्धतया तादृशविषयेणोक्तज्ञानव्यावृत्तेः । अतएव दीधितिकारोऽपि परामर्शग्रन्थे अन्यथाख्यात्यनभ्युपगन्तृमते व्यापकताघटकपदार्थानां खण्डशः परस्परोपश्लेषावगाहित्वमनिवेश्याऽपि

विशिष्टविषयपुरस्कारेण व्यापकताज्ञानहेतुता सम्भवतीति अवृत्ति-हेत्वनुरोधेन व्यापकत्वस्यापि खण्डशो निरुक्तिस्तेषां परमति-रिच्यते इत्यनेन दर्शयिष्यति, विशिष्टविषयस्य प्रमामात्रनिष्ठजनक-तावच्छेदकत्वाभिप्रायेणैव च व्याप्त्यादिप्रकारकत्वमनभिदधानो वह्निव्याप्यधूमत्वर्व्वतनिश्चयत्वावच्छिन्नकारणतेत्यादिना जाति-घटितलक्षणमभिधास्यते। तत्र वह्न्यादिपदं दर्शितसाध्यविशेषपर-मित्यलं पल्लवितेन। 'तावत्पदार्थानां तथाविधपरस्परोपश्लेषावगा-हित्वमिति साधनाधिकरणादिपदार्थानामधिकरणाधेयत्वादिपदा-र्थांशे तत्तत्सम्बन्धावगाहित्वमित्यर्थः, तत्तदंशे तेन सम्बन्धेन तत्त-त्प्रकारकत्वमिति यावत्, तेनात्मादीनां समवायसम्बन्धाप्रसिद्धावपि नोक्तभ्रमानुमित्यसंग्रहः, हेत्वादिप्रकारतापि हेतुतावच्छेदका-वच्छिन्नत्वेनैव निवेश्या अतो धूमत्वादिना धूलीपटलादिभ्रम-संग्रहः। यद्यप्येवमपि अधिकरणं धूमीयं वृत्तिरधिकरणीया इत्या-दिविशृङ्खलरीत्या तावत्पदार्थराशिमवगाहमाना धीर्न व्यावृत्ता, तथापि धूमादिप्रकारतानिरूपितविशेष्यत्वावच्छिन्ना या अधिक-रणप्रकारता तन्निरूपितविशेष्यत्वावच्छिन्ना या वृत्तित्वप्रकारता इत्यादिरीत्या साध्याधिकरणवृत्तित्वप्रकारतापर्य्यन्तनिवेशात्तद्व्या-वृत्तिः, उक्तसमूहालम्बनतो विशिष्टप्रकारकधियो वैलक्षण्याय तत्रान्तरा भासमानाधिकरणादिपदार्थविशेषणनिरूपितविशेष्यत्व-विशेष्यान्तरनिरूपितप्रकारत्वयोरवच्छेद्यावच्छेदकभावोपगमात्।

केचित्तु एकविशेष्यतापन्नस्य यत्रापरांशे प्रकारता तत्र तन्निरू-पितप्रकारता विशेष्यतयोरभेद एव तथाच धूमादिप्रकारतानिरू-

पिता या अधिकरणप्रकारता तन्निरूपिता या वृत्तित्वप्रकारता एवं रीत्यैव निवेशः एवञ्च एकपदार्थनिष्ठावच्छेद्यावच्छेदकभावापन्नविषयताद्वयनिवेशापेक्षया एकविषयतां निवेश्य कारणतावच्छेदकनिर्व्वचने लाघवमित्यपि वदन्ति। तच्चिन्त्यं तथा सति रक्तदण्डवत्पुरुषवानयमित्यादिज्ञानानां पुरुषादिप्रकारतानिरूपितदण्डादिविशेष्यताकत्वेन पुरुषाभाववान्दण्ड इत्यादिनिश्चयप्रतिबध्यत्वप्रसङ्गात् तत्र गत्यन्तरानुसरणे च (१) गौरवादिति। इदन्तु बोध्यं व्याप्तिघटकसाधनतावच्छेदकादिसकलपदार्थानां विषयताविशेषणत्वेन खण्डशो निवेशो न सर्व्वत्र। जात्यघटितलक्षणस्य साध्यादिभेदेन भिन्नत्वात् सल्लिङ्गजायां कूटलिङ्गजायां वा यल्लिङ्गक-यत्साध्यकानुमितौ व्यापकताघटकसाधनतावच्छेदकमारभ्य यद्विशेषणपर्य्यन्तांशे प्रमात्मक एव परामर्शो हेतुस्तद्विशेषणविशिष्टपर्य्यन्तविषयस्य विशिष्टत्वेनैव विषयिताविशेषणतया कारणतावच्छेदकताया लाघवेन उचितत्वात्। सकलपदार्थविषयितानां कारणतानवच्छेदकतया तद्घटितधर्म्मावच्छिन्नकारणताया लक्षणे निवेशासम्भवात् तथाच तादृशविशिष्टविषयिताघटितधर्म्मावच्छिन्नकारणताघटितमेव लक्षणं, यत्र च व्यापकताघटकसाधनतावच्छेदकाद्यंशे भ्रमादप्यनुमितिस्तत्रैव सकलपदार्थानां खण्डशो निवेश इति। मूलस्थव्याप्तिपदमपि

---

(१) दण्डनिष्ठविशेष्यतात्वेन पुरुषप्रकारतात्वावच्छिन्ननिरूपिता या दण्डनिष्ठविशेष्यता तच्छालिज्ञानत्वस्य प्रतिबध्यतावच्छेदकत्वस्वीकारे गौरवादित्यर्थः।

लक्षणया निरुक्तप्रकारताविशेषपरं, निरूपकत्वमेव च तद्वैशिष्ट्यमतो न दर्शितस्थले व्याप्तिपदार्थघटितलक्षणासङ्गतिः।

केचित्तु इतआरभ्य यथाश्रुतशब्दार्थपरित्याग एव आरब्धः, विवक्षणीयस्य व्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वावच्छिन्नजनकताकत्वस्य मूलस्थशब्दव्युत्पत्त्यलभ्यतया तत्परित्यागस्यात्र आवश्यकत्वात्। न च ज्ञानपदस्य लक्षणया निश्चयत्वावच्छिन्नरूपविशेषपरतया निश्चयत्वावच्छिन्नलाभः। निश्चयत्वेन ज्ञानलाभेऽपि निश्चयत्वावच्छिन्नतया जनकताया अलाभात्। यदि च विशिष्टवैशिष्ट्यविवक्षया तादृशनिश्चयत्वविशिष्टविरूपितजन्यतालाभेन सामञ्जस्यमुच्यते, तथापि ज्ञानविशेषणतया व्याप्तिप्रकारकत्वादीनामेव लाघवेन जनकतावच्छेदकत्वादभेदसम्बन्धेन व्याप्तिप्रकारकादेरेव च ज्ञानविशेषणतया मूलोक्तशब्दतो लाभेन विवक्षणीयालाभादित्याहुः।

जात्यघटितयथाश्रुतलक्षणे व्यतिरेकिलिङ्कानुमितावव्याप्तिमाशङ्कते, 'न चेत्यादिना, 'अव्याप्तिरिति, व्यतिरेकिणि चिन्तामणिकारमते व्यतिरेकयोर्व्याप्य-व्यापकभावस्यैव गमकतया तन्नोक्तव्याप्तिप्रकारेण हेतुमत्ताज्ञानस्यानुमितावजनकत्वादिति भावः। साध्याभावव्यापकाभावप्रतियोगित्वप्रकारकहेतुमत्ताज्ञानस्य विवक्षणे चान्वयिन्यव्याप्तिर्द्रष्टव्या। 'व्यभिचारधीति साध्यभाववद्वृत्तित्वधीप्रतिबन्धकतावच्छेदकविषयतात्वेन धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववह्न्यभावव्यापकतावच्छेदकानुयोगितानिरूपित-प्रतियोगितावच्छेदकधूमत्वविषयत्वेऽनुगमय्य तादृशविषयताशालि-

पक्षधर्म्मतानिश्चयस्य निवेशनीयत्वादित्यर्थः, यथाश्रुतविषयानुगमो नादरणीयः भ्रमासंग्रहात् (१)। रूपान्तरेण व्याप्तिविषयकज्ञान-जन्ये (२) अतिप्रसङ्गात् प्रतिबन्धकतावच्छेदकविषयिताशालि-ज्ञानस्य तादृशविषयतावद्विषयकत्वेन निवेशस्य शिरोवेष्टनेन नाशिकास्पर्शतुल्यत्वाच्च। व्याप्त्यवच्छिन्नहेतुविषयतैव वा व्यभिचार-धीप्रतिबन्धकतावच्छेदकत्वेन निवेशनीया, तत्प्रतिबन्धकत्वेन पक्षधर्म्मताज्ञानमेव कथं न निवेश्यते इति चेन्न, तथा सति धूमो-वह्निव्याप्यो द्रव्यवान्पर्व्वत इत्यादिज्ञानाव्यावृत्तेः प्रतिबन्धकता-वच्छेदकविषयतानिरूपितविशेष्यत्वावच्छिन्ना या हेतुविषयता तन्निरूपितपक्षविषयताशालित्वेन प्रतिबन्धतावच्छेदकहेतुविषय-तावच्छिन्नतत्प्रकारतानिरूपितपक्षविषयताशालित्वेन वा ज्ञान-निवेशस्यावश्यकत्वात्।

चिन्तामणिदीधितिः।

भवति हि धूमसमानाधिकरणात्यन्ताभावाप्रति-योगिवह्निसमानाधिकरणधूमत्वे वह्न्यभावव्यापकीभूता-भावप्रतियोगित्वे वा गृहीते नियमतो वह्निव्यभिचारधी-प्रतिरोधः तथाविधधूमसमानाधिकरणत्वादिकन्तु न तथा रासभादौ तद्ग्रहेऽपि व्यभिचारग्रहात्। व्यति-

(१) यत्र व्याप्तिघटकपदार्थांशे भ्रमात्मकः परामर्शः तदसंग्रहात्। भ्रमानु-मितेरलक्ष्यत्वे प्रमानुमितौ स्वरूपयोग्यतामादाय लक्षणसमन्वये त्वाह, रूपा-न्तरेणेति।

(२) प्रमेयवद्धूमवान् पर्व्वत इति ज्ञानजन्ये इत्यर्थः।

रेकसहचारेणान्वयव्याप्तिग्रहणाश्रयणाद्वा। न च भ्रम-संशयोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुतामते तत्रातिव्याप्तिः, तथाविधनिश्चयत्वेन हेतुताया विवक्षितत्वात् विशेषदर्शनस्य च भ्रमादिविरोधित्वेन तत्त्वमित्युक्तत्वात्।

---

गादाधरी विवृतिः।

अत्र व्यापकताज्ञानस्य कथञ्चित् व्यभिचारधीविरोधित्वेऽपि साध्याभावव्यापकाभावप्रतियोगित्वज्ञानस्य तद्विरोधित्वे मानाभावः ग्राह्याभावाद्यनवगाहित्वात् हेत्वभावप्रतियोगिकाभावत्वेन हेतौ साध्याभावसामानाधिकरण्यावगाहिनीं हेत्वभावे साध्याभावसमानाधिकरणाभावप्रतियोगित्वमवगाहमानां (१) धियं प्रति हेत्वभावे साध्याभावसमानाधिकरणाभावाप्रतियोगित्वरूपसाध्याभावव्यापकत्वज्ञानस्य विरोधित्वेऽपि हेतुतावच्छेदकरूपेण हेतौ साध्याभावसामानाधिकरण्यधियं प्रति तस्यातथात्वात् (२) हेत्वभावाभावत्वेन हेतुधर्म्मिकव्यभिचारधीनिवेशे च हेतुव्यापकसाध्यसामानाधिकरण्यज्ञानासंग्रहः हेत्वभावाभावत्वेन हेतुविषयकतत्समानाधिकरणाभावप्रतियोगित्वग्रहे तेनैव रूपेण तद्विषयकतत्समानाधिकरणाभावाप्रतियोगित्वज्ञानस्य प्रतिबन्धकत्वादित्या-

---

(१) हेत्वभावाभावत्वावच्छिन्ने साध्याभावसामानाधिकरण्यग्रहे तुल्यवित्तिवेद्यतया हेत्वभावे साध्याभावसमानाधिकरणाभावप्रतियोगित्वस्यावगाहनादिति भावः।

(२) हेत्वभावे साध्याभावव्यापकत्वज्ञानस्याप्रतिबन्धकत्वादित्यर्थः।

शङ्का मणिमन्त्रादिन्यायेन एकविधव्यभिचारधियं प्रति उभय-विधव्याप्तिज्ञानस्य प्रतिबन्धकताव्यवस्थापकं तत्सत्त्वे फलानुत्पाद-नियममाह, 'भवति हीत्यादि, रासभादौ धूमव्यापकवह्निसामा-नाधिकरण्यग्रहेऽपि वह्निव्यभिचारग्रहात् (१) वह्निसमानाधिक-रणधूमत्वग्रहानुधावनम् । 'वह्निव्यभिचारधीप्रतिरोधः' तद्ग्रह-समानधर्म्मिकवह्निव्यभिचारग्रहानुत्पादः । नन्वत्र प्रतिबन्धकता-वच्छेदकत्वं न स्वरूपसम्बन्धविशेषः, व्यापकसमानाधिकरण्य-घटकसामानाधिकरण्यांशस्य व्यभिचाराविघटकतया व्यापकता-विषयकत्वस्यैव तद्धियो व्यभिचारधीविरोधितावीजत्वात्, सामा-नाधिकरण्यविषयतायाः प्रतिबन्धकतावच्छेदकशरीरेऽनन्तर्भावेन प्रतिबन्धकतावच्छेदकतया धूमव्यापकत्वविषयतायास्तदवच्छिन्न-वह्निविषयताया वा उपादेयतया तादृशविषयतया च समं पक्ष-विशेषणतापन्नहेतुविषयत्वादेर्निरूप्य-निरूपकभावविरहेण दर्शित-रूपेण परामर्शनिवेशासम्भवात्, अतोऽत्र यादृशविषयताकनिश्चय-त्वव्यापकं प्रतिबन्धकत्वं तादृशत्वमेव प्रतिबन्धकतावच्छेदकत्वं वाच्यं तथाच धूमव्यापकवह्निसमानाधिकरणधूमसामानाधिकरण्यादि-विषयताकनिश्चयत्वस्यापि धूमधर्म्मिकव्यभिचारधीप्रतिबन्धकता-व्याप्यतया तद्विषयताया अपि तथात्वमक्षतमेवेति वह्निव्याप्य-धूमसमानाधिकरणरासभवानितिज्ञानजन्येऽतिप्रसङ्गः । न च पक्ष-विशेषणतया भासमानो यादृशधर्म्मस्तादृशधर्म्मांशे व्यभिचार-

---

(१) तादृशसामानाधिकरण्यविशिष्टधूमत्वस्यैव व्यभिचारविरुद्धत्वादिति भावः ।

ज्ञानमेव विवक्षितं अतोनायं दोष इति वाच्यम्। तादृशरासभवान् धूमवांश्च पक्ष इति समूहालम्बनस्य तावताव्यवारणादित्याशङ्क्य पक्षविशेषणतापन्नहेतोर्या विषयता प्रतिबन्धकतावच्छेदिका प्रतिबन्धकतावच्छेदकविषयतानिरूपिता वा स्वावच्छेदकधर्म्मावच्छिन्नधर्म्मिकव्यभिचारज्ञानस्य प्रतिबन्धकतावच्छेदकत्वेन प्रतिबन्धकतावच्छेदकविषयतानिरूपितत्वेन वा सैव निवेश्या इत्याशयेन समाधत्ते, 'तथाविधधूमेति वह्निव्याप्यधूमसामानाधिकरण्याद्यवच्छिन्नरासभादिविषयत्वन्तु, 'न तथा' न स्वावच्छेदकावच्छिन्नधर्म्मिकव्यभिचारज्ञानप्रतिबन्धकतावच्छेदकत्वादिमदित्यर्थः। एवमपि धूमव्यापकवह्निसमानाधिकरणरासभसमानाधिकरणधूमवानयमित्यादिज्ञानाव्याप्तिरित्यत आह, 'व्यतिरेकेति।

परे तु ननु वह्नित्वाद्यवच्छिन्नधर्म्मिकधूमत्वाद्यवच्छिन्नव्यापकत्वग्रहत्वेनैव धूमो वह्निव्यभिचारीत्यादिव्यभिचारज्ञानप्रतिबन्धकता लाघवादावश्यकत्वाच्च न तु धूमव्यापकवह्निसमानाधिकरणधूमत्वादिरूपव्याप्तिज्ञानत्वेन गौरवात् मानाभावाच्च, तथाच तादृशव्याप्तिविषयता न व्यभिचारधीप्रतिबन्धकतावच्छेदिका। अथ इदन्त्वावच्छिन्ने तादृशधूमत्वादिरूपव्याप्तिग्रहे तदवच्छिन्ने व्यभिचारग्रहानुदयात् समानधर्म्मिकव्यभिचारज्ञानं प्रति तादृशव्याप्तिज्ञानत्वेनापि मणिमन्त्रादिवत् पृथक्प्रतिबन्धकता वाच्या, तथाच तादृशव्याप्तिविषयताया व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वमक्षतमेव। न च धर्म्मितावच्छेदकत्वनिरूपितविरोधि-

प्रकारताया एव प्रतिबन्धकतावच्छेदकतया धूमव्यापकवह्नि-
समानाधिकरणवृत्तिधूमत्ववत्त्वान् पक्ष इत्याकारकतादृशधूम-
त्वात्मकव्याप्यंशे निधर्म्मितावच्छेदककज्ञानीयतादृशव्याप्तिप्रकार-
ताया व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वासम्भवात् तादृशपरा-
मर्शासंग्रहः । प्रतिबन्धकतावच्छेदकीभूतप्रकारतावच्छेदकताप-
र्य्याप्त्यधिकरणधर्म्मावच्छिन्नप्रकारताशालिपक्षधर्म्मताज्ञाननिवेशे च
धूमत्वादिना पदार्थान्तरावगाहिपरामर्शासंग्रहः, तादृशप्रकार-
तावच्छेदकतापर्य्याप्त्यधिकरणस्य वास्तवधूमादिघटितव्याप्तित्वस्य
तादृशभ्रमप्रकारतानवच्छेदकत्वादिति वाच्यम् । धर्म्मिविशेष्यता-
निष्ठव्यभिचारधीप्रतिबन्धकतावच्छेदकतायां (१) निरूपितत्वसम्ब-
न्धेन यत्प्रकारताया अवच्छेदकत्वं तदवच्छेदकतापर्य्याप्त्यधि-
करणरूपाश्रयीभूतप्रकारताशालित्वेन सकलपरामर्शसंग्रहसम्भवा-
दिति (२) चेत्तर्हि, वह्निव्याप्यधूमसामानाधिकरण्यादिविषयत्वेन
किमपराद्धं दर्शितव्याप्तिवत्तद्घटितधर्म्मान्तराणामपि व्यापकता-

(१) अत्र सप्तम्यर्थः निरूपितत्वम् ।

(२) यद्यपि धर्म्मिविषयतानिष्ठावच्छेदकतानिरूपितं यत्प्रकारतानिष्ठनिरू-
पितत्वसम्बन्धावच्छिन्नावच्छेदकत्वं तदवच्छेदकतापर्य्याप्त्यधिकरणं यत्परम्परया
धर्म्मिविषयतानिरूपित-व्याप्तिघटकधूमादिविषयतानिरूपितत्वघटितनिरूप्य-निरू-
पकभावापन्नप्रकारतात्वं तस्य परम्परया धर्म्मिविषयत्वानिरूपित-व्याप्तिघटक-
धूमादिप्रकारतानिरूपितत्वघटितनिर्द्धर्म्मितावच्छेदककज्ञानीयप्रकारतायामसत्त्वात्
निरूपितभेदेन निरूपितत्वस्य भेदात् निर्द्धर्म्मितावच्छेदककपरामर्शासंग्रहः,
तथापि तादृशप्रतिबन्धकतावच्छेदकतापर्य्याप्त्यधिकरणधर्म्मवत्प्रकारत्वावच्छिन्न-
जनकतानिरूपितजन्यतावच्छेदकीभूतप्रकारताशालित्वेन सकलपरामर्शसंग्रहः,
विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति निर्द्धर्म्मितावच्छेदककज्ञानसाधारणविशेषणता-
वच्छेदकप्रकारकज्ञानस्य हेतुत्वादेतदपि चिन्त्यम् ।

घटितत्वाविशेषात्, किमपराद्धं वा धूमत्वाद्यसहितेन धूमव्यापकवह्निसामानाधिकरण्यादिना, तत्तद्विषयिताया अपि व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वोपगमे वह्निव्याप्यधूमसमानाधिकरणरासभवानयं धूमव्यापकवह्निसमानाधिकरणरासभवानयमित्यादिज्ञानजन्येऽतिप्रसङ्गो दुर्व्वार इत्याशङ्का मणिमन्त्रादिन्यायेन प्रतिबन्धकतान्तरकल्पनमप्यनुभवानुरोधेनैव धूमव्यापकवह्निसमानाधिकरणधूमत्वादिरूपव्याप्यत्वग्रहे तद्धर्म्मितावच्छेदकावच्छिन्ने व्यभिचारधीर्नोत्पद्यते इति निर्व्विवादानुभवात्तद्ग्रहस्य समानधर्म्मितावच्छेदककव्यभिचारधीप्रतिबन्धकत्वमावश्यकं वह्निव्याप्यधूमसमानाधिकरणो रासभ इत्यादिज्ञानदशायाञ्च रासभादौ वह्निव्यभिचारग्रहस्यैवानुभवात् न तथाविधधूमसामानाधिकरण्यादिज्ञानत्वेनापि प्रतिबन्धकत्वान्तरमिति विशेषमाह, 'भवति हीत्यादिना 'रासभादौ तद्ग्रहेऽपि व्यभिचारग्रहादित्यन्तेन। ननु धूमव्यापकवह्निसमानाधिकरणधूमत्वादिग्रहविषये यदि व्यभिचारज्ञानानुत्पादोऽनुभवसिद्धस्तदा वह्निर्धूमव्यापक इत्यादिज्ञानकालीनकेवलधूमत्वादिग्रहविषयेऽपि तदनुत्पादस्तथा सामाधिकरण्यांशस्याकिञ्चित्करत्वादिति साध्ये धूमादिव्यापकताग्रहकालीनधूमत्वादिग्रहत्वेनैव प्रतिबन्धकत्वमुचितम्। वस्तुतो वह्न्यादौ धूमत्वाद्यवच्छिन्नव्यापकताग्रहदशायां धूमत्वाद्यवच्छेदेन वह्न्यव्यभिचारस्यापि सुग्रहतया (१) धूमव्यापकवह्निसमानाधिकरणधूमत्वादि-

(१) वह्नौ धूमत्वावच्छिन्नसमानाधिकरणाभावाप्रतियोगित्वनिश्चयस्यैव तुल्यवित्तिवेद्यतया धूमत्वावच्छिन्ने वह्न्यभाववद्वृत्तित्वाभावग्रहरूपत्वादिति भावः।

ग्रहविषयेऽवच्छेदकधर्म्मदर्शनरूपप्रतिबन्धकवशादेव न व्यभिचार-ग्रह इति न तादृशधूमत्वादिविषयताया व्यभिचारग्रहप्रति-बन्धकतावच्छेदकत्वमिति नोक्तानुगमः साधीयानत आह, 'व्यति-रेकसहचारेणेति व्याचक्षुः ।

'व्यतिरेकसहचारेण' अन्वयसहचारग्रहनिरपेक्षव्यतिरेकसह-चारग्रहेणापि, 'अन्वयेति अन्वयव्याप्तिर्गृह्यते इत्याचार्य्यमताश्रयणा-दित्यर्थः, तथाच व्यतिरेकिण्यपि अन्वयव्याप्तिरेव गमकतयाऽनुगमा-सम्भवेऽपि नाव्याप्तिरिति भावः । यद्यप्येतन्मतं न विचारसहम् इत्युपेक्ष्य मणिकृता व्यतिरेकव्याप्तेरेवानुमित्यौपयिकत्वं व्यवस्था-पितम् । तथापि जातिघटितलक्षणादरेणाननुगमनिबन्धनाव्याप्तेः परिहरणीयतया आपाततस्तन्मतावलम्बनेन समाहितम् । ननु विपरीतभ्रमानन्तरं ग्राह्यसंशयानन्तरञ्च विना ग्राह्यव्याप्यवत्ता-ज्ञानं पुरुषत्वादिनिश्चयो नोत्पद्यते सति तु तस्मिन् जायते अतोऽन्वय-व्यतिरेकात् विपरीतज्ञानानन्तरप्रत्यक्षनिश्चयत्वावच्छिन्नं प्रत्यपि ग्राह्यव्याप्यवत्तानिश्चयत्वेन हेतुता कल्प्यते । न च ग्राह्या-भावज्ञानेन प्रतिबन्धादेव भ्रमाद्यनन्तरम् प्रत्यक्षनिश्चयानुत्पत्ति-निर्व्वाहे किं विशेषदर्शनहेतुतयेति वाच्यम् । विपरीतभ्रमादि-सत्त्वेऽपि सति विशेषदर्शने प्रत्यक्षनिश्चयोत्पत्त्या प्रत्यक्षनिश्चये ग्राह्याभावज्ञानस्याप्रतिबन्धकत्वात् विपरीतनिश्चयकालेऽनुमित्या-देर्वारणाय विपरीतनिश्चयस्य विशिष्टधीविरोधित्वकल्पनाया आव-श्यकत्वेऽपि प्रत्यक्षनिश्चयान्यत्वस्य तत्प्रतिबध्यतावच्छेदकत्वोप-गमात् । न च प्रत्यक्षनिश्चयं प्रति विपरीतज्ञानस्याप्रतिबन्धकत्वे

शङ्खो न श्वेत इत्याकारकपित्तादिदोषजन्यविपरीतनिश्चयकाले श्वैत्यव्याप्यशङ्खत्वादिदर्शनात् शङ्खः श्वेत इत्यादिचाक्षुषापत्तिरिति वाच्यम्। तादृशदोषस्यैव श्वैत्यादिग्रहप्रतिबन्धकत्वात्। यदि च विनष्टेऽपि दोषे तादृशविपरीतनिश्चयसत्त्वे न श्वैत्यादिप्रत्यक्षं तदास्तु प्रत्यक्षे समानेन्द्रियजन्यस्य दोषविशेषाजन्योपनीतभानभिन्नविपरीतनिश्चयस्य प्रतिबन्धकत्वम् (१), एवं शङ्खः श्वेत इति चाक्षुषनिश्चयोत्पत्तौ सत्यां यत्र दोषसमवधानं तत्र तादृशनिश्चयसत्त्वे यदि दोषान्न शङ्खो न श्वेत इत्यादिचाक्षुषनिश्चयस्तदा तन्निर्व्वाहोऽपि समानेन्द्रियजन्यविपरीतनिश्चयप्रतिबन्धकत्वादेव(२) अतएव साक्षात्कारिभ्रमे साक्षात्कारिविशेषदर्शनमेव विरोधीत्यनेन मणिकृतां दोषविशेषजन्यभ्रमे समानेन्द्रियजन्यलौकिकग्राह्याभावज्ञानस्य विरोधिता नान्यविपरीतज्ञानस्य इत्यभिधानं संगच्छते। चक्षुषा वंशे उरगत्वभ्रमेऽपि त्वचा तत्र तदभावग्रहात् समानेन्द्रियजन्यत्वनिवेशनं, शङ्खो न श्वेत इत्यादिनिश्चयानन्तरं

---

(१) साक्षात्कारित्वप्रहायोग्यस्य उपनीतभानरूपबाधप्रहस्य लौकिकप्रत्यक्षविरोधित्वनिर्व्वाहाय भिन्नान्तं, दोषविशेषजन्यस्य लौकिकप्रत्यक्षतुल्यस्य आर्य्यमाणारोपस्य तद्विरोधितानिर्व्वाहायाजन्यान्तं भेदप्रतियोगिविशेषणं, अत्र भिन्नान्तनिवेशापेक्षया साक्षात्कारित्वव्यञ्जकविषयतावत्त्वनिवेशे लाघवसम्भवात् तत्पक्षपरित्यागे किं बीजमिति चिन्तनीयम्।

(२) वस्तुतः समानेन्द्रियजन्यबोधस्य प्रतिबन्धकत्वं मिश्रैर्नाङ्गीक्रियते एवं विशेषदर्शनवशात् नोक्तस्थले आपत्तिः, विपरीतज्ञानविरोधित्वेनैव विशेषदर्शनस्य कारणत्वात्, तत्त्वञ्च विपरीतज्ञानाव्यवहितपूर्व्वत्वशून्यक्षणवृत्तित्वविशिष्टत्वं उक्तविशेषदर्शनस्य दोषविशेषजन्यज्ञानं प्रति अप्रतिबन्धकतया तदुत्तरं शङ्खो न श्वेत इत्यादिज्ञानोदयात्, तस्य च न विपरीतज्ञानविरोधित्वमिति।

सति विशेषदर्शने चाक्षुषसामग्रीविगमे शङ्खः श्वेत इत्यादिमानसज्ञानमिष्यत एव विशेषदर्शनेन तन्निश्चयनाशे विशेषदर्शनेन प्रतिबन्धात् तादृशनिश्चयान्तरस्य चानुत्पत्त्या तादृशमानसोत्पादस्यावश्यकतया तत्पूर्व्वक्षणे तदुत्पादोपगमे अनुभवविरोधविरहात्। अस्तु वा तादृशमानसादिसाधारणं लौकिकनिश्चयान्यज्ञानत्वमेवानुमित्यादिसाधारणविपरीतनिश्चयप्रतिबध्यतावच्छेदकं, यत्र सत्यपि चक्षुरादिसन्निकर्षे कराद्यदर्शनसहितदूरत्वादिदोषादयं स्थाणुरित्यादिभ्रमः ततः करादिदर्शने नायं स्थाणुरित्यादिलौकिनिश्चयस्तत्रैव भ्रमोत्तरप्रत्यक्षे विशेषदर्शनत्वेन हेतुता। अथ तत्र भ्रमोत्पत्तिक्षणे न कथं तादृशलौकिकज्ञानं विपरीतज्ञानोत्तरप्रत्यक्ष एव विशेषदर्शनहेतुतया तदुत्पत्तिक्षणे प्रत्यक्षोत्पत्तेर्विशेषदर्शनविरहेऽपि दुर्व्वारत्वात्। यदि च दूरत्वादिदोषेण प्रतिबन्धान्न तदा तदुत्पादापत्तिरिति, तदा भ्रमोत्तरं विशेषदर्शनात् कथं तदुत्पत्तिस्तदापि तद्दोषसत्त्वात् इति चेन्न, विशेषदर्शनसहितस्यैव दूरत्वादेः प्रतिबन्धकत्वेनोभयोपपत्तेः (१)। अस्तु वा तादृशदोषसमवधानकालीनप्रत्यक्षेऽपि विशेषदर्शनस्य हेतुत्वान्तरं विपरीतज्ञानवत्तादृशदोषाणाञ्चाप्रतिबन्धकत्वमिति मते प्रत्यक्षविशेषेऽतिव्याप्तिमाशङ्क्य निराकरोति, 'न चेत्यादिना, भ्रमो विपरीतनिश्चयः, एतच्च मतं मिश्राणामेवा-

---

(१) अत्रेदं चिन्त्यं तादृशप्रतिबन्धकतास्वीकारे उक्तस्थले विशेषदर्शनस्य हेतुत्वं निर्युक्तिकं, परन्तु यत्र विनश्यदवस्थदोषेण भ्रमो जनितस्तद्द्वितीयक्षणे प्रत्यक्षवारणाय विशेषदर्शनस्य हेतुत्वं बोध्यम्।

नुमतं न तूपाध्यायानां तैर्विशेषदर्शनाभावविशिष्टसंशयसाधारण-विपरीतज्ञानप्रतिबन्धकतामुपगम्य संशयाद्युत्तरं प्रत्यक्षनिश्चय-वारणात्। न च विशेषदर्शनाभावविशिष्टग्राह्याभावज्ञानत्वेन विशिष्टबुद्धिप्रतिबन्धकत्वे बाधनिश्चयकाले लिङ्गपरामर्शरूपविशेष-दर्शनात् अनुमित्यापत्तिर्विशिष्टाभावसत्त्वात् एवं निश्चयत्वानिवे-शात् संशयोत्तरं संशयानुपपत्तिः योग्यतासंशयस्य शाब्दबोध-प्रतिबन्धकतापत्तिश्च प्रतिबध्यतावच्छेदके निश्चयत्वप्रवेशेन संशयो-त्तरसंशयोपपादने बाधनिश्चयोत्तरमपि संशयापत्तिरिति वाच्यम्। परोक्षज्ञाने बाधनिश्चयस्य प्रतिबन्धकत्वान्तरकल्पनेन बाधनिश्चय-दशायामनुमित्यापत्तिवारणात्, प्रत्यक्षनिश्चयत्वस्यैव च संशया-दिसाधारणविपरीतधीप्रतिबध्यतावच्छेदकतया ग्राह्यसंशयोत्तरं शाब्दबोधाद्युपपत्तेः। न चैवं बाधनिश्चयोत्तरं संशयस्यापत्तिः, अनुमित्यादिसाधारणबाधनिश्चयप्रतिबध्यतावच्छेदकगर्भे प्रत्यक्ष-निश्चयान्यत्वस्य प्रवेशनीयतया संशयस्य निश्चयप्रतिबध्यतोपपत्तेः। न च प्रत्यक्षनिश्चयान्यबुद्धौ विपरीतनिश्चयत्वेन प्रतिबन्धक-त्वान्तरस्य एतन्मतेप्यावश्यकत्वे प्रत्यक्षनिश्चये विशेषदर्शनाभाववि-शिष्टविपरीतज्ञानाभावहेतुताकल्पनापेक्षया विशेषदर्शनस्य लघो-र्हेतुत्वकल्पनमेवोचितमिति वाच्यम्। व्याप्तेः सम्बन्धादिभेदेन भिन्नतया व्याप्यदर्शनस्याननुगमेन व्यभिचारात् तद्धेतुत्वकल्पना-सम्भवात्, नानाविधविशेषदर्शनाभावकूटविशिष्टविपरीतज्ञाना-भावस्यानुगतत्वाच्च। अन्यथा (१) अत्रैवान्यताप्युत्तेजकहेतुतया

---

(१) तत्तद्विशेषदर्शनाभावकूटत्वावच्छिन्नाभावत्वादिना कथञ्चिदुपपत्ताविव्यर्थः।

अतिप्रसङ्गवारणसम्भवेन सर्वत्र उत्तेजकविलयप्रसङ्गात् । एवमसत्यपि विशेषदर्शने विपरीतज्ञानासत्त्व इव विरीतज्ञानसत्त्वेऽपि सामान्यसामग्रीबलात् प्रत्यक्षसामान्यापत्तिर्दुर्वारैवेति विपरीतज्ञानानुत्तरप्रत्यक्षे संशयसाधारणविपरीतज्ञानाभावस्य विशेषसामग्रीत्वमावश्यकमिति गौरवम् । न च नानाविधविशेषदर्शनाभावानां विपरीतधीप्रतिबन्धकतावच्छेदकगर्भे निवेशे एकाभावविशिष्टत्वेनैवापराभावस्य निवेशनीयतया तावदभावानां परस्परमप्रामाण्यग्रहाभावादिभिश्च समं विशेष्य-विशेषणभावे विनिगमनाविरहेण कारणतावाहुल्यमिति तादृशतादृशविशेषदर्शनानन्तरप्रत्यक्षे तादृशतादृशविशेषदर्शनानां विपरीतज्ञानानुत्तरप्रत्यक्षे तदभावस्य च पृथक्कारणत्वं युक्तमिति वाच्यम् । आनन्तर्यस्य स्वत्वघटितत्वेन कार्य्य-कारणभावस्य तत्तद्व्यक्तिविश्रामापत्तेः । यदि च नानाविधविशेषदर्शनानां विपरीतज्ञानविरोधित्वेनानुगमादेकविधविशेषदर्शनस्यान्यविधविशेषदर्शनजन्यप्रत्यक्षे व्यभिचार इति न तज्जन्यतावच्छेदककोटावानन्तर्य्यनिवेशनं अत एवावच्छेदकधर्मदर्शनस्यापि संग्रह इत्युच्यते, तदापि विपरीतज्ञानानुत्तरप्रत्यक्षे विशेषदर्शनस्य व्यभिचारवारणाय विपरीतज्ञानाव्यवहितोत्तरत्वस्य विशेषदर्शनजन्यतावच्छेदकगर्भेऽवश्यं निवेशनीयतया विशेषदर्शनजन्यतावच्छेदकस्य तत्तद्व्यक्तिविश्रामो दुर्वार एव । एवं विपरीतज्ञानप्रतिबध्यतावच्छेदकशरीरेऽव्यवहितोत्तरत्वनिवेशस्यावश्यकतया (१) तदननुगमात् तदभावजन्य-

(१) अनुत्तरत्वघटकतयावश्यकतयेत्यर्थः ।

तावच्छेदकस्य तत्तद्विपरीतज्ञानाव्यवहितोत्तरत्वाभावकूटगर्भत्वा-
द्गौरवं दुर्व्वारम्।

यत्तु विशेषदर्शनजन्यप्रत्यक्षं व्याप्यधर्म्मविशिष्टधर्म्मिविशेष्य-
कमेव, तदनुत्तरन्तु न तथा, तथाच तथात्वातथात्वयोर्विशेष-
दर्शन-विपरीतज्ञानाभावजन्यतावच्छेदकप्रवेशेनैव व्यभिचारवारणे
नानन्तर्य्यप्रवेश इति, तदपि न, करादिमान् पुरुष इत्यादि-
निश्चयकालीनकरादिमत्तारूपावच्छेदकधर्म्मनिश्चयस्य पुरुषत्वा-
दिनिश्चायकतया तज्जन्यनिश्चये विपरीतज्ञानाभावव्यभिचारस्या-
नन्तर्य्यमनिवेश्य दुर्व्वारत्वात्, करादिमत्तावच्छिन्नाविशेष्यकत्वस्य
विपरीतज्ञानाभावजन्यतावच्छेदकत्वे करादिमान् पुरुष इत्यादि-
निश्चयशून्यकालीनकरादिमत्ताग्रहोत्तरजातस्य करादिमान् पुरुष-
इत्यादिप्रत्यक्षस्यासंग्रहप्रसङ्गात्।

यत्तु विपरीतज्ञानविरोधित्वेनैव विशेषदर्शनादीनां हेतुता
तत्त्वञ्च (१) विपरीतज्ञानाव्यवहितपूर्व्वत्वशून्यक्षणवृत्तित्वविशिष्टत्वं,
तदवच्छिन्नञ्च निश्चयपूर्व्वं सर्व्वत्रैव सुलभमिति सामान्यतो निश्चय-
त्वमेव तज्जन्यतावच्छेदकमिति विपरीतज्ञानानुत्तरप्रत्यक्षे तद-
भावहेतुतापि नास्ति। न चैवं विशेषदर्शनोत्पत्तिकाले संशया-
द्यनुत्पत्त्या तत्पूर्व्वक्षणेऽपि उक्तकारणसत्त्वाद्विशेषदर्शनानन्तरमिव
तदुत्पत्तिक्षणेऽपि निश्चयो जायतामिति वाच्यम्। इष्टत्वात्। न
च यत्र संशयाद्युत्तरमसत्यपि विशेषदर्शने न संशयादिः तत्र

(१) विपरीतज्ञानविरोधित्वञ्चेत्यर्थः।

निश्चयापत्तिरिति वाच्यम्। विपरीतकोटिनिवर्त्तकविशेषदर्शनाद्यसत्त्वे उपस्थिततत्कोटिज्ञानोत्पत्तेर्बाधविरहेणावश्यकत्वादिति। तदप्यसत्। अव्यवहितपूर्व्वत्वस्य तत्तद्व्यक्तिघटिततया गौरवादिति, एवं विशेषदर्शनानां हेतुत्वं दीधितिकाराणामप्यननुमतं संशयोत्तरविशेषदर्शनासत्त्वे संशयजनककोट्युपस्थितिधर्म्मिज्ञानादिघटितसामग्रीवशात् संशयस्योत्पादेन संशयान्यज्ञानत्वरूपनिश्चयत्वावच्छिन्नापत्त्ययोगात् तत्सामग्रग्रभावसहितज्ञानसामान्यसामग्रा एव तज्ज्ञानान्यज्ञानत्वावच्छिन्नोत्पत्तिप्रयोजकत्वात्। अथैवं संशयसामग्रग्रभावस्य निश्चयोत्पत्तावपेक्षणे संशयप्रयोजकविशेषदर्शनस्याभावो विशेषदर्शनं तन्निश्चयहेतुरिति आयातमिति चेन्न, तत्प्रयोजकाभावस्य तदन्यत्वावच्छिन्नाजनकस्यापि तदन्यत्वावच्छिन्नोत्पत्तिप्रयोजकत्वात् अन्यथा पटज्ञानान्यघटज्ञानत्वावच्छिन्नोत्पत्तावपेक्षितस्य पटादिज्ञानसामग्रग्रभावस्य पटज्ञानान्यज्ञानत्वावच्छिन्नहेतुताप्रसङ्गात्। विपरीतनिश्चयानन्तरञ्च तेन प्रतिबन्धादेव न प्रत्यक्षं विपरीतनिश्चयस्य प्रत्यक्षसाधारणलौकिकसन्निकर्षाद्यजन्यविशिष्टबुद्धित्वावच्छिन्नं प्रत्येव प्रतिबन्धकत्वात्, विपरीतनिश्चयानन्तरं विशेषदर्शने सत्यपि तन्नाशानन्तरमेव प्रत्यक्षं जायते (१)।

यत्तु भूतले घटो नास्तीति शाब्दादिनिश्चयानन्तरं लौकिक-

(१) मिश्रादिमते विपरीतनिश्चयोत्तरं विशेषदर्शने तदव्यवहितोत्तरक्षणे प्रत्यक्षनिश्चयः एतन्मते तृतीयक्षणे इति क्षणविलम्बस्य शपथनिर्णेतव्यत्वादिति भावः।

सन्निकर्षवशात् घटावगाहितत्संशयः कथं नोत्पद्यते लौकिकसन्निकर्षाजन्यतज्ज्ञानस्यैव तदभावनिश्चयप्रतिबध्यत्वात् अतो लौकिकनिर्णयान्यतद्वत्ताज्ञानत्वं तदभावनिश्चयाभावजन्यतावच्छेदकं वाच्यम् एवमपि यादृशसामग्रीबलात् लौकिकप्रत्यक्षे घटो भासते तत्सहितघटाभावोपस्थित्यादिसहितघटाभावभानसामग्रीतो बाधकाले संशयापत्तिर्दुर्व्वारैवेति निश्चयेऽपि विशेषसामग्रन्तरं कल्पनीयम्, तच्च निरुक्तविपरीतज्ञानविरोधित्वावच्छिन्नमेवेति (१) विशेषदर्शनस्यापि तेन रूपेण हेतुत्वमायातीति। तदसत्, लौकिकसामग्र्या बलवत्या विपरीतकोटिभानप्रतिबन्धकत्वादुक्तसंशयापत्त्ययोगात्, तत्प्रतिबन्धकत्वाकल्पने उक्तबाधनिश्चयानन्तरं लौकिकसन्निकर्षाद्यत्र वास्तवो घटादिनिश्चयस्तत्र घटाभावभानप्रतिबन्धकासत्त्वेन तद्ज्ञानापत्त्या संशयापादनस्य ब्रह्मणोऽपि दुर्व्वारत्वात् इति विशेषदर्शनहेतुतायां विवादान्मत इत्युक्तम्। संशयोत्तरप्रत्यक्षनिश्चये विशेषदर्शनहेतुत्वे घटादिप्रकारकमानसेच्छाविरहविशिष्टघटाभावादिशाब्दसामग्र्या योग्यतासंशयात्मकघटादिसंशयघटिताया घटादिमानसं प्रति प्रतिबन्धकत्वं न कल्प्यते इति लाघवं (२) तदानीं घटाभावादिमानसे तादृशशाब्द-

(१) तथाच प्रत्यक्षं द्विविधं लौकिकनिर्णयभिन्नं लौकिकनिर्णयात्मकञ्च, तत्र पूर्व्वस्मिन् बाधाभावः उत्तरत्र विपरीतज्ञानविरोधित्वावच्छिन्नञ्च कारणमिति विशेषसामग्रीविरहाद्वापत्तिरिति भावः।

(२) संशयानन्तरं घटाभावव्याप्यवत्ताज्ञाने घटाभावशाब्दसामग्रीसत्त्वे न घटाभावमानसमतः समानविषये शाब्दसामग्र्याः प्रतिबन्धकत्वमवश्यं कल्प्यं, तथाच तत्प्रकारकमानसे तदभावशाब्दसामग्र्याः प्रतिबन्धकत्वाकल्पनमेव लाघवमिति भावः।

सामग्र्याः प्रतिबन्धकतया मानसघटादिविशिष्टसंशयस्य विशेष-दर्शनरूपकारणविरहेणैव घटादिमानसनिश्चयस्य च वारणसम्भवात्। विशेषदर्शनसत्त्वे च तस्य विपरीतकोटिशाब्दधीप्रतिबन्धकत्वात् शाब्दधीसामग्र्यभावाज्जायत एव मानसमिति केचिन्मिश्रमतं परिष्कुर्वन्ति। ननु दीधितिकारादिमतेऽपि व्याप्यवद्धर्मिनिश्चयस्य विशेषणज्ञानादिविधया तदुत्तरप्रत्यक्षहेतुतया तथाविधनिश्चयत्वेन हेतुत्वाविवक्षादशायां तादृशप्रत्यक्षेऽतिव्याप्तेरावश्यकत्वात् विशेषदर्शनस्य हेतुतामत इत्यभिधानमयुक्तमिति चेन्न, निश्चयत्वेन हेतुत्वविवक्षणे मिश्रान्यमते नातिव्याप्तिर्मिश्रमते च तादृशनिश्चयत्वेनापि प्रत्यक्षविशेषहेतुतेत्याशयेन तथाविधाभिधानात्। अग्रे च तादृशनिश्चयत्वेन हेतुत्वविवक्षामात्रेण न समाधानम्, अपि तु तद्विवक्षया प्रत्यक्षे तादृशनिश्चयत्वेन हेतुताविरहप्रदर्शनेन चेति सामञ्जस्यात्। अथवा (१) तादृशनिश्चयजन्यतावच्छेदकानुभवत्वव्याप्यजातिविवक्षणे (२) नान्यमतेऽतिव्याप्तिरित्याशयेन विपरीतज्ञानोत्तरप्रत्यक्षत्वावच्छिन्नं प्रति विशेषदर्शनहेतुतामते अतिव्याप्त्यभिधानम्। 'विशेषदर्शनस्य चेति, 'चः' त्वर्थे, 'भ्रमादिविरोधित्वेन' ग्राह्याभावविरोधित्वेन, 'तत्त्वं' प्रत्यक्ष-

---

(१) यथाश्रुतमभिप्रेत्य सुष्ठु समाधत्ते अथ वेति।

(२) अत्र जन्यता किञ्चिद्धर्मावच्छिन्नविशेष्यकत्वावच्छिन्ना ग्राह्या नातस्तत्प्रकारकप्रत्यक्षे तद्विषयकज्ञानत्वेन हेतुत्वात् तादृशजन्यतामादायातिव्याप्तिरिति, किञ्चिद्धर्मावच्छिन्नत्वनिवेशात् सामान्यलक्षणाजन्यप्रत्यक्षे नातिव्याप्तिरिति च विभावनीयम्।

विशेषहेतुत्वं, 'उक्तत्वादिति, विशेषदर्शनत्वरूपेण हेतुत्वे अन्धकारे घटसंशये आलोकसमवधानात् तन्निश्चयानुपपत्तिः, एवं कुङ्कुमादौ तैलसंयोगादिरूपव्यञ्जकविरहाधीनसौरभादिसन्देहानन्तरं व्यञ्जक-समवधानेऽपि तन्निश्चयानुपपत्तिश्च। न चालौकिकत्वस्य विशेष-दर्शनजन्यतावच्छेदकत्वोपगमात् नैयमनुपपत्तिः तत्र घट-सौर-भादेर्लौकिकप्रत्यक्षस्यैव विशेषदर्शनं विनोत्पत्तेरिति वाच्यम्। लौकिकसन्निकर्षवत्यपि यत्र विशेषादर्शनसहितदूरत्वादिदोष-प्रयुक्तः पुरुषत्वादिसंशयस्तत्र विशेषदर्शने सत्येव लौकिकप्रत्य-क्षोत्पत्तेर्विशेषदर्शनजन्यतावच्छेदकरूपेण लौकिकस्यापि प्रत्यक्षस्य संग्राह्यत्वात्। अतएव विशेषदर्शने अनुमितिसामग्रीसत्त्वात् अनुमितिरेव भविष्यति न प्रत्यक्षमिति कथं तस्य प्रत्यक्षहेतुता इत्याक्षिप्य समानविषये प्रत्यक्षसामग्र्या बलवत्त्वमिति प्रत्यक्षमेव जायते नानुमितिरिति मणिकारेण समाहितमुत्पत्तिवादे (१)। विशेषदर्शनस्यालौकिकप्रत्यक्षमात्रहेतुत्वे तादृशप्रत्यक्षसामग्र्या अनु-मितिसामग्र्यपेक्षया हीनबलत्वादसङ्गतिः। यदि च विपरीत-ज्ञानोत्तरप्रत्यक्षनिष्ठविशेषदर्शनजन्यतावच्छेदकशरीरे अलौकिक-त्वनिवेशेऽपि न क्षतिः दूरस्थे धर्म्मिणि पुरुषत्वादिसन्देहोत्पत्ति-क्षण एव लौकिकसन्निकर्षात्तन्निश्चयवारणाय दूरत्वादिदोषसम-वधानकालीनप्रत्यक्षेऽपि विशेषदर्शनहेतुताया आवश्यकत्वात्तत एव दूरस्थे धर्म्मिणि संशयोत्तरमपि विना विशेषदर्शनं पुरुष-

(१) व्युत्पत्तिवादे इति पा०।

त्वादिनिश्चयवारणसम्भवात् इत्युच्यते। तदापि सम्बन्धादिभेदभिन्न-नानाविधव्याप्यवगाहिविशेषदर्शनावच्छेदकधर्म्मदर्शनसाधारणवि-शेषदर्शनत्वस्यानुगतस्याभावात् न तेन रूपेण हेतुतासम्भव इति विपरीतज्ञानविरोधित्वमेवानुगमकं वाच्यमिति भावः। अथ यदि आलोकसंयोगादिसाधारण्यं विपरीतज्ञानविरोधित्वस्य तदा तत्क-थमुपपद्यतां घटवद्भूतलादावालोकसंयोगादिसत्त्वेऽपि तत्र चक्षुः-संयोगाद्यसत्त्वे तत्सत्त्वेऽपि च दूरत्वादिदोषात् घटादिसंशयोत्पत्त्या आलोकसंयोगसत्त्वेन विपरीतज्ञानाविरोधित्वात्। अस्तु वा लौकि-कप्रत्यक्षकारणान्तरसमवहितालोकसंयोगत्वेन तथात्वं, तथापि तस्यात्मनिष्ठोऽन्यः सम्बन्धः(१) अन्यश्च(२) विशेषदर्शनस्येति उभयो-रनुगतकारणतावच्छेदकसम्बन्धो दुर्व्वच इति चेन्न, लौकिक-प्रत्यक्षकारणालोकसंयोगादिसमवहितात्ममनोयोगस्यैव आत्म-निष्ठप्रत्यासन्नस्य विपरीतज्ञानप्रतिबन्धकत्वोपगमेन तत्साधारण-तद्रूपावच्छिन्नस्य विशेषदर्शनस्य समवायसम्बन्धेनैव हेतुतासम्भवा-दित्यलमधिकेन।

---

चिन्तामणिदीधितिः।

अतएव लिङ्गवत्त्वादिलक्षणातिदेशवाक्यार्थज्ञान-जन्योपमितौ नातिव्याप्तिः, तथाविधवाक्यार्थप्रति-सन्धानत्वेन तस्य हेतुत्वात्। न चोपनयार्थज्ञान-

---

(१) स्वजनकादृष्टवत्त्वरूपः।

(२) अन्यः समवायः।

जन्यन्यायार्थज्ञाने तच्छब्देन सङ्केतितशब्दान्तरेण वा व्याघ्रादिविशिष्टोपस्थितिद्वारा जनिते शाब्दबोधेऽतिव्याप्तिः, व्युत्पादयिष्यते च महावाक्यार्थज्ञानस्यावान्तरवाक्यार्थधीजन्यत्वं तदादेश्च विशेषरूपेणोपस्थापकत्वमिति वाच्यम्। तत्रातिरिक्तस्य पदजन्यत्वस्य कारणतावच्छेदकेऽनुप्रवेशान्निश्चयत्वस्याप्रवेशाच्च।

---

गादाधरी विवृतिः।

तथाविधनिश्चयत्वेन हेतुताविवक्षणस्य प्रयोजनान्तरमपि दर्शयति, 'अतएवेति, 'लिङ्गवत्त्वादिलक्षणः' वह्निव्याप्यधूमवत्त्वादिघटितः, यः 'अतिदेशवाक्यार्थः' सादृश्यविशिष्टे पदवाच्यत्वादिबोधकवाक्यप्रतिपाद्योऽर्थः, तद्विषयकं यज्ज्ञानं वह्निव्याप्यधूमवत्पर्वतसदृशो महानसपदवाच्य इत्यादिज्ञानं तज्जन्यायाम् अयं महानसपदवाच्य इत्याद्युपमितौ वस्तुगत्या साध्यव्याप्यत्वावच्छिन्नहेतुप्रकारकं पक्षविशेष्यकं यत्तादृशं ज्ञानं तज्जन्यत्वेऽपि नातिव्याप्तिरित्यर्थः। 'तथाविधवाक्यार्थेति पदवाच्यत्वविशिष्टवह्निव्याप्यधूमवत्पर्वतसादृश्यावच्छिन्नवत्त्विज्ञानत्वेनेत्यर्थः। यद्यपि भ्रमसाधारण्याय तादृशविशिष्टवाक्यार्थघटकतत्तत्पदार्थानां परस्परोपश्लेषावगाहित्वेनैव उपमितिविशेषहेतुताया वक्तव्यतया पक्षांशे व्याप्तिप्रकारेण हेतुमत्तावगाहिज्ञानत्वमप्युपमितिजनकतावच्छेदकं, तथापि पक्षांशे व्याप्याभावानवगाहितादृशहेतुमत्तावगाहिज्ञानत्वरूपमनुमितिजनकतावच्छेदकव्याप्यवत्पक्षनिश्चयत्वं नोक्तो-

पमितिजनकतावच्छेदकम् अतिदेशवाक्यार्थज्ञाने व्याप्यवत्त्वस्य धर्म्मितावच्छेदककोटिनिविष्टतया भानाद्धर्म्मितावच्छेदकघटकांशे च संशयस्यानभ्युपगमात् उपमितिजनकतायां निश्चयत्वनिवेशनस्यानर्थक्यादतो न तादृशरूपावच्छिन्नजनकताकत्वरूपानुमितिलक्षणस्य तत्रातिव्याप्तिः । अतएव (१) निश्चयत्वपर्य्यन्तनिवेशनमप्यर्थवत् (२) । अन्यथा (३) निश्चयत्वेनानुमितिजनकत्वेऽपि अधिकन्त्विति न्यायात् अनुमितिजनकतायाः पक्षविशेष्यकव्याप्यवत्ताज्ञानत्वावच्छिन्नत्वात् तादृशज्ञानत्वावच्छिन्नजनकताकत्वमात्रनिवेशेन भ्रमादिविरोधित्वावच्छिन्नहेतुताकप्रत्यक्षविशेषातिव्याप्तिवारणसम्भवेऽपि तदनर्थकत्वमापद्येत । वस्तुतस्तु (४) वह्निव्याप्यधूमवत्त्वेन (५) पर्व्वतसदृशो महानसपदवाच्य इत्य-

---

(१) उपमितावतिव्याप्तेरेवेत्यर्थः ।

(२) उपमितावतिव्याप्तिवारणरूपप्रयोजनवदित्यर्थः ।

(३) उपमितिविशेषेऽनतिव्याप्तौ ।

(४) धर्म्मितावच्छेदकावच्छिन्ने सादृश्यज्ञानरूपोपमितिकारणतामादाय महानसपक्षकानुमितिस्वलीयलक्षणस्योपमितावतिव्याप्तिमाशङ्कते, वस्तुतस्त्विति ।

(५) वह्निव्याप्यधूमवत्त्वेन पर्व्वतसदृशं महानसं इत्याकारकसादृश्यविशिष्टमहानसप्रत्यक्षं पर्व्वतभिन्नत्वे सति पर्व्वतवृत्तितादृशधूमप्रकारकमहानसविशेष्यकं तदेवोपमानरूपं अतिदेशवाक्यार्थज्ञानद्वारा तज्जन्योपमितौ महानसपक्षकानुमितिलक्षणस्यातिव्याप्तिः निश्चयत्वनिवेशेनापि न शक्यते वारयितुं इति पर्य्याप्तिनिवेशः तथा सति असम्भवभयेन तत्र निश्चयत्वनिवेश आवश्यकः, सादृश्यघटकवह्निव्याप्यधूमादेस्तृतीयान्तत्वेनोपादानं तादृश्येण धर्म्मिविशेषणतालाभाय तथाच वह्निव्याप्यधूमेन पर्व्वतसदृशं महानसमिति ज्ञानञ्च पर्व्वतभिन्नत्वे सति पर्व्वतवृत्तिवह्निव्याप्यधूमप्रकारकमहानसविशेष्यकं तज्जन्योपमितिः महानसं महानसपदवाच्यमित्याकारिकेति समुदिततात्पर्य्यम् ।

तिदेशवाक्यार्थज्ञानसहकृतव्याप्यवत्ताघटितसादृश्यज्ञानजन्यायामुपमितौ जनकतावच्छेदके वाप्यांशे पक्षवृत्तित्वावगाहित्वस्याधिकस्य (१) निवेशनेऽपि धर्म्मांशे व्याप्यवत्तावगाहिनिश्चयत्वरूपानुमितिजनकतावच्छेदकावच्छिन्नहेतुताकत्वस्य (२) तादृशोपमितावक्षतत्वात् अतिव्याप्तेर्वारणाय तादृशनिश्चयत्वपर्य्याप्तहेतुतावच्छेदकताकत्वपर्य्यन्तनिवेशनमावश्यकं (३) तथाच अनुमितिजनकतावच्छेदकता यादृशसमुदाये पर्य्याप्ता तादृशसमुदायस्यैव लक्षणे निवेशनमावश्यकमन्यथा समुदायपर्य्याप्ताच्छेदकताया एकदेशापर्य्याप्ततया असम्भवापत्तेः। अतएव उक्तनिश्चयत्वघटकाभावदलस्यापि सार्थकता, एवञ्चाप्रामाण्यज्ञानानास्कन्दितत्वस्य कारणतावच्छेदकत्वमते (४) तदंशोऽपि लक्षणे निवेशनीयः। न च सादृश्यज्ञानस्य उपमितिहेतुतायां पर्व्वतादिवृत्तित्वावच्छिन्नव्याप्यादिविषयता पर्व्वतादिवृत्तित्वावच्छिन्नविषयतात्वेनैव निवेश्या न तु व्याप्यादिविषयतात्वेन प्रयोजनाभावात् तथाचानुमितिजनकतावच्छेदकधर्म्मस्य उक्तोपमितिजनकतावच्छेदककोटिनिवेशोऽपि नास्ति किं पर्य्याप्तिनिवेशनेनेति वाच्यम्। व्याप्यवत्ता-

---

(१) तद्भिन्नत्वे सति तद्वृत्तिधर्म्मवत्त्वस्यैव तत्सादृश्यत्वात्।

(२) उपमितौ जनकतावच्छेदकधर्म्मितावच्छेदकघटकांशे निश्चयत्वानिवेशेऽपि प्रकारांशे निश्चयत्वनिवेशस्यावश्यकत्वादिति भावः।

(३) तथाच पूर्व्वत्र निश्चयत्वनिवेशनेन नातिव्याप्तिरत्र तु पर्य्याप्तिनिवेशान्नातिव्याप्तिरिति भावः।

(४) अप्रामाण्यज्ञानाभावस्य स्वातन्त्र्येण हेतुत्वं केषाञ्चित् सम्मतमतो मते इत्युक्तम्।

घटितसादृश्यावच्छिन्नधर्म्मिकवाक्यार्थज्ञानस्य तद्घटितसादृश्यज्ञान-सहकारेण फलजनकतया उभयत्र सादृश्यघटकधर्म्माणां विशिष्या-वश्यनिवेशनीयत्वात् । न च पर्य्याप्तिविवक्षायामपि धूमवत्त्वेन धूमव्यापकवह्निमत्सादृश्यात्मकतादृशवह्निमद्वृत्तिधूमवत्तानिश्चयज-न्योपमितावतिव्याप्तिः (१) न शक्यते वारयितुमिति वाच्यम् । सादृश्यघटकभेदविषयताया अपि प्रवेशेन विवक्षितनिश्चयत्वे तत्कारणतावच्छेदकतापर्य्याप्तिविरहात् । लाघवाद्भेदाघटितसादृ-श्यज्ञानमेवोपमितौ कारणमिति तु न वाच्यं, तथा सति गवादा-वपि सादृश्यनिश्चयसत्त्वेन गवयादिपदवाच्यत्वोपमित्यापत्तेः । यदि च वैधर्म्म्यज्ञानादपि उपमितिः स्वीक्रियते वैधर्म्म्यस्य च इतर-वैधर्म्म्यत्वेन ज्ञानं नापेक्ष्यते तदा व्याप्यधर्म्मरूपवैधर्म्म्यज्ञानजन्यो-पमितावतिव्याप्तिः (२) कारणतावच्छेदकतापर्य्याप्तिनिवेशेऽपि दुर्व्वारेति तद्वारणप्रकारश्चिन्त्यः (३) । महावाक्यार्थविषयकशाब्द-

(१) धूमवत्त्वेन धूमव्यापकवह्निमत्सदृशः पर्व्वतपदवाच्य इत्यतिदेशवाक्यार्थज्ञानं अयं धूमेन धूमव्यापकवह्निमत्सदृश इति सादृश्यज्ञानं ततोऽयं पर्व्वतपदवाच्य इत्युप-मितिस्तत्रातिव्याप्तिरिति भावः ।

(२) यथा अयमतिदीर्घग्रीवस्थूलतरौष्ठः कठोरकण्टकाशीति इतरवैधर्म्म्य-ज्ञानं ततोऽतिदीर्घग्रीवस्थूलतरौष्ठः कठोरकण्टकाशी करभपदवाच्य इति प्रागनु-भूतस्य वाक्यार्थस्य स्मृतिः ततोऽयं करभपदवाच्य इति प्रागनुभूतस्य वाक्यार्थस्य स्मृतिः ततोऽयं करभपदवाच्य इत्युपमितिः तथा पशुत्वव्याप्यसास्नावान् अयं इतीतरवैधर्म्म्यज्ञानं ततो वाक्यार्थस्मृतिः ततोऽयं गोपदवाच्य इति वैधर्म्म्यज्ञान-करणिका उपमितिः तत्रातिव्याप्तिः पर्य्याप्तिनिवेशेऽपि वारयितुं न शक्यते इति भावः ।

(३) चरमज्ञाने व्याप्यविषयकत्वस्याभावाविषयकत्वस्य उपमित्यन्यत्वस्य वा निवेश एव तत्प्रकारः ।

बोधे अवान्तरवाक्यार्थनिश्चयस्य तादृशनिश्चयत्वेनैव हेतुता, एवं विशिष्टपदार्थगोचरशाब्दबोधेऽपि विशिष्टपदार्थोपस्थितेस्तद्विषयक-निश्चयत्वेनैव हेतुता न तु विशेषणान्तरप्रवेश इत्यभिमानेन शाब्द-बोधविशेषेऽतिव्याप्तिमाशङ्कते, 'न चेत्यादिना, 'उपनयार्थज्ञानेति उपनयवाक्यप्रतिपाद्यसाध्यव्याप्यहेतुमत्पक्षरूपावान्तरवाक्यार्थज्ञा-नेत्यर्थः, 'न्यायार्थज्ञाने' निगमनसहकृतोपनयजन्ये वह्निव्याप्य-धूमवानयं धूमज्ञानज्ञाप्यवह्निमानित्यादिमहावाक्यार्थज्ञाने इत्यर्थः, तेन प्रतिज्ञादिपञ्चकवाक्यात्मकन्यायस्य विशिष्टैकार्थज्ञानजनक-तायाः स्वयं दूषणीयत्वेऽपि न क्षतिः। यद्यपि वह्निव्याप्य-धूमवांश्चायमित्याद्युपनयजन्यबोधे व्याप्यवत एवाभेदो धर्म्मिणि भासते न तु व्याप्यस्य व्याप्यतावच्छेदकसम्बन्धः नामार्थयोर्भेदे-नान्वयस्याव्युत्पन्नत्वात्। तथाच नातिव्याप्त्यवसरः पक्षांशे व्याप्य-प्रकारकज्ञानस्यैव लक्षणघटकत्वात्, यत्र तादात्म्यसम्बन्धेन धर्म्मिणो हेतुता तत्र व्याप्यस्य पक्षांशे तेन सम्बन्धेन उपनयप्रतिपाद्यत्वेऽपि व्याप्याभेदस्यैव हेतौ भानात् तदंशे व्याप्तिप्रकारकत्वाभावेन नाति-व्याप्त्यवसरः, तथापि तादात्म्यसम्बन्धावच्छिन्नव्याप्तिविशिष्टधर्म्मि-रूपहेतुपरतच्छब्दघटितस्य सचायमिति वाक्यस्य प्रतिपाद्ये विशि-ष्टार्थे निगमनार्थस्यान्यस्य वा कस्यचिदर्थस्यान्वयबोधस्तत्रातिव्याप्तिपरोऽयं ग्रन्थः, साध्यव्याप्यहेतुविशिष्टपक्षपर्य्यन्तपरतच्छब्द-जन्यबोधेऽतिव्याप्तिपरश्च 'तच्छब्देनेत्यग्रिमग्रन्थ इति न पौनरुक्त्यम्। व्याप्यविशिष्टपक्षरूपवाक्यार्थज्ञानजन्यतामादाय तद्घटितमहावा-क्यार्थबोधे संयोगादिसम्बन्धेन पक्षांशे व्याप्यप्रकारकज्ञानकरणता-

घटितलक्षणस्य अतिव्याप्त्यसम्भवादेव च व्याप्यविशिष्टपक्षात्मक-पदार्थज्ञानजन्यबोधेऽतिव्याप्तिमाह, 'तच्छब्देनेति, तादृशविशिष्टार्थबोधकपदान्तराभावात् सर्व्वनामानुधावनं, सर्व्वनाम्नां विशेषरूपेण पदार्थोपस्थापकतामत एव तज्जन्योपस्थितेः पक्षविशेष्यक-व्याप्तिविशिष्टहेतुप्रकारकनिश्चयरूपतासम्भवः न तु वक्तृबुद्धिस्थत्वेन उपस्थापकतामत इत्यविवादायाह, 'शक्तेतिशब्दान्तरेण वेति व्याप्तिविशिष्टहेतुविशिष्टपक्षे आधुनिकशक्तेतशालिना घटादिपदेनेत्यर्थः। इदमुपलक्षणं विशिष्टपक्षलाक्षणिकपर्व्वतादिपदेनेत्यपि बोध्यम्। 'व्याप्यादिविशिष्टोपस्थितिद्वारा' व्याप्यवच्छिन्नहेतुविशिष्टपक्षोपस्थितिद्वारा, जनिते वह्निव्याप्यधूमवान् पर्व्वतोऽस्तीत्याकारकशाब्दबोधेऽतिव्याप्तिः। ननूपनयार्थघटितमहावाक्यार्थबोधे कथमतिव्याप्तिः उपनयार्थज्ञानस्य पक्षविशेष्यकव्याप्यप्रकारकज्ञानत्वेन तद्धेतुताया अप्रामाणिकत्वात्, तत्तत्पदार्थज्ञानत्वेन तदन्वयबोधे हेतुत्वादेवानुपस्थितपदार्थान्वयबोधाप्रसक्तेः। न च खण्डशः सकलपदार्थोपस्थितावपि अवान्तरवाक्यार्थज्ञानं विना तद्घटितमहावाक्यार्थज्ञानानुदयात् अवान्तरवाक्यप्रतिपाद्यो यादृशविशिष्टार्थस्तद्विषयकज्ञानत्वेन महावाक्यार्थबोधहेतुत्वमावश्यकमिति वाच्यम्। दण्डी कुण्डली वासस्वी चैत्रइत्यादौ दण्डादिविशेषणान्वितचैत्रादिज्ञानं विनैव तादृशवाक्यार्थघटिततावद्विशेषणान्वितविशिष्टरूपमहावाक्यार्थधियः समूहालम्बनतावत्पदार्थस्मृतित उत्पत्तेर्मणिकृता स्वीकारादित्यत आह, 'व्युत्पादयिष्यत इति, 'महावाक्यार्थज्ञानस्य' विशिष्टपदार्थेनापर-

पदार्थसंसर्गावगाहिज्ञानस्य, 'अवान्तरेति तादृशविशिष्टार्थविषयकज्ञानत्वावच्छिन्नजन्यत्वमर्थः । अयम्भावः । यादृशविशेषणविशिष्टस्य विशेष्यस्य विशेषणस्य वा शब्दादुपस्थितिस्तादृशेनैव विशिष्टेन विशेषणान्तरस्य विशेष्यान्तरस्य वा अन्वयबोधोऽनुभवसिद्धः, यत्र युगपदेव एकस्मिन् धर्म्मिणि समूहालम्बनोपस्थितनानाविशेषणान्वयबोधस्तत्र विशेषणानां तुल्यतया भानात् नासौ एकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यबोधः, अतो न तत्र विशेषणविशिष्टविशेष्योपस्थितिरपेक्षा, एकविशेषणविशिष्टे विशेषणान्तरवैशिष्ट्यं विशिष्टे वा यत्र विशेषणान्तरविशिष्टस्य वैशिष्ट्यं भासते सबोधो विशिष्टविषयकबोधादेव उत्पद्यते, न तु विशृङ्खलसमूहालम्बनात् अतएव इष्टविशेष्यकउपायसाध्यताज्ञानस्य प्रवर्त्तकतामाशङ्क्य तन्मते (१) विधिवाक्यात् वाक्यभेदभिया (२) कृतिसाध्ययागसाध्यमिष्टमित्येतादृशस्य समूहालम्बनविलक्षणविशिष्टयागविशेषणकबोधस्यैव स्वीकार्य्यतया तदर्थमन्तरा कृतिसाध्यो याग इत्यवान्तरवाक्यार्थबोधस्य कल्पनीयतया गौरवं, उपायविशेष्यकफलसाधनताबोधस्य प्रवर्त्तकत्वे च आहत्यैव (३) एकत्र द्वयमिति रीत्या कृतिसाध्यत्वेष्टसाधनत्वरूपविशेषणद्वयावगाही यागः कृतिसाध्य इष्टसाधनमिति बोधः स्वीक्रियते इति लाघवमित्युक्तं विधिवादे मणिकारेण, विशिष्टेन सममन्यान्वयबोधे विशिष्टधियो हेतुत्वे

---

(१) इष्टविशेष्यकोपायसाध्यताज्ञानस्य प्रवर्त्तकतामते ।

(२) कृतिसाध्यो यागः यागसाध्यमिष्टमिति वाक्यभेदभियेत्यर्थः ।

(३) साक्षादेवेत्यर्थः ।

तादृशान्वयतात्पर्य्यधीघटितशाब्दसामग्र्या भिन्नविषयकप्रत्यक्षादि-
प्रतिबन्धकतायां विशिष्टविषयकैकोपस्थितिर्निविशते अन्यथा तत्-
स्थाने विशेषण-विशेष्योपस्थितिद्वयम् अतो लाघवादपि तद्धेतुता-
सिद्धिः । एवञ्च उपनयप्रतिपाद्यहेतुविशिष्टपक्षविशेष्यकेतरान्वय-
बोधेऽतिव्याप्तिर्दुर्व्वारैवेति । ननु तदादेर्व्विशेषरूपेणोपस्थापक-
ताया विचारासहत्वात् कथं तदादिपदजन्यशाब्दबोधेऽतिव्याप्ति-
सङ्गतिः । तथा हि तदादिपदस्य न घटत्व-रूपत्वादिविशेषधर्म्म-
विशिष्टे (१) शक्तिः नानार्थताप्रसङ्गेन गौरवात्, घटादिकं बुद्धि-
स्थीकृत्य प्रयुक्ततच्छब्दात् पटादिबोधस्य शक्तिभ्रममन्तरेणापि
प्रसङ्गात् । न च वस्तुगत्या यद्रूपावच्छिन्नं बुद्धिस्थीकृत्य यत्पदव्यक्तिः
प्रयुक्ता तद्रूपावच्छिन्ने तस्याः शक्तिः अतो नायं दोष इति वाच्यम् ।
एवमपि पदव्यक्तिभेदेनानन्तशक्तिकल्पनया गौरवात्, यत्पदव्यक्ति-
प्रयोज्या प्रयोज्यवृद्धप्रवृत्तिर्नोपलब्धा तत्पदव्यक्तौ शक्तेरगृहीतत्वेन
ततोऽन्वयबोधानुपपत्तेः अतः सामान्यतः स्वप्रयोक्तृपुरुषबुद्धिस्थे
तदादिपदसामान्यशक्तिः कल्पनीया, तथाच तत्त्वेनैवोपस्थितिः
सर्व्वनामपदाद्भविष्यति न तु विशेषरूपेण । न च बुद्धिस्थत्वेन शक्या-
नुगमेऽपि तेन रूपेण व्युत्पत्तौ सत्यां (२) घटत्वादिरूपविशेषधर्म्म-
पुरस्कारेण बुद्धिस्थत्वज्ञानरूपविशेषदर्शनात् (३) उपलक्षणीभूत-
घटत्वादिप्रकारेण शक्तिग्रहसम्भव इति तेन रूपेण न तत्पदादुप-

---

(१) घटत्व-पटत्वादिविशेषधर्म्मविशिष्टे इति पा० ।

(२) शक्तिज्ञाने सतीत्यर्थः ।

(३) बुद्धिस्थस्तत्पदवाच्यः बुद्धिस्थो घट इत्यादिरूपविशेषदर्शनादित्यर्थः ।

स्थितिर्दुर्लभा सम्बन्धग्रहप्रकारताया एव स्मृतिप्रकारताप्रयोजकतया प्रकारांशे शक्तिग्रहानपेक्षणादिति वाच्यम् । द्रव्यादिपदात् घटत्वादिप्रकारेण शक्तिभ्रमशून्यस्य शाब्दबोधानुदयात् शक्यधीनोपलक्षणीभूतधर्म्मप्रकारकोपस्थितेः शाब्दबोधानुपयोगित्वादित्यत आह, 'तदादेश्चेति,'विशेषरूपेणोपस्थापकत्वं' 'व्युत्पादयिष्यत इत्यनुषङ्गेनान्वयः । अयमभिप्रायः । स्वप्रयोक्तृबुद्धिप्रकारत्वेनानुगतीकृतघटत्वादिरूपविशेषधर्म्मविशिष्टे तत्पदशक्तिः अतो न विशेषणभेदेन शक्त्यानन्त्यं न वा विशेषधर्म्मप्रकारकशाब्दबोधोपयोगिविशेषधर्म्मप्रकारकोपस्थितिर्दुर्घटा । न च तादृशबुद्धिविषयत्वविशिष्टे शक्त्यैवोक्तोपपत्तौ किमेतावता प्रयासेन विशेषरूपेणोपस्थापकताविरहेऽपि क्षतिविरहादिति वाच्यम् । विशेषधर्म्मप्रकारकसंशयनिवृत्त्यर्थमपि (१) तदादिघटितवाक्यप्रयोगाद्विशेषप्रकारेण शाब्दबोधस्य दुरपह्नवतया तदुपपत्तये तदादेर्व्विशेषरूपेण उपस्थापकताया अवश्योपपाद्यत्वात् । बुद्धिप्रकारत्वेन प्रवृत्तिनिमित्तघटत्वादीनामनुगमेऽपि तादृशधर्म्मस्याशक्यतया तदंशपरित्यागेन निर्व्विशेषणकघटत्वादिप्रकारकबोधोपपत्तिः बुद्धिप्रकारत्वस्याशक्यत्वेऽपि तत्पदं बुद्धिप्रकारविशिष्टं बोधयतु इत्याकारकभगवत्सङ्केतरूपशक्तौ तेनानुगतरूपेण घटत्व-पटत्वादिभानात् शक्तेरैक्यं, बुद्धिप्रकारत्वस्य सङ्केतविषयत्वेऽपि तस्य शक्योपलक्षणता न तु शक्यान्तर्भावेन विशेषणत्वं, तदुपलक्षितघटत्वादिप्रकारकत्वेनैव बोधस्य सङ्केत-

(१) तमानयेति वाक्यानन्तरं आनयनं घटकर्म्मकं न वेति संशयनिवृत्त्यर्थमित्यर्थः ।

विषयत्वात् न तु तद्विशिष्टप्रकारकत्वेन । शाब्दबोधप्रकारतायां शाब्दबोधविषयतावच्छेदकत्वेन सङ्केतविषयत्वज्ञानं (१) प्रयोजकं, यथा घटत्वस्य घटपदजन्यशाब्दबोधप्रकारतायां घटत्वावच्छिन्नो घट-पदजन्यशाब्दबोधविषयतावान् भवतु इत्याकारसङ्केतीयस्य शाब्द-बोधविषयतावच्छेदकत्वेन विषयत्वस्य ज्ञानं (२), तादृशसङ्केतग्रहस्य घटत्वावच्छिन्नत्वविषयतानिरूपितसङ्केतीयशाब्दबोधविषयत्वप्रका-रतानिरूपितविषयतावान् घट इत्याकारकः, शाब्दबोधप्र-कारतावच्छेदकतायाञ्च शाब्दबोधविषयतावच्छेदकतावच्छेदकत्वेन सङ्केतविषयत्वज्ञानं (३), यथा लोमत्वस्य पशुपदजन्यशाब्दबोध-प्रकारतावच्छेदकतायां लोमत्वावच्छिन्नलोमावच्छिन्नः पशुपद-जन्यशाब्दबोधविषयतावान् भवतु इत्याकारकसङ्केतीयशाब्दबोध-विषयतावच्छेदकतावच्छेदकत्वेन विषयत्वज्ञानं, तादृशसङ्केतग्रहस्य लोमत्वावच्छिन्नस्वनिष्ठावच्छेदकताकत्वसम्बन्धावच्छिन्नलोमनिष्ठ-प्रकारतानिरूपितविशेष्यतावच्छिन्ना या शाब्दबोधविषयत्वनिष्ठ-प्रकारता तन्निरूपितविशेष्यतावान् लोमादिमान् इत्याकारकः । प्रकृते च बुद्धिप्रकारत्वाश्रयावच्छिन्नस्तत्पदजन्यशाब्दबोधविषयो भवतु इत्याकारकभगवत्सङ्केतीयं शाब्दबोधविषयतावच्छेदकता-वच्छेदकत्वेन विषयत्वं न बुद्धिप्रकारत्वस्य किन्तु तदंशे

---

(१) शाब्दबोधविषयतावच्छेदकत्वनिष्टविषयतानिरूपितस्य सङ्केतीयविषयत्वस्य ज्ञानमित्यर्थः ।

(२) प्रयोजकमिति पूर्वेणान्वयः ।

(३) अत्रापि प्रयोजकमित्यस्यानुषङ्गः ।

सङ्केतेन शाब्दबोधविषयतावच्छेदकतासामानाधिकरण्यस्यैवाव-गाहनात् सङ्केतीयशाब्दबोधविषयतावच्छेदकतासमानाधिकरण-त्वेनैव विषयत्वमिति तस्य तत्पदजन्यशाब्दबोधप्रकारतानव-च्छेदकत्वनिर्व्वाहः। इदञ्च विशिष्टशक्तपदस्थले, उपलक्षितवाचक-गगनादिपदस्थले च यद्धर्म्मं धर्म्मितावच्छेदकीकृत्य शाब्दबोधविषय-त्वेन सङ्केतविषयत्वग्रहस्तद्धर्म्मप्रकारक एव बोध उत्पद्यते इति तत्र शब्दाश्रयत्वाद्यनियतधर्म्मप्रकारकबोधनिर्व्वाहः।

दीधितिकारास्तु सर्व्वत्रैव शाब्दबोधप्रकारतायां तदवच्छेद-कतायाञ्च सङ्केतीयशाब्दबोधविषयत्वप्रकारतानिरूपितविशेष्यता-वच्छेदकत्व-तदवच्छेदकत्वरूपशक्यतावच्छेदकत्व-तदवच्छेदकत्वज्ञानं हेतुः, यथा घट पशुपदस्थले घटत्व-लोमत्वादेः, गगनादिपदस्थले च शब्दाश्रयत्व एव निरुक्तशक्यतावच्छेदकत्वसत्त्वात् शब्दाश्रयत्वप्रका-रक एव शक्तिभ्रमाजन्यबोध इति घटपद-गगनपदयोरविशेष इति वदन्ति। तन्मते बुद्धिप्रकारत्वस्य शाब्दबोधप्रकारतानवच्छेदकत्वं दुरुपपादम्।

नानार्थहर्य्यादिपदस्थले चोपलक्षणीभवता केनाप्यनुगतरू-पेण (१) प्रवृत्तिनिमित्तानामभानात् अशक्यस्वरूपसदनुगतरूप-सत्त्वेऽपि शक्तिभेदान्नानार्थतानिर्व्वाहः। बुद्धिप्रकारविशिष्टवाचकं तत्पदमिति सर्व्वोपसंहारेण व्युत्पत्तिसौकर्य्यादपूर्व्वचैत्रत्वादि-विशिष्टे तदादिघटितवाक्यात् प्रवृत्त्याद्यनुपलम्भेऽपि न तत्-प्रकारकशाब्दबोधस्य तदादिपदादनुपपत्तिः। अथ सामान्यतो-

(१) अन्यतमत्वादिनेत्यर्थः।

व्युत्पत्तेश्चैत्रत्वाद्यपूर्व्वधर्म्मविशिष्टगोचरत्वेऽपि स्वरूपतस्तद्धर्म्मप्रकारेण शक्तग्रहात् स्वरूपतस्तत्प्रकारकोपस्थितेः तादृशशाब्दबोधस्य चानुपपत्तिः, जातिमान् हस्तिपकसम्बन्धी इति ज्ञानात् स्वरूपतो हस्तित्वादिप्रकारकस्मरणानुदयात् स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकसम्बन्धधिय एव हेतुत्वात्। यत्तु अनुगमकधर्म्ममोषवशात् सामान्यव्युत्पत्त्यधीनं स्वरूपतश्चैत्रत्वादिप्रकारकशक्तिस्मरणं सुघटमिति ततस्तादृशचैत्रत्वादिप्रकारकपदार्थोपस्थिति-शाब्दबोधयोर्नानुपपत्तिरिति। तदसत्। स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकानुभवस्यैव हेतुताया व्यवस्थापनान्मोषवशेन विशिष्टतत्प्रकारकानुभवादविशिष्टतत्प्रकारकस्मरणानुत्पत्तेरिति चेन्न, प्रकरणादिना निर्व्विशेषणकचैत्रत्वाद्यवच्छिन्ने वक्तुर्बुद्धिविषयताग्रहे बुद्धिविषयतावच्छेदकविशिष्टवाचकं तत्पदमिति स्मृतौ सत्याम विशिष्टचैत्रत्वादिविशिष्टवाचकतायास्तदादिपदेन मानसज्ञानस्यैवान्ततः सम्भवेन सामञ्जस्यात्। न च चैत्रोऽस्य वक्तुर्बुद्धिस्थ इति निश्चयेन चैत्रे विशिष्य तत्पदवाच्यतानिश्चयेऽपि चैत्रत्वविशिष्टे तत्पदवाच्यताया अनिश्चयात् तत्प्रकारकशाब्दबोधानुपपत्तिरिति वाच्यम्। यद्विशिष्टविषयकबुद्धिप्रयोज्यं यत्पदं तत् तद्विशिष्टवाचकमिति सामान्यतोव्याप्तेरवधारणेन प्रकरणाद्यधीनस्य तत्पदविशेषे चैत्रत्वविशिष्टविषयकबुद्धिप्रयोज्यत्वग्रहस्य विशेषदर्शनतया तद्विशिष्टवाचकतासंशयविघटकत्वेन विशिष्टवाचकतायाः सुनिश्चयत्वात्। न चैवमपि स्वप्रयोजकबुद्धिप्रकारत्वे स्वपदार्थस्याननुगमेन सकलतत्पदाद्युपसंहारेण व्युत्पत्तिर्दुर्घटेति यत्पदव्यक्त्यधीनप्रवृत्तिर्नो-

पलब्धा तस्या व्युत्पत्त्यनुपपत्तेस्तदधीनशाब्दबोधानुपपत्तिवारणम-शक्यमेवेति वाच्यम्। तदननुगमोद्धारस्यावहितैः परिचिन्तनीयत्वादित्यलमधिकेन (१)।

'तत्रातिरिक्तस्येति, शाब्दबोधनिरूपितावान्तरवाक्यार्थबोधपदार्थोपस्थितिनिष्ठजनकतावच्छेदकगर्भेऽनुमितिजनकतावच्छेदकोक्तधर्म्मोप्रविष्टस्य पदवृत्तिज्ञानजन्यत्वस्य निवेशादित्यर्थः। यत्रावान्तरवाक्यार्थबोधानन्तरं चरमपदज्ञानं तदुत्तरं चरमपदार्थस्मृतिस्तत्र तदानीमवान्तरवाक्यार्थगोचरशाब्दबोधस्य विनष्टत्वात् महावाक्यार्थबोधहेतुत्वासम्भवेऽपि यत्र तादृशशाब्दबोधोत्पत्तिद्वितीयक्षण एव पूर्व्वोत्पन्नचरमपदज्ञानात् चरमपदार्थस्मृतिस्तात्पर्य्यादिविषयकसमूहालम्बनरूपा तत्रैव तादृशशाब्दबोधस्य महावाक्यार्थबोधहेतुत्वम्, अन्यत्र (२) समूहालम्बनरूपतावत्पदज्ञानजन्यतावत्पदार्थगोचरसमूहालम्बनस्मृतिरेव गतिः। इदन्तु बोध्यम्

---

(१) तत्पदं स्वजनकत्व-स्वप्रकारप्रकारकबुद्धिप्रयोज्यत्वोभयसम्बन्धेन बोधविशिष्टं भवतु इत्याकारकभगवत्सङ्केतरूपशक्तौ स्वपदस्य परिचायकत्वान्नाननुगमः। अथवा स्वप्रयोजकतावच्छेदकीभूता या बुद्धिप्रकारता तदाश्रयावच्छिन्नविषयताकत्व-स्वजन्यत्वोभयसम्बन्धेन बोधस्तदादिपदवान् भवत्वित्याकारको भगवत्सङ्केतो वाच्यस्तत्र च स्वपदार्थस्य सम्बन्धघटकतया तत्तत्पदव्यक्तित्वेन न पदानां विषयता अपि तु सर्व्वनामसंज्ञकतत्पदत्वादिरूपानुपूर्व्वीविशेषेणैवेति, न पदव्यक्तिभेदेन शक्तिभेदः, अत्रच संसर्गघटकं विषतायां प्रकारावच्छिन्नत्वं वैशिष्ट्यरूपं ग्राह्यं तच्च स्वनिष्ठावच्छेदकतानिरूपकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन बोध्यं, एतदुभयसम्बन्धघटकसामाधिकरण्यघटकाधिकरणविषयतैव शक्तिरिति न काप्यनुपपत्तिरिति बोध्यम्।

(२) खले कपोतन्यायस्थले इत्यर्थः।

अवान्तरवाक्यार्थबोधस्य महावाक्यार्थबुद्धौ शाब्दत्वजातिपुरस्कारेणैव कारणता न तु पदजन्यत्वेन गौरवात् । न च तथासति विशिष्टविषयकशाब्दबोधादिव विशिष्टे गृहीतवृत्तिकपदजन्यविशिष्टस्मृतेरपि विशिष्टे इतरान्वयबोधोत्पत्त्या तत्र विशिष्टविषयकशाब्दधियो व्यभिचारः स्यादिति तादृशस्मृतिसाधारणपदजन्यत्वेनैव हेतुत्वमुचितमिति वाच्यम् । पदज्ञानजन्यत्वेन स्मृति-शाब्दधियोरनुगमे पदरूपलिङ्गज्ञानजन्यार्थविषयकानुमित्यादितोऽपि शाब्दधीप्रसङ्गात् वृत्तिमत्पदजन्यस्मृतित्व-शाब्दत्वाभ्यां कारणताद्वयस्यावश्यकत्वान्मियो व्यभिचारस्य चागत्या तत्तत्कारणाव्यवहितोत्तरत्वस्य कार्य्यतावच्छेदके निवेशेनैव वारणीयत्वात् । यत्रावान्तरवाक्यार्थबोधान्महावाक्यार्थधीस्तत्राप्यवान्तरवाक्यार्थाघटकार्थान्तरस्य पदजन्यस्मृतेरवान्तरवाक्यार्थबोधानन्तरमप्यवश्यकल्पनीयतया तस्याः सकलपदार्थविषयकत्वोपगमेन पदार्थस्मृतेरवान्तरवाक्यार्थधीजन्यशाब्दबोधे व्यभिचारवारणन्तु न सम्यक्, विशिष्टे गृहीतवृत्तिकपदाधीनविशिष्टस्मृतेरिव विशेष्यमात्रे गृहीतवृत्तिकपदाधीनाया उद्बोधकान्तरवशाद्विशेषणमवगाहमानायाविशिष्टस्मृतितो व्याप्यविशिष्टपच्चादिविषयकेतरान्वयबोधवारणाय गृहीतविशिष्टवृत्तिकपदजन्योपस्थितित्वेनैव विशिष्टविषयस्मृतेस्तादृशान्वयबोधहेतुताया वक्तव्यतया विशिष्टवृत्तिकग्रहानपेक्षावान्तरवाक्यार्थशाब्दधीजन्यबोधे तस्या व्यभिचारस्यावश्यकत्वात्, प्रकारान्तरेण तद्वारणे (१) तावत्पदार्थविषयकस्मृतिकल्पनाया अकि-

(१) कार्य्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशेन ।

च्छिन्नत्वात्, अतोऽप्यवान्तरवाक्यार्थधियश्च शाब्दत्वपुरस्कारेण कारणत्वान्तरमावश्यकमिति पदजन्यत्वपदं पदाजन्यबोधव्यावृत्त-धर्म्मपरं, तच्च शाब्दत्वादिकमपीति। अधिकप्रवेशेन निरुक्तनिश्चय-त्वपर्य्याप्तजनकतावच्छेदकताघटितस्य लक्षणस्य नातिव्याप्तिरि-त्युक्ता निश्चयत्वप्रवेशेन पर्य्याप्त्यनिवेशनेऽपि नातिव्याप्तिरित्याह, 'निश्चयत्वस्येति, परोक्षसंशयानभ्युपगमेन संशयान्यत्वस्य उक्तयुक्त्या शाब्दत्वादेर्निवेशनीयतया ज्ञानत्वस्य च पदजन्यबुद्धावव्यावर्त्तक-त्वादिति भावः।

---

चिन्तामणिदीधितिः।

न च तत्तद्विशिष्टवैशिष्ट्यज्ञानं प्रति तत्तद्विशेषणा-तावच्छेदकप्रकारकनिश्चयत्वेन हेतुत्वात् तादृशे शाब्द-बोधे प्रत्यक्षे चातिव्याप्तिः दण्डो रक्तो न वेति संशये रक्तदण्डवानयमिति ज्ञानानुदयादिति वाच्यम्। ज्ञानोपरमेऽपि विशिष्टविषयोपधानेनेच्छा-द्वेषयोः कृतेश्च साक्षात्काराद्विशेषणविषयकाद्विशिष्टसंस्कारादेव विशि-ष्टस्मरणाच्च तद्विषयकगुणानां तत्र हेतुत्वे न्यूनवृत्ते-र्ज्ञानत्वस्य तत्राप्रवेशादिच्छादितः संस्काराच्चानुमिते-रनुदयात् संस्काराद्यन्यत्वस्य गुरुतया ज्ञानत्वेनैव तत्र हेतुत्वात्।

गादाधरी विवृतिः ।

व्याप्तिविशिष्टहेतुरूपविशेषणतावच्छेदकविशिष्टस्य तद्विशेषण-धर्म्मितावच्छेदकपर्व्वतत्वाद्यवच्छिन्नस्य वैशिष्ट्यावगाहिनि शाब्द-बोधादौ प्रत्यक्षादिसाधारणविशिष्टवैशिष्ट्यबोधनिष्ठविशेषणताव-च्छेदकप्रकारकनिश्चयजन्यतामादायातिव्याप्तिं शङ्कते, 'नचेत्या-दिना, 'तथापि' अवान्तरवाक्यार्थबोधनिष्ठशाब्दबोधासाधारण-कारणतामादायातिव्याप्तेरुक्तरीत्या वारणेऽपि, 'तत्तद्विशिष्टवैशि-ष्ट्यज्ञानं प्रतीति पर्व्वतत्वादिरूपधर्म्मितावच्छेदकावच्छिन्नविशेषण-तापन्नव्याप्तिविशिष्टधूमादिविशिष्टवैशिष्ट्यज्ञानत्वावच्छिन्नं प्रती-त्यर्थः, 'तत्तद्विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन' पर्व्वतत्वाद्य-वच्छिन्नविशेष्यकव्याप्तिविशिष्टधूमादिप्रकारकनिश्चयत्वेन, 'तादृशे' वह्निव्याप्यधूमवत्पर्व्वतवान् देश इत्यादिविशिष्टवैशिष्ट्यबोधरूपे, शाब्दबोधातिव्याप्तेर्व्वारितत्वात् तस्यैव प्रथममुपन्यासः, स्मृति-व्यावृत्तधर्म्मस्य जन्यतावच्छेदकत्वे (१) स्मृतौ नातिव्याप्तिसम्भवः, उपमितेः पदवाच्यत्वावगाहिन्यास्तादृशविशिष्टवैशिष्ट्यबोधरूपता-प्रयासो न सम्भवतीति, अतः प्रत्यक्ष-शाब्दबोधमात्रोपादानम् । अथ किमिदं विशेषणतावच्छेदकप्रकारकधीजन्यतावच्छेदकम् विशिष्टवैशिष्ट्यज्ञानत्वं, न तावद्विशिष्टप्रतियोगिकं यद्वैशिष्ट्यं तद-वगाहित्व, व्यधिकरणसम्बन्धावगाहिविशिष्टभ्रमासंग्रहात्, नापि विशिष्टप्रकारकत्वं, काञ्चनमयवह्निमानित्यादिभ्रमप्रकारीभूत-

---

(१) विशेषणतावच्छेदकप्रकारकज्ञानजन्यतावच्छेदकत्वे इत्यर्थः ।

विशिष्टाप्रसिद्धेः तत्र काञ्चनमयो वह्निरित्यादिज्ञानानपेक्षणीयतापत्तेः, नापि विशेषणान्तरप्रकारेण (१) भासमानप्रकारकत्वं, रक्तोदण्डः दण्डवान् पुरुष इति समूहालम्बनेऽपि दण्डोरक्त इति ज्ञानापेक्षाप्रसङ्गात्, नापि विशेषणान्तरप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारताकत्वं, रक्तत्वादिप्रत्येकपदार्थोपस्थितिमूलके रक्तदण्डवान् इत्यादिज्ञाने व्यभिचारात्, नहि तादृशाकारकबोधो रक्तोदण्ड इत्यादिविशिष्टज्ञानानन्तरमेव जायते इति दीधितिकाराद्यनुमतं, बाधग्रन्थे काञ्चनमयत्वविशिष्टवह्नेरप्रसिद्धेरेव (२) उपनीत(३)काञ्चनमयत्वविशिष्टवह्निवैशिष्ट्यानुमितिः शुद्धवह्नित्वाद्यवच्छिन्नव्याप्यधूमादिना पर्व्वते न सम्भवतीति कथं तद्विरोधितया व्यधिकरणकाञ्चनमयत्वावच्छिन्नवह्न्यभावस्य दोषान्तरासङ्कीर्णबाधहेत्वाभासतेति मणिकारोक्तेर्विशिष्टविशेषणज्ञानं विनापि विशेष्ये विशेषणं तत्र च विशेषणान्तरमित्यादिरीत्या तादृशानुतिसम्भव इत्यभिधाय स्वयं दूषणीयत्वाद्विशिष्टव्याप्तिज्ञानं विनापि तद्घटकप्रत्येकपदार्थोपस्थितिभ्यो विशिष्टपरामर्शोत्पत्त्या अनुमितिरिति मिश्रेणानाने चाभिधानात् एकत्वविशिष्टकर्त्तुः पूर्व्वमज्ञानेऽपि क्षितिरेककर्त्तृकेत्यनुमितेरनेन स्वीकृतत्वाच्च।

---

(१) फलतः तन्निष्ठप्रकारतानिरूपितविशेष्यताविशिष्टप्रकारताकत्वं तद्विशिष्टवैशिष्ट्यावगाहित्वं, वैशिष्ट्यञ्च स्वनिरूपकज्ञानीयत्व-स्वसामानाधिकरण्योभयसम्बन्धेनेति बोध्यम्।

(२) अनुपस्थित्यैवेत्यर्थः।

(३) पर्व्वतः काञ्चनमयेतरवह्न्यभाववानित्यादीतरबाधोपनीतेत्यर्थः।

अत्राहुः विशेषणान्तररक्तत्वादिविशेष्यतापन्नदण्डादिप्रकारकं रक्त-दण्डवानित्यादिज्ञानं द्वेधा रक्तत्वाद्यवच्छिन्नप्रतियोगिकत्वेन दण्डा-दिवैशिष्ट्यावगाहि, तद्रूपानवच्छिन्नतद्वैशिष्ट्यावगाहिः च, तादृश-विशिष्टप्रतियोगिकत्वञ्च दण्डादिप्रकारतानिरूपकसंसर्गतायामव-च्छेदकतया भासते तद्विशिष्टसंयोगादेरेव दण्डादिसंसर्गतया भानात्, दण्डादिविशेषणतापन्नरक्तत्वादेरेव वा स्वावच्छिन्नप्रति-योगिकसंयोगाद्यात्मकपरम्परासम्बन्धेन पुरुषादौ प्रकारता तादृश-विशिष्टवैशिष्ट्यबोध एव विशेषणतावच्छेदकप्रकारकधियः कार-णत्वं न तु विशिष्टविशेषणावगाहिन्यपि रक्तत्वादिकं वैशिष्ट्य-प्रतियोग्युपलक्षणतयावगाहमाने द्वितीयबोधे। अतएव च प्रति-योगिविशेषिताभावबुद्धौ घटो नास्तीत्याकारिकायां प्रतियोगिनि प्रकारीभवतो घटत्वादेः प्रतियोगितावच्छेदकतयैव भानमिति, तत्र घटत्वादिप्रकारकज्ञानापेक्षानियमः। यद्यपि विशिष्ट-विशेषणावगाहिज्ञानमात्र एव विशिष्टज्ञानापेक्षायां मणिकारादेः स्वरसस्तथापि लाघवोपनीतैकत्वादिविशिष्टकर्त्राद्यनुमितिर्विशिष्ट-ज्ञानमनपेक्ष्यैवोत्पद्यते इत्यनुरोधाद्दीधितिकारादीनां दर्शित-विशेषादरः। दण्डोनास्ति रक्तोनास्तीतिज्ञानदशायां नियमतो रक्तदण्डोनास्ति इत्यादिज्ञानोत्पादविरह एव उक्तविशिष्ट-वैशिष्ट्यबोधे विशेषणतावच्छेदप्रकारकविशेषणधीहेतुताकल्पकः। दण्डोरक्त इत्यादिज्ञानदशायामपि कदाचित्तादृशसमूहालम्बन-बुद्धावुत्पद्यमानायां (१) दण्डोरक्तो नास्तीति बुद्धेरनुत्पादे अगत्या

(१) दण्डोनास्ति रक्तोनास्तीत्यादिसमूहालम्बनबुद्धावुत्पद्यमानायामित्यर्थः।

तत्रानुगतस्य कस्यचित् प्रतिबन्धकता कल्प्यत इति विवेचनीयश्चेदमधिकमन्यत्र ।

केचित्तु रक्तदण्डवानित्यादिज्ञानीयरक्तत्वादिविशेष्यतापन्नदण्डादिनिष्ठा प्रकारता द्विधा, काचिद्दण्डादिविशेषणतापन्नरक्तत्वाद्यन्तर्भावेण पर्य्याप्ता, काचित् केवलदण्डादावेव, तत्र प्रथमा विशेषणतावच्छेदकप्रकारज्ञानाधीना नापरा, पुरुषादिविशेष्यतानिरूपितप्रकारतायाः रक्तत्वादिवृत्तित्वेऽपि पुरुषो न रक्त इत्यादिधीर्न तादृशप्रकारताकोक्तज्ञानविरोधिनी इतरविशेषणतानवच्छिन्नायाः पुरुषादिविशेष्यतानिरूपितरक्तत्वादिप्रकारताया एव तत्प्रतिबध्यतावच्छेदकत्वादित्याहुः (१) ।

---

(१) तथाच तदभाववत्ताबुद्धिप्रतिबध्यतावच्छेदककोटौ तदितरनिष्ठप्रकारत्वानवच्छिन्नतन्निष्ठप्रकारताया निवेश्यत्वादिति भावः। न च तथापि रक्तदण्डवान् इत्यादि ज्ञानीयप्रकारता रक्तत्वाभाववान् दण्ड इति ज्ञानीयप्रतिबध्यतावच्छेदिका न स्यात् तज्ज्ञानीयरक्तत्वप्रकारताया रक्तत्वेतरदण्डनिष्ठोभयपर्य्याप्तप्रकारत्वावच्छिन्नत्वादिति वाच्यम्। तदितरनिष्ठप्रकारतापदेन तदवृत्तिप्रकारताया एव विवक्षितत्वात। न च तथापि रक्तदण्डवान् पुरुष इति ज्ञानस्य भ्रमत्वापत्तिः रक्तत्वाभाववत्पुरुषनिष्ठविशेष्यतानिरूपितरक्तत्वप्रकारताकत्वादिति वाच्यम्। भ्रमत्वघटकीभूततन्निष्ठप्रकारतायामपि तदितरप्रकारत्वानवच्छिन्नत्वस्य निवेशात्, तथाच रक्तदण्डवान् पुरुष इति विशिष्टवैशिष्ट्यबोधीयदण्डनिष्ठप्रकारताद्वयं, एका रक्तत्व-दण्डोभयपर्य्याप्ता, अपरा दण्डमात्रनिष्ठा, एवं रक्तत्वप्रकारतापि द्विविधा, एका पुरुषविशेष्यतानिरूपिता उभयपर्य्याप्ता, अपरा दण्डविशेष्यतानिरूपिता तन्मात्रपर्य्याप्ता, तादृशप्रकारताद्वयस्यावच्छेद्यावच्छेदकभाव इति। इतरविशेषणतानवच्छिन्नाया इत्यादि भट्टाचार्य्यसन्दर्भोपरि पुनराशङ्केयं, अथ रक्तदण्डवान् पुरुष इति ज्ञानस्य दण्डाभाववान् पुरुष इति निश्चयप्रतिबध्यत्वानुपपत्तिः पुरुषादिविशेष्यतानिरूपितदण्डादिप्रकारताया दण्डादिविशेष्यतानिरू-

अपरे तु यथा विशेष्यतानिरूपितप्रकारतामात्रं न विशेष्यतावच्छेदकता भूतलं घटवदित्यादौ भूतलत्वादेर्घटादिधर्म्मितावच्छेदकतावद्वैपरीत्यस्यापि प्रसङ्गात्(१), अपि तु विलक्षणैव विषयता सा च प्रकारतात्मिका तदन्यैव वा, एवं विशेषणतावच्छेदक-

---

पितरक्तत्वादिप्रकारतया अवच्छिन्नत्वात्। न चेतरविशेषणतावच्छेद्यतानवच्छेदकदण्डादिप्रकारतात्वविशिष्टाया दण्डादिप्रकारतायाः पुरुषादिविशेष्यतानिरूपितायाः प्रतिबध्यतावच्छेदकत्वोपगमात् नैषदोषः, उक्तस्थले रक्तत्वादिप्रकारतात्वस्यैव दण्डादिप्रकारतानिष्ठदण्डादिविशेष्यतानिरूपितविशेषणतावच्छेद्यतावच्छेदकत्वादिति वाच्यम्। दण्डवद्दण्डवान् इत्यादि ज्ञानस्य दण्डाभाववान् पुरुष इत्यादिनिश्चयप्रतिबध्यतानुपपत्तिः। न च दण्डत्वानवच्छिन्नविशेष्यतानिरूपितविशेषणतावच्छेद्यतानवच्छेदकत्वनिवेशान्नेयमनुपपत्तिरिति वाच्यम्। रक्तदण्डवान् इति ज्ञानस्य रक्तत्वाभाववान् दण्ड इत्यादिनिश्चयप्रतिबध्यतानुपपत्तेः। रक्तत्ववद्रक्तत्ववान् पुरुष इत्यादिज्ञाने रक्तत्वाभाववान् पुरुष इत्यादिनिश्चयस्य प्रतिबन्धकत्वानुरोधेन रक्तत्वाववच्छिन्नविशेष्यतानिरूपितविशेषणतावच्छेद्यतानवच्छेदकत्वविवक्षणस्यावश्यकतया रक्तत्वादिप्रकारतात्वस्य रक्तत्वानवच्छिन्ना या दण्डत्वावच्छिन्नविशेष्यता तन्निरूपितरक्तत्वविशेषणतावच्छेद्यतावच्छेदकत्वादिति चेन्न, रक्तत्वावच्छिन्नविशेष्यत्वानिरूपितविशेषणतावच्छेद्यत्वाभावविशिष्टायाः पुरुषादिविशेष्यतानिरूपितरक्तत्वादिप्रकारतायाः प्रतिबध्यतावच्छेदकत्वोपगमात् रक्तदण्डवान् पुरुष इत्यादौ रक्तत्वदण्डोभयपर्य्याप्तप्रकारत्वस्य रक्तत्वावच्छिन्नविशेष्यत्वानिरूपितदण्डत्वावच्छिन्नविशेष्यतानिरूपितरक्तत्वादिनिष्ठविशेषणतावच्छेद्यत्वात् न तादृशज्ञानस्य दण्डाभाववान् पुरुष इत्यादिनिश्चयाप्रतिबध्यत्वम्। दण्डवद्दण्डवानित्यादौ दण्डवद्दण्डपर्य्याप्तप्रकारतात्वस्य दण्डत्वावच्छिन्नविशेष्यत्वानिरूपितविशेषणतावच्छेद्यत्वाभावसत्त्वात् तादृशज्ञानस्य दण्डाभाववान् पुरुष इत्यादिनिश्चयप्रतिबध्यत्वमिति ध्येयम्।

(१) घटादेर्भूतलत्वादिधर्म्मितावच्छेदकत्वप्रसङ्गादित्यर्थः।

तापि विलक्षणविषयता तन्निरूपकदण्डादिनिष्ठप्रकारताविशेष-शालिनि बोधे विशेषणतावच्छेदकरक्तत्वादिप्रकारकज्ञानापेक्षा, प्रत्येकोपस्थितिमूलकं रक्तदण्डवानित्यादिज्ञानञ्च न तथाविधविलक्षणप्रकारताशालीति वदन्ति। तदुभयमपि न सम्यगिव प्रतिभाति, विशिष्टज्ञानपूर्व्वक-तदपूर्व्वकयोरविलक्षणाकारकज्ञानयोर्विषयभेदमन्तरेण विषयतावैलक्षण्यस्याननुभवात्। विशिष्टज्ञानकार्य्यतावच्छेदकतया तत्सिद्धिरित्यपि बालप्रलपितं तादृशविलक्षणविषयतासिद्धाविव तन्नियामकतया विशिष्टज्ञानहेतुतासिद्धेः। यदि च विशिष्टप्रतियोगिकविलक्षणसंसर्गावगाहिनि बोधएवान्वय-व्यतिरेकाभ्यां विशिष्टज्ञानं हेतुः तज्जन्यतावच्छेदकं यदि विशिष्टप्रतियोगिकत्वावच्छिन्नसंसर्गताकबुद्धित्वं तदा गौरवम् उक्तवैलक्षण्यपुरस्कारेण प्रकारताविशेषस्य कार्य्यतावच्छेदकत्वे च लाघवमिति विशिष्टप्रतियोगिकवैशिष्ट्यावगाहिन्येव ज्ञाने प्रकारताया व्यासज्यवृत्तित्वादिरूपवैलक्षण्यसिद्धिरप्रत्यूहैव इत्युच्यते तदा न विवदामहइति प्रकृतमनुसरामः। ननु यथा विशेषणतावच्छेदकरक्तत्वाद्यंशे निर्द्धर्म्मितावच्छेदककतद्विशिष्टवैशिष्ट्यबोधे तत्प्रकारकज्ञानत्वेनैव हेतुता न तु तत्र संशयान्यत्वनिवेशः तथा तदंशे सधर्म्मितावच्छेदककविशिष्टवैशिष्ट्यबोधेऽपि तद्धर्म्मितावच्छेदकावच्छिन्नविशेष्यकतत्प्रकारकज्ञानत्वेनैव संशयसाधारणहेतुता स्वीक्रियते निश्चयत्वेन विशेषणतावच्छेदकधीहेतुताया मणिकारादिभिरनभिधानादितिकथमतिव्याप्तिरतस्तथा हेतुतामनुभवेन द्रढ़यति, 'दण्डो रक्तो न वेति। ननु दण्डो रक्तो न वेति संशयानन्तरं रक्तदण्डवानिति

निश्चयानुत्पाद एवानुभवसिद्धः स च (१) विशेषणसन्देहे विशिष्टसन्देहस्य औचित्यावर्ज्जितत्वादुपपद्यते निश्चयोत्पत्तौ संशयसामग्र्यभावस्यापेक्षितत्वात् रक्तदण्डवान्नवेति विशिष्टसंशयस्त्वनुभवसिद्ध एवेति निश्चयत्वेन हेतुतायां साधकविरहः बाधकस्य च सत्त्वम् ।

अत्र केचित् । यदि विशेषणतावच्छेदकप्रकारकसंशयादपि विशिष्टवैशिष्ट्यबोध उपेयते तदा अप्रामाण्यशङ्कास्कन्दितादपि ज्ञानात्तदुपगम आवश्यकः ज्ञानाप्रामाण्यसन्देहेन विषयसंशयस्यापि जननात् संशयेऽप्रामाण्यसंशयस्याकिञ्चित्करत्वात् अतोऽप्रामाण्यनिश्चयास्कन्दितज्ञानात् फलवारणाय अप्रामाण्यनिश्चयानास्कन्दितत्वेनैव हेतुता वक्तव्येति अप्रामाण्यज्ञानीयगुरुशरीरनिश्चयत्वनिवेशात् गौरवं इत्यप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वन हेतुत्वमेवोचितम् विशेषणसंशयाद्विशिष्टसंशयानुपपत्तिरूपबाधकमपि कथञ्चिदुद्धरणीयमिति (२) वदन्ति ।

वस्तुतस्तु संशयस्य विशिष्टवैशिष्ट्यबोधजनकत्वे दण्डोरक्तो न वेति संशयात् रक्तत्व-तदभावाद्युभयविशिष्टदण्डादिवैशिष्ट्यावगाहिबोधोपि (३) स्यात्, न चेष्टापत्तिः, तादृशज्ञानस्य एकत्र दण्डादिधर्म्मिणि विरुद्धोभयप्रकारकतया रक्तत्वादिनिश्चयत्वासम्भवात् विशेष्यान्तरविशेषणतापन्नधर्म्मिकसंशयस्य चानुभवविरुद्धतया तत्र

(१) तादृशनिश्चयानुत्पादस्येत्यर्थः ।

(२) उद्धरणप्रकारस्त्वानुपदमेव स्वयं दर्शयिष्यति ।

(३) रक्तारक्तदण्डवान् पुरुष इति बोधोऽपीत्यर्थः ।

संशयत्वोपगमासम्भवाच्च। अतएव च केवलं विशेष्ये विशेषणमित्यादिरीत्या रक्तदण्डवानित्यादिज्ञानेऽपि उक्तसंशयः कार्य्यसहभावेनैव प्रतिबन्धक इति वदन्ति। न च तत्र संशयस्य प्रतिबन्धकत्वे विशिष्टवैशिष्ट्यबोधसाधारण एव तत्प्रतिबध्यतावच्छेदकोऽस्तु तावतैव संशयानन्तरं तद्विशिष्टवैशिष्ट्यबोधवारणे तत्प्रकारकज्ञानत्वेनैव हेतुत्वमुचितमिति वाच्यम्। तत्संशयद्वितीयक्षणे कथञ्चित् तत्प्रकारकनिश्चये तद्द्वितीयक्षणे तद्विशिष्टवैशिष्ट्यधीनिर्व्वाहाय विशिष्टवैशिष्ट्यविषयताभिन्नवैशिष्ट्यविषयताया एव संशयप्रतिबध्यतावच्छेदकत्वं वाच्यमिति निश्चयत्वेन विशिष्टवैशिष्ट्यबोधाहेतुत्वे संशयोत्तरं विनापि निश्चयं विशिष्टवैशिष्ट्यधीप्रसङ्गात्। न च यत्र दण्डे रक्तत्वस्य संशयः पुरुषे च दण्डस्यानुमितिसामग्री रक्तेतरदण्डस्य पुरुषे बाधग्रहः तत्र संशयसत्त्वेपि केवलं विशेष्ये विशेषणमिति रीत्या रक्तदण्डवान् पुरुष इत्यनुमित्युत्पत्तेः कथं तादृशबोधे संशयप्रतिबन्धकतेति वाच्यम्। प्रत्यक्षं प्रत्येव तत्प्रतिबन्धकताया-वक्तव्यत्वात्, अलौकिकत्वमपि तत्र विशेषणं देयं संशयसत्त्वेऽपि लौकिकसन्निकर्षाद्रक्तदण्डवानिति ज्ञानोत्पत्तेः, लौकिकप्रत्यक्षसामग्र्या विपरीतभानविरोधितयैव च विशेषणधर्म्मिकलौकिकप्रत्यक्षात्मकसंशयस्य नापत्तिः। एवञ्च विशिष्टवैशिष्ट्यबोधव्यावर्त्तकविशेषणानवच्छिन्नेऽपि विशेष्ये विशेषणमिति रीत्या बोधे विशेषणे तद्विशेषणसंशयस्य प्रतिबन्धकत्वेपि दण्डो रक्तो न वेति संशयबलादितरबाधाद्युपनीतरक्तत्वादिविशेषितदण्डाद्यनुमितौ रक्तत्वादिविशिष्टवैशिष्ट्यावगाहिताप्रसङ्गस्य तादृशसंशयानन्तरजात--

रक्तत्वादिविशेषितदण्डादिप्रकारकलौकिकप्रत्यक्षे विशिष्टवैशिष्ट्याऽवगाहिताप्रसङ्गस्य च वारणाय तदवगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुताकल्पनमावश्यकम् ।

यत्तु निश्चयत्वेन विशिष्टवैशिष्ट्यबोधहेतुत्वे निश्चयत्वघटकयोस्तदभावाप्रकारकत्व-तत्प्रकारकत्वयोर्दलयोर्विशेष्य-विशेषणभावे विनिगमनाभावेन कारणताबाहुल्यमिति तदभावप्रकारकज्ञानत्वेन संशयस्य प्रतिबन्धकत्वमेव कल्पयितुमुचितम् (१) । यत्र संशयद्वितीयक्षणे स्मरणादिरूपस्तन्निश्चयस्तत्र द्वितीयक्षणे संशयनाशे सत्येव विशिष्टवैशिष्ट्यबोध उपेयत इति, तदसत्, तथा सति तुल्ययुक्त्या अनुमित्यादावपि लिङ्गादिसन्देहस्य तदभावप्रकारकज्ञानत्वेन प्रतिबन्धकतापातात् निश्चयत्वावच्छिन्नहेतुताघटितानुमितिलक्षणेऽसम्भवापत्तेः ।

यत्तु विशिष्टवैशिष्ट्यबोधं प्रति निश्चयत्वेन हेतुत्वे विशेषणसंशयजन्यविशिष्टसंशयानुपपत्तिरिति बाधकं, तदकिञ्चित्करम् । दण्डत्वसामानाधिकरण्येन रक्तत्वनिश्चयरूपकोटितावच्छेदकावच्छिन्नप्रसिद्धिस्थल एव चैत्रीयो दण्डो रक्तो न वेति विशेषरूपावच्छेदेन रक्तत्वाभावावगाहिसंशयाद्रक्तदण्डवान्न वा चैत्र इति विशिष्टसंशयोदयात् तथाविधनिश्चयस्य तादृशसंशयाविरोधित्वात् ।

यत्तु तत्र विशेष्ये विशेषणमितिरीत्यैव विशिष्टकोट्यवगाही

(१) तथाच व्याप्यप्रकारकज्ञानत्वेन कारणत्वं व्याप्याभावप्रकारकत्वेन प्रतिबन्धकत्वं न तु गुरुतरकारणताद्वयं कल्प्यमिति भावः ।

संशयः न तु विशिष्टवैशिष्ट्यावगाहीति समाधानं (१), तदसत्, धर्म्मिणि रक्तत्वादिविशेषितदण्डादेरुक्तरीत्या भानसम्भवेऽपि अभावांशे विशिष्टप्रतियोगिनो वैशिष्ट्यभाननियमात् (२) अभावांशे रक्तत्वादिविशिष्टदण्डादिवैशिष्ट्यभानस्यावश्यकत्वात् तदुपपत्ते-र्दर्शितप्रकारं (३) विना असम्भवात्। न च लौकिकप्रत्यक्षएवा-भावांशे तद्धर्म्मविशेषितप्रतियोगिनि प्रकारतया भासमाने तद्वि-शिष्टवैशिष्ट्यावगाहितानियमः इति संशये कोट्योरुपनयादेव भानाद्विशिष्टवैशिष्ट्यानवगाहिभानसम्भव इति वाच्यम्। दण्ड-सामान्याभावस्यैव रक्तत्वाद्युपलक्षितप्रतियोगिकत्वादभावांशे रक्त-त्वादिविशिष्टदण्डादिरूपप्रतियोगिवैशिष्ट्यानवगाहने तादृशसंश-यस्य दण्डादिसामान्याभावावगाहितया दण्डवानयमिति विशिष्य निश्चयदशायां दण्डादौ रक्तत्वादिसंशयाद्विशिष्टसंशयानुपपत्तेरित्य-धिकमन्यत्रानुसन्धेयम्। दण्डो रक्तो न वेत्यादिसंशयानुव्यवसाये च रक्तत्वादिविशिष्टदण्डादिरूपविषयप्रकारेण न ज्ञानभानं किन्तु दण्डादिविशेषणतानापन्नरक्तत्वादिप्रकारकत्वेनैव इति न तदनुपपत्तिरिति सङ्क्षेपः। विशिष्टवैशिष्ट्यबोधं प्रति विशेषण-तावच्छेदकप्रकारकसंशयान्यत्वेनैव हेतुता न तु तादृशसंशयान्य-ज्ञानत्वेनेति संशयान्यत्वविशिष्टज्ञानत्वरूपनिश्चयत्वावच्छिन्नकार-

(१) तथाच विशेषणतावच्छेदकनिश्चयं विनैवौचित्यावर्जितसंशयोपपत्तिरिति भावः।

(२) अभावप्रत्ययो हि विशिष्टवैशिष्ट्यबोधमर्य्यादां नातिशेते इति नियमात्।

(३) प्रागुक्तदण्डत्वसामानाधिकरण्येन रक्तत्वनिश्चयेत्यादिरूपप्रकारमित्यर्थः।

णताघटितलक्षणस्य न तत्रातिव्याप्तिरिति समाधत्ते, 'ज्ञानोपरमे-पीत्यादिना 'ज्ञानत्वस्याप्रवेशादित्यन्तेन, ज्ञानत्वस्यावच्छेदकगर्भा-प्रवेशे हेतुगर्भविशेषणं 'न्यूनवृत्तेरिति, न्यूनवृत्तित्वञ्च अवच्छेद्य-त्वाभिमतहेतुताया अव्यापकत्वं, ज्ञानत्वानिवेशेऽनुद्बुद्धसंस्कारात् विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षापत्तिः स्मृतावेवोद्बोधकस्य हेतुतया प्रत्यक्षे तद्विरहस्याकिञ्चित्करत्वात् तेन विनापि ज्ञानेन विशिष्ट-वैशिष्ट्यप्रत्यक्षजननादिति तु न देश्यं, अगत्या उद्बोधकासमाधान-विशिष्टसंस्कारत्वाभावस्यावच्छेदकप्रवेशेन तदापत्तेर्व्वारणीयत्वात्, उद्बुद्धसंस्काराद्विशिष्टवैशिष्ट्यावगाहिस्मरणनिर्व्वाहाय संस्कारभेदमु-पेक्ष्य विशिष्टसंस्कारत्वाभावानुधावनम्। उद्बोधकसमवहिते संस्कारे च विशेषणाभावाद्विशिष्टसंस्कारत्वाभावः सुलभः। भेदस्याव्याप्य-वृत्तित्वे तु उद्बोधकाभावविशिष्टसंस्कारभेद एव निवेश्यः। अतएव ज्ञानत्वाप्रवेशे लाघवासम्भवेन न्यूनवृत्तित्वमेव तदनिवेशप्रयोजक-तयाभिहितम्। 'तद्विषयकगुणानां तत्र हेतुत्व इति न्यूनवृत्तिता-प्रकाशनाय, 'तद्विषयकगुणानां' विशिष्टविशेषणावगाहिनामि-च्छाद्वेष कृति संस्काराणाम्। ननु विशिष्टविषयकेच्छादिस्थलेऽपि तज्जनकविशिष्टज्ञानस्यावश्यकत्वात् सर्व्वत्र ज्ञानमेव हेतुः न तु इच्छादिकमित्याशङ्कायां इच्छादेर्व्विशिष्टवैशिष्ट्यबोधहेतुत्वे हेतु-माह, 'ज्ञानोपरमेपीत्यादिना, 'ज्ञानोपरमेपि' इच्छादिजनक-विशिष्टज्ञाननाशेपि, 'विशिष्टविषयोपधानेनेति रक्तत्वादिविशिष्ट-दण्डादिरूपविषयप्रकारेणेत्यर्थः, 'इच्छा-द्वेषयोः' 'साक्षात्कारादित्य-न्वयः, रक्तदण्डमिच्छामि रक्तदण्डं द्वेष्मि इत्याकारक इच्छा-द्वेष-

साक्षात्कार इच्छात्वादिप्रकारक इच्छाद्वितीयक्षणोत्पन्नेच्छात्वादि-निर्व्विकल्पकादिच्छातृतीयक्षण एव उत्पत्स्यते तत्पूर्व्वक्षण एव इच्छाजनकज्ञानं नश्यतीति न विशिष्टवैशिष्ट्यावगाहीच्छाप्रत्यक्षा-व्यवहितप्राक्क्षणे ज्ञानसत्त्वमिति इच्छादिकमेव तत्र हेतुः। यदि च इच्छात्वादिनिर्व्विकल्पकेऽपि विशिष्टविषयप्रकारेण इच्छादिकं भासते तथाच तदेव निर्व्विकल्पकं इच्छांशे विशिष्टवैशिष्ट्यबोधात्मकं इच्छासाक्षात्कारपूर्व्वं स्थास्यतीति तादृशज्ञानस्य न व्यभिचारः। अतएव नृसिंहाकारतन्निर्व्विकल्पकं इति सिद्धान्त इत्युच्यते, तदापि यत्र विशिष्टविषयकफलसाधनताज्ञानं प्रथमं तदुत्तरं फलेच्छा तदनन्तरञ्च विशिष्टोपायविषयिनीच्छा तत्रेच्छात्वनिर्व्विकल्पकरूपे विशिष्टविषयकेच्छासाक्षात्कारे एवं द्विष्टसाधनताज्ञानानन्तरं फलद्वेषजन्योपायद्वेषविषयकसाक्षात्कारे च ज्ञानस्य व्यभिचारो दुर्व्वार एव द्विक्षणस्थायिनो ज्ञानस्य तत्पूर्व्वक्षण एव नाशादिति भावः। कृतिसाक्षात्काराव्यवहितपूर्व्वेञ्च ज्ञानस्य विनश्यदवस्थ-स्यापि सत्त्वं सम्भावितमपि नेति सूचयितुं स्वातन्त्र्येण कृति-साक्षात्कारे व्यभिचारं दर्शयति, 'कृतेश्चेति, अत्रापि 'विशिष्टविषयो-पधानेनेत्यनुषज्यते। ननु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुतया विषयज्ञानं विनापि विषयविशिष्टकृत्यादिसाक्षात्कार एव न भवितु-मर्हतीति अगत्या तत्पूर्व्वं विषयस्मरणमेव कल्पनीयं तथाच विशेषण-तावच्छेदकप्रकारकज्ञानत्वावच्छिन्नस्यापि न तत्र व्यभिचार इत्यत-आह, 'विशेषणेति, 'ज्ञानोपरमेऽपीत्यनुषज्यते, रक्तत्वादिरूपविशे-षणज्ञाननाशेऽपि रक्तत्वादिविषयकात् रक्तत्वादिविशिष्टदण्डादि-

विषयकसंस्कारादेव तादृशविशिष्टविषयकस्मरणोत्पत्तेरित्यर्थः, तथाच तत्र व्यभिचारभयेन विशेषणज्ञानस्यापि विशेषणविषयकत्वेनैव विशिष्टधीहेतुता वाच्या तथाच विशेषणविषयकत्वादित एव विषयविशेषितकृत्यादिसाक्षात्कारसम्भवात् न ज्ञानापेक्षेति विशिष्टवैशिष्ट्यबुद्धावपि विशिष्टविषयकगुणमात्रस्य हेतुत्वम्, इत्थञ्च विशिष्टवैशिष्ट्यावगाहिसंस्कारात् विशेषणतावच्छेदकप्रकारकज्ञानं विनैव तादृशस्मरणनिर्व्वाहोऽपीति भावः। एवमुपनायकज्ञानस्य सविषयकत्वेन हेतुता अतो न विषयोपनयार्थं ज्ञानापेक्षेति बोध्यम्। अनुद्बुद्धसंस्कारात् उपनीतभानवारणाय ज्ञानप्रत्यासत्तिहेतुतायामविशिष्टसंस्कारभेद एव निवेश्यः न तूद्बोधकासमवधानविशिष्टसंस्कारत्वाभावादिः, उद्बोधकसमवहितसंस्कारादुपनीतभानानुपगमे क्षतिविरहात्। ततः स्मरणोत्पादे क्षणैकविलम्बनैव उपनीतभाननिर्व्वाहात्। न च स्मरणकल्पने गौरवात् विशिष्टसंस्कारत्वाभावनिवेशनमेवोचितमिति वाच्यम्। उद्बोधकानामननुगततया तदभावसहस्रस्य निवेशनीयतया महागौरवात्। लघुरूपेण कारणतासिद्धौ तन्निर्व्वाहकस्मरणकल्पनागौरवस्य फलमुखत्वेनादोषत्वात्। अतएव निर्व्विकल्पकादिस्मरणकल्पनेन विशेषणधियोऽपि विशेषणज्ञानत्वेन हेतुत्वमग्रे व्यवस्थापयिष्यते इदानीन्तु निर्व्विकल्पकस्मृतिर्न सिद्धान्तसिद्धा कृत्यादिसाक्षात्कारस्थान्तरा विषयस्मरणं विनैवानुभवसिद्ध इत्याशयेन विशेषणज्ञानादिहेतुतायां ज्ञानत्वाप्रवेशोऽभ्युपगत इत्यवधेयम्। अनुमितावपि सविषयकत्वमात्रेण न कुतो हेतुत्व-

मित्याकाङ्क्षायामाह, 'इच्छादित इति व्याप्यवत्पक्षविषयकेच्छादित-इत्यर्थः। ज्ञानस्य चिरातीतत्वविरहेण कदाचिदिच्छादेरनु-मित्युत्पादकतायामिष्टापत्तिः सम्भवतीत्याशङ्क्याह, 'संस्काराच्चेति व्याप्यविशिष्टपक्षविषयकसंस्काराच्चेत्यर्थः। ननु विशिष्टवैशिष्ट्य-बोधहेतुतायामनुद्बुद्धसंस्कारान्यत्ववत् अनुमितिहेतुतायामपि ज्ञानत्वमुपेक्ष्य संस्कारस्य इच्छादेश्च व्यावर्त्तनाय तदन्यत्वमेव किं न निवेश्यते इति तटस्थप्रश्ने उत्तरयति, 'संस्काराद्यन्यत्वस्येति, अगत्या तु विशेषणतावच्छेदकप्रकारकगुणहेतुतायां गौरवसहिष्णु-तेति भावः। अतिव्याप्तिशङ्कया 'संस्काराद्यन्यत्वस्येत्यादिग्रन्थो नावतरति संस्काराद्यन्यत्वेनानुमितिहेतुत्वेऽपि उभयत्र एक-रूपेणाहेतुतयाऽतिव्याप्तेरनवकाशात् ज्ञानत्वघटितधर्म्मावच्छिन्न-कारणताघटितलक्षणेऽसम्भवशङ्कानिरासपरोऽयं ग्रन्थः इत्यप्याहुः।

---

चिन्तामणिदीधितिः।

न च परामर्शानुव्यवसायेऽतिव्याप्तिः, सामान्यतः प्रत्यक्षे विषयत्वेन तत्तद्विषयकप्रत्यक्षे तत्त्वेन कदाचित् ज्ञानादिप्रत्यक्षे ज्ञानत्वादिना तत्र हेतुत्वं न तु यावा-नेव तत्तदितरत्वादिर्विषयनिष्ठो धर्म्मस्तेन तद्विषयत्वेन कार्य्यकारणभावः मैत्रावलोकित-चैत्रनिर्मित-नीलेतर-घटतद्विषयकत्वादिना तत्त्वेऽनन्तकार्य्य-कारणभाव-प्रसङ्गान्मानाभावात् अन्यथोपपत्तेश्च।

गादाधरी विवृतिः ।

परामर्शप्रत्यक्षं प्रति अनुमिताविव परामर्शत्वेन हेतुता परमर्शं विना तत्प्रत्यक्षानुदयादित्यभिमानमूलां परामर्शप्रत्यक्षेऽतिव्याप्ति-शङ्कां तत्र तेन रूपेण हेतुतां निराकुर्व्वाणो निरस्यति, 'न चेति, परामर्शादिप्रत्यक्षे साध्यव्याप्यहेतुप्रकारकपक्षविशेष्यकसंशयान्य-ज्ञानत्वरूपपरामर्शत्वेन हेतुतां निराकर्त्तुं वस्तुगत्या यद्यत्प्रत्यक्ष-निरूपितविषयनिष्ठहेतुतावच्छेदकं तन्निर्द्धारयति, 'सामान्यत-इत्यादिना, 'सामान्यतः' प्रत्यक्षत्वरूपसामान्यधर्म्मावच्छिन्ने प्रत्यक्षे, 'विषयत्वेनेति, विषयतायाः स्वाश्रयविषयादिभेदेन भिन्नत्वेऽपि विषयतात्वमनुगमकं, कारणस्य प्रत्यासत्तिस्तादात्म्यं, कार्य्यस्य लौकिसन्निकर्षजन्यज्ञानीयविलक्षणविषयता (१), अतएवातीतादि-विषयस्य न पत्यक्षविषयत्वं कार्य्याव्यवहितपूर्व्ववर्त्तिविषयरूप-कारणस्य च तत्र तादात्म्येनासम्बद्धत्वात् । अव्यवहितप्राक्क्षणवृत्ति-कारणसम्बन्धस्य कार्य्यसम्बन्धप्रयोजकत्वात्, अतीतानागतघटादि-रूपविषये कार्य्याव्यवहितप्राक्क्षणवृत्तिचक्षुःसंयोगादेरसत्त्वेऽपि अतीतानागतशब्द-रूपादिविषयविशेषादौ इन्द्रियसमवाय-तत्सं-युक्तसमवाययोः सत्त्वेन तत्र प्रत्यक्षस्य विषयतयोत्पत्तिवारणाय विषयस्य हेतुत्वमावश्यकम् । यदि चाव्यवहितप्राक्क्षणावच्छिन्नः कारणसम्बन्धः कार्य्योत्पत्तिप्रयोजकः, न तु तादृशक्षणवृत्तित्वोप-लक्षितकारणस्यापि सम्बन्धः, तत्क्षणे प्रतिबन्धकसमवहितस्यापि

(१) विलक्षणविषयतायाः कार्य्यतावच्छेदकसंसर्गत्वादेव नालौकिकप्रत्यक्षे व्यभिचारः ।

देशस्यान्यदेशावच्छेदेन तत्क्षणवृत्तिप्रतिबन्धकात्यन्ताभावस्यान्य-कालावच्छेदेनाधिकरणतया तत्र च द्वितीयक्षणे कार्य्यापत्तेः। एवञ्चातीतादिविषयस्य वर्त्तमानकालासम्बन्धितया अवच्छेद्याधि-करणसम्बद्धस्यैवावच्छेदकतया नित्यस्यापि सन्निकर्षस्य वर्त्तमान-कालावच्छेदेन न तत्र सत्त्वमिति नातिप्रसङ्गः। अथैवं अतीतादौ विषये सामान्यप्रत्यासत्त्यापि न प्रत्यक्षं जायेत तत्र वर्त्तमानकालाव-च्छेदेन नित्यस्यापि सामान्यस्यासत्त्वादिति चेन्न, कारणताघटकं हि व्यापकत्वं द्विधा, क्वचित् यत्र यदा कार्य्यं तत्र तदव्यवहितप्राक्-क्षणावच्छेदेन कारणमित्येवं रूपं, क्वचिच्च यत्र यदा कार्य्यं तत्र तद-व्यवहितप्राक्क्षणवृत्तिकारणमित्येवं रूपं, यत्र यस्य कारणता प्रथमोक्तव्यापकताघटिता तस्य प्राक्क्षणावच्छेदेन देशे सत्त्वं, यस्य कारणता द्वितीयव्यापकताघटिता प्राक्क्षणवृत्तेस्तस्य यदा कदाचिद्देशे सत्त्वं देशे कार्य्योत्पत्तिप्रयोजकम्। लौकिकसन्नि-कर्षादेः प्रत्यक्षादिहेतुतायाञ्च प्रथमव्यापकत्वं, सामान्यप्रत्या-सत्त्यादेः तद्धेतुतायाञ्च द्वितीयमिति नातीतादिविषयस्य लौकिक-प्रत्यक्षप्रसङ्गो न वा सामान्यजप्रत्यक्षानुपपत्तिरित्युच्यते, तदापि पूर्व्वक्षणावच्छिन्नसन्निकर्षाद्विषयनाशकाले तत्प्रत्यक्षापत्तिवारणाय विषयस्य कार्य्यसहभावेन हेतुत्वमावश्यकम्। यदि च विषय-नाशोत्पत्तिकालेऽपि प्रत्यक्षमिष्यते "सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना"। इति प्रवादस्तु प्राक्क्षणवर्त्तमानतापरः। अत-एवाशुविनाशिसुखादिप्रकारकलौकिकप्रत्यक्षस्य सुखाद्युत्पाद-तृतीयक्षणे निर्व्वाहः। विशेषणज्ञानस्य हेतुतया तदुत्पत्तिक्षणे

तद्विरहेण द्वितीयक्षणे तद्विशिष्टबुद्ध्यसम्भवात् इत्युच्यते, तदापि प्रत्यक्षविशेषे विषयविशेषस्य हेतुतायां व्यवस्थापनीयतया यद्विशेषे यद्विशेषस्य प्रयोजकता तत्सामान्ये तत्सामान्यस्येति नियमात् सामान्यकार्य्य-कारणभाव आवश्यकः। 'तत्तद्विषयकेति तत्तद्व्यक्तिविषयकप्रत्यक्षत्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन हेतुते-त्यर्थः। न चैतादृशकार्य्य-कारणभावो निष्प्रमाणकः तत्तद्व्यक्ति-विषयकप्रत्यक्षस्य सन्निकर्षादिशालिव्यक्त्यन्तरे इष्टत्वात् यावतीषु व्यक्तिषु सन्निकर्षादिघटितसामग्रीसमवधानं युगपत्तावद्विषयस्य एकस्यैव प्रत्यक्षस्योत्पत्तेरिति वाच्यम्। तत्तद्व्यक्तिभेदेन इन्द्रि-यसन्निकर्षादिघटितसामग्रीभेदनिर्वाहाय तत्तद्व्यक्तित्वेन विषय-हेतुताया आवश्यकत्वात्, अन्यथा तत्तद्घटेन्द्रियसन्निकर्षादीनां साधारणधर्म्मपुरस्कारेणैव(१) हेतुतया तद्व्यक्तिभासकसामग्र्या एत-द्व्यक्तिभासकसामग्रीतो वैलक्षण्यासम्भवात् तादृशहेतुतासत्त्वे तादृश-सामग्र्याः पृथक् तत्तद्व्यक्तित्वावच्छिन्नघटितत्वेन वैलक्षण्यात्, तदवैलक्षण्ये च तत्तद्व्यक्तिविषयकबाधग्रहाभावादिघटितायाः सम-वायेन तत्तद्व्यक्तिविषयकविशिष्टप्रत्यक्षसामग्र्या विषयतासम्बन्धेन तत्तद्व्यक्तिप्रत्यक्षोत्पादकसामग्रीमत्क्षणवृत्तित्वविशिष्टायाः सम-वायेन तत्तद्व्यक्तिविषयकविशिष्टबुद्ध्युत्पादप्रयोजिकायाः व्यक्त्यन्तर-मात्रसन्निकर्षदशायामपि आत्मन्यक्षतत्वेन तदानीमात्मनि सम-वायेन तादृशबुद्ध्यापत्तेर्दुर्व्वारत्वात्। न च सन्निकर्षस्यैव तत्तद्व्यक्ति-

(१) संयोगत्वादिनेत्यर्थः।

सन्निकर्षत्वेन हेतुत्वमस्तु तावताप्यन्यव्यक्तिमात्रसन्निकर्षवत्यपि काले विषयतया तत्तद्व्यक्तिप्रत्यक्षोत्पादकसामग्रीविरहः सुघटः तदानीं तादृशतद्व्यक्तिसन्निकर्षाभावादिति वाच्यम्। गुरुणा तत्तद्व्यक्तिसन्निकर्षत्वेनैव हेतुतापेक्षया लाघवात् तत्तद्व्यक्तित्वेन विषयहेतुताया एवोचितत्वात्। न चोक्तकाले तत्तद्व्यक्तित्वावच्छिन्नस्य विषयस्य सत्त्वेन तद्घटितसामग्र्यक्षतैव इति न विषयतया तद्व्यक्तिप्रत्यक्षोत्पादकसामग्रीविरह इति विशिष्य विषयहेतुतया नोक्तातिप्रसङ्गवारणसम्भव इति वाच्यम्। एकाधिकरणप्रत्यासन्नकारणतावच्छेदकावच्छिन्नस्तोमस्यैव सामग्रीत्वात् तादात्म्यसम्बन्धेन तत्तद्व्यक्तित्वावच्छिन्नसम्बन्धिन्यां तत्तद्व्यक्तौ समवायादिना अप्रत्यासन्नस्य इन्द्रियसंयोगादेः सत्त्वेऽपि उक्तसामग्रीविरहात्। यदि च तद्धर्मघटितधर्मावच्छिन्नजनकसामग्री तद्धर्मवत्ताप्रयोजकसामग्रीसमवहिता कार्य्यं जनयति अत आत्मनि तद्व्यक्तिविषयकज्ञानजनकसामग्र्यास्तद्विषयकत्वप्रयोजकसमवधानमपेक्षणीयं प्रत्यक्षे तद्व्यक्तिविषयत्वप्रयोजकत्वञ्च तद्विषयतानियामकसामग्र्यास्तद्व्यक्तित्वसामानाधिकरण्यम्, उक्तस्थले च इन्द्रियसन्निकर्षादौ तदभावात् तत्तद्व्यक्तित्वेन तत्तत्प्रत्यक्षाहेतुत्वेऽपि नोक्तापत्तिरित्युच्यते, तदापि तत्तद्घटादिव्यक्तिवृत्तितद्रूपाद्यात्मकविशेषणधीघटिता सामग्री तद्विशिष्टबुद्धिजनने तत्तद्घटादिस्वरूपविशेष्यभासकसामग्रीसापेक्षा वाच्या व्यक्त्यन्तरभासकसन्निकर्षादिघटितसामग्रीतस्तद्व्यक्तिभासकसामग्र्या अविशेषे च व्यक्त्यन्तरमात्रसन्निकर्षदशायामपि तद्व्यक्तिगतरूपादिज्ञानात् तद्विशिष्टबुद्ध्यापत्ति-

दुर्व्वारैव, (१) न हि तद्रूपादिज्ञानजन्यतावच्छेदकगर्भे तद्घटादिव्यक्तिविषयकत्वमपि प्रविष्टं, येनोक्तप्रयोजकापेक्षया नातिप्रसङ्गः स्यात्, तथा सति (२) तत्प्रकारकभ्रमाद्यसंग्रहप्रसङ्गादिति तत्तद्व्यक्तित्वेन विषयस्य हेतुत्वमावश्यकं तद्व्यक्तिविषयकत्वरूपकार्य्यतावच्छेदकोपलक्षितप्रत्यक्षस्य समूहालम्बनरूपस्य विषयतासम्बन्धेन व्यक्त्यन्तरेषूत्पत्तावपि तद्विशिष्टस्यानुत्पत्तेः न तद्व्यक्तित्वावच्छिन्नहेतुतायां व्यभिचारः, तादृशकार्य्यतावच्छेदकविशिष्टसमानाधिकरणाभावघटितव्यापकताया अक्षतत्वात्, तत्तद्व्यक्तिवृत्तिविषयतात्वेनैव कार्य्यतावच्छेदकसम्बन्धत्वोपगमात् न व्यभिचार इत्यप्याहुः ।

ननु परामर्शत्व-परामर्शप्रत्यक्षत्वयोरतिसामान्यातिविशेषोक्तरूपवह्निर्भावेऽपि (३) मध्यविधकार्य्य-कारणभावस्तेन रूपेणापि (४) इतिशङ्कामपाकर्त्तुं मध्यविधकार्य्यकारणभावस्य प्रामाणिकत्वे तदवच्छेदकं विशिष्टानात्मकं लघुरूपं दर्शयति, 'कदाचिदिति, तादृशकार्य्य-कारणभावस्य निर्युक्तित्वं 'कदाचिदित्यनेन सूचितम् ।

---

(१) न च तद्व्यक्त्यन्तरे तद्विशिष्टबुद्धिर्भ्रमरूपैव सा च न जायते दोषाभावात् दोषसत्त्वे इष्टापत्तिरिति वाच्यम् । दोषाद्यघटितयादृशसामग्रीबलात् तद्घटव्यक्तौ तद्रूपविशिष्टबुद्धिर्जायते तादृशसामग्र्या एव व्यक्त्यन्तरे सत्त्वेन दोषासत्त्वेपि व्यक्त्यन्तरे तद्विशिष्टबुद्ध्यापत्तिर्दुर्व्वारैवेति ।

(२) तत्तद्व्यक्तिविषयकत्वस्य कार्य्यतावच्छेदके प्रवेशे ।

(३) प्रत्यक्षत्व-विषयत्व-तत्तद्व्यक्तिविषयकप्रत्यक्षत्व-तत्तद्व्यक्तित्वरूपेणेत्यर्थः ।

(४) परामर्शत्व-परामर्शप्रत्यक्षत्वरूपेणेत्यर्थः ।

यद्यप्यतीन्द्रियाणां (१) गुरुत्वादृष्ट-भावना-स्थितिस्थापकानां प्रत्यक्षस्य चक्षुराद्ययोग्यस्पर्शादीनाञ्च चक्षुरादिना ग्रहस्य च वारणाय योग्यजातीयानां स्वविषयकप्रत्यक्षे हेतुत्वकल्पनमावश्यकं, तथा सति यावद्विशेषकारणबाधेनातीन्द्रियविषयतया प्रत्यक्ष-वारणसम्भवात्, (२) तथाप्यादिपदग्राह्यघटादिप्रत्यक्ष-घटत्वादिना कार्य्य-कारणभावोऽतिनिर्युक्तिकएव। वस्तुतस्त्वतीन्द्रियविषयाणां तादात्म्येन प्रतिबन्धकत्वकल्पनयैवातिप्रसङ्गवारणे योग्यजातीयानां बहूनां न प्रत्यक्षहेतुता अन्यत् स्वयमूहनीयम्। इदानीं प्रतिबन्धिं प्रदर्शयन् परामर्शप्रत्यक्षे परामर्शत्वेन हेतुतां निरा-करोति 'न त्विति, 'तत्तदितरत्वादिरिति व्याप्तिप्रकारकत्व-पक्षधर्म्मताविषयकत्व-ज्ञानत्व-संशयेतरत्वादिघटित इत्यर्थः, 'घट-तद्विषयत्वादिना' घटत्व-तत्प्रत्यक्षत्वादिना, प्रामाणिकत्वे गौरवं न दोषायेत्यत आह, 'मानाभावादिति। ननु परामर्शादिशून्य-काले तद्विषयकप्रत्यक्षत्वावच्छिन्नापत्तिवारणान्यथानुपपत्त्या परा-

(१) नित्यसन्निकर्षाश्रयीभूतातीन्द्रियपदार्थस्य प्रत्यक्षवारणाय योग्यजातीयानां स्वविषयकप्रत्यक्षं प्रति हेतुत्वमावश्यकं तथा सति कदाचिदित्यसङ्गतं इत्याशङ्क्य नित्यसन्निकर्षाश्रययोग्यजातीयानां स्वविषयकप्रत्यक्षं प्रति हेतुत्वेऽपि आदिपदगृहीतस्य अनित्यसन्निकर्षाश्रययोग्यघटादिजातीयानां स्वविषयकप्रत्यक्षं प्रति हेतुत्वस्य निर्युक्तिकत्वं कदाचिदित्यनेन सूचितं इति समाधत्ते, यद्यपी-त्यादिना। नन्वेतावता आदिपदगृहीतस्य कार्य्य-कारणभावस्य निर्युक्तिकत्वेऽपि प्रकृतशब्दलभ्यकार्य्य-कारणतावस्य निर्युक्तिकत्वं नायातीत्याशयेनाह, वस्तुतस्त्वि-त्यादि।

(२) सामान्यसामग्र्या उभयवृत्तिधर्म्मघटितविशेषसामग्र्यसमवहितायाः फलाजनकत्वनियमादिति भावः।

मर्शादिप्रत्यक्षे परामर्शत्वादिना कारणत्वकल्पनमावश्यकमित्यत आह, 'अन्यथोपपत्तेश्चेति प्रत्यक्षविषयताप्रयोजिकाया विषयतासम्बन्धेन प्रत्यक्षोत्पादकसामग्र्या विषयनिष्ठतत्तद्धर्म्मसामानाधिकरण्यरूपात् प्रत्यक्षविषयतायास्तत्तद्धर्म्मसामानाधिकरण्यप्रयोजकादेव तत्तद्धर्म्मवद्वृत्तिविषयताकप्रत्यक्षत्वावच्छिन्नोत्पत्तिनियमोपपत्तेरित्यर्थः। अतएव प्रयोजकसमाजनियम्यधर्म्मान्तराणामपि न कार्य्यतावच्छेदकत्वमिति भावः।

---

चिन्तामणिदीधितिः।

**अथ विशिष्टस्मरणेऽतिव्याप्तिः। न चोपेक्षान्यत्वेन तत्र हेतुत्वं, उपेक्षात्वं हि न जातिश्चाक्षुषत्वादिना सङ्करप्रसङ्गात् आंशिकत्वोपगमाच्च।**

---

गादाधरी विवृतिः।

वह्निव्याप्यधूमवान् पर्व्वत इति स्मरणे तादृशनिश्चयत्वेन हेतुत्वात्तत्रातिव्याप्तिरिति शङ्कते, 'अथेति, 'विशिष्टस्मरणे' व्याप्यविशिष्टपक्षस्मरणे। न च स्मृतिजनकतायामप्रामाण्यज्ञानाभाववैशिष्ट्यानिवेशादनुमितौ च तन्निवेशान्नैकरूपेण उभयहेतुतेति नातिव्याप्तिरिति वाच्यम्। अनुमितिजनकतायामप्रामाण्यज्ञानाभावनिवेशे विशेष्य-विशेषणभावे विनिगमनाविरहादप्रामाण्यज्ञानाभावस्य पृथक्कारणत्वोपगमात्। अथ धूमत्वादिना एकधूमादिविषयकज्ञानात् तेन रूपेण धूमाद्यन्तरस्मरणवारणाय तत्तद्धूमादिव्यक्त्युद्बोधकत्वमपि स्मृतिजनकतावच्छेदके प्रविष्टं

न त्वनुमितिजनकतावच्छेदकतायामिति कथमवच्छेदकतापर्य्याप्ति-घटितलक्षणेऽतिव्याप्तिः। न च पर्य्याप्त्यनिवेशाभिप्रायेनैतदभि-धानं, 'न चोपेक्षान्यत्वेनेति शङ्कानवतारात्। न च समान-विशेष्यत्वप्रत्यासत्त्यैवानतिप्रसङ्गे तत्तद्व्यक्तिविषयकत्वस्य न स्मृति-जनकतायां निवेश इति वाच्यम्। वह्निव्याप्यधूमत्वादिनान्य-विषयकाद्रूपान्तरेण चेतद्धूमावगाहिज्ञानाद्वह्निव्याप्यधूमत्वादि-नैतद्धूमादिविषयकस्मरणस्य समानविशेष्यताप्रत्यासत्त्या अवार-णात् वह्निव्याप्यधूमत्वादिप्रकारकविषयतात्वेन विषयतायाः कार्य्य-कारणसम्बन्धत्वोपगमे कारणतावच्छेदकधर्म्मगर्भे व्याप्त्यादि-विषयताया निवेशे प्रयोजनविरहेण तद्रूपावच्छिन्नजनकता-घटितोक्तलक्षणस्यातिव्याप्त्यनवकाशः उक्तविषयतायाः सम्बन्धत्वे-ऽपि अभावत्वादिना अभावान्तरस्य व्याप्तिशरीरे यत्र भानं तत्रापराभावादिविषयकस्मरणापत्तिर्दुर्व्वारैवेति तत्तद्व्यक्तिविष-यतात्वेनैवाभावत्वाद्यवच्छिन्नविषयताः स्मृतिजनकतायां निवेश-नीया न त्वनुमितिजनकतायामित्यतिव्याप्तिर्न सङ्गतैवेति चेन्न, यत्साध्यव्याप्ययद्धेतुविशिष्टयद्धर्म्मिविषयकं सर्व्वमेव ज्ञानं तत्तद्धर्म्मप्रकारेण तद्धर्म्माश्रयाशेषव्यक्तिविषयकं तत्साध्यव्याप्य-तद्धेतुविशिष्टतद्धर्म्मिज्ञानस्य तादृशस्मृतिहेतुतायां तत्तद्धर्म्मिविष-यकत्वस्याव्यावर्त्तकत्वेनानिवेशात् तादृशपरामर्शघटितलक्षणाभि-प्रायेणैतदभिधानात् जातिघटितलक्षणस्य इदानीमकरणात्। न च तादृशस्थलेऽपि नानासाधनादिप्रकारेण नानाधिकरणाद्यव-गाहिज्ञानस्य यद्यदधिकरणादेर्यद्यत्साधनादिप्रकारेण तद्विषयता

तत्तत्साधनादिव्यक्तिभिन्नतत्तद्विषयसाधनादिप्रकारेण तद्विषया-
धिकरणादिरूक्त्यन्तरविषहकस्मरणापत्तिर्दुर्व्वारैवेति तत्तद्व्यक्ति-
प्रकारतानिरूपिततत्तद्व्यक्तिविशेष्यतानां विशिष्य कार्य्य-कारणभावे
निवेशनमावश्यकमिति वाच्यम्। तत्स्थलीयपरामर्शस्य तत्-
स्मरणनिष्ठकार्य्यतावच्छेदकगर्भे तत्तत्साधनादिव्यक्तिप्रकारतानिरू-
पिततत्तत्साधनाधिकरणव्यक्तिविषयतानां विशिष्टनिवेशादेव स्मृतौ
वैपरीत्येन भानवारणात् कारणतावच्छेदककोठौ तत्तद्व्यक्तिविष-
यतात्वेन विषयतानिवेशे प्रयोजनविरहात् तावतैव च शङ्कितातिं-
व्याप्तिसङ्गतिः।

परे तु यद्युपमितिविशेषेऽतिव्याप्तिवारणाय कारणतावच्छे-
दकत्वपर्य्याप्तिः परामर्शत्वांशे निवेशनमावश्यकमिति मन्यते
तदापि परामर्शत्वशरीरे या या विषयताः प्रविष्टास्तदन्य-
विषयत्वानवच्छिन्नत्वरूपं परामर्शत्वपर्य्याप्तावच्छेदकताकत्वमेव
लक्षणप्रविष्टकारणतायां निवेश्यं लाघवान्न तु परामर्शत्वघटका-
यावन्तः पदार्थास्तदन्यपदार्थानवच्छिन्नत्वम् अधिकभेदनिवेशे गौर-
वात्, एवञ्चोपमितिविशेषे हेतुतावच्छेदकेऽधिकविषयतानिवेशादेव
नातिव्याप्त्यवकाशः, स्मृतिकारणतावच्छेदके च तत्तद्विषयाणा-
मधिकानां निवेशेऽप्यधिकविषयतानामनिवेशात्तत्रातिव्याप्ति-
शङ्कासङ्गतिः। अतिरिक्तविषयतानवच्छिन्नत्ववत् उपेक्षान्यत्वानव-
च्छिन्नत्वमपि निवेश्यमित्याशयमूलायाः शङ्कायाः 'न चेत्यादिना
निरास इत्याहुः।

अथ तत्तद्विषयकस्मृतौ तत्तद्विषयकसंस्कारत्वेन संस्कारहेतुतयैव

स्मृतेर्विषयनियमे ज्ञानस्य ज्ञानत्वेनैव स्मृतित्वावच्छिन्नं प्रति हेतुता न तु तत्तद्विषयकस्मृतौ तत्तद्विषयकनिश्चयत्वेनेति कथमतिव्याप्तिः। न च तत्संशयात्तत्स्मरणवारणाय तत्स्मृतौ तन्निश्चयत्वेन हेतुत्वमावश्यकमिति वाच्यम्। संस्कारस्य तद्धर्म्मिक-तत्प्रकारकस्मरणे तद्धर्म्मिकतदभावप्रकारकान्यतद्धर्म्मिकतत्प्रकारक-संस्कारत्वेन हेतुतयैव तद्गोचरसंशयात्तदापत्त्ययोगात् संशयजन्य-संस्कारस्य विरोधिप्रकारकत्वनियमादिति चेन्न, संस्कारस्य संस्कार-त्वेनैव हेतुता ज्ञानस्य तत्तद्गोचरस्मृतौ तत्तन्निश्चयत्वेन इत्यस्यापि सम्भवेन विनिगमकाभावात् ज्ञानहेतुतायामपि विषयादिनिवे-शस्याप्रत्याख्येयत्वात्। न च तद्गोचरज्ञानजन्यसंस्कारस्य काला-दिना नाशे अन्यगोचरसंस्काराात्तद्गोचरस्मरणवारणाय संस्कार-हेतुतायां विषयनिवेशनमावश्यकमिति वाच्यम्। संस्कारहेतुतायां विषयानिवेशेऽप्युक्तस्थले तन्निश्चयरूपकरणव्यापारविरहेण तत्स्मर-णापत्त्यसम्भवात्। वस्तुतोऽन्वय-व्यतिरेकाभ्यां तद्गोचरस्मृतौ तद्गो-चरनिश्चयत्वेन हेतुत्वसिद्धौ तन्निर्व्वाहकतया व्यापारीभूतसंस्कार-कल्पना संस्कारे प्रमाणान्तराभावादिति कथं संस्कारेण तद्गोचर-निश्चयत्वावच्छिन्नस्यान्यथासिद्धिः यतस्तद्रूपावच्छिन्नमहेतुः स्यात्, न हि यदुपजीव्य यत्सिद्ध्यति तत् तद्व्याघातकं, एतेन संस्कारहेतु-तायां विषयानिवेशे तदंशे उपेक्षात्मकज्ञानजन्यादन्यगोचर-संस्कारात् तत्स्मरणापत्तिवारणाय तद्विषयकस्मृतौ तद्विषयक-संस्कारत्वेन हेतुत्वमावश्यकमिति ज्ञानहेतुतायां विषयनिवेशो व्यर्थ इत्यपि प्रत्युक्तम्। फल-व्यापारौ प्रति करणस्य एकरूपेण

हेतुतेति प्राचीनसम्मतनियमानुरोधेन ज्ञानस्य स्मृतिजनकतायां विषयनिवेशनमावश्यकमित्यपि वदन्ति।

यत्तु ज्ञानस्य ज्ञानत्वेनैव स्मृतिहेतुता तद्विषयकस्मृतावुद्बोधकविशेषाणां हेतुताया आवश्यकत्वात् ततएव विषयनियमोपपत्तेः उद्बोधकानां फलबलकल्प्यत्वात्। न च सम्बन्धिपदज्ञानादीनामनुगतरूपेणैव तत्तद्गोचरस्मृतिहेतुतया तद्गोचरज्ञानं विनापि तत्स्मरणापत्तिरिति वाच्यम्। तत्सम्बन्धित्वेन गृहीतम् यत्तज्ज्ञानस्यैव तद्विषयस्मारकतया तादृशोद्बोधकसमवधानस्थले तज्ज्ञानस्याप्यावश्यकत्वादिति, तदसत्, तथा सति ज्ञानत्वमात्रेणापि ज्ञानस्य स्मृतिहेतुतायामप्रामाणिकतापत्तेः। उद्बोधकेन ज्ञानविशेषान्यथासिद्धौ कालान्तरे यज्ज्ञानस्योपयोगिता तज्ज्ञानार्थं विशेषदर्शिनां शास्त्राध्ययनादावप्रवृत्तिप्रसङ्गाच्च।

वस्तुतः (१) स्मृतौ सम्बन्धिज्ञानस्य न तत्सम्बन्धावगाहिज्ञानत्वेन हेतुता यत्र सम्बन्धो येन रूपेण गृहीतः सम्बन्धाविषयकादपि तत्प्रकारकज्ञानात् सम्बन्ध्यन्तरस्मरणात्, नापि सम्बन्धग्रहविषयतावच्छेदकावच्छिन्नविषयकत्वेन सम्बन्धग्रहस्य उपलक्षणतया भाविसम्बन्धग्रहविषयविषयकग्रहस्याप्युद्बोधकतापत्तेः, सम्बन्धग्रहे सामान्यतः पूर्व्वत्वमव्यावर्त्तकम् तत्तज्ज्ञानपूर्व्वत्वञ्चाननुगतं सम्बन्धानुद्बोधे च पूर्व्वसम्बन्धग्रहोऽप्यस्मारकः सम्बन्धोद्बोधका-अप्यननुगता एव, एवञ्च स्मृत्युपधायकसम्बन्धिज्ञानानां तत्तद्व्यक्ति-

---

(१) अनुगतत्वेनाभिमता अपि उद्बोधका नानुगता इत्याह वस्तुत इत्यादिना।

त्वेनैव हेतुता वाच्या तथाच यादृशसम्बन्धिज्ञानसत्त्वे यस्य पुंसो-नियमतोऽनुभूतस्य यद्विषयस्य स्मृतिस्तद्दस्तुज्ञानस्य तत्तद्यक्तित्वेन नानाहेतुत्वकल्पनामपेच्य तत्तत्पुरुषीयतद्विषकस्मृतौ तद्दस्तुज्ञानत्वे-नानुगतरूपेणैकहेतुतैव कल्प्यते यत्पूर्व्वञ्च तद्विषयस्य नानु-भवस्तत्कालीनतद्दस्तुज्ञानात् तस्य तद्विषयस्मृतिवारणाय च तद्गोचरस्मृतौ तद्विषयकनिश्चयत्वेनापि हेतुत्वमावश्यकमितिदिक्। उपेक्षात्मकज्ञानात् स्मरणानुत्पत्त्या तदन्यत्वस्याधिकस्यापि स्मृति-कारणतावच्छेदके निवेश्यतया नोपदर्शितनिश्चयत्वपर्य्याप्तकारण-तावच्छेदकताकत्वं स्मृताविति नातिव्याप्तिरित्याशङ्कां निरस्यति, 'न चेति, 'उपेक्षान्यत्वं' उपेक्षात्वावच्छिन्नभेदः, तस्य तदा स्मृति-कारणतावच्छेदकघटकता स्यात् यद्युपेक्षात्वं स्मृतिजनकधी-व्यावृत्तो जातिविशेषः स्यात्, स्मृत्यजनकज्ञानत्वरूपस्य उपेक्षा-व्यवहारविषयस्य उपाधेः स्मृतिजनकतायां प्रवेशासम्भवात् स्मृत्य-जनकान्यत्वस्य स्मृतिजनकत्वरूपत्वात् स्वस्य (१) च स्वानवच्छेदक-त्वात्, नहि तादृशजातिः शक्यकल्पना, जातिसङ्करादिदोषग्रासात् इत्याह, 'उपेक्षात्वं हीति, अत्र च जातित्वाभावानुमाने उपेक्षात्वस्य स्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छेदकत्वेन पक्षता, 'अथे-त्यादिशङ्कितुर्मतेऽपि स्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छे-दकत्वस्य संशयत्वे तद्घटकविरोधिप्रकारकत्वे वा प्रसिद्धत्वात्। तत्र जातित्वाभावस्य उभयमतसिद्धत्वेऽपि उक्तपक्षतावच्छेदकावच्छेदेन

(१) आत्माश्रयप्रसङ्गभयेनेत्यादिः।

साध्यसिद्धेरुद्देश्यत्वान्नांशतः सिद्धसाधनं दोषः । अत्र उपेक्षापद-प्रवृत्तिनिमित्तत्वेन पक्षता उपेक्षापदप्रवृत्तिनिमित्तस्य प्रसिद्धा-वपि वादिनस्तस्य स्मृत्यजनकत्वादिरूपतया तदवच्छिन्नान्यत्वस्य स्मृतिजनकत्वावच्छेदकत्वासम्भवेन(१) स्मृतेरनुमितिजनकतावच्छे-दकपर्य्याप्तजनकतावच्छेदकताकत्वाक्षतेः, अत्राप्यवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वान्नोक्तदोषः इत्यपि केचित्, तच्चिन्त्यम् उपेक्षा-त्वस्य जातित्ववादिना तस्योपेक्षापदप्रवृत्तिनिमित्ततानभ्युपगमे क्षतिविरहादवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽपि तत्र जाति-त्वाभावासिद्धेः, 'तादृशादपि स्मृत्युत्पादादित्यग्रिमग्रन्थविरोधाच्च । तद्रूपवतः स्मृत्युत्पादकत्वे तद्रूपनिष्ठस्मृतिजनकतावच्छेदकभेद-प्रतियोगितावच्छेदकताया एव विरोधित्वात् न तु उपेक्षापद-प्रवृत्तिनिमित्ततायाः ।

यत्तु स्मृतिजनकावृत्तिज्ञानधर्म्मत्वेन (२) पक्षता, तादृश-धर्म्मत्वञ्च तत्तज्ज्ञानान्यतरत्वादौ प्रसिद्धमिति, तदसत्, एकांशे उपेक्षात्मकज्ञानस्यान्यविषयकस्मृतिजनकतया उपेक्षात्वस्य स्मृति-जनकावृत्तित्वाप्रसिद्धेः, अन्यथा 'आंशिकत्वोपगमाच्चेति बाधका-सङ्गतेः ।

स्वीययावद्विषयविषयकस्मृतिजनकावृत्तिज्ञानधर्म्मत्वेन तु (३) पक्षत्वं सम्भवति, 'चाक्षुषत्वादिनेति, आदिना ज्ञानत्वव्याप्य-

(१) स्वस्य स्वानवच्छेदकत्वादिति भावः ।

(२) घटत्वादौ व्यभिचारवारणाय ज्ञानेति ।

(३) स्वं अवृत्तिप्रतियोगिनिरूपकपरम् ।

निखिलजातिपरिग्रहः। तत्तज्जातिनिरूपितसङ्करस्य च पृथगेव हेतुता बोध्या न तु मिलितस्य वैयर्थ्यात्। तज्जात्यव्यापकत्वे सति तज्जातिव्यभिचारित्वे सति तज्जातिसामानाधिकरण्यं तत्सङ्करः। अव्यापकत्वं प्रतियोग्यसमानाधिकरणतत्समानाधिकरणाभावप्रतियोगित्वं, तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वं वा, तज्जातिव्यभिचारित्वञ्च तद्व्यक्तित्वावच्छिन्नाभावसामानाधिकरण्यम्। यद्यपि व्याप्यजातिमत्यनित्येऽपि कालिकादिसम्बन्धेन व्यापकजात्यवच्छिन्नभेदोवर्त्तते, व्याप्यजातेरपि व्यापकजातिशून्ये कालिकादिसम्बन्धेन वृत्तेर्विरुद्धजातेरपि कालिकादिसम्बन्धेन सामानाधिकरण्यमस्ति समवायेन चावच्छेदकत्वं वृत्तिश्च पक्षस्योपेक्षात्वस्य नोभयमते, उपेक्षात्वस्य उपाधित्वमते (१) विशेषणताविशेषेणैव वृत्तेरिति स्वरूपासिद्धिः। वस्तुतस्तु (२) गुणगतजातिसङ्करस्य (३) यत्र हेतुता तत्र साधनाप्रसिद्धिरेव गुणे जातिभिन्नस्यासमवायात्, समवायघटितचाक्षुषत्वादिसङ्करस्य क्वचिदपि प्रसिद्धिविरहात्। तथापि समवाय-दैशिकविशेषणतान्यतरसम्बन्धेन तथात्वं (४) बोध्यम्। अथवा समवायेनावच्छेदकत्वस्थाने समवायावच्छिन्नावच्छेदकताशून्यं यत्समवेतं तदन्यत्वं, समवायेन तदभावादिमति समवायेन वृत्तिस्थाने समवायेन तदवृत्तित्वे

---

(१) स्मृत्यजनकत्वरूपोपाधित्वमते।

(२) पृथिवीत्वादिसङ्करस्य घटजलसंयोगादौ प्रसिद्धत्वेऽपि।

(३) गुणगता या जातिश्चाक्षुषत्वादिरूपा तत्सङ्करस्य।

(४) अवच्छेदकत्वादिकमित्यर्थः।

सति समवेतं यत्तदन्यत्वं, तज्जातिसमानाधिकरणत्वस्थले तज्जाति-मदसमवेतत्वे सति यत्समवेतं तदन्यत्वं च निवेशनीय-मिति नासिद्धिः। विशिष्टभेदस्य पक्षस्य समवेतत्वेऽसमवेतत्वे चाक्षतत्वात्। यदि चैतत् निरूपकजातिभेदेन भिन्नमेव तत्तज्जातीनां विशिष्योपादानादिति चाक्षुषत्वादिना सङ्करस्य यत्र हेतुता तत्र व्याप्यजातौ व्यभिचारवारकं व्यभिचारित्वविशेषणं व्यर्थं चाक्षुषत्वादिव्याप्यजात्यप्रसिद्धेः, तत्परित्यागे च ज्ञानत्वाद्य-व्यापक-तत्समानाधिकरणचाक्षुषत्वादेरिव चाक्षुषत्वाद्यव्यापक-तत्समानाधिकरणस्य उपेक्षात्वस्यापि जातित्वं स्यात् इत्यप्रयो-जकत्वशङ्कायास इत्युच्यते, तदा यज्जात्यव्यापकत्वे सति यज्जाति-व्यभिचारि यत्तन्न तज्जातिसमानाधिकरणजातिरिति सामान्यतो व्याप्त्या उपेक्षात्वे चाक्षुषत्वादिसमानाधिकरणजातित्वाभावः साध्यः, चाक्षुषत्वादिव्यापकज्ञानत्वादौ ज्ञानत्वादिव्याप्यचाक्षुष-त्वादौ व्यभिचारवारणाय दलद्वयम्। वस्तुतस्तु स्वाव्यापकस्वव्यभि-चारिजातित्वव्यापकविरोधप्रतियोगि (१) यद्यत् स्वं तत्तद्भेदकूटं हेतूकृत्य उपेक्षात्वादौ जातिसङ्कीर्णधर्मे जातित्वाभावः साधनीयः,

---

(१) स्वाव्यापक-स्वव्यभिचारित्वमात्रव्यापकत्वनिवेशे चाक्षुषत्वादौ व्यभिचारः स्वसमानाधिकरणोपेक्षात्वादेः स्वाव्यापक-स्वव्यभिचारितया चाक्षुषत्वादेः स्वानन्त-र्भावात् अतो जातित्वेति। तादृशजातित्वसामानाधिकरण्योक्तौ स्वाव्यापक-स्वव्यभिचारिघटत्वादिजातेः स्वविरोधितया उपेक्षात्वादेः तादृशजातित्वसमा-नाधिकरणविरोधप्रतियोगितया स्वान्तर्भावात् स्वरूपासिद्धिः स्यादतो व्यापकता-निवेशः।

उपेक्षात्वाद्यव्यापकतद्व्यभिचारिचाक्षुषत्वादिजातौ तद्विरोधासत्त्वेन उपेक्षात्वादेर्निरुक्तस्वानन्तर्भावात् तत्र च तादृशभेदकूटस्य उभयसिद्धत्वात्। न च सत्ताव्यभिचारिजातेरप्रसिद्ध्या नेदृशं स्वं सत्तेति तत्र व्यभिचार इति वाच्यम्। अपरजातित्वाभावस्यैव साध्यत्वोपगमात्, तत्र साध्यसत्त्वेन व्यभिचारानवकाशात्। यत्र च तुल्ययुक्त्या आपादितजात्यन्तरेण सङ्करस्य जातित्वबाधकता यथा प्राचां भूतत्व-मूर्त्तत्वयोः परस्परसङ्करेण जातित्वखण्डनं, तत्र जातिसङ्करहेतोरसिद्धत्वेऽपि (१) व्याप्य-व्यापकभावानापन्नसमानाधिकरणद्वयवृत्तित्वेन स्वाश्रयैकधर्म्मव्यापकापरवृत्तियत्तद्भिन्नत्वे सति स्वाश्रयैकधर्म्मवदवृत्तिवृत्तियत्तदन्यानेकवृत्तित्वेन वा(२) तदुभयत्वे जातित्वाभावसामानधिकरण्यं साधनीयं, विनिगमकविरहेणोभयोर्जातित्वाभावपर्य्यवसानमिति कृतमतिविस्तरेण। ननु चाक्षुषत्वादिव्याप्यमुपेक्षात्वं नानैव स्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छेदकमुपगन्तव्यं, भेदकूटस्य कारणतावच्छेदकत्वे बाधकाभावात्। तथाच न जातिसङ्कर इत्याशङ्क्य बाधकान्तरमाह, 'आंशि-

---

(१) भूतत्वादेः स्वाव्यापक-स्वव्यभिचारिजातित्व-व्यापकविरोधप्रतियोगितया स्वान्तर्भावादिति भावः।

(२) समानाधिकरणजातिद्वयोभयत्वे व्यभिचारवारणाय व्याप्येत्यादि, विरुद्धजातिद्वयोभयत्वे व्यभिचारवारणाय समानाधिकरणेत्यादि, व्याप्य-व्यापकभावस्याननुगमात् हेत्वन्तरानुसरणं समानाधिकरणजातिद्वयोभयत्वे व्यभिचारवारणाय प्रथमसत्यन्तं विरुद्धजातिद्वयोभयत्वे व्यभिचारवारणाय द्वितीयसत्यन्तं उपेक्षात्वचाक्षुषत्वोभयत्वे जातित्वाभावसामानाधिकरण्यसाधने उपेक्षात्वस्य जातित्वाभावपर्य्यवसानं चाक्षुषत्वे जातित्वस्य उभयवादिसिद्धत्वादिति भावः।

कत्वेति, यत्र समूहालम्बनस्य ज्ञानस्य एकविषयस्मारकत्वं अपरविषयास्मारकत्वञ्च तत्र उपेक्षात्वजात्यनभ्युपगमे सकलविषयस्मारकत्वं उपगमे च सकलविषयास्मारकत्वं स्यात् इति यद्विषयास्मारकत्वं तस्य तद्विषयावच्छेदेन उपेक्षात्वं स्वीकरणीयं, अन्यविषयांशे च तदभाव इति तद्विषयकस्मृतौ च तद्विषयावच्छिन्नमुपेक्षान्यत्वं प्रयोजकं वाच्यमित्यव्याप्यवृत्तित्वादुपेक्षात्वं न जातिरित्यर्थः । न चांशिकोपेक्षयामपि न विषयान्तरावच्छेदेन उपेक्षात्वाभावः स्वीक्रियते किन्तु तद्विषयकत्वस्य उपेक्षात्वानवच्छेदकत्वमात्रम्(१), प्रतियोग्यनवच्छेदकस्य तस्य तदभावावच्छेदकत्वानियमात्, तथा नियमे दण्डादेर्द्रव्यत्वादिना घटादिजनकत्वाभावप्रसङ्गादिति नोपेक्षात्वस्याव्याप्यवृत्तित्वं स्वाभावासामानाधिकरण्यादिति वाच्यम् । जातावभावसामानाधिकरण्यवत् किञ्चिदवच्छिन्नवृत्तिकताया अपि सिद्धान्तविरुद्धत्वात् । यद्यपि उपेक्षात्वस्य स्मृत्यजनकत्वादिरूपोपाधित्वमते न स्वाभावसामानाधिकरण्यमवच्छिन्नवृत्तिकत्वं वेति नायमुभयसिद्धो हेतुः (२) । तथापि तन्मतसिद्धहेतुनैव तं प्रति जातित्वाभावः साध्यते अतएवोपगमादित्युक्तम् । वस्तुतस्तु प्रमेयत्वादिनांशिकत्व-जातित्वोभयाभावः साधनीयः उपेक्षान्यत्वेन स्मृतिहेतुतावादिना च तस्य आंशिकत्वोप-

---

(१) तथाच उपेक्षात्वानवच्छेदकतद्विषयकत्वं तद्विषयकस्मृतिजनकतावच्छेदकमिति भावः ।

(२) आंशिकत्वोपगमादित्यस्य नोभयसिद्धहेतुत्वमिति भावः ।

गमाज्जातित्वाभावमादाय पर्य्यवसानमित्यांशिकत्वोपगमाच्चेत्यनेन दर्शितम् ।

चिन्तामणिदीधितिः ।

नापि प्रवृत्तिनिवृत्त्यजनकत्वमजिज्ञासितविषयत्वं वा, तादृशादपि स्मृत्युत्पादात् । नापि संस्काराजनकत्वं, तज्जनकतावच्छेदकरूपान्तरापरिचयात् अन्योन्याश्रयप्रसङ्गात् संस्कारानुत्पत्त्यैवास्मरणसम्भवे स्मृतिजनकतायां तदप्रवेशाच्च । नाप्यनुभवत्वेन तथात्वं, संस्कारस्य फलनाश्यतया सकृदनुभूतस्य स्मरणोत्तरमस्मरणप्रसङ्गात् समानाकारस्यैव फलस्य नाशकत्वात्, समूहालम्बनादितो नैकैकगोचरक्रमिकस्मरणानुपपत्तिः, जायते च पुनः पुनः स्मरणाद्दृढतरः संस्कारः ।

गादाधरी विवृतिः ।

ननु मा भूदुपेक्षात्वं जातिस्तज्ज्ञोचरप्रयत्नाप्रयोजकत्वरूप उपाधिरेव तद्विषये उपेक्षात्वं हानोपादानभिन्नज्ञाने (१) उपेक्षात्वव्यवहारात् तदवच्छिन्नान्यत्वमेव तद्विषयकस्मृतिप्रयोजकं वाच्यं, अतएव ज्ञानस्य किञ्चिद्विषयस्मारकत्वं किञ्चिद्विषयास्मारकत्वञ्च उपपद्यते निरुक्तोपेक्षात्वस्य विषयभेदनियन्त्रितत्वात् । अथवा

(१) हीयतेऽनेनेति व्युत्पत्त्या हानपदेन निवृत्तिप्रयोजकं ज्ञानं उपादीयतेऽनेनेति व्युत्पत्त्या उपादानपदेन प्रवृत्तिप्रयोजकं ज्ञानं प्रतीयते ।

स्वसमानाधिकरणतद्विषयकजिज्ञासानुत्तरत्वं (१) तदित्याशङ्कां निराकरोति, 'नापीति, 'प्रवृत्ति-निवृत्त्यजनकत्वमिति, स्मृति-प्रयोजकभेदप्रतियोगितावच्छेदकमित्यर्थकमुपेक्षात्वमित्यनुषज्यते, तस्योपेक्षापदप्रवृत्तिनिमित्तमित्यर्थकत्वे न तदनुसङ्गसम्भवः प्रवृत्ति-निवृत्त्यजनकत्वादेरुपेक्षापदप्रवृत्तिनिमित्तत्वे तादृशज्ञानस्य स्मृत्युत्पादकतायाम् अबाधकत्वेनाग्रिमहेत्वसङ्गतेः। किन्तु स्मृति-प्रयोजकभेदप्रतियोगितावच्छेदकमिति पूरणीयम्। ननूपेक्षा-ज्ञानात् संस्कारानुत्पादेन तद्विषयकसंस्काराजनकत्वरूपोपेक्षात्वाव-च्छिन्नभेदस्तत्संस्कारजनकत्वपर्य्यवसितः तत्स्मृतिजनकतावच्छेदको वाच्य इत्याशङ्कां निरस्यति, 'नापीति, 'तज्जनकतावच्छेदकेति, संस्कारं प्रति उपेक्षासाधारणरूपेण निश्चयत्वमात्रेण हेतुत्वे उपेक्षायाः संस्काराजनकत्वं दुर्घटम् इति संस्काराजनकत्वस्य तदैवोपेक्षात्वरूपता सम्भवति यद्युपेक्षाव्यावृत्तरूपेण संस्कारजन-कता स्यात्तादृशञ्च रूपमुपेक्षान्यनिश्चयत्वादन्यत् दुर्व्वचम् अतः संस्कारं प्रत्यपि उपेक्षान्यत्वेन हेतुता वाच्या तादृशोपेक्षात्वस्य संस्काराजनकत्वरूपत्वे आत्माश्रयः (२)। स्मृत्यजनकत्वरूपत्वे च संस्कारं प्रति स्मृतिजनकत्वेन स्मृतिं प्रति च संस्कारजनकत्वेन

---

(१) अनादौ संसारेऽवश्यमेव तत्पूर्व्वं कस्यचित् तद्विषयकजिज्ञासोदयात् तद्विषयकजिज्ञासानुत्तरत्वं अप्रसिद्धमतः स्वसमानाधिकरणेति।

(२) संस्काराजनकत्वावच्छिन्नान्यत्वस्य संस्कारजनकत्वपर्य्यवसितस्य संस्कार-जनकतावच्छेदकत्वे अवच्छेद्यज्ञानं प्रति अवच्छेदकज्ञानस्य हेतुतया स्वज्ञानापेक्ष-ज्ञानत्वरूपात्माश्रयप्रसङ्गादिति भावः।

हेतुतेत्यन्योन्याश्रयः (१) इति नैतद्युक्तमित्यर्थः। ननु संस्कार-जनकतावच्छेदकस्य उपेक्षासाधारण्येऽपि उपेक्षाव्यक्तीनां तत्त-द्व्यक्तित्वेन संस्कारप्रतिबन्धकत्वोपगमात् तासां संस्कारानुपधायक-त्वनिर्व्वाहः। आंशिकोपेक्षाव्यक्तीनां तत्तद्विषकसंस्कारत्वमेव प्रतिबध्यतावच्छेदकमिति तासामप्यन्यविषयकसंस्कारोपधायक-तया अन्यविषयस्मारकतोपपत्तिरित्यत आह, 'संस्कारेति।

यत्तु ननु तत्तद्व्यक्तित्वेनैवोपेक्षाव्यक्तीनां भेदाः संस्कार-जनकतावच्छेदकाः। न चैवं भेदसहस्रस्य विशेष्य-विशेषणभावे विनिगमनाविरहः, एकैकभेदं पृथक्पृथक्निवेश्य एकैककारण-ताभ्युपगमात् एकोपेक्षाज्ञानव्यक्तिदशायाम् अन्योपेक्षाव्यक्तिभिन्न-ज्ञानसत्त्वेऽपि तदुपेक्षाव्यक्तिभिन्नज्ञानरूपकारणविरहेण संस्कारानु-त्पादसम्भवात्। न चोपेक्षाद्वयसत्त्वे सकलकारणसत्त्वात् संस्कारा-पत्तिः, तद्वारणाय तादृशव्यक्तिद्वयभेदस्य एकत्र निवेश्यत्वात् तयोर्भेदयोर्व्विशेष्य-विशेषणभावे विनिगमनाविरहात् कारणताद्वय-मिष्टमेव, उपेक्षाव्यक्तीनां तत्तद्व्यक्तित्वेन प्रतिबन्धकतामतेऽपि तत्कालीनसंयोगादिव्यक्तीनां विनिगमनाविरहेण प्रतिबन्धकतया गौरवात्, एवञ्च संस्कारानुपधायत्वरूपोपेक्षात्वावच्छिन्नभेदस्य स्मृतिजनकतावच्छेदकत्वे नान्योन्याश्रय इत्यत आह, 'संस्कारेतीत्य-वतारणम्। तदसत्, तत्तदुपेक्षान्यत्वेन कारणतामतेऽपि तेन रूपेण

---

(१) स्मृतिजनकत्वावच्छिन्नसंस्कारजनकता संस्कारजनकत्वावच्छिन्नस्मृतिजन-कतेति अतः स्वज्ञानापेक्षज्ञानापेक्षज्ञानकत्वरूपान्योन्याश्रयप्रसङ्ग इति भावः।

ज्ञानस्य संस्कारहेतुता तत्तदुपेक्षाकालीनसंयोगादिवक्तेर्व्वा तत्प्रति-बन्धकता कल्प्यते इत्यनुयोगस्याशक्यसमाधानत्वात्।

'संस्कारानुत्पत्त्यैव' इत्यस्य उपेक्षाज्ञानादित्यादिः, संस्कारा-जनकत्वस्य तदैवोपेक्षात्वरूपतासम्भवो यद्युपेक्षाधीः संस्कारं न जनयेत्, तथा सति संस्काररूपव्यापारविरहेणैव उपे-क्षाया अस्मारकत्वसम्भवे उपेक्षात्वस्य संस्काराजनकत्वरूपस्य सुनिर्व्वचत्वेऽपि तदवच्छिन्नान्यत्वस्य निष्प्रयोजनकतया स्मृति-जनकतावच्छेदकगर्भेऽनिवेशादित्यर्थः, तथाच विशिष्टस्मरणा-तिव्याप्तिर्दुर्व्वारैवेति भावः। न च तद्विषयकस्मृतौ तद्विषयक-संस्काररूपव्यापारेण यथा तद्विषयकज्ञानत्वावच्छिन्नस्य नान्यथा-सिद्धिः तथा उपेक्षान्यत्वसहिततद्रूपावच्छिन्नस्यापीति (१) तेन रूपेण स्मृतिहेतुता दुर्व्वारेति वाच्यम्। संस्कारासिद्धौ संस्कारा-जनकत्वरूपोपेक्षात्वावच्छिन्नभेदघटितधर्म्मपुरस्कारेण कारणता-कल्पनासम्भवात् तादृश(२)धर्म्मावच्छिन्नकारणतायाः संस्काररूप-व्यापारसिद्धौ अनुपजीव्यतया तद्रूपावच्छिन्नस्यान्यथासिद्धावुप-जीव्यविरोधरूपबाधकानवकाशात्।

यत्तु ननूपेक्षात्वस्यानुगतस्य निर्व्वचनासम्भवेऽपि उपेक्षाज्ञानात् स्मरणानुत्पत्त्या तत्तदुपेक्षाव्यक्तिभिन्नत्वेनैवागत्या स्मृतिहेतुत्वमुपेयं तथाच न विशिष्टस्मृतावतिव्याप्तिरित्यत आह, 'संस्कारानुत्पत्त्यैवेति, इत्यवतार्य्य उपेक्षाज्ञानात् संस्कारो नोपगम्यते गौरवात् तन्नि-

---

(१) तद्विषयकज्ञानत्वावच्छिन्नस्यापीत्यर्थः।

(२) उपेक्षान्यज्ञानत्वरूपेत्यर्थः।

व्यीहाय च संस्कारजनकतायाम् उपेक्षाभेदनिवेशस्यावश्यकत्वे स्मृतिजनकतायां न तन्निवेशः संस्काराभावेनैव उपेक्षितास्मरणोपपत्तेः। न च फल-व्यापारौ प्रति करणस्य एकरूपेण हेतुतेति नियमपरित्यागे निश्चयत्वमपि संस्कारजनकतायामेव निवेश्यतां तथाच कथमतिव्याप्तिरिति वाच्यम्। संस्कारजनकतायां निश्चयत्वनिवेशे उपेक्षान्यत्वेन सह विशेष्य-विशेषणभावे विनिगमनाविरहात् स्मृतिजनकतायामेव निश्चयत्वनिवेशौचित्यात् संशयाद्यंशिगोचरसंस्कारस्यावश्यकतया निश्चयत्वेन विशिष्टसंस्काराहेतुत्वे संशयजन्यसंस्कारे विशिष्टविषयकत्वमात्रकल्पनम् उपेक्षान्यत्वेन तदहेतुत्वे(१) विशिष्टविषयकसंस्काररूपधर्म्मिकल्पनमिति न विनिगमनाविरहेण वैपरीत्यप्रसक्तिः (२)। वस्तुत उपेक्षाज्ञानानां संस्कारप्रतिबन्धकत्वमेवोपेयते तथाच फल-व्यापारौ प्रति करणस्य एकरूपेण हेतुत्वनियमात् उभयत्रैव निश्चयत्वप्रवेशः। एतेनांशिकोपेक्षाज्ञानादन्यविषयकसंस्कारस्य प्रामाणिकतया तद्भेदाः स्मृतिजनकतायामेव निवेश्यन्ते न तु संस्कारजनकतायां तथा सति सर्व्वांशे उपेक्षाभेदैः सह विशेष्य-विशेषणभावे विनिगमनाविरहेण कारणताबाहुल्यप्रसङ्गादिति निश्चयत्वं संस्कारजनकतायामेव निवेश्यं, स्मृतिजनकतायां तन्निवेशेऽपि आंशिकोपेक्षाभेदैः सह

---

(१) संस्काराहेतुत्वे च उपेक्षाज्ञानाद्विशिष्टविषयकसंस्काररूपधर्म्मिकल्पनमिति गौरवात् न विनिगमनाविरहावकाश इति भावः।

(२) स्मृतिजनकत्वं उपेक्षान्यत्वेन संस्कारहेतुत्वं निश्चयत्वेनेति वैपरीत्यप्रसक्तिरित्यर्थः।

विशेष्य-विशेषणभावे विनिगमनाविरहतादवस्थ्यादित्यपास्तम् । तथाच स्मरणातिव्याप्तिः सुदृढैवेति व्याख्यानं, तदसत्, व्यापारासिद्धिदशायां कल्पनीयस्य तत्तदुपेक्षान्यत्वेन स्मृतिहेतुत्वस्य उत्तरकालकल्प्यव्यापारविरहेण कार्य्यातिप्रसङ्गवारणसम्भवेऽपि निराकरणासम्भवात् उक्तशङ्कया 'संस्कारानुत्पत्त्यैव' इत्यादिफक्किकावतारणासङ्गतेः ।

ननु तद्विषयकस्मृतौ तद्विषयकज्ञानत्वेन न हेतुता अपितु तद्विषयकानुभवत्वेनैव अनुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षयाऽगौरवात् स्मृत्युत्तरमपि पूर्व्वानुभवादेव स्मरणोपपत्तेः स्मृतेः स्मृतिहेतुताया अप्रामाणिकत्वात् तथाच न ज्ञानत्वघटितधर्म्मावच्छिन्नकारणताघटितानुमितिलक्षणस्य विशिष्टस्मृतावतिव्याप्तिः । न चानुभवत्वापेक्षया अगुरुणा ज्ञानत्वेनापि स्मृतिहेतुताया विनिगमनाविरहेण दुर्व्वारतया तादृक्कारणतामादायातिव्याप्तिर्दुर्व्वारैवेति वाच्यम् । अगुरुव्याप्यधर्म्मपुरस्कारेण कारणत्वसम्भवे व्यापकधर्म्मस्यान्यथासिद्धिनिरूपकत्वात् इत्याशङ्कां निरस्यति, 'नाप्यनुभवत्वेनेति, 'संस्कारस्य फलनाश्यतया' स्वजन्यस्मृतिनाश्यतया, प्रथमस्मरणेनैव पूर्व्वानुभवजन्यसंस्कारनाशे, 'सकृदनुभूतस्य' स्मरणोत्तरमननुभूतस्य विषयस्यानुभवरूपकरणव्यापारासत्त्वेन 'अस्मरणप्रसङ्गात्' स्मरणान्तरानुपपत्तेरित्यर्थः । स्वजन्यस्मरणस्य संस्कारनाशकत्वे स्मृतिसाधारणेन ज्ञानत्वेन स्मृतिहेतुत्वेऽपि घट-पटादिरूपनानाविषयावगाहिना अनुभवेन जनितस्य तावद्विषयकसंस्कारस्य घटाद्येकैकगोचरस्मरणेनापि विनाशात्तदुत्तरं पटादि-

स्मरणानुपपत्तिः तद्विषयकसंस्काराभावात्। स्मृतिजन्यघटादि-गोचरसंस्कारस्य च भिन्नविषयकतया पटादिस्मारकत्वायोगा-दिति शङ्कां निरस्यति, 'समानेति, समानाकारस्य अन्यूना-कारस्य, अतः प्रत्येकगोचरनानासंस्कारजनितसमूहालम्बनस्मरणे स्वजनकसकलसंस्कारनाशहेतुतानिर्व्वाहः। अथात्र नाशकता यदि स्वजन्यस्वान्यूनविषयकस्मृतित्वेन तदा स्वपदस्य तत्तत्संस्कार-व्यक्तिपरतायाआवश्यकत्वात् तत्तद्व्यक्तिभेदेन कारणताबाहुल्यं, तदुपगमे तत्तद्व्यक्तित्वेनैव नाशकताया युक्तत्वात् (१)। यदि च प्रतियोगितासम्बन्धेन संस्कारनाशं प्रति जनकत्वानतिरिक्त-विषयकत्वोभयसम्बन्धेन स्मृतित्वेन हेतुता जनकत्वनिवेशात् स्वजन्यसंस्कारस्य स्मृत्या न विनाशः। जनकत्वस्थले तद्घटकं पूर्व्ववर्त्तित्वमेव वा निवेश्यं नियमानन्यथासिद्धत्वप्रवेशवैफल्यात्। न च व्यधिकरणस्मृतेरपि नाशकतापत्तिः, व्यधिकरणस्मृतिं प्रत्यपि संस्कारस्य स्वरूपयोग्यतया सामानाधिकरण्यनिवे-शस्योभयमते (२) आवश्यकत्वात्। वस्तुतः सामानाधि-करण्यसहितमनतिरिक्तविषयकत्वमेव सम्बन्धः न तु जनक-त्वस्य पूर्व्वकालीनत्वस्य वा निवेशः। ज्ञानादीनां क्षणिकता-वारणाय प्रतियोगितासम्बन्धेन नाशं प्रति पूर्व्वत्वसम्बन्धेन नाशस्य सामान्यकारणताया आवश्यकत्वात् तत एव स्वजनकस्मरणेन

---

(१) तथाचानुभवत्वेन स्मृतिजनकत्वेऽपि न स्मरणोत्तरस्मरणानुपपत्तिः तस्य नाशकत्वानभ्युपगमादिति भावः।

(२) जनकत्वस्य सम्बन्धघटकत्वमते एतन्मते चेत्यर्थः।

संस्कारस्य स्वोत्पत्तिद्वितीयक्षणे नाशापत्त्यनवकाशात् तदानीञ्च स्मृतेर्विनाशेन ततस्तदुत्तरक्षणमपि (१) तन्नाशापत्त्यसम्भवात् । अनतिरिक्तविषयकत्वञ्च स्वावृत्तिविषयिताशून्यत्वं न तु स्वाविषयाविषयकत्वं, प्रमेयत्वादिना सकलप्रमेयविषयकस्मरणस्याविषयाप्रसिद्धेः संस्कारनाशकतानुपपत्तेः भावत्वादिना सकलभावादिविषयकस्मरणाद्घट इत्यादिज्ञानजन्यसंस्कारनाशापत्तेश्च इत्युच्यते, तदापि सम्बन्धमध्ये तत्तत्स्मरणव्यक्तिरूपस्वपदार्थमनन्तर्भाव्य अनतिरिक्तविषयकत्वस्यावृत्तिविषयिताद्यप्रसिद्ध्या दुर्व्वचत्वेन तत्तद्व्यक्तिविश्राम आवश्यकः । स्वनिष्ठभेदप्रतियोगितावच्छेदकविषयिताशून्यत्वरूपानतिरिक्तविषयकत्वेऽपि भेदे तत्तत्स्मृतिव्यक्तिनिष्ठत्वविशेषणमावश्यकम् अन्यथा अवच्छेदकत्वान्तस्य विषयितायामव्यावर्त्तकतापत्तेरिति चेत्, सत्यं, तत्प्रकारक-तद्विशेष्यकसंस्कारनाशं प्रति तत्प्रकारक-तद्विशेष्यकस्मृतित्वेन कारणता कार्य्यस्य सम्बन्धः प्रतियोगिता कारणस्य पूर्व्ववर्त्तित्वसहितं तदसहितं वा सामानाधिकरण्यं तत्तद्विषयकसंस्कारभेदोऽपि प्रतियोगिप्रत्यासन्नो हेतुरतो घटत्वप्रकारक-घटविशेष्यकसमूहालम्बनानात्मकस्मृत्या यथा समूहालम्बनानात्मकस्तत्प्रकारक-तद्विशेष्यकसंस्कारो नाश्यते तथा समूहालम्बनात्मकोपि तादृशसंस्कारो नाश्यताम्, अन्यविषयकस्मृतिविरहस्य तद्विषयकस्मृतिघटितसामग्रीविरहाप्रयोजकत्वादिति दूषणस्य नावकाशः । समूहालम्बनानात्मकतद्विषयकसंस्कारनाशप्रयोजकसामग्रा अन्य-

(१) स्वोत्पत्तिद्वितीयक्षणोत्तरक्षणमपीत्यर्थः ।

विषयकसंस्कारभेदरूपकारणकूटघटितत्वात् समूहालम्बनसंस्कार-नाशकसामग्र्याश्च अन्यविषयकस्मृतिघटितत्वात्, समूहालम्बन-संस्कारे च तादृश्याः कस्या अपि सामग्र्या उक्तस्थलेऽसत्त्वात्। न चैवमपि गोत्वाभाववान् गोत्वाभाव इत्यादिज्ञानजन्यसंस्कारस्य गोत्वाभाव इत्याकारकस्मरणाद्विनाशापत्तिः, तादृशसंस्कारे तादृश-स्मृतिसहकारिणां यावत्तद्विषयविषयकसंस्कारभेदानां सत्त्वात् तद्विषयकगोत्वादिविषयकसंस्कारभेदस्य च तदसहकारित्वात्, गोत्वाभावादिनिष्ठतत्सम्बन्धस्यापि तत्स्वरूपतया (१) तादृशस्मृति-नाश्यसंस्कारविषयत्वेन (२) तद्विषयकसंस्कारभेदस्यापि तादृश-सहकारित्वासम्भवादिति (३) वाच्यम्। तत्तत्प्रकारकान्यसंस्कार-नाशे तत्तत्प्रकारकसंस्कारभेदत्वेन हेतुताया उपगम्यतया गोत्वा-भाव इत्यादिस्मृतिनाश्यसंस्कारसाधारणस्य गोत्वाभावादिप्रकारक-संस्कारभेदस्य तादृशस्मृतिसहकारितया (४) गोत्वाभाववान् गोत्वा-भाव इत्यादिधीजन्यसंस्कारे तादृशभेदासत्त्वेन उक्तापत्त्यसम्भवात्, द्रव्यत्वादिना घट-पटादिविशेष्यकसंस्कारस्य तेन रूपेण घटादि-मात्रविशेष्यकस्मृतितो विनाशवारणाय तत्तद्विशेष्यकसंस्कारनाशे तत्तद्विशेष्यकसंस्कारभेदस्य हेतुत्वमपि वाच्यम् एवं समानप्रकारक-समानविशेष्यकनानासम्बन्धावगाहिसंस्कारस्य एकमात्रसंसर्गक-

---

(१) गोत्वाभावस्वरूपतयेत्यर्थः।

(२) गोत्वप्रकारक-गोत्वाभावविशेष्यकसंस्कारविषयत्वेन।

(३) तस्य सहकारित्वे तादृशभेदघटितसामग्र्यास्तादृशसंस्कारेऽभावात् तस्य तादृशस्मरणनाश्यत्वानुपपत्तेरिति भावः।

(४) गोत्वाभाव इति स्मृतिसहकारितयेत्यर्थः।

स्मृतितो विनाशवारणाय तत्तद्संसर्गकसंस्कारनाशे तत्तत्संसर्गक-संस्कारभेदस्यापि हेतुता बोध्या। वस्तुतस्तादृशधर्म्मिविशेष्य-तानिरूपिततत्संसर्गावच्छिन्न-तादृशधर्म्मप्रकारताकान्यसंस्कारनाशे तथाविधतादृशधर्म्मप्रकारताकसंस्कारभेदो हेतुरित्येवोपगन्तव्यं अन्यथा द्रव्यत्व-पृथिवीत्वोभयरूपेण घटं पटञ्चावगाहमानस्य संस्कारस्य द्रव्यत्वमात्रेण च घटं पृथिवीत्वमात्रेण च पटमवगाहमानात् स्मरणादिनाशापत्तेः तत्र द्रव्यत्वमात्रेण घटं पृथिवीत्वमात्रेण पट-मवगाहमानस्य संस्कारस्य यादृशसामग्रीतो नाशस्तादृशसामग्रा-स्तन्नाश्यतत्वात् तादृशसंस्कारस्यापि (१) द्रव्यत्व-पृथिवीत्वोभयप्रकारकतया घट-पटोभयविशेष्यकतया च तन्नाशकसामग्र्यां तत्तत्प्रकारकभेद-तत्तद्विशेष्यकसंस्कारभेदाप्रवेशात् तन्नाशकसामग्रीघटकद्रव्यत्व-पृथिवीत्वेतरधर्म्मप्रकारकसंस्कारभेद–घट-पटभिन्नविशेष्यकभेदानाञ्चोक्तसमूहालम्बनसंस्कारेऽपि सत्त्वात्। संस्कारनाशं प्रति तादात्म्यसम्बन्धेन संस्कारत्वेनाप्येकहेतुता कल्पनीया अतः संस्कारनाशप्रयोजकसामग्र्या नादृष्टादिसाधारण्यम् (२)।

केचित्तु समूहालम्बनजन्यघट-पटादिसंस्कारा भिन्नभिन्ना एव संस्कारयौगपद्ये क्षतिविरहात् तथाच स्ववृत्तिविषयतावत्त्वस्यापि स्मृतिनिष्ठनाशकतावच्छेदकप्रत्यासत्तिघटकत्वोपगमात् घटादि-स्मृत्या पटादिसंस्कारस्य न विनाशनं तस्य तत्स्मृतिवृत्तिघटादि-

(१) द्रव्यत्वमात्रेण घटं पृथिवीत्वमात्रेण पटमवगाहमानस्य संस्कारस्येत्यर्थः।

(२) अन्यथा तादृशतादृशसंस्कारभेद-तत्तत्प्रकारक-तत्तद्विशेष्यकस्मृत्यादि-घटितसामग्र्याः कारणताघटकसम्बन्धेनादृष्टेऽपि सत्त्वात् अदृष्टसाधारण्यं स्यादिति भावः।

विषयावत्त्वाभावादित्युत्तरकालं पटादिस्मरणनिर्व्वाहः। एवं घट-वद्भूतलमित्यादिविशिष्टज्ञानाद्घट इत्यादिस्मृतिनिष्ठप्रत्येकपदार्थीय-विषयताशून्या एव विशिष्टगोचरसंस्कारा उपगम्यन्ते ते च न तादृशस्मृतितो विनश्यन्ति तत्र तादृशस्मृतिनिष्ठविषयतावत्त्वविर-हात् अत उत्तरकालं विशिष्टस्मृतिनिर्व्वाहः। घट इत्यादिस्मृतेरपि घटादिविषयकसंस्कारत्वावच्छिन्नविशिष्टसंस्कारफलतया तद्व्याव-र्त्तनाय फलस्य समानाकारकताकथनसङ्गतिरित्याहुः।

स्मृतिवृत्तित्वाभावविशिष्टविषयताविरहः संस्कारप्रत्यासन्न-स्तन्नाशकः एकैकगोचरस्मृतिदशायां संस्कारनिष्ठविषयान्तरविषय-तायां स्मृतिवृत्तित्वाभावसत्त्वेन तया प्रतिबन्धान्न समूहालम्बन-संस्कारनाश इत्यपरे।

नन्वनुगतरूपेण स्मृतेः संस्कारनाशकत्वं निर्युक्तिकं भवतां चरमस्मृतिजन्यस्येव ममाप्यनुभवजन्यसंस्कारनाशस्यापि अननुगते-नापि कालादिना नाशसम्भवात्। न च यत्र यत्र विषये चरम-स्मृतिव्यक्तय उपेक्षारूपास्तत्रानुभवजन्यसंस्कारस्यानुगतात् स्मरण-रूपनाशकान्नाशोपगम एव युक्तस्तत्र चरमस्मृतिजन्यसंस्कारस्या-प्रसिद्धा अननुगतकालादेर्नाशकताया अनावश्यकत्वादिति वाच्यम्। ज्ञानत्वेन स्मृति-संस्कारहेतुतामते चरमस्मृतिविशेषाणां संस्कारा-जनकत्वनिर्व्वाहाय तत्तद्व्यक्तित्वेन तासां संस्कारप्रतिबन्धकतायाः कल्पनीयतया अनुभवत्वेन स्मृति-संस्कारहेतुत्ववादिन उक्तस्थलेऽनु-भवजन्यसंस्कारनाशेऽननुगतानां हेतुत्वोपगमेऽपि गौरवानवकाशात् चरमस्मृतिव्यक्तीनामपि तत्तद्व्यक्तित्वेन संस्कारनाशकतासम्भवात्

संस्कारस्य फलनाश्यताप्रवादसङ्गतिः इत्यनुभवत्वेन स्मृतिसंस्कार-हेतुतायां नोक्तबाधकावकाश इत्यत आह, 'जायते चेति, अनुभव-जन्यसंस्कारापेक्षया स्मरणात् दृढ़ः तदुत्तरस्मरणादितश्च दृढ़तर-दृढ़तमाः संस्कारा जायन्ते इत्यवश्यमेव स्वीकार्य्यम्, दार्ढ्यञ्च उत्कर्षरूपो जातिप्रभेदो झटितिस्मृत्युत्पादप्रयोजकः। न च दैववशसम्पन्नझटित्युद्बोधकसमवधानादेव स्मृतिनियमोपपत्तौ न तत्प्रयोजकतया संस्कारगतजातिविशेषः सिद्ध्यतीति वाच्यम्। यादृशसम्बन्धिविशेषज्ञानसत्त्वे पुनः पुनः स्मरणोत्तरं नियमतः स्मृतिर्न त्वनुभवमात्रोत्तरं तादृशोद्बोधकघटितसामग्र्या अनुगमाय संस्कारगतजातिविशेषस्यावश्यकत्वात् झटिति स्मृतेर्दैवाधीनत्वमुप-गम्य संस्कारातिशयखण्डने शास्त्रादावभ्यासोऽपि नोपयुज्येतेति नानुभवत्वेन संस्कारहेतुतासम्भवः इत्याशयः। इदन्तु बोध्यं दृढ़-दृढ़तरादिसंस्कारं प्रति समानविषयकस्मृतित्व-तादृशस्मरणो-त्तरस्मरणत्वादिना न हेतुता पुनःपुनरनुभवादपि संस्कारदार्ढ्य-दर्शनात्। नापि समानविषयकज्ञानोत्तरज्ञानत्वादिना उपेक्षो-त्तरोत्पन्नोपेक्षातो दृढ़संस्कारानुदयात् रोगादिना ज्ञातार्थगोचर-संस्कारनाशोत्तरजातज्ञानात्तदनुदयाच्च। किन्तु समानविषयकसं-स्कारत्वेन दृढ़संस्कारं प्रति, दृढ़-दृढ़तरतादृशसंस्कारत्वेन च दृढ़तर-दृढ़तमसंस्कारं प्रति जनकता, अतएव भावनायाः पटुतरभावना-जनकत्वप्रवादः। भावनया भावनान्तरजनने च उत्तरोत्तरज्ञानं सहकारि तस्य च संस्कारत्वावच्छिन्नं प्रत्येव स्मृतिसाधारणज्ञानत्व-घटितधर्म्मपुरस्कारेणैव हेतुता। न चैवं स्वजन्यज्ञानसहकारेणैव

स्वजनकज्ञानसहकारिणापि संस्कारः पटुतरसंस्कारं जनयत्विति वाच्यम् । स्वजन्यसंस्कारानुपहितज्ञानत्वेनैव संस्कारहेतुत्वोपगमात् अन्यथा सर्व्वत्र विनश्यदवस्थज्ञानात् पटुतरसंस्कारान्तरस्य दुर्व्वारत्वात् अनन्ताप्रामाणिकसंस्कारकल्पनागौरवेण इष्टापत्तेरयोगादिति ।

---

अनुमानदीधितिः ।

**परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनानुदयात् इदमेव चान्यत्र सामान्यस्य च हेतुतावच्छेदकत्वे वीजम् अभिहितञ्च तात्पर्य्यटीकायां प्रथमसूत्रेऽवयवविवेचनप्रस्तावे मिश्रैः, स्मृतीनां स्वकार्य्यसंस्कारविरोधिनीनामसहभावादिति चेन्न, चरमज्ञानपदस्यानुभवपरत्वात्साक्षात्तज्जन्यत्वस्य वा विवक्षितत्वादित्यपि कश्चित् । किञ्च व्याप्यविशेष्यकात्पक्षविशेष्यकाच्च परामर्शादनुमितिदर्शनाच्च तदुभयवैशिष्ट्यावगाहिनिश्चयत्वेन तत्र हेतुत्वं लक्षणघटकमपि तदेव ।**

---

गादाधरी विवृतिः ।

ज्ञानत्वेन स्मृति-संस्कारहेतुत्वे युक्त्यन्तरमप्याह, 'परित्यज्य चेति, निश्चितः कार्य्यतावच्छेदकावच्छेदेनाव्यभिचारो यद्रूपावच्छिन्नस्य तन्निश्चिताव्यभिचारकं, गृह्यमाणः कार्य्ये संशयसाधारणज्ञान-

विषयीभूतौ यद्रूपावच्छिन्नस्य व्यभिचारस्तद्गृह्यमाणव्यभिचारकं, तथाच ज्ञानत्वावच्छिन्नस्य स्मृति-संस्कारयोर्न व्यभिचारशङ्कापि स्मृतेः संस्कारादिजनकत्वस्य सन्दिग्धत्वात् अनुभवत्वावच्छिन्नस्य तत्र व्यभिचारः सन्दिग्ध इति न तेन रूपेण कारणताग्रहः सम्भवतीति भावः। यद्यपि व्यभिचारसंशयस्य ग्राह्यसंशयतया कल्पनात्मक-कारणताग्रहे न विरोधित्वसम्भवः ग्राह्यसंशयस्य परोक्षज्ञाना-विरोधितायाः सर्व्वसम्मतत्वात्, तथापि कारणतायां सामान्य-विशेषरूपावच्छिन्नत्वयोः संशये सामान्यरूपस्य नियतपूर्व्ववर्त्ति-तावच्छेदकत्वं क्लृप्तं विशेषरूपस्य तथात्वमसिद्धतया कल्प्यमिति तस्य कारणतावच्छेदकत्वे कल्पनागौरवमिति गौरवप्रतिसन्धानेन प्रतिबन्धात् विशेषरूपे अवच्छेदकत्वग्रहो न सम्भवतीति बोध्यम्। 'इदमेव' निश्चिताव्यभिचारकत्वमेव, 'अन्यत्र' प्रवृत्त्यादिकार्य्ये, 'सामान्यस्य' इष्टतावच्छेदकप्रकारकप्रवृत्तिविषयविशेष्यकनिश्चय-त्वाद्यपेक्षया अधिकसंग्राहकस्य तदुभयवैशिष्ट्यावगाहिनिश्चयत्वादेः, संस्कारस्य स्मृतिजन्यत्वं नापसिद्धान्त इत्याविष्कर्त्तुं तत्र टीकाकार-संवादमाह, 'अभिहितञ्चेति, 'प्रथमसूत्रे' प्रमाण प्रमेयेत्यादिसूत्रे, 'अवयवविवेचनप्रस्ताव इति, तत्र पूर्व्वपूर्व्ववर्णस्मृतिसहित उत्तर-वर्णानुभव एव पदप्रत्यक्षहेतुरस्तु इत्याक्षेपे, समाधानं 'स्वकार्य्येति, स्वं स्मृतिः, तत्कार्य्यो यः संस्कारः स एव स्वानन्तरोत्पन्नविशेष-गुणविधया विरोधी नाशको यासां तासामित्यर्थः। एतच्च तृतीय-क्षणानवस्थाननिर्व्वाहकं त्रिचतुरादिव्यक्तीनां एकक्षणानवस्थान-रूपासहभावप्रयोजकतया अभिहितम्। 'चरमज्ञानपदस्येति,

'अनुभवपरत्वात्' अनुभवत्वावच्छिन्नरूपविशेषार्थकत्वात्, तथाच तादृशनिश्चयत्वावच्छिन्नजन्यानुभवत्वं लक्षणं तस्य चानुभवत्व-शून्यायां स्मृतावतिव्याप्तिर्न शङ्कास्पदमपीति भावः। अन्यस्य समाधानान्तरमुपन्यस्यति, 'साक्षादिति, साक्षात्तज्जन्यत्वं तज्जन्या-जन्यत्वे तज्जन्यतावच्छेदकावच्छिन्नाजन्यत्वे वा सति तज्जन्यत्वं परा-मर्शजन्यतावच्छेदकविशिष्टगोचरसंस्कारत्वावच्छिन्नजन्यायां स्मृतौ नास्तीति भावः। अत्र गौरवमस्वरसबीजम्। विशिष्टवैशिष्ट्यबोध-हेतुतायां ज्ञानत्वनिवेशव्यवस्थापनायाः शक्यत्वे तत्रातिव्याप्तिर्यथा वारणीया विशिष्टस्मरणेऽपि तेनैव प्रकारेण तद्वारणं सम्भवतीति चरमज्ञानपस्यानुभवपरत्वमपि नावलम्बनीयमित्याशयवानाह, 'व्याप्येति, 'व्याप्यविशेष्यकात्' आधेयतासम्बन्धेन व्याप्यरूप-विशेष्ये पक्षप्रकारकात् पर्व्वते वह्निव्याप्य इत्याकारकात्, 'पक्ष-विशेष्यकात्' अधिकरणतासम्बन्धेन पक्षरूपविशेष्ये व्याप्यप्रकार-कात् वह्निव्याप्यवान् पर्व्वत इत्याकारकात्, 'परामर्शात्' 'अनु-मितिदर्शनात्' अविलक्षणायाः पर्व्वतो वह्निमानित्यनुमितेरनु-भवात्, 'तदुभयवैशिष्ट्यावगाहिनिश्चयत्वेन' उभयानुगमकेन व्याप्य-पक्षोभयनिरूपितवैशिष्ट्यविषयताशालिनिश्चयत्वेन, 'तत्र हेतुत्वं' अनुमितिं प्रति कारणत्वं, न तु विशिष्टवैशिष्ट्यबोध-विशिष्ट-स्मरणजनकतावच्छेदकेन व्याप्यप्रकारक-पक्षविशेष्यकनिश्चयत्वा-दिना, अन्यतरासंग्रहादित्यर्थः (१)। ननु वैशिष्ट्यमत्र व्याप्यता-

(१) वह्निव्याप्यः पर्व्वते इत्यादिज्ञानासंग्राहकत्वादित्यर्थः।

वच्छेदकसम्बन्धरूपं विवक्षणीयं अन्यथा अतिप्रसङ्गात् (१) एवञ्च (२) संयोगावच्छिन्नाधारतादिकमेव धूमादेर्व्याप्यताघटकं न त्वाधेयत्वम्, तत् कुत उक्तरूपेण पक्षप्रकारकस्य पर्व्वते धूम-इत्यादिज्ञानस्य संग्रहः संयोगावच्छिन्नाधेयत्वस्यैव संसर्गत्वात्। न च पर्व्वते धूम इत्यादावपि व्याप्यताघटकः संयोगादिरेव सम्बन्धो न त्वाधाराधेयभाव इति वाच्यम्। पर्व्वतादिप्रति-योगिकसंयोगादेर्धूमादिरूपविशेष्यानुयोगिकत्वविरहेण तादृश-प्रत्ययस्य भ्रमत्वापातात्। आधाराधेयभावानवगाहने सप्तम्युल्लेखा-नुपपत्तेश्च। न च संयोगाद्यवच्छिन्नाधेयत्वमेव तत्र सम्बन्धः तत्-संसर्गकत्वेऽपि तदन्तर्गतसंयोगादिसंसर्गकत्वमक्षतमिति वाच्यम्। विशिष्टसंसर्गकत्वेऽपि विशेषणीभूतसंयोगादेः संसर्गतावच्छेदकतया तद्विषयतायाः प्रकार-विशेष्योभयनिरूपितत्वाभावात् अन्यथा (३) संयोगाद्यवच्छिन्नाधेयतासम्बन्धेन व्याप्यप्रकारकात् व्याप्ये पर्व्वत-इतिज्ञानात् संयोगाद्यवच्छिन्नाधारतासम्बन्धेन पक्षप्रकारकात् पर्व्वतवान् धूम इत्यादिज्ञानाच्चानुमितिप्रसङ्गात्। एतेनाधारा-धेयत्वयोस्तुल्यवित्तिवेद्यतया संयोगाद्यच्छिन्नाधारत्वावगाहित्वेन तादृशाधेयत्वावगाहित्वेन वा व्याप्य-पक्षविशेष्यकपरामर्शयोरनुगम-इत्यपि निरस्तम्। व्याप्ये पर्व्वत इत्यादि धियो दुर्व्वारत्वात्।

(१) कालिकसम्बन्धेन व्याप्यवत्तापरामर्शात् अनुमित्यापत्तिरूपातिप्रसङ्गा-दित्यर्थः।

(२) तादृशसम्बन्धरूपवैशिष्ट्यस्य विवक्षणीयत्वे च।

(३) संसर्गविशेषणीभूतसंयोगादिविषयताया अपि प्रकार-विशेष्योभयनिरू-पितत्वस्वीकारे इत्यर्थः।

व्याप्यनिरूपिताधारत्वावगाहित्वेन पक्षनिरूपिताधेयत्वावगाहित्वेन वा अनुगमस्यान्यनिरूपिताधारत्वादिसम्बन्धावगाहिभ्रमासंग्रहेणासम्भवात्। अथ पर्व्वते धूम इत्यादिसमभ्युल्लिखितप्रतीतौ संयोगावच्छिन्नाधेयत्वमेव धूमे पर्व्वतस्य संसर्गतया भासतां सा च पर्व्वत-धूमयोः संयोगानवगाहितया अनुमितावहेतुरेव उक्तरूपेणानुगमस्तु संयोगसम्बन्धेनैव व्याप्यांशे यः पक्षप्रकारकः यश्च पक्षांशे व्याप्यप्रकारकस्तयोरेव परामर्शयोः स्वीकरणीयः प्रथमज्ञानस्य उक्तयुक्त्या भ्रमत्वेऽपि तस्यानुमितिहेतुतायास्तेनाप्रत्याख्येयत्वात् इति चेन्न, व्याप्यतावच्छेदकसंयोगेन व्याप्यस्य पक्षवत्तायाः तत्र साध्यासत्त्वेऽप्युपपद्यमानतया व्याप्यांशे तेन सम्बन्धेन तद्वत्ताज्ञानस्य तत्र पत्ते साध्यानुमितिहेतुताया अनुभवविरुद्धत्वात्, अन्यथा समवायादिना द्रव्यत्वादिव्याप्ये गुणादौ तेन सम्बन्धेन सत्तादिप्रकारकप्रमात्मकज्ञानात् सत्तादौ बाधानवतारदशायां द्रव्यत्वादिसिद्धिप्रसङ्गः (१)। अत्राहुः। आधारत्वाधेयत्वयोस्तुल्यवित्तिवेद्यतामते पर्व्वते धूम इत्यत्राधारतानिरूपिताधेयता धूमवान् पर्व्वतइत्यत्र च आधेयतानिरूपिताधारता सम्बन्धः न तु तुल्यमुभयोः संसर्गतया भानं प्रत्येकमुभयोरुभयप्रकारतापत्तेः, एवञ्च उभयत्रैवाधारत्वविषयता पर्व्वतविषयतया आधेयत्वविषयता च धूमविषयतया निरूपिता, तथाच पक्षविषयतानिरूपिता या आधारत्वविशेषविषयता तन्निरूपितनिरूपितत्वविषयतानिरूपिताधेयत्वविषयता-

---

(१) अथेत्यादिः सिद्धिप्रसङ्ग इत्यन्तः पाठः कस्मिंश्चित् आदर्शपुस्तके नास्ति।

निरूपितव्याप्यविषयताशालित्वेन द्वयोरनुगमः। व्याप्ये पर्व्वतः पर्व्वतवान् धूम इत्यत्र च पक्षविषयतानिरूपिताधेयत्वविषयता व्याप्यविषयता चाधारत्वविषयतानिरूपितेति वैपरीत्यान्नोक्तानुगमकरूपस्यैतत्साधारण्यमिति नातिप्रसङ्गः। न चाधारत्वाद्यवगाहित्वस्य कारणतावच्छेदकत्वे तदनवगाहिनो व्याप्यताघटकशुद्धसंयोगादिना पक्षे हेतुमत्ताज्ञानादनुमित्यनुदयप्रसङ्ग इति वाच्यम्। प्राचां मते आधाराधेयभावगर्भस्य हेतुसामानाधिकरण्यस्य व्याप्तिघटकतया हेतुनिरूपिताधारतावगाहिधिय एवानुमितिजनकत्वात्। यदि च संयोगादिरिव संसर्गतया व्याप्तिप्रविष्टहेतुसामानाधिकरण्यघटकोन त्वाधारत्वं तदा संयोगादेर्य्यत्र हेतुतावच्छेदकसम्बन्धता तत्र तेन सम्बन्धेन व्याप्यप्रकारकज्ञानमेवानुमितिजनकम् न तु संयोगाद्यवच्छिन्नाधेयतासम्बन्धेन पक्षप्रकारकं व्याप्यविशेष्यकज्ञानं, हेतु-पक्षयोः सम्बन्धविधया व्याप्यतावच्छेदकसम्बन्धानवगाहनात्, तस्याधिकविषयत्वेन गौरवस्य पक्षविशेष्यकपरामर्शहेतुतायां विनिगमकत्वाच्च, परन्तु यत्र तादात्म्यसम्बन्धेन हेतुता तत्रैव व्याप्य-पक्षविशेष्यकपरामर्शयोर्व्याप्य-पक्षोभयविषयतानिरूपिततादात्म्यसंसर्गताकज्ञानत्वेन हेतुता तत्र च न कश्चिदतिप्रसङ्गः, निष्कृष्टजातिघटितानुमितिलक्षणस्य आवश्यकत्वेन तादृशकारणताघटितलक्षणस्यैव सर्व्वसाधारण्यसम्भवात्। न च जातिघटितलक्षणे जातावनुभवत्वव्याप्यत्वस्यावश्यं निवेशनीयतया स्मृतौ समानाकारत्वेन कार्य्य-कारणभावव्यवस्थापनमग्रे विफलं तावतैव स्मृतावतिप्रसङ्गवारणसम्भवादिति वाच्यम्। कार्य्यता-

समानाधिकरणानुभवत्वव्याप्यजातिघटितलक्षणापेक्षया लाघवेन कार्य्यतावच्छेदकजातिघटितलक्षणस्यादरणीयतया स्मृतौ व्याप्य-पक्षोभयविशेष्यकपरामर्शद्वयसाधारणरूपेण कारणत्वे तादृश-कारणताप्रतियोगिककार्य्यतावच्छेदकस्मृतित्वजातिमादाय स्मरणा-तिव्याप्तेः प्रसक्त्या तादृशलक्षणाभिप्रायेण अनुभवत्वव्याप्यजाति-घटितलक्षणेऽपि स्मृतावनुगतरूपेणाहेतुत्वे अनुभवत्वान्यानुभवान्या-समवेतत्वरूपानुभवत्वव्याप्यत्वमुपेक्ष्य लघोरनुभवनिष्ठभेदप्रतियोगि-तावच्छेदकत्वरूपस्य निवेशनं सम्भवतीत्यभिप्रायेण वा स्मृतौ विशेषरूपेण हेतुत्वव्यवस्थापनसङ्गतिः लक्षणेऽपि तादृश्येव कारणता विशिष्टवैशिष्ट्यबोधादावतिव्याप्तिवारणाय निवेश्येत्यवधेयम् । 'लक्षणघटकमपि तदेवेति, 'तदेव' उभयवैशिष्ट्यावगाहिनिश्चयत्व-रूपानुगतधर्म्मावच्छिन्नकारणत्वमेव प्रकृतलक्षणघटकमुपेयमित्यर्थः; अन्यरूपावच्छिन्नहेतुताघटितस्य लक्षणस्यालक्ष्य एव सत्त्वादिति भावः ।

---

अनुमानदीधितिः ।

एकतरविशेष्यकज्ञानादन्यतरविशेष्यकस्मरणाभावात् अन्यथा नियमेन स्मृतेरुभयविशेष्यकत्वप्रसङ्गात् समान-प्रकारकत्वेनैव ज्ञान-स्मरणयोः कार्य्य-कारणभावाच्च तत्र विशिष्यैव कार्य्य-कारणभावः न तूक्तरूपेण गौरवा-न्मानाभावाच्च इत्यपि केचित् । एवञ्च विशिष्टवैशिष्ट्य-

बोधादौ क्वापि नातिप्रसङ्गशङ्कापि वह्न्याद्यनुमितौ वह्न्यादिव्यभिचारधीविरोधिधीविषयधर्म्मप्रकारकपक्ष-धर्म्मताज्ञानत्वेन हेतुतामते तु नितरां तथैव लक्षणे निवेशात्। अतएव व्याप्यवत्पक्षाद्यभावग्रहं प्रति व्याप्य-वत्पक्षादिज्ञानत्वेन हेतुत्वेऽपि न क्षतिः व्याप्त्यविषयक-त्वेन वा जन्यं ज्ञानं विशेषणीयम्। एतेन स्मृतिं प्रति संस्कारद्वारा अनुभवं प्रति च साक्षाद्विशेषणधियोर्हेतु-त्वस्य निर्व्विकल्पकात्मकस्य वा स्मरणस्यानुभवं प्रत्येव वा तस्या हेतुत्वस्य नियमतः कृतिसाक्षात्कारपूर्व्वं विषयस्मृतेश्च कल्पनात् व्याप्यवत्पक्षवत्त्वादिज्ञानेऽति-व्याप्तिरित्यपि परास्तम्।

---

गादाधरी विवृतिः।

विशिष्टस्मृतिकारणता नोक्तानुगतरूपावच्छिन्ना अपि तु विशेषरूपावच्छिन्नेति न तत्रातिव्याप्तिरित्याह, 'एकतरेत्यादिना 'तत्र विशिष्यैव कार्य्य-कारणभावः' इत्यन्तेन, 'तत्र' स्मृतिस्थले; 'विशिष्यैव' व्याप्यप्रकारकपक्षविशेष्यकस्मृतित्व-तादृशनिश्चयत्वादि-रूपविशेषधर्म्ममुपादायैव, 'कार्य्य-कारणभावः,' कल्प्यत इति शेषः। तत्र हेतुमाह, 'समानप्रकारकत्वेनैव ज्ञान-स्मरणयोः कार्य्य-कारणभावाच्चेति, तृतीयाया वैशिष्ट्यार्थकत्वात् 'समानप्रकारक-त्वेनेत्यस्य समानप्रकारकयोरित्यर्थः। तथाचासमानप्रकारकज्ञानस्य

स्मरणाहेतुत्वादित्यवधारणार्थः। एतावतानुगतरूपस्य कारणतातिरिक्तवृत्तित्वलाभः। असमानप्रकारकज्ञानस्य स्मृत्यकारणत्वे तस्य फलानुत्पादकत्वं हेतुमाह, 'एकतरेति व्याप्यादिमात्रविशेष्यकज्ञानात् पक्षादिविशेष्यकस्मरणानुत्पत्तेरित्यर्थः, एतदेव द्रढ़यति, 'अन्यथेति एकतरविशेष्यकज्ञानादपि अन्यतरविशेष्यकस्मृत्युत्पादोपगमे, व्याप्यादिविशेष्यकस्मृतीनां पक्षादिविशेष्यकत्वनियमापत्तेरित्यर्थः।

केचित्तु 'नियमेनेत्यत्र अकारप्रश्लेषः, तथाच 'अनियमेन' नियामकाभावेन, 'स्मृतेः' स्मृतिमात्रस्य, 'उभयविशेष्यकत्वप्रसङ्गादिति व्याचक्षते।

'विशिष्टवैशिष्ट्यबोधादाविति विशेषणतावच्छेदकप्रकारकविशेषणविशेष्यकनिश्चयत्वावच्छिन्नजन्यव्याप्यविशिष्टपक्षवैशिष्ट्यबोधादावित्यर्थः, 'आदिना, विशिष्टस्मृतिपरिग्रहः। व्यतिरेकिणि व्यतिरेकव्याप्तेरेव गमकतापक्षे अन्वय-व्यतिरेकव्याप्तिप्रकारतयोर्व्यभिचारधीप्रतिबन्धकतावच्छेदकत्वेनानुगमय्य कारणतावच्छेदकत्वमते तादृशकारणताया एव लक्षणे निवेशात् एकविधव्याप्त्यवगाहिज्ञानादन्यविधव्याप्तिविषयक-विशिष्टवैशिष्ट्यबोधाद्यनुदयात् तज्जनकतावच्छेदकगर्भे विशिष्यैव तत्तद्व्याप्तिविषयतानिवेशेन एकरूपेणानुमिति-विशिष्टवैशिष्ट्यबोधादिहेतुताविरहाच्चात्र नातिव्याप्तिप्रसक्तिरित्याह, 'वह्न्याद्यनुमितावित्यादिना, विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयहेतुतानभ्युपगन्तृमिश्रमते व्याप्यविशिष्टपक्षवैशिष्ट्यावगाहिप्रत्यक्षसामान्येऽति-

व्याप्तिविरहेऽपि अभावबुद्धौ प्रतियोगितावच्छेदकप्रकारकप्रति-
योगिविशेष्यकनिश्चयत्वेन हेतुता मिश्रेणावश्यं स्वीकरणीयेति
वह्निव्याप्यवान् पक्षो नास्तीत्यभावग्रहे तन्मतेऽप्यतिव्याप्तिरस्तीति
दर्शितरीत्यैव सा वारणीया इत्याह, 'अतएवेति, 'अतएव' उक्तानु-
गतरूपावच्छिन्नकारणताया लक्षणे प्रवेशादेव, 'व्याप्यवत्पक्षाद्यभाव-
ग्रहं प्रतीति पक्षतावच्छेदकावच्छिन्नविशेषणतया व्याप्तिविशिष्टाव-
च्छिन्ना या प्रतियोगिता तन्निरूपितानुयोगिताप्रकारकाभाव-
लौकिकप्रत्यक्षं प्रतीत्यर्थः, 'व्याप्यवत्पक्षादिज्ञानत्वेन' व्याप्ति-
विशिष्टप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यकनिश्चयत्वेनेत्यर्थः ।
दण्डो रक्तो नास्तीत्यभावग्रहस्य दण्डो रक्तो न वेति संशयादनु-
त्पत्तेरानुभविकतया विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रका-
रकधीहेतुतावादिनां तद्विशेषहेतुतायामिव मिश्रमते सधर्म्मि-
तावच्छेदककप्रतियोगितावच्छेदकप्रकारकज्ञानहेतुतायां निश्चय-
त्वनिवेशस्यावश्यकत्वादिति भावः । 'न क्षतिः' नातिव्याप्तिः,
व्याप्यपक्षविशेष्यकयोरन्वय-व्यतिरेकव्याप्तिप्रकारकयोः परामर्शयो-
रनुगमकरूपस्याभावप्रत्यक्षजनकतानवच्छेदकत्वादिति भावः ।
यदि चानुमिति-परामर्शयोः समानविशेष्यकत्वानुभवानुरोधात्
विनिगमकान्तराद्वा (१) पक्षविशेष्यक एव परामर्शोऽनुमितिहेतु-
रूप्यते व्यतिरेकिणि च व्यतिरेकसहचारेण अन्वयव्याप्तिरेव
गृह्यते इति मतं, व्यतिरेकव्याप्तेरनुमितिप्रयोजकत्वेऽपि मणि-

(१) आधेयत्वीयसांसर्गिकविषयतायाः कारणतावच्छेदककोटिनिवेशे गौरवं
विनिगमकम् ।

मन्त्वादित्यायेन विरोधिताया अप्रामाणिकतया अनुगमासम्भवेन पृथक् पृथगेव व्याप्तिज्ञानयोरनुमितिहेतुता व्यतिरेकग्रन्थे दर्शनीयरीत्या च (१) व्यभिचारवारणं, तदा नोक्तरीतिद्वयेन विशिष्ट-वैशिष्ट्यबोधाद्यतिव्याप्तिवारणसम्भवः, न वा पूर्व्वोक्तरीत्या (२) अनुद्बुद्धसंस्कारात् विशिष्टवैशिष्ट्यबोधवारणाय तद्धेतुतायां ज्ञानत्व-प्रवेशस्यावश्यकत्वादित्यालोच्य तदतिव्याप्तिवारणाय विशेषणान्तरं प्रवेशयति, 'व्याप्यविषयकत्वेन वेति, लिङ्गोपधानस्य मणिकृता अनभ्युपगमात् तन्मतेऽसम्भवेपि न क्षतिः। उक्तविशिष्टवैशिष्ट्यबोध-विशिष्टस्मरणादेर्व्याप्तिविषयकत्वनियमान्नातिव्याप्तिरिति भावः। ननु अनुद्बुद्धसंस्काराद्विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षादिवारणाय उद्बो-धकाभावविशिष्टसंस्काराद्यन्यत्वमेव विशेषणतावच्छेदकप्रकारक-हेतुतायां निवेश्यं न तु ज्ञानत्वं पूर्व्वोपदर्शितव्यभिचारस्य दुर्व्वार-त्वात् (३) अनन्यगतिकतया जनकतावच्छेदकगौरवस्यादोषत्वात् भेदस्याव्याप्यवृत्तितया उपगन्तव्यतया उद्बुद्धसंस्कारे उद्बोधका-भावविशिष्टतद्भेदसत्त्वात् तादृशात् संस्कारात् विशिष्टवैशिष्ट्यस्मरण-निर्व्वाहः, संस्कारनिष्ठत्वविशेषितस्य उद्बोधकाभाववैशिष्ट्यस्यात्य-न्ताभाव एव वा निवेश्यः स च उद्बोधकासमवहितज्ञानादि-साधारणोऽपि, तथाच ज्ञानत्वस्य विशिष्टवैशिष्ट्यधीजनकतायाम-निवेशादेव तत्रातिव्याप्तिवारणसम्भवे किं व्याप्यविषयकत्वनिवे-

---

(१) कार्य्यतावच्छेदककोटौ अव्यवहितोत्तरत्वनिवेशरीत्या चेत्यर्थः।

(२) ज्ञानोपरमेऽपीत्यादिरीत्या।

(३) प्रतिसाक्षात्कारादौ व्यभिचारस्य दुर्व्वारत्वादित्यर्थः।

सनेन, विशिष्टस्मरणातिव्याप्तेरनुभवत्वनिवेशेनापि वारणसम्भवा-दित्याशङ्क्य ज्ञानत्वेन विशिष्टवैशिष्ट्यबोधहेतुतायां व्यभिचारमुद्धरन् व्याप्यविषयकत्वनिवेशस्य तदतिव्याप्तिवारणप्रयोजनकत्वं दर्शयति, 'एतेनेत्यादिना, प्रथमतो विशिष्टवैशिष्ट्यस्मरणे व्यभिचारमुद्धरति, 'स्मृतिं प्रतीत्यादिना कल्पत्रयेण, 'संस्कारद्वारेति 'विशेषणधियो हेतुत्वस्य कल्पनादित्यनेनान्वयः, तथाच न स्मृतौ ज्ञानत्वावच्छिन्नस्य व्यभिचारः । विशेषणज्ञानजन्यसंस्कारोत्पत्तिक्षण एव विशिष्टानु-भवस्योत्पत्त्या तत्र संस्कारद्वारा हेतुत्वासम्भवेऽपि न क्षतिः साक्षादेव तत्र तथात्वादित्याह, 'अनुभवं प्रति चेति । न च साक्षाद्धेतुत्वे स्मृतौ परम्परया हेतुत्वे चानुभवे व्यभिचारात् कथमयं कल्पः सम्भवदुक्तिक-इति वाच्यम् । स्व-स्वव्यापारान्यतरत्वावच्छेदेन नियतपूर्व्ववर्त्तिताया-एव कारणताघटकत्वात् प्रत्येकं व्यभिचारस्याकिञ्चित्करत्वात् । ननु व्यापारघटिता यस्य कारणता तदीयव्यापारमात्रसत्त्वं कार्य्योत्पत्तावपेक्षितं तथाच संस्कारादपि अनुभवसामग्रीसहकृता-द्विशिष्टवैशिष्ट्यबोधापत्तिः, यदि च ज्ञानस्य स्वतःपूर्व्ववर्त्तिताया-अपि कारणताघटकत्वात्तत्सत्त्वमप्यपेक्षितं तदा स्मरणेनापि तदपेक्ष्यतां अतो व्यापारघटितमेकं कारणत्वं अन्यच्च तदघटितं वाच्यं तथा च दर्शितव्यभिचारो दुर्व्वार एव इत्यनुशयेन कल्पान्तर-माह, 'निर्व्विकल्पकात्मकस्य वा स्मरणस्येति, विशिष्टस्मृतिपूर्व्व-मित्यादिः, 'कल्पनादित्यनेनान्वयः ।

केचित्तु विशेषणधिय इत्यग्रिमस्य विशेषणतावच्छेदकप्रका-रकधिय इत्यर्थकतया विशेषणतावच्छेदकप्रकारकज्ञानस्यैव ज्ञान-

त्वेन हेतुतापरोऽयं ग्रन्थः, एवञ्च 'विशेषणविषयकादित्यादि-ग्रन्थोऽपि विशेषणविषयकपदस्य विशेषणतावच्छेदकप्रकारकार्थक-तया विशिष्टस्मरणपदस्य विशिष्टवैशिष्ट्यस्मरणपरतया विशेषण-तावच्छेदकप्रकारकज्ञानत्वेन हेतुतायामेव व्यभिचारप्रदर्शनपर-इति न सन्दर्भविरोधः (१)।

यद्यपि निर्व्विकल्पकस्मरणकल्पनया विशिष्टवैशिष्ट्यावगाहि-स्मरणस्य नोपपत्तिर्निर्व्विकल्पकस्य विशेषणतावच्छेदकप्रकारकत्व-विरहात् किन्तु विशिष्टवैशिष्ट्यस्मरणपूर्व्वं विशिष्टविशेषणस्मरण-कल्पनयैव तदुपपत्तिः इति निर्व्विकल्पकात्मकस्य वा इत्याद्य-ग्रिमग्रन्थविरोधः विशेषणतावच्छेदकप्रकारकस्मरणोपपादकतया तद्गोचरनिर्व्विकल्पकोपगमसङ्गतावपि अन्तरा विशिष्टविशेषण-स्मरणस्य कल्पनीयत्वाकथनेन न्यूनता दुरुद्धरैवेति, तथापि स्मृतेर्निर्व्विकल्पकतायाः सविवादतया तादृशी स्मृतिर्न सम्भवतीति विशिष्टवैशिष्ट्यस्मरणपूर्व्वं विशिष्टस्मृतिकल्पनं न सम्भवति विशिष्ट-वैशिष्ट्यधीहेतुतायामिव विशिष्टधीसामान्यहेतुतायामपि ज्ञानत्व-निवेशे युक्तेस्तुल्यत्वात् इत्युभयत्रैव ज्ञानत्वप्रवेश इत्यभिप्रायेणैव पूर्व्व-मतिव्याप्तिसमाधानं, एवञ्च इदानीं निर्व्विकल्पकस्मरणोपगमेनैव प्रत्यक्षस्थल इव निर्व्विकल्पकविशिष्टज्ञान-विशिष्टवैशिष्ट्यज्ञानानि स्मृतिस्थलेऽपि क्रमशो भवन्तीति विशिष्टवैशिष्ट्यबोधं प्रति ज्ञानत्वेन हेतुत्वे बाधकाभाव इत्यर्थतो लाभादन्तरा विशिष्टस्मृतिकल्पना-

(१) केचित्त्वित्यादिः न सन्दर्भविरोध इत्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति।

कथनेपि न न्यूनतेति ध्येयम् । अथातिप्रसङ्गवारणाय समानप्रकारकत्वेनैव स्मृतिं प्रति संस्कार-ज्ञानयोर्हेतुत्वान्न निर्व्विकल्पकस्मरणसम्भवः घटत्वादिविशिष्टतद्घटागोचरसंस्कारादिजन्यतायां निर्व्विकल्पकसाधारणस्य घटत्वादिभिन्नप्रकारतानिरूपितविशेष्यताभिन्न-तद्घटादिविषयताशालिघटत्वादिगोचरस्मृतित्वस्यावच्छेदकत्वे च यत्र द्रव्यत्वेन तद्घटावगाहिनो घटत्वेन चैतद्घटावगाहिनः संस्काराद्घटत्व-तद्घटादिविषयकं निर्व्विकल्पकं (१) तत्र घटत्वविशिष्टतद्घटविषयकसंस्कारादेर्व्यभिचारः,(२) एवं निर्व्विकल्पकस्मरणोपगमे प्रमेयत्वादिसामान्यलक्षणाजन्यज्ञानाधीनविश्वविषयकनिर्व्विकल्पकस्मरणात् स्वरूपतो निखिलजातिप्रकारकं ज्ञानं स्यात् । न च तादृशं ज्ञानमसर्व्वज्ञस्यानुभवसिद्धं, न च स्वरूपतस्तत्प्रकारकस्मृतौ स्वरूपतस्तत्प्रकारकसंस्कारादेर्हेतुतया तादृशकारणाभावात् सकलजातिनिर्व्विकल्पकसत्त्वेऽपि न स्वरूपतः सकलजातिप्रकारकस्मरणसम्भवः तादृशप्रत्यक्षादेरपि युगपत् सकलजातिसन्निकर्षविरहेण नापत्तिसम्भव इति वाच्यम् । ज्ञानरूपसन्निकर्षसत्त्वेन तादृशमानसस्य दुर्व्वारत्वात् तत्कथमिदानीमपि निर्व्विकल्पकस्मरणमङ्गीकृतमिति चेन्न, अनुद्बुद्धसंस्कारान्यत्वापेक्षया लघुना ज्ञानत्वेन विशिष्टधीहेतुतासिद्धौ तन्निर्व्वाहकतया निर्व्विकल्पक-

---

(१) तादृशस्मृतेस्तद्घटावगाहित्वसम्पत्त्यर्थं द्रव्यत्वेन तद्घटावगाहीति, घटत्वावगाहित्वार्थं घटत्वेनैतद्घटावगाहीत्युक्तम् ।

(२) तादृशस्मृतेर्घटत्वप्रकारकतद्घटविशेष्यकसंस्कारस्य कार्य्यतावच्छेदकाक्रान्तत्वात् तत्पूर्व्वं तदभावाद्व्यभिचार इत्यर्थः ।

स्मरणस्यावश्यकत्वे तत्तद्विषयकस्मृतौ (१) तत्तद्विषयकसंस्कारत्वादिना सामान्यतो हेतुत्वान्तरस्य च कल्पनीयतया विशिष्टसंस्कारादितो विशिष्टस्मरणस्येव तत्पूर्व्वं निर्व्विकल्पकस्यापि स्मरणस्य सम्भवः, न चोक्तक्रमेण सार्व्वज्ञ्यापत्तिः, स्वरूपतस्तत्प्रकारक उपनीतभाने स्वरूपतस्तत्प्रकारकज्ञानस्य हेतुत्वोपगमात्, उद्बोधकाकल्पनेन वा प्रमेयत्वादिसामान्यलक्षणाप्रयोज्ययावत्प्रमेयगोचरसंस्काराद्यावज्जातिनिर्व्विकल्पकस्यापि वारणसंभवात्। तदनभ्युपगमेऽपि (२) स्वरूपतो भानयोग्यप्रमात्वघटकपदार्थनिर्व्विकल्पकमूलकप्रमेयत्वादिविषयकस्मरणजन्यतत्प्रकारक-विश्वविशेष्यकस्मरणादेव (३) कालादौ प्रमेयत्वादिना सकलप्रमेयप्रकारकस्मरणोपपत्तिरित्याशयेनेदानीं निर्व्विकल्पकस्मरणोपगमात्। ननु विशिष्टज्ञानत्वं परित्यज्य विशिष्टानुभवत्वस्य जन्यतावच्छेदकत्वोपगमेनैव विशिष्टस्मृतौ व्यभिचारवारणे किं निर्व्विकल्पकस्मरणादिकल्पनया। न च विशिष्टविषयकानुभवत्वापेक्षया लघुरूपविशिष्टविषयकत्वमेव स्मृतिसाधारणं विशेषणधीजन्यतावच्छेदकं तथाच निर्व्विकल्पकस्मरण-

---

(१) पूर्व्वोक्तव्यभिचारमुद्धरति तत्तदित्यादिना तथाच तद्विषयकसंस्कारस्य तत्र सत्त्वान्न व्यभिचार इति भावः।

(२) ननु प्रमेयत्वसामान्यलक्षणाजन्यज्ञानाधीनविश्वविषयकसंस्कारात् निखिलजातिनिर्व्विकल्पकानभ्युपगमे कालः प्रमेयवानित्यादिविश्वविषयकस्मरणानुपपत्तिरित्यत आह, 'तदनभ्युपगमेपीति यावज्जातिनिर्व्विकल्पकानभ्युपगमेपीत्यर्थः।

(३) प्रमेयत्वादिप्रकारकस्मरणजन्यतत्प्रकारकविश्वविशेष्यकस्मरणादेवेति पुस्तकान्तरपाठः।

मावश्यकमेवेति वाच्यम् । ज्ञानविनाशेऽपि तद्व्यापारभूतया इच्छया विशिष्टविषयककृतिजननात्तत्र व्यभिचारेण विशिष्टविषयकत्व-मात्रस्य विशेषणधीजन्यतावच्छेदकत्वासम्भवात् । न चोपादान-प्रत्यक्षस्य साक्षात् कृतिं प्रति हेतुतया कृतौ न ज्ञानत्वावच्छिन्नस्य व्यभिचार इति वाच्यम् । उपादानप्रत्यक्षस्य फलविषयकत्वानियमात् सुखत्वादिविशिष्टफलविषयककृतौ सुखत्वादिधियो व्यभिचारस्य दुर्व्वारत्वात् । एवं निर्व्विकल्पकस्मरणोपगमेऽपि कृतिसाक्षात्कार-पूर्व्वं विशिष्टस्मृतिकल्पनया न तदुपपत्तिः कृतिद्वितीयक्षणोत्पन्न-निर्व्विकल्पकस्मरणेन विशिष्टविषयस्मृतिजननकाले कृतिनाशेन विशिष्टविषयोपधानेन कृतिसाक्षात्कारासम्भवादित्यालोच्य विशिष्टा-नुभवत्वस्यैव विशेषणधीजन्यतावच्छेदकत्वमाह, 'अनुभवमिति, 'तस्याः' विशेषणधियः, अनुभवत्वजात्यनङ्गीकारे विशिष्टप्रत्यक्षत्व-स्यैव तथात्वं स्वीकरणीयमिति ध्येयम् (१) । इच्छा-द्वेषसाक्षात्कारे व्यभिचारस्य कथितरीत्या (२) अनवकाशात् कृतिसाक्षात्कारे व्यभिचारमुद्धरति, 'नियमत इति यत्र यत्र कृतिसाक्षात्कारस्तत्र कृतिद्वितीयक्षणे विशिष्टविषयस्मृतिं कल्पयित्वा तदनन्तरक्षण एव कृतिप्रत्यक्षोपगमादित्यर्थः । न च कृतित्वनिर्व्विकल्पक-विषय-

---

(१) अनुमिति-शाब्दौ प्रति परामर्श-योग्यताज्ञानादीनां नियामकत्वात् विशिष्टप्रत्यक्षत्वमेव तस्य कार्य्यतावच्छेदकमित्याशयः ।

(२) विनश्यद्वस्थज्ञानमूलकनरसिंहाकारेच्छानिर्व्विकल्पकज्ञानसम्भवेन न व्यभिचार इत्युक्तरीत्येत्यर्थः । अथवा ज्ञानस्य इच्छा-द्वेषौ प्रति कार्य्यकालवृत्ति-तया कारणत्वोक्त्येत्यर्थः । पूर्व्वग्रन्थस्य एतादृशार्थे तात्पर्य्यात् ।

स्मरणयोर्युगपदुत्पादासम्भवात् क्रमेण तदुभयोत्पत्तौ कृतेर्व्विनाशा-द्विषयविरहेण कृतित्वविशिष्टकृतिप्रत्यक्षानुपपत्तिरिति वाच्यम्। कृतित्वादिविशिष्टबुद्धौ तज्ज्ञानस्य हेतुत्वानुपगमेन तन्निर्व्विकल्प-कस्यानभ्युपगमात्। तत्र विशेषणधियो हेतुत्वेऽपि विषयस्मरणस्यैव कृतित्वविषयकत्वोपगमेनोपपत्तौ तन्निर्विकल्पकस्यानावश्यक-त्वात्। अनादौ संसारे सर्व्वदैव कृतित्वविषयकसंस्कारसम्भवेन कृतिसाक्षात्कारजनकविषयस्मृतौ तद्भाने बाधकाभावात्। न चैवमन्यत्रापि निर्व्विकल्पकोच्छेदः, अपूर्व्वचैत्रत्वादेः प्राथमिक-विशिष्टबुद्धिपूर्व्वं तत्स्मरणासम्भवेन तन्निर्व्विकल्पकस्यावश्यक-त्वात्। यत्र विशिष्टान्तरचाक्षुषादिसामग्रीकाले घटादीन्द्रिय-संयोगोत्पत्तिस्तत्र द्वितीयक्षणे विशिष्टान्तरचाक्षुषाद्युत्पत्त्या घट-त्वादिस्मरणासम्भवेन तदुत्तरं घटत्वादिविशिष्टधीनिर्व्वाहाय घट-त्वादिनिर्व्विकल्पकस्यावश्यकत्वाच्च।

---

अनुमानदीधितिः।

साध्यादेरननुगमात् एकोपादाने अन्यानुमितौ द्वैवाद्व्याप्तिविषयिण्याञ्च तस्यामव्याप्तिः परमवशिष्यते, सापि तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षया निरसनीया, एतल्लाभायैव चानुभवार्थकं चरमज्ञान-पदम्। एवञ्चान्वय-व्यतिरेकव्याप्त्योः पृथक्प्रयोजकत्वे-ऽपि न क्षतिः। पर्व्वत-वह्निव्याप्यवैशिष्ट्यावगाहिनिश्चय-

त्वावच्छिन्नकारणताप्रतियोगिककार्य्यताया वह्निव्याप्यवत्पर्व्वतनिश्चयत्वावच्छिन्नकारणताप्रतियोगिकव्याप्यविषयकवृत्तिकार्य्यताया वा अवच्छेदिका ज्ञानवृत्तिः सामानाधिकरण्येन वावच्छेदिका या जातिस्तद्वत्त्वं वा बोध्यम् ।

---

गादाधरी विवृतिः ।

जन्यज्ञाने व्याप्यविषयकत्वनिवेशे यत्र व्याप्तिविशिष्टधूमादेः पक्षतावच्छेदकघटकता तत्रत्यानुमितौ वह्नि-तद्व्याप्यधूमादिविषयकसमूहालम्बनानुमितौ चाव्याप्तिं (१) साध्याद्यननुगमनिबन्धन-व्याप्यननुगमप्रयुक्ताव्याप्तिवारणानुरोधेनावश्यविवक्षणीयवह्निव्याप्तिविशिष्टपर्व्वतवृत्तिताज्ञानजन्यव्याप्यविषयकज्ञानजातीयत्वस्य लक्षणतया निराकर्त्तुमाह, 'साध्यादेरिति, 'आदिना सम्बन्धविशेषादिपरिग्रहः । 'एकोपादाने' एकसाध्यादिघटितव्याप्यादिविषयकपरामर्शजन्यताघटितलक्षणे, 'अन्यानुमितौ' अन्यसाध्यकाद्यनुमितौ, 'दैवात्' दैववशसम्पन्नसामग्रीविशेषात्, 'तस्यां' अनुमितौ, 'परमित्यनेन अतिव्याप्तेरसम्भवस्य च व्यवच्छेदः, 'तादृशज्ञानवृत्तीति पर्व्वत-वह्निव्याप्यवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजन्ये व्याप्यविषयके वह्निव्याप्यधूमविशिष्टपर्व्वतत्वावच्छिन्नविषयक-

---

(१) अव्याप्तिमित्यस्य निराकर्त्तुमित्यग्रिमेण सहान्वयः ।

निश्चयत्वावच्छिन्नजन्ये वा ज्ञाने समवेतेत्यर्थः, तद्वृत्तित्वं तत्समवेतत्वं, अतो न सम्बन्धान्तरेण तद्वृत्तिप्रत्यक्षत्वादिकमादाय ज्ञानमात्रेऽतिव्याप्तिः (१)। सत्ता-गुणत्व-ज्ञानत्वानुभवत्वजातीरादायातिव्याप्तिवारणायानुभवत्वव्याप्येति, व्याप्यत्वमिह भेदगर्भं, अनुभवत्वान्यत्वे सति अनुभवान्यासमवेतत्वरूपं विवक्षितं तेनानुभवत्वनिरासः। यद्यपि अनुभवनिष्ठभेदप्रतियोगितावच्छेदकत्वरूपं यत्किञ्चिदनुभवासमवेतत्वरूपं वा तदव्यापकत्वं निवेश्यापि अनुभवत्वान्तजातीनां वारणं सम्भवति, तथापि ईदृशव्यापकजातिवारकप्रकाराणां जातिघटितान्यलक्षणे बहुशो ग्रन्थान्तरे च दर्शितत्वात् दिक्प्रदर्शनायैव एकप्रकारोऽत्र दर्शितः, व्याप्यपदमेव उक्तभेदगर्भव्याप्यपेक्षया लघुशरीरदर्शिताव्यापकत्वार्थकमिति तु न युक्तं, यां काञ्चिदित्यादौ दर्शितभेदगर्भव्याप्तेः व्याप्यपदार्थस्य स्फुटतयोपादानेन विरोधादिति। जातिपदं समायेन तद्वत्तालाभाय, जातिभिन्नज्ञानसमवेतधर्म्माप्रसिद्ध्या जातित्वनिवेशवैयर्थ्यात्। यद्यपि तादृशधर्म्मोऽनुमितित्वं तदेव च लक्ष्यतावच्छेदकं (२) तथापि स्वरूपतस्तस्य लक्ष्यतावच्छेदकता दर्शितरूपेण च लक्षणत्वमित्यविरोधः। ननु व्याप्यविषयकत्वस्य जन्यज्ञानविशेषणत्वे संस्कारवारणाय उपात्तं ज्ञानपदमनर्थकं व्याप्यवत्तानिश्चय-

---

(१) प्रत्यक्षत्वादेस्तज्जन्यज्ञानासमवेतत्वादिति भावः।

(२) तथाच लक्षण-लक्ष्यतावच्छेदकयोरभेद इति भावः।

त्वावच्छिन्नजन्यसंस्कारस्य व्याप्तिविषयकत्वनियमात् इत्याशङ्का तत्पदमुक्तार्थलाभसम्पादकतया सार्थकयति, 'एतल्लाभायैव चेति जन्यपदस्य लक्षणयाऽनुभवत्वव्याप्यजातिपुरस्कारेण जन्यजातीयत्वार्थे तात्पर्य्यग्रहायैवेत्यर्थः। अनुभवत्वोपस्थापकज्ञानपदसमभिव्याहारादनुभवत्वघटितोक्तार्थे झटिति तत्तात्पर्य्यग्रहात् घटो पटजातीयं द्रव्यमितिवत् जलं घटजातीयं द्रव्यमित्यादिवाक्यस्य स्वरसतोऽप्रयोगात्तज्जातीयार्थकपदस्य समभिव्याहृतपदोपस्थाप्यधर्म्मव्याप्यजात्या साजात्यपरताया औत्सर्गिकत्वादितिभावः। जातिघटनायाः प्रयोजनान्तरमपि दर्शयति, 'एवञ्चेति, 'पृथक्प्रयोजकत्वेऽपि' अनुमितिनिरूपितविभिन्नकारणतावच्छेदकशरीरे विशेषरूपेण प्रवेशेऽपि, 'न क्षतिः' न एकतरव्याप्तिघटितलक्षणकरणेऽपरव्याप्तिज्ञानजन्यानुमितावव्याप्तिः, एकतरव्याप्तिज्ञानजन्यजातीयत्वस्यापरव्याप्तिज्ञानजन्यानुमितावक्षतत्वादिति भावः। कार्य्यतासामानाधिकरण्यस्थले कार्य्यतावच्छेदकत्वनिवेशने जातावनुभवत्वव्याप्यत्वविशेषणं विनैव सत्तादिवारणं सम्भवति तादृशजातीनां परामर्शजन्यतावच्छेदककोट्यनिविष्टत्वात् अनुमितित्वस्यैव तथात्वादित्याशयेनाह, 'पर्व्वतेति, व्याप्य-पक्षविशेष्यकपरामर्शयोरनुगतरूपेण हेतुतामते तद्रूपावच्छिन्नाजन्यतयैव ज्ञानान्तरातिव्याप्त्यनवकाशात् तादृशकारणताघटितप्रथमकल्पे व्याप्यविषयकत्वानिवेशः। अवच्छेदकत्वस्य पर्य्याप्त्यनिवेशाद्विशेषविषयकत्वस्याधिकस्य च परामर्शजन्यतावच्छेदकत्वेऽपि नासम्भवः। समुदायस्य एकदेशानतिरिक्ततया समुदायस्यावच्छेदकत्वे तदेकदेशस्यापि तथात्वस्या-

व्याहतत्वात्। अतएव (१) अवच्छेदककोटिप्रविष्टवह्नित्वादि-जातिमादाय वह्न्यादिरूपविषयेऽतिव्याप्तिवारणाय 'ज्ञानवृत्ति-रिति ज्ञानसमवेतेत्यर्थः। अथ वह्नित्वादिकमवच्छेदकविशेषण-तयावच्छेदकतायामेवावच्छेदकं न तु कार्य्यतायां तथाच कथं तज्जातिमादायातिव्याप्तिप्रसक्तिः। न च स्वावच्छिन्नविधेयताकत्व-सम्बन्धेन कार्य्यविशेषणतया वह्नित्वमपि कार्य्यतावच्छेदकमिति वाच्यम्। तादृशपरम्परायाः सम्बन्धत्वे मानाभावात् विषयितासम्ब-न्धेन च वह्नित्वस्यातिप्रसक्ततया अवच्छेदकत्वायोगादिति चेन्न, अवच्छेद्याश्रये साक्षात् परम्परया वा यावन्ति विशेषणानि तावत्-स्वेव कार्य्यतावच्छेदकत्वोपगमे बाधकाभावात्कार्य्यतावच्छेदकादि-विशेषणस्य कार्य्यतादौ तदवच्छेदकत्वे वा अवच्छेदकत्वमित्यत्र विनिगमकाभावेऽपि न ज्ञानवृत्तीत्यादिवैयर्थ्यम्। न च व्यधिकरण-स्यानवच्छेदकत्वनियमात् विषयवृत्तेर्न कार्य्यतावच्छेदकत्वसम्भव-इति वाच्यम्। साक्षादवच्छेद्याश्रयविशेषणतया विलक्षणावच्छे-दकतायामेव सामानाधिकरण्यापेक्षणात्। अवच्छेदकघटकानां भेदेऽपि अवच्छेद्यज्ञाननिरूपिताया अवच्छेदकतापर्य्याप्त्यधिकरणं यादृशं तादृशप्रकारावच्छेद्याश्रयज्ञाननिष्ठविषयताया अभेदादवच्छे-द्यकार्य्यतादेरभेद इति वह्निविधेयकानुमितिः परामर्शजन्या इत्या-कारके कार्य्य-कारणभावग्रहे अनुमितिविषयताया ऐक्यात् कार्य्य-कारणभावैक्यं, अनुमितित्व-वह्नित्वादीनामवच्छेदकतावैलक्षण्येन

---

(१) अवच्छेदकत्वपर्य्याप्तिनिवेशादेव।

तावत्समुदाये यद्यपि नैकमवच्छेदकत्वं तथापि तत्कार्य्यतानिरूपितावच्छेदकतात्वेन तदवच्छेदकतानां व्यासज्यवृत्तित्वे बाधकाभावः (१)। तादृशानुगतरूपावच्छिन्नावच्छेदकत्वाधारतायाः समुदायवृत्तिधर्म्मेणैवावच्छेदादित्यलं पल्लवितेन। तादृशजातिमज्ज्ञानत्वस्य लक्षणत्वे सामानाधिकरण्यसम्बन्धेन तादृशजातिवैशिष्ट्यस्य ज्ञानत्व इव विषयवृत्तिधर्म्मेऽपि सत्त्वेन तद्व्यावर्त्तनाय ज्ञानत्वत्वरूपेण ज्ञानत्वस्याप्यवश्यं निवेशनीयतया गौरवमिति तदुपेक्षितम्, ज्ञानत्वाद्यवच्छिन्नसाध्यकादिपरामर्शजन्यताघटितज्ञानवृत्तिजातिमादाय लक्षणं दुष्करं तत्र विषयवृत्तिज्ञानत्वादिजातिमादायातिव्याप्तेर्दुर्व्वारत्वादिति तादृशपरामर्शजन्यताघटितमपि लक्षणं सम्भवतीति सूचयितुं ज्ञानवृत्तित्वविशेषणं परित्यज्य कल्पान्तरमाह, 'सामानाधिकरण्येन वेति, कार्य्यविशेषणतया विलक्षणमवच्छेदकत्वमिह सामानाधिकरण्येनावच्छेदकत्वमतोज्ञानत्वादेः कार्य्यतासमानाधिकरणत्वेऽपि न क्षतिः।

यत्तु आलोकलिङ्गकानुमितौ धूमलिङ्गकपरामर्शस्य व्यभिचारवारणाय स्वसमानाधिकरणतत्तल्लिङ्गकपरामर्शाव्यवहितोत्तरत्वं तत्तल्लिङ्गकपरामर्शजन्यतावच्छेदकमवश्यं वाच्यं तथाच परामर्शविशेषणतया ज्ञानत्वस्य परामर्शजन्यतावच्छेदकत्वात्तदादायातिप्रसङ्गवारणाय 'सामानाधिकरण्येनेति कल्पानुसरणमिति, तन्न

---

(१) यथा प्रतियोगितायाः प्रतियोगिस्वरूपत्वेन तत्तद्व्यक्तिविश्रान्तत्वेऽपि सामान्यधर्म्मावच्छिन्नप्रतियोगितात्वे व्यासज्यवृत्तित्वं सामान्याभावग्रन्थे दीधितिकृता स्वीकृतं तथात्वापीति भावः।

साधीयः, अव्यवहितोत्तरत्वस्य कार्य्यतावच्छेदकत्वे अनुमितित्व-निवेशस्य निष्प्रयोजनकतया असम्भवप्रसङ्गात् न ह्यव्यवहितोत्तरत्व-प्रवेशे क्वापि व्यभिचारः प्रसज्येत येन तद्वारकतयानुमितित्वनिवेशनं सार्थकं भवेत्। अथानुमितित्वाप्रवेशे धूमपरामर्शाव्यवहितोत्तरो-त्पन्नतत्समानाधिकरणात्म-घटसंयोग-द्वित्वाद्यधिकरणे घटादौ परामर्शाभावेन व्यभिचार इत्यनुमितित्वनिवेशसार्थक्यम्। न च विषयविशेषावगाहित्वनिवेशात् निर्व्विषयसंयोगादिव्यावृत्ति-रिति वाच्यम्। अव्यवहितोत्तरत्वनिवेशे विषयविशेषावगाहि-तायाः प्रयोजनान्तराभावेनानिवेशादिति। न च कार्य्यनिरूपितं दैशिकव्यापकत्वं न कारणताघटकं अपितु कार्य्यतावच्छेदकव्यापक-सामानाधिकरण्यप्रतियोगित्वमतएव क्रियानधिकरणोत्तरदेश-संयोगोत्पत्तावपि तस्यास्तत्कारणत्वमिति वाच्यम्। प्रकृते कार्य्य-निरूपितदैशिकव्यापकतायाः कारणत्वाघटकत्वे कार्य्याधिकरणदेश-त्वस्य कारणाधिकरणदेशत्वानियतत्वनिर्व्वाहात् क्रियाधिकरणे उत्पद्यमानः संयोगो यथा तदनधिकरणोत्तरदेशे जायते तथा परा-मर्शाधिकरणइव तदनधिकरणेऽपि सिद्धाभावादिघटितानुमिति-सामग्रीमत्यात्मन्यनुमित्युत्पादस्य दुर्व्वारत्वादिति (१) चेत्, सत्यं, अनुमितित्वमनिवेश्य स्वसमानाधिकरणपरामर्शाव्यवहितोत्तरत्वस्य जन्यतावच्छेदकत्वे संयोगादिविशेषे व्यभिचारोऽस्त्येव तद्वारणाय स्वाव्यवहितपूर्व्ववर्त्तिपरामर्शसामानाधिकरण्यमेव विशेषणतया

(१) अशक्यवारणत्वादितीति पा॰।

जन्यतावच्छेदकमुपेयतां तथाच तद्विशिष्टाधिकरणं परामर्शाधिकरण-मेवेति तदुपलक्षितस्य संयोगादेः परामर्शव्यभिचारेऽपि तद्विशिष्टाधि-करणताघटितव्यापकतागर्भकारणत्वमक्षतमित्यनुमितित्वनिवेशन-मफलम् । न च स्वत्वाननुगमेन नोक्तधर्मस्य कार्य्यतावच्छेदकत्व-मपि तु अव्यवहितोत्तरत्व-सामानाधिकरण्योभयसम्बन्धेन परा-मर्शविशेष एव तज्जन्यतावच्छेदकः, तस्य चानुमितिरूपकार्य्ये विशेषणतया न कारणताघटकत्वसम्भवः परामर्शासमानकालीन-विनश्यदवस्थपरामर्शजन्यानुमित्यधिकरणतायाः परामर्शविशिष्टा-निरूपितत्वेन कारणत्वाघटकतया परामर्शस्य तादृशानुमित्य-कारणत्वप्रसङ्गात्, न हि विशेष्यनिरूपिताधिकरणतावच्छेदक-कालावच्छेदेन विशेष्ये असम्बद्धे व्यावर्त्तके अधिकरणतानिरूपक-तावच्छेदकत्वरूपमधिकरणतानिरूपकविशेषणत्वमुपेयते, किन्तूप-लक्षणत्वमेव, भूतलाद्यधिकरणे पुरुषादेः सत्त्वदशायां पुरुषाद्य-सम्बद्धेन तद्व्यावर्त्तकेनापि दण्डादिना विशिष्टस्य पुरुषादे-रधिकरणत्वस्य भूतलादावभावात् परामर्शोपलक्षितस्य च संयोगादेर्घटादौ व्यभिचारएव इत्यनुमितित्वनिवेशनमावश्यक-मिति वाच्यम् । तदधिकरणतावच्छेदककालावच्छेदेनावृत्तेरपि एककालावच्छिन्नत्वाविशेषितस्य सामानाधिकरण्यसम्बन्धेन तद-धिकरणतानिरूपकतावच्छेदकत्वोपगमात् । अतएव सिद्धि-सिषाधयिषोभयकाले कालान्तरावच्छिन्नतदधिकरणात्मवृत्तिसि-षाधयिषाविरहविशिष्टसिद्धिनिरूपिताधिकरणतासत्त्वेन विशिष्ट-सिद्ध्यभावरूपपक्षताया अनिर्वाह इत्यालोच्य दीधितिकृतां

पक्षताग्रन्थे एकक्षणावच्छिन्नत्वविशेषितसामानाधिकरण्यसम्ब-न्धेन सिद्धौ सिषाधयिषाविरहवैशिष्ट्यमित्यभिधानं सङ्गच्छते। अतएव पक्षताया विशिष्टाभावरूपाया अतीन्द्रियक्षणघटितत्वेन अतीन्द्रियतया प्रत्यक्षासम्भवाभिप्रायेण विशेष्याद्यभावरूपाया-इत्यनुपदं तदभिधानस्यापि सङ्गतिः। एवञ्चानुमितित्वस्य परामर्शकार्य्यतावच्छेदककोटावप्रवेशेऽपि नोक्तव्यभिचारप्रसङ्गः। घटादौ परामर्शाधिकरणतानियतायास्तदुपलक्षिताधिकरणता-विलक्षणायाः सामानाधिकरण्यघटितसम्बन्धेन परामर्शविशिष्टाधि-करणताया असत्त्वात्। नापि विनश्यदवस्थपरामर्शजन्यानु-मित्यधिकरणतायाः कारणताघटकव्यापकतायामनिवेशे तस्याः परामर्शरूपकारणनियम्यता न स्यादिति दूषणस्याप्यवकाशः तदधिकरणताया अपि विशिष्टाधिकरणतात्वेन तादृशव्यापकतायां निवेशात्। अस्तु वा स्ववृत्तित्व-स्ववृत्तिधूमादिपरामर्शाव्यवहि-तोत्तरत्वोभयसम्बन्धेनात्मविशिष्टत्वमेव धूमादिपरामर्शजन्यताव-च्छेदकम् तावताप्यन्यलिङ्गकानुमितौ तस्य व्यभिचारवारणात् आत्मवृत्तित्वविशिष्टस्यैव आधेयतया आत्मविशिष्टस्यापि अनात्मन्य-वृत्तेरिति ज्ञानत्वादिकं निवेश्यापि संयोगादौ व्यभिचारवारण-सम्भवात् विनिगमनाविरहेण तस्यापि कार्य्यतावच्छेदकताया-दुर्व्वारतयाऽतिप्रसङ्गाच्च। न चाव्यवहितप्राक्क्षणावच्छिन्न-तल्लिङ्गकपरामर्शाधिकरणताविशिष्टसमवायस्तल्लिङ्गकपरामर्शजन्य-तावच्छेदकसम्बन्धः एवञ्च शुद्धमनुमितित्वमेव तज्जन्यतावच्छेदकं शुद्धज्ञानत्वादिकञ्च नित्यसाधारणमिति न तस्य तथात्वसम्भव-

इति वाच्यम् । तथा सति ज्ञानत्वस्य कार्य्यतावच्छेदककोट्य-प्रवेशेन तद्वारकविशेषणोपादानानुपपत्तेः । तस्मात् यत्साध्य-पक्षकानुमितिरेकलिङ्गकपरामर्शजन्यैव प्रसिद्धा तत्पक्षक-तत्साध्य-व्याप्यवत्तापरामर्शजन्यताघटितमेव लक्षणमभिप्रेतम् । पर्व्वतादि-पदमपि तत्पक्षादिपरमेव तत्र च न परामर्शविशेषणतया ज्ञान-त्वस्य जन्यतावच्छेदकप्रवेशप्रसक्तिरिति तथाच ज्ञानत्वघटितया-दृशसाध्यकानुमितिरेकलिङ्गकपरामर्शादेव तदनुमितिकारणता-घटितमपि लक्षणं ज्ञानवृत्तित्वविशेषणमुपेक्ष्य सामानाधिकरण्ये-नावच्छेदकत्वं निवेश्य कर्त्तुं शक्यते इत्याशयेन 'सामानाधि-करण्येन वेत्यभिहितमिति तत्त्वम् ।

---

अनुमानदीधितिः ।

व्याप्तिभानेऽवश्यं भासमानो यस्तादृशानुमित्यविषय-स्तदविषयत्वमात्रं वा ग्राह्यं, यां काञ्चिदनुमितिव्यक्ति-मादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवान्यासमवेत-धर्म्मसमवायित्वमिति वा वक्तव्यम् । अनुभवत्वजात्य-नङ्गीकारे तु तद्व्यक्तिसमवेतस्मरणासमवेतधर्म्मसम-वायित्वं वक्तव्यम् ।

व्याप्तिज्ञानत्वावच्छिन्नकारणताप्रतियोगिककार्य्य-तावच्छेदकावच्छिन्ना या विशिष्टपरामर्शत्वावच्छिन्न-

कारणताप्रतियोगिककार्य्यता तत्समानाधिकरणानुभवत्वव्याप्यजामितिमत्त्वं तत्त्वमित्यपि कश्चित् ।

---

गादाधरी विवृतिः ।

ननु विशिष्टवैशिष्ट्यबोधाद्यतिव्याप्तिवारणाय नानापदार्थघटितगुरुतरव्याप्त्यविषयकत्वनिवेशनमयुक्तं अभावत्वादियत्किञ्चिद्व्याप्तिघटकपदार्थाविषयकत्वं निवेश्यापि तद्वारणसम्भवात् जातिघटनया अभावाद्यनुमितेरपि सुसंग्रहत्वादित्याशयेनाह, 'व्याप्तिभान इति, व्याप्तिज्ञानविषयतद्घटकपदार्थान्तराविषयकत्वनिवेशेऽतिव्याप्तेर्दुर्व्वारत्वात् 'अवश्यमिति,'अनुमितौ नियतभासमानव्याप्तिघटकसाध्याद्यविषयत्वनिवेशस्यासम्भवसम्पादकत्वादसम्भव इत्यतः 'तादृशानुमित्यविषय इति प्रकृतसाध्यकयत्किञ्चिदनुमित्यविषय-इत्यर्थः, यत्किञ्चिदनुमित्यविषयतायाः प्रकृतसाध्यादिसाधारणत्वात् सामान्यतोऽनुमित्यविषयतायाः प्रकृतसाध्यकयावत्प्रमेयविषयकसमूहालम्बनानुमितिविषयतायाश्च केवलान्वयित्वात् । प्रकृतसाध्यकेति यत्किञ्चिदिति च अतिव्याप्त्यसम्भवयोः (१) वारकतामाविष्कर्त्तुमेवोक्तभङ्ग्याभिधानं, निवेशस्तु तादृशपदार्थस्य कस्यचिदेकस्य विशिष्यैवेत्यवधेयम् । अनुभवत्वव्याप्यजातिघटितलक्षणे परामर्शत्वावच्छिन्नकारणताप्रतियोगिताकव्याप्यविषयकवृत्तिकार्य्यताशालित्वेनानुगतेन कतिपयानुमितीनां निवेशन-

---

(१) तथाच व्याप्तिभानेऽवश्यं भासमान इति दलमतिव्याप्तिवारकं, शेषदलञ्चासम्भववारकमिति भावः ।

मर्युक्तम् तत्तद्व्यक्तित्वेन एकानुमितिव्यक्तिमुपादायानुभवत्वव्याप्य-जात्या तत्तद्व्यक्तिजातीयत्वस्य लघोर्लक्षणत्वसम्भवात् इत्याशयेन तादृशजातिघटितलक्षणं तथैव निष्कर्षयति, 'यां काञ्चिदिति, अनुभवत्वस्य तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो-निविष्टः न त्वनुभवत्वत्वावच्छिन्नप्रतियोगिताकः, अनुभवत्व-त्वशरीरे सकलानुभवसमवेतत्वस्य निविष्टत्वात्, तदवच्छिन्न-भेदनिवेशनेनैवानुभवत्व–ज्ञानत्वादिसकलव्यापकजातिवारणसम्भवे भेदप्रतियोगितावच्छेदकशरीरे अनुभवेतरासमवेतत्वांशनिवेशने-नान्यत्वान्तस्य ज्ञानत्वादिसाधारण्यं सम्पाद्य तद्वारणायानुयोगिन्य-नुभवान्यासमवेतत्वरूपविशेषणान्तरप्रवेशस्य प्रक्षालनाद्धीत्यादि-न्यायविषयत्वात् तत्तद्व्यक्तिसमवेतप्रत्यक्षाद्यसमवेतधर्म्मसमवायि-त्वस्य लक्षणत्वसम्भवेऽपि न क्षतिः। अनुभवत्वव्याप्यतापदार्थता-घटितपूर्व्वलक्षणस्यैवेदानीं निष्कर्षणात् (१)।

तद्व्यक्तिपदेन प्रत्यक्षादिव्यक्तिमुपादाय उक्तशब्देन प्रत्यक्षादि-लक्षणमपि सम्भवतीत्याशयेन प्रत्यक्षाद्यसमवेतत्वं नोपात्तमिति केचित्। तन्न। तत्तद्व्यक्तिसमवेतयत्किञ्चिदनुभवासमवेतधर्म्म-समवायित्वमित्येकशब्देन प्रमाचतुष्टयलक्षणसम्भवात्तथानभिधान-वीजानुयोगस्य तावताप्यपरीहारात्।

'धर्म्मसमवायित्वमिति समवायेन तद्वत्त्वमित्यर्थः, यथाश्रुते कालिकादिसम्बन्धेन तादृशानुमितित्वसमवायस्यातिव्याप्ततया

---

(१) तथाच तस्य लक्षणान्तरत्वाभावान्नानुपपत्तिरिति भावः।

सम्बन्धविशेषेण समवायवत्तानिवेशस्यावश्यकत्वे समवायस्यैव सम्बन्धताया उचितत्वात्। नन्वनुभवचतुष्टयमात्रसाधारणी जातिरप्रामाणिकी प्रत्यक्षत्वस्यैव (१) विशेषणधीजन्यतावच्छेदकत्वसम्भवात् इति स्मृत्यन्यज्ञानत्वमेव अनुभवत्वं तथाचानुभवत्वान्यत्वविशेषणमयुक्तं स्मृत्यन्यत्वविशिष्टस्यापि ज्ञानत्वस्य ज्ञानत्वानतिरिक्ततया विशेषणान्तरेण वारितत्वात्। एवं अनुभवान्यासमवेतेति स्मरणान्यज्ञानान्यासमवेतार्थकं तत्र स्मरणभिन्ने ज्ञानत्वनिवेशनमनतिप्रयोजनकं ज्ञानान्यसमवेतेच्छात्वादेस्तत्तदशक्तिसमवेतत्वनिवेशेनैव वारणात् स्मरणान्यान्यत्वेन स्मृत्युपादानमपि न हि घट इति वक्तव्ये अनघट इति कश्चिद्वदतीतिन्यायेनायुक्तमित्यत आह, 'अनुभवत्वेति, अनुभवत्वजात्यङ्गीकर्त्तृमते अनुभवत्वान्यत्वविशेषणस्यानुभवत्वव्यावर्त्तनायावश्यकतया तदनङ्गीकारे त्वित्युक्तम्।

मूलोक्तलक्षणे चक्रवर्त्तिव्याख्यानमुपन्यस्यति, 'व्याप्तीति, 'व्याप्तिज्ञानत्वावच्छिन्नेति धूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तिप्रकारताशालिनिश्चयत्वावच्छिन्नेत्यर्थः, 'विशिष्टपरामर्शत्वावच्छिन्नेति वह्निव्याप्यप्रकारतानिरूपितपर्व्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वावच्छिन्नेत्यर्थः। धूमलिङ्गकवह्न्याद्यनुमितौ धूमो वह्निव्याप्य इत्याकारकव्याप्तिप्रकारकनिश्चयस्य करणविधया हेतुत्वं तज्जन्यतावच्छेदकञ्च पर्व्वतपक्षकधूमलिङ्गकवह्न्याद्यनु-

(१) ननु विशेषणज्ञानजन्यतावच्छेदकतयैव तत्सिद्धिरित्यत आह, प्रत्यक्षत्वस्यैवेति।

मितित्वं, वह्निव्याप्यधूमवान् पर्व्वत इत्यादिपरामर्शस्य च हेतुत्वं तद्व्यापारविधया तज्जन्यतावच्छेदकञ्च पर्व्वतत्वावच्छिन्नपक्षक-वह्नित्वावच्छिन्नविधेयताकधूमलिङ्गकानुमितित्वं, एवञ्च धूमत्वा-वच्छिन्नविशेष्यक-व्याप्तिप्रकारकनिश्चयत्वावच्छिन्नकारणतानिरूपि-तकार्य्यतावच्छेदकीभूतोपदर्शितधर्म्मावच्छिन्नव्याप्यप्रकारतानिरू-पित-पर्व्वतत्वावच्छिन्नविशेष्यताकनिश्चयत्वावच्छिन्नकारणताप्रति-योगिका च या पर्व्वतो वह्निमानित्येताद्दशानुमितिनिष्ठ-कार्य्यता ताद्दशकार्य्यतासमानाधिकरणानुभवत्वव्याप्यजातिश्चानु-मितित्वजातिरेव तामादाय सकलानुमितौ लक्षणसमन्वयः। वह्निव्याप्यधूमवत्पर्व्वतवान् इत्यादिविशिष्टवैशिष्ट्यबोधवृत्ति-तथाविधनिश्चयत्वावच्छिन्नविशेषणतावच्छेदकप्रकारकज्ञानीयका-रणताप्रतियोगिककार्य्यतामादायातिप्रसङ्गवारणायावच्छिन्नान्तं, तथाच वह्निव्याप्तिविशिष्टावच्छिन्नपर्व्वतप्रकारताशालिज्ञानत्वा-वच्छिन्नताद्दशकार्य्यतायां धूमत्वावच्छिन्नविशेष्यकव्याप्तिप्रकारक-निश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्य्यतावच्छेदकावच्छिन्न-त्वाभावात् न तामादायातिप्रसङ्गः। वह्निव्याप्यधूमवान् पर्व्वत-इत्येताद्दशनिश्चयत्वावच्छिन्नकारणताया अपि धूमत्वावच्छिन्न-विशेष्यकव्याप्तिप्रकारताकताद्दशनिश्चयवृत्तित्वात्, ताद्दशकारणता-निरूपितकार्य्यतावच्छेदकावच्छिन्नताद्दशकार्य्यतामादायातिप्रसङ्ग-इत्यतस्ताद्दशनिश्चयवृत्तित्वमपहाय ताद्दशनिश्चयत्वावच्छिन्नत्वनिवे-शनं, ताद्दशनिश्चयत्वान्यूनवृत्तित्वं तदर्थः, अन्यथा वह्निव्याप्य-धूमवान् पर्व्वत इत्यादिविशेषणतावच्छेदकप्रकारकनिश्चयस्य

वह्निव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतानिरूपितपर्व्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन पर्व्वतत्वावच्छिन्नविशेषणतापन्नधूमत्वावच्छिन्नविशेष्यतानिरूपितव्याप्तिप्रकारताशालिनिश्च--यत्वेन च विनिगमनाविरहेण हेतुत्वादधिकन्त्वित्यादिन्यायेन तादृशनिश्चयहेतुताया अपि तथाविधनिश्चयत्वावच्छिन्नतया तन्निरूपितकार्य्यतामादायातिप्रसङ्गवारणासम्भवात्, तादृशनिश्चयत्वान्यूनवृत्तित्वनिवेशे च वह्निव्याप्यधूमवान् पर्व्वत इत्येतादृशविशेषणतावच्छेदकप्रकारकनिश्चयहेतुताया वह्निव्याप्यो धूम इत्येतादृशनिश्चयावृत्तित्वेन तादृशनिश्चयत्वन्यूनवृत्तितया न दोषः। वह्निव्याप्यधूमवत्पर्व्वतवान् देशः इत्येतादृशविशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नकार्य्यताया अपि धूमत्वावच्छिन्नविशेष्यकव्याप्तिप्रकारकनिश्चयत्वावच्छिन्ना या विशेषणतावच्छेदकप्रकारकनिश्चयविधया कारणता तत्प्रतियोगिक-व्याप्तिविशिष्टधूमवैशिष्ट्यावगाहिबोधनिष्ठकार्य्यतासमानाधिकरणत्वात् उक्तातिप्रसङ्गवारणासम्भवेन तादृशकार्य्यतासामानाधिकरण्यमपहाय तदवच्छेदकावच्छिन्नत्वनिवेशनम्। एवञ्च तादृशव्याप्तिप्रकारकनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्य्यतावच्छेदकीभूतवह्निव्याप्यवच्छिन्नधूमविशेषणताकबुद्धित्वेन (१) वह्निव्याप्यत्वविशिष्टधूमावच्छिन्न-पर्व्वतविशेषण-

---

(१) धूमविशेषणताकबुद्धित्वेनेत्यस्य अनवच्छिन्नत्वादित्यग्रिमेण सहान्वयः। तथाच व्याप्तिप्रकारकनिश्चयकार्य्यतावच्छेदके व्याप्तिनिष्ठविलक्षणावच्छेदकता धूमनिष्ठप्रकारतानिविष्टा अत्र तु धूमनिष्ठविलक्षणावच्छेदकता पर्व्वतनिष्ठप्रकारता निविष्टा इति वैलक्षण्यमिति हृदयम्।

ताकबुद्धित्वावच्छिन्नायाः कार्य्यताया अनवच्छिन्नत्वान्नातिप्रसङ्गः। अथैवमपि वह्निव्याप्यत्वावच्छिन्नधूमविशेषणताकबुद्धित्वावच्छिन्न-जन्यतावच्छेदकघटकेन बुद्धित्वेन वह्निव्याप्यत्वविशिष्टधूमावच्छिन्न-पर्व्वतविशेषणताकबुद्धित्वावच्छिन्नजन्यताया अवच्छिन्नत्वान्नोक्तातिप्रसङ्गवारणसम्भवः। न च तदवच्छेदकावच्छिन्नेत्यत्रावच्छेदक-पदस्यावच्छेदकतापर्य्याप्त्यधिकरणपरत्वान्नावच्छेदकैकदेशज्ञानत्वाव-च्छिन्नत्वमादायातिप्रसङ्ग इति वाच्यम्। समुदायस्यैकदेशानति-रिक्तत्वात् समुदायस्य तथात्वे एकदेशदेशस्यातथात्वमित्यस्य शब्द-मात्रत्वादिति चेन्न, तदवच्छेदकावच्छिन्नेत्यत्र तदवच्छेदकतापर्य्या-प्त्यवच्छेदकधर्म्मावच्छिन्नपर्य्याप्तिनिरूपकतावच्छेदकताकत्वं (१) विवक्षितं न्यूनाधिकपदार्थावच्छिन्नोक्तजन्यतयोरवच्छेदकत्वे च नैकधर्म्मावच्छिन्नपर्य्याप्तिके न्यूनाधिकवृत्तिभ्यां तावत्पदार्थसमुदाय-त्वाभ्यामेव तत्पर्य्याप्त्योरवच्छेदादिति नातिप्रसङ्गः। प्रकृते च व्याप्तिनिश्चय-व्याप्यवत्तानिश्चयनिरूपितजन्यतावच्छेदककुक्षिनिविष्ट-पदार्थानां न्यूनाधिकभावविरहेण एकेनैव समुदायत्वेनैव तदुभयाव-च्छेदकतापर्य्याप्तिरवच्छिद्यतेऽतो नासम्भवः। अथ धूमोवह्निव्याप्य-इत्येतादृशव्याप्तिनिश्चयस्य धूमलिङ्गकवह्निविधेयकानुमितित्वमेव जन्यतावच्छेदकमुपेयते न तु तत्र पक्षविषयत्वान्तर्भावः तथासत्य-नन्तपक्षभेदेन तत्कार्य्य-कारणभावबाहुल्यप्रसङ्गात् वह्निव्याप्यधूमवान्

(१) अवच्छेदकतापर्य्याप्त्यवच्छेदकधर्म्मावच्छिन्नत्वनिरूपितावच्छेदकतापर्य्याप्ति-कत्वमिति पा०।

पर्व्वत इति परामर्शजन्यतावच्छेदककोटौ च पर्व्वतविषयत्वान्तर्भाव-आवश्यकः अन्यपक्षकानुमितौ तदहेतुत्वात् तत्कथं तादृशजन्य-तावच्छेदकतयोरेकधर्म्मावच्छिन्नपर्य्याप्तिकत्वम्। न च तदवच्छेदकावच्छिन्नेत्यत्र तदवच्छेदकयावत्पदार्थावच्छिन्नत्वमेव निवेशनीयं न त्वेकधर्म्मावच्छिन्नपर्य्याप्तिनिरूपकतावच्छेदकताकत्वं धूमो वह्नि-व्याप्य इति विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदककोटौ धूमनिष्ठविशेषणताया निवेशात् वह्निव्याप्यधूमवान् पर्व्वत इति विशेषणतावच्छेदकप्रकारकनिश्चयजन्यतावच्छेदककोटौ च तन्निष्ठ-विशेषणतावच्छेदकताया एव निवेशात् न तादृशजन्यतायास्तादृश-जन्यतावच्छेदकयावत्पदार्थावच्छिन्नत्वं इति नातिप्रसङ्गः, प्रकृते च परामर्शजन्यताया अवच्छेदककोटौ पक्षविषयत्वस्याधिकस्य निवेशेऽपि तज्जन्यताया व्याप्तिनिश्चयजन्यतावच्छेदकयावत्पदार्था-वच्छिन्नत्वसत्त्वात् (१) नासम्भव इति वाच्यम्। धूमो वह्निव्याप्य-इत्येतादृशव्याप्तिनिश्चयजन्यतावच्छेदककोटौ च पर्व्वतविशेष्यतया अनिरूपितमहानसादिनिष्ठविशेष्यतानिरूपितवह्निविधेयताया अपि वह्निविधेयतात्वेन निवेशात् वह्निव्याप्यधूमवान् पर्व्वत इत्येतादृश-परामर्शजन्यतावच्छेदककोटौ च पर्व्वतनिष्ठविशेष्यतानिरूपित-वह्निविधेयताया एव निवेशात् परामर्शजन्यताया व्याप्तिनिश्चय-जन्यतावच्छेदकयावत्पदार्थावच्छिन्नत्वविरहात् एवं व्याप्तिनिश्चय-जन्यतावच्छेदककोटौ तदव्यवहितोत्तरत्वमेवान्यलिङ्गकानुमितौ

---

(१) यावत्पदार्थावच्छिन्नत्वमव्याहतमेवेतीति पा०।

व्यभिचारवारणाय निवेशनीयम् न तु व्याप्यवत्ताज्ञानाव्यवहितो-त्तरत्वं गौरवात् व्याप्यवत्तानिश्चयजन्यतावच्छेदककोटौ च न तन्नि-वेशनम्(१)। तन्निवेशनेऽपि धूमोवह्निव्याप्य इत्येतादृशज्ञान-मात्र(२)कालीनान्यलिङ्गकानुमितौ व्यभिचारात् अपि तु व्याप्य-वत्तानिश्चयाव्यवहितोत्तरत्वमेव, तथाच परामर्शजन्यताया न व्याप्तिनिश्चयजन्यतावच्छेदकयावत्पदार्थावच्छिन्नत्वमिति चेन्न, करणव्यापारनिरूपितफलनिष्ठजन्यतायाः प्राचीनमते एकधर्म्मा-वच्छिन्नत्वनियमादगत्या पर्व्वतपक्षक-वह्निविधेयकधूमादिलिङ्गका-नुमितित्वमेव व्याप्तिज्ञान-परामर्शयोर्जन्यतावच्छेदकं वाच्यम् तथाच तादृशजन्यतयोरेकधर्म्मावच्छिन्नपर्य्याप्तिनिरूपकतावच्छे-दकताकत्वमक्षतमेवेति नानुपपत्तिः। एतादृशनियमस्याप्रामा-णिकत्वात् अयमेवास्वरसः केचिदित्यनेन सूचितः। धूमत्वा-वच्छिन्नधर्म्मिकव्याप्तिप्रकारकज्ञानीयकारतायाः(३) अपि वह्नि-व्याप्यधूमवान्पर्व्वत इत्येतादृशनिश्चयवृत्तित्वात् तत्प्रतियोगिक-कार्य्यतायास्तादृशव्याप्तिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्य्यतावच्छेदकावच्छिन्नत्वमादायातिप्रसङ्गवारणाय विशिष्टपरा-मर्शवृत्तित्वमपहाय तदवच्छिन्नत्वनिवेशः। पदान्तरव्यावृत्तिस्तु(४)

---

(१) वह्निव्याप्यो धूम इति निश्चयाव्यवहितोत्तरत्वनिवेशनम्।

(२) मात्रपदेन धूमवत्तापरामर्शव्यवच्छेदः।

(३) व्याप्तिविशिष्टधूमवैशिष्ट्यावगाहिज्ञानत्वावच्छिन्नकार्य्यतानिरूपिताया इति शेषः।

(४) अनुभवत्वव्याप्यादिपदव्यावृत्तिरित्यर्थः।

पूर्व्ववद्बोध्या। अत्र व्याप्यविषयकवृत्तित्वस्य निवेशेनैव विशिष्ट-वैशिष्ट्यबोधादिवृत्तिकार्य्यतामादायातिप्रसङ्गवारणसम्भवात् गुरु-तरव्याप्तिनिश्चयत्वावच्छिन्नकारणताप्रतियोगिककार्य्यतावच्छेदका-वच्छिन्नत्वस्य निवेशाद्गौरवमित्यप्यस्वरसः केचिदित्यनेन सूचितः।

---

अनुमानदीधितिः।

**परे तु पक्षधर्म्मतेत्यत्र पक्षता विशेषणं, तथाच पक्षतासहकृततादृशपरामर्शजन्यत्वमर्थः, यथोक्ताया-विशिष्याद्यभावरूपाया वा पक्षतायाः प्रत्यक्षवारणाय परामर्शस्योपादानं तत्त्वेन जनकत्वमेकावच्छेदेन तदु-भयजन्यत्वञ्च विवक्षितं तेन बाधादिकालीनेन दैवात् प्रतियोगिविषयकेण परामर्शेन जन्ये पक्षतायाः प्रत्यक्षे तदुभयसमूहालम्बने वा नातिप्रसङ्गः। तद्वृत्त्यनु-भवत्वव्याप्यजातिमत्त्वविवक्षया च नाव्याप्तिरित्याहुः तच्चिन्त्यम्।**

---

गादाधरी विवृतिः।

मिश्रव्याख्यानमुपन्यस्यति, 'परेत्विति, यथाश्रुतव्याख्येयल-क्षणे पक्षताजन्यत्वनिवेशान्मूलोक्तशब्दात् तल्लाभाय आह, 'पक्ष-धर्म्मतेत्यत्रेति पक्षधर्म्मताशब्दार्थप्रविष्टेत्यर्थः, तथाच पक्षपदं न धर्म्मिमात्रपरं, अपि तु पक्षताविशिष्टधर्म्मिपरमेवेति भावः।

'विशेषणमिति, ज्ञानपदार्थ इत्यादिः, धर्मित्वरूपविषयविशेषणत्वेन विषयतया ज्ञानान्वयिनि धर्मिरूपविशेष्यांशे न तस्य विशेषणत्व-सम्भवः, परामर्शाविषयस्य तस्य तद्विषयविशेषणत्वासम्भवात् दण्डा-द्यविषयकस्य पुरुषादिज्ञानस्य पुरुषादेर्दण्डादिमत्त्वेऽपि दण्डादि-विशिष्टपुरुषाद्यविषयकत्वात्, दण्ड-पुरुषावित्यादिज्ञानस्य (१) दण्डादिविषयकत्वेऽपि न तद्विशिष्टविषयकत्वं, विषयतावच्छेदकस्यैव विषयविशेषणत्वादतः पक्षतोपलक्षितधर्मिविषयकमेव ज्ञानमिह विवक्षितं, तथासत्यपि पक्षताजन्यत्वसहितं परामर्शजन्यत्वं जन्या-न्तान्नभ्यते विशेष्यीभूततदन्वयिना तदन्वयिनो विशेषणत्वात् ज्ञान-विशेषणपक्षतायां ज्ञानान्वितजन्यपदार्थजन्यतायां (२) अन्वयात् इत्याशयेन तथैव लक्षणार्थमाह, 'तथाचेति । अथारुणया गवा सोमं क्रीणातीत्यादौ गवादावारुण्यादेः साक्षात्प्रकारतया तत्र तस्य विशेषणत्वसम्भवेन गवादिसाध्यतया प्रतीयमाने सोमक्रयादौ आरुण्यादिसाध्यताप्रतीतिः सम्भवतीति प्रकृतस्थले तु पक्षताया-ज्ञानांशे साक्षादप्रकारत्वाज्ज्ञानान्वयिना जन्यत्वेन कथमन्वयः । न चारुणयेत्यत्रापि आरुण्यं गवि न साक्षात्प्रकारः अभेदसम्बन्धे-नारुण्यविशिष्टाया एव तत्र साक्षात्प्रकारत्वात् तथाच परम्परया

---

(१) ननु पक्षतायाः पक्षांशे प्रकारविधया अभानेऽपि उपलक्षणतया भान-मभ्युपगन्तव्यं तथाच तत्र ज्ञानविषयत्वमक्षतमिति तद्विशिष्टविषयकत्वं ज्ञाने अक्षय्येवेति कथं पक्षताजन्यत्वं मूलात् लभ्यते इत्यत आह, दण्ड-पुरुषावित्यादि-ज्ञानस्येति ।

(२) ज्ञानान्वितार्थकजन्यपदार्थजन्यतायामिति पा० ।

गवि प्रकारस्यापि आरुण्यस्य यथा गवान्वयिना तृतीयार्थसाध्य-त्वेनान्वयस्तथा प्रकृतेऽपि ज्ञानविशेषणधर्म्मितायां प्रकारीभूत-धर्म्मिणि प्रकारीभवन्त्याः पक्षताया ज्ञानान्वयिताच्छेदकावच्छिन्ने जन्यत्वेऽन्वयः सम्भवतीति वाच्यम्। विशेषणविभक्तेरभेदार्थक-तया अरुणाभेदस्यारुण्यपर्य्यवसितस्य साक्षाद्गोविशेषणत्वसम्भ-वात्। मैवं, लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ यथा लौहि-त्यस्य ऋत्विक्प्रचरणांशे परम्परया विशेषणस्यापि तदन्वयिना इष्टसाधनत्वेनान्वयः तथा प्रकृतेऽपि परम्परया ज्ञानविशेषणीभूत-पक्षताया अपि जन्यतान्वये बधकाभावात्। एवं विशेषणविभक्तेः सार्थकतामते(१)अरुणयेत्यादावारुण्यं गवि परम्परयैव प्रकार इति साक्षात् तत्प्रकारस्यैव तदन्वयिना अन्वय इति नियमाभावात्। अथ भवतु परम्परया स्वविशेष्येऽन्वयिनापि स्वान्वयः तथापि जन्यतायां ज्ञानान्वये उपलक्षणतया भासमानविषयांशे प्रकारीभूतायाः पक्ष-ताया जन्यतान्वयो न सम्भवतीति उपलक्षणपुच्छलग्नस्य विशेषण-त्वायोगात्,लोहितोष्णीषा इत्यादौ लौहित्यविशेष्यीभूतोष्णीषादा-वपि इष्टसाधनतान्वयोपगमेन लौहित्यस्यारुणयेत्यादावारुण्यविशेष्य-तद्धर्म्मिणोऽपि क्रयसाधनत्वान्वयोपगमेनारुण्यस्योपलक्षणपुच्छलग्न-त्वाभावेन सामञ्जस्यात्, प्रकृते च परामर्शविषयेऽनुमितिजनत्वबा-धेन तदन्वयायोगात् उपलक्षणताया एव वाच्यत्वादितिचेन्न, प्रकृते-ऽपि जन्यपदस्य प्रयोज्यपरतया कारणतावच्छेदकप्रविष्टविषयाणा-

(१) साधुत्वार्थतामते इति पा०।

मपि अनुमितिप्रयोजकतया तेषामपि जन्यपदार्थान्वयः सम्भवत्येवेति सामञ्जस्यात्, परामर्शादिप्रयोज्यतायां लक्षणघटकत्वेऽपि परामर्शाद्यन्वयिप्रयोज्यताशरीरे जनकजनकत्वादिना या अन्यथासिद्धिस्तदनिरूपकत्वस्य (१) निवेशेनानुमितिजन्यप्रत्यक्षादौ (२) अतिव्याप्तिवारणसम्भवात्, विषयप्रयोजकतायाश्च(३)लक्षणवाक्यजन्यबोधे भानेऽपि तस्या लक्षणघटकत्वेन न विवक्षा अतो न लक्षणे व्यर्थविशेषणता, वस्तुतोऽज्ञानांशे पक्षताश्रयधर्म्मिवृत्तिताविषयकत्वस्य साक्षात् प्रकारतया भाने पक्षताया अपि धर्म्मिपारतन्त्र्येण स्वाश्रयधर्म्मिवृत्तित्वविषयकत्वसम्बन्धेन तदंशेऽन्वयः स्वीक्रियते तथाच ज्ञानांशे परम्परासम्बन्धेन साक्षात्प्रकारीभवन्त्याः पक्षताया जन्यत्वान्वयोनिराबाध एव । अतएव दण्डिनं पुरुषमानय इत्यादौ अन्तरा भासमाने मत्वर्थसम्बन्धे आनयनकर्म्मत्वबाधेऽपि दण्डादावानयनकर्म्मत्वान्वयोदण्डादेरपि स्वसम्बन्ध्यभेदसम्बन्धेन पारतन्त्र्येण पुरुषादौ साक्षात्प्रकारत्वोपगमेनोपपादनीयः ।

यत्तु पक्षतायाः सहकृतत्वसम्बन्धेन(४)ज्ञानविशेषणत्वात् पक्षताजन्यत्वलाभ इति, तदसत्, परम्परया विशेषणस्य परम्पराघट-

---

(१) तदन्यनिरूपकत्वस्येति पा० ।

(२) अनुमित्यनुव्यवसाये इत्यर्थः ।

(३) जनकज्ञानाविषयत्वरूपप्रयोजकत्वस्येत्यर्थः, लक्षणवाक्यजन्यबोधविषयावत्पदार्थस्य लक्षणघटकत्वमिति नियमाभावादिति भावः ।

(४) सामानाधिकरण्यसम्बन्धेनेत्यर्थः ।

कतत्तत्पदार्थघटितपरम्परासम्बन्धातिरिक्तसम्बन्धेनान्वये आकाङ्क्षा-
विरहात् अन्यथा दण्डी पुरुष इत्यादौ एककालीनत्वादिसम्बन्धे-
नापि पुरुषादौ पारतन्त्र्येण दण्ड-दण्डत्वाद्यन्वयापत्तेः।

अरुणयेत्यादावारुण्यरूपधर्म्म एवारुणपदार्थः, तत्पदोत्तर-
तृतीययैवारुण्यस्य क्रयसाधनत्वं बोध्यते, न तु विशिष्टान्वयबला-
त्तल्लाभ इति मीमांसासिद्धान्तः, तदुक्तं "तृतीयया गुणस्यैव
साधनत्वं क्रयं प्रति विस्पष्टं गम्यते तत्तु द्रव्यद्वारैव सिद्ध्यति" इति
आरुण्यस्य क्रयसाधनत्वं साधनतावच्छेदकतया प्रयोजकत्वमेव,
धूमाद्वह्निमानित्यत्र धूमपदस्य मुख्यार्थपरतैवेति मते यथा हेतु-
पञ्चम्या धूमस्य (१) कारणतायां विषयतया अवच्छेदकत्वरूपं
वह्निज्ञानप्रयोजकत्वमेव प्रतिपाद्यते तथात्रापि हेतुतृतीयया साध-
नतावच्छेदकत्वप्रत्यायनसम्भवात्। आरुण्यस्य साधनतावच्छेदक-
त्वञ्च आश्रयतासम्बन्धेन, 'तत्तु' तच्च, 'द्रव्यद्वारैव' आश्रयस्य साधन-
तयैव, 'सिद्ध्यति' उपपद्यते, इति तदर्थः। एवञ्च गोः क्रयसाधनायां
श्रुतिसिद्धायां आरुण्यस्य तदवच्छेदकत्वे लाघवं तदाश्रयद्रव्यान्तर-
निष्ठकारणतान्तरावच्छेदकत्वे गौरवमिति प्रतिसन्धानेन गोनिष्ठ-
कारणतायामारुण्यस्यावच्छेदकत्वनिश्चये आरुण्यविशिष्टगोः क्रयसा-
धनत्वमर्थात् प्रतीयते तादृशबोधे अरुणयेतिपदस्य तात्पर्य्याद्गुणि-
परतया अरुणपदस्य गुणिपरगोपदसमानलिङ्गतेति कारिकाभि-

---

(१) धूमस्येत्यस्य प्रयोजकत्वमेवेत्यग्रिमेण सहान्वयः। यथा हेतुपञ्चम्यां ज्ञान-
निष्ठकारणतायां विषयतयावच्छेदकत्वरूपप्रयोजकत्वमेवेति पा०।

प्रायः । 'तथाचेति पक्षताया उपदर्शितविशेषणत्वे च इत्यर्थः, 'पक्षतासहकृतेति पक्षताजन्यत्वे सति परामर्शजन्यत्वमर्थः, परामर्शजन्यसाध्यव्याप्यहेतुविशिष्टपक्षवैशिष्ठ्यावगाहिबोध-तादृश-(१) पक्षाभावप्रत्यक्षादावतिव्याप्तिवारणाय पक्षताजन्यत्वोपादानम्, परामर्शजन्यत्वोपादानप्रयोजनमाह, 'यथोक्ताया इति, 'यथोक्तायाः' सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपायाः । ननु तादृशाभावस्य लौकिकप्रत्यक्षमेव न सम्भवति एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपातीन्द्रियक्षणघटितधर्म्मावच्छिन्नप्रतियोगिताकत्वात् । यदि चैकात्मवृत्तित्वमेव वैशिष्ठ्यं सिषाधयिषाकालीनसिद्धौ कालान्तरावच्छेदेन स्वसमानाधिकरणसिषाधयिषाभावनिरूपिततादृशवैशिष्ठ्यसत्त्वेऽपि तदानीं (२) सिषाधयिषाविरहात्मकविशेषणाभावाद्विशिष्टाभावोऽक्षत एव अन्यथा एकक्षणावच्छिन्नत्वनिवेशेऽपि यादृशसिद्धेर्द्वितीयक्षणे सिषाधयिषाया उत्पत्तिस्तन्नाशो वा (३) तत्र सिषाधयिषाभावनिरूपिततादृशवैशिष्ठ्यसत्त्वेन (४) तस्या द्वितीयक्षणे उत्पत्तिक्षणे वा (५) विशिष्टाभावासत्त्वप्रसङ्गादिति सिद्धेः

---

(१) मिश्रैर्विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकनिश्चयहेतुत्वानभ्युपगमादाह, तादृशेति ।

(२) कार्य्याव्यवहितप्राक्क्षण इत्यर्थः ।

(३) यत्र सिद्धिः सिषाधयिषा, यत्र वा सिषाधयिषा सिद्धिस्तत्रेत्यर्थः ।

(४) अतएवेत्यादिना पूर्व्वं एकक्षणावच्छिन्नत्वनिवेशस्यावश्यकत्वं यद्भट्टाचार्य्येण दर्शितं तत्तु यथाश्रुताभिप्रायेण बोध्यम् ।

(५) यत्रादौ सिद्धिस्तत्र सिद्ध्युत्पत्तिक्षणे यत्र पश्चात् सिद्धिः तत्र सिद्ध्युत्पत्तिद्वितीयक्षणे इति भावः ।

सिषाधयिषाविरहेण वैशिष्ट्यमेकचणावच्छेदेनैकदेशवृत्तित्वमिति पचताग्रन्थे दीधितिकारलिखनं सिषाधयिषाविरहस्य विशेषणत्वलाभाय इति मन्यते तथाप्यनुगताननुगतसिषाधयिषाभावसहस्रस्य (१) तादृशविशिष्टभावप्रतियोगितावच्छेदकघटकत्वात् तस्य युगसहस्रेणापि ज्ञातुमशक्यतया न लौकिकप्रत्यचसम्भवः। सिषाधयिषायोग्यताया उत्तेजकत्वमते सुतरां तथा योग्यतायास्तत्तत्चणात्मकतया अयोग्यत्वादित्यत आह, 'विशेषाद्यभावरूपाया वेति सिषाधयिषाभावाविशेषितसिद्ध्यभावरूपायाइत्यर्थः, आदिना सिषाधयिषाभावरूपविशेषणपरिग्रहः, यत्र विषयविशेषे सिद्धिकाले सिषाधयिषाबलात् कदापि नानुमितिस्तत्र सिद्ध्यभावमात्रं पचता, यत्र च सिषाधयिषां विना कदापि नानुमितिस्तत्र सैव पचतेति तयोः प्रत्यचस्य न दुरपवादत्वमिति भावः। न च परामर्शानुपादानेऽपि स्थलविशेषीयविशिष्टाभावरूपपचताजन्यत्वघटितजातिघटितलचणं सम्भवतीति परामर्शोपादानमनर्थकमिति वाच्यम्। मूलोपात्तपरामर्शजन्यत्वांशसार्थक्याय प्रत्यचविषयपचताया निवेशयितुमुचितत्वात्, परामर्शजन्यत्वं परामर्शनिष्ठजनकतानिरूपितजन्यत्वं, तत्र परामर्शनिष्ठत्वस्थले परामर्शत्वावच्छिन्नत्वं तदुभयजन्यतयोरेकावच्छेदकावच्छिन्न-

---

(१) पर्व्वते वह्न्यनुमितिर्जायतामित्याद्याकारकसिषाधयिषाणामनुगतरूपेणोत्तेजकत्वं, अनुमितिर्जायतां प्रत्यचातिरिक्तं वह्निज्ञानं जायतामित्याद्याकारकसिषाधयिषाणामननुगततत्तद्व्यक्तित्वेनोत्तेजकत्वमिति भावः।

त्वञ्च निवेशयति, 'तत्त्वेनेत्यादिना, 'तत्त्वेन' परामर्शत्वेन, पक्षतानिष्ठजनकतायाञ्च न पक्षतात्वावच्छिन्नत्वनिवेशनं प्रयोजनविरहात्, 'तदुभयजन्यत्वं' पक्षता-परामर्शोभयजन्यत्वं, तथाच पक्षताजन्यतावच्छेदकावच्छिन्ना या परामर्शत्वावच्छिन्नजनकतानिरूपितजन्यता तद्वत्त्वं पर्य्यवसितम्। परामर्शत्वेन जनकताविवक्षायाः प्रयोजनमाह, 'तेनेत्यादिना। अथ परामर्शसत्त्वेऽनुमितिरेव भविष्यति न तत्प्रत्यक्षं अनुमितिसामग्र्या भिन्नविषये बलवत्त्वात् जातायाञ्चानुमितौ न तत्प्रत्यक्षसम्भवः, तदानीं तस्या असत्त्वात् विषयस्य च कार्य्यकालवृत्तितया हेतुत्वात्तथाच कथमतिव्याप्तिरित्याशङ्कापरीहारायाह,'बाधादिकालीनेनेति,'आदिपदात् साध्याभावव्याप्यवत्ताज्ञान-प्रत्यक्षेच्छाविरहविशिष्टप्रत्यक्षसामग्रीरूपानुमितिप्रतिबन्धकान्तरपरिग्रहः, तथाच तत्रानुमितिसामग्र्येव नास्तीति भावः। पक्षताप्रत्यक्षे परामर्शजन्यतासम्पादकं विशेषणमाह, 'दैवात्प्रतियोगिविषयकेणेति, 'दैवात्' कदाचित्, सामग्रीवशात्, 'प्रतियोगिविषयकेण' सिद्धिविषयकेण; तथाच वह्निव्याप्यधूमवान् पर्व्वतः पर्व्वतविशेष्यक-वह्निप्रकारकनिश्चयश्चेति समूहालम्बनस्मरणोत्तरकालीनैतादृशनिश्चयाभाववानहमित्यादित्यादिप्रत्यक्षे पक्षताजन्यतावच्छेदकीभूततादृशसिद्ध्यभावप्रत्यक्षत्वावच्छिन्नायाः परामर्शनिष्ठसिद्धिज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतायाश्च सत्त्वात् प्रसक्तोऽतिप्रसङ्ग उक्तसिद्धिज्ञानत्वावच्छिन्नजनकतायां परामर्शत्वावच्छिन्नत्वविरहान्न भवतीति समुदायार्थः। एकावच्छिन्नत्वविवक्षायाः फलमाह, 'तदुभयसमूहालम्बने वेति पक्षता-परामर्शो-

भयसमूहालम्बनप्रत्यक्षे वेत्यर्थः, तादृशप्रत्यक्षे विषयविधया पक्षता-परामर्शयोः कारणत्वेऽपि पक्षताप्रत्यक्षत्व-परामर्शप्रत्यक्षत्वविभिन्न-धर्म्मयोरेव तदुभयजन्यतावच्छेदकतया नातिव्याप्तिरिति भावः। अथ परामर्शप्रत्यक्षे न परामर्शत्वेन विषयस्य हेतुता अपि तु सामान्यतः प्रत्यक्षे विषयत्वादिनेति प्रागेवोक्तं, एवञ्चैककाला-वच्छिन्नत्वनिवेशनमफलम्। न च परामर्शप्रत्यक्षस्य वह्निव्याप्य-धूमवत्पर्व्वतं जानामीत्याकारकस्य विशिष्टवैशिष्ट्यबोधतया विशे-षणतावच्छेदकीभूत-वह्निव्याप्यधूमप्रकारक-पक्षनिश्चयत्वरूपपरा-मर्शत्वेन तत्र हेतुत्वमक्षतमेवेति वाच्यम्। मिश्रैर्विशिष्टवैशिष्ट्य-बोधे विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन हेतुतानभ्युपगमात्। यत्तु ज्ञानव्याप्यसुखवदात्मभिन्नमिदं सिद्ध्यभाववांश्चाहमित्येतादृश-लौकिकमानसेऽतिव्याप्तिवारणाय तदावश्यकं तत्र साध्यव्याप्यहेतु-मत्पक्षनिश्चयत्वस्य प्रतियोगितावच्छेदकनिश्चयत्वात्मकतया मिश्र-मते तथाविधभेदप्रत्यक्षजनकतावच्छेदकत्वादिति, तन्न, लौकिक-मानसायोग्यवह्निव्याप्यवत्पक्षविषयकनिश्चयत्वरूपपरामर्शत्वाव-च्छिन्नकारणताया एव लक्षणे निवेशनीयतया ज्ञानव्याप्यसुखवदा-त्मरूपप्रतियोगिज्ञानमादायातिव्याप्त्यनवकाशात्तद्वत्त्यनुभवत्वव्याप्य-जातिमत्त्वस्यानुपदमेव विवक्षणीयतया अव्याप्त्यनवकाशाच्चेति। मैवं, परामर्शप्रत्यक्षे परामर्शत्वेन हेतुतायाः स्वयं दूषितत्वेऽपि मिश्राभ्युपगततया तन्मते तामादाय स्वमते च उक्तविशेषण-तावच्छेदकप्रकारकनिश्चयत्वेन हेतुतामादायातिप्रसङ्गवारणाय उभयजन्यतायामेकधर्म्मावच्छिन्नत्वनिवेशस्यावश्यकत्वात्। अथ

एकधर्म्मावच्छिन्नत्वं यद्यवच्छेदककोटिप्रविष्टैकधर्म्मकत्वं तदा उक्तस्थले पक्षता-परामर्शजन्यतयोः प्रत्यक्षत्वरूपैकधर्म्मावच्छिन्नत्वा-त्तद्दोषतादवस्थ्यं, यदि चैकधर्म्मपर्य्याप्तावच्छेदकताकत्वं तदा-ऽसम्भवः तत्तल्लिङ्गकपरामर्शाव्यवहितोत्तरानुमितित्वस्य परामर्श-जन्यतावच्छेदकत्वात् पक्षताजन्यतावच्छेदककोटौ च उत्पन्न-त्वान्तानिवेशात् पक्षताजन्यतावच्छेदकतापर्य्याप्त्यधिकरणघटित-धर्म्मावच्छिन्नत्वनिवेशेऽपि न निस्तारः पर्व्वतो वह्निमानित्यादि-सिद्धिकाले नीलपर्व्वतो वह्निमानित्यनुमित्युत्पत्त्या पर्व्वतत्वाद्यंशे उद्देश्यतावच्छेदकत्वपर्य्याप्तेः परामर्शजन्यतावच्छेदककोट्यप्रवि-ष्टाया अधिकायाः पक्षताजन्यतावच्छेदके निवेशादिति, चेन्न, पक्षताजन्यतावच्छेदकतापर्य्याप्त्यधिकरणघटितधर्म्मावच्छिन्नपरा-मर्शजन्यतैव निवेशनीया व्यभिचारविरहेऽपि पक्षता-परामर्शयोः सामान्यसामग्रीत्व-विशेषसमग्रीत्वनिर्व्वाहाय (१) पर्व्वतो वह्नि-व्याप्यधूमवान् इत्यादिपरामर्शजन्यतावच्छेदककोटौ उद्देश्यता-वच्छेदकतायाः पर्व्वतत्वादिपर्य्याप्तिनिवेशस्यावश्यकतया उक्त-दोषानवकाशात्, अन्यथा (२) नीलपर्व्वतो वह्निव्याप्यधूमवान् पर्व्वतो वह्निव्याप्यधूमवानित्यादिसमूहालम्बनपरामर्शजन्यायाः पर्व्वतो वह्निमानित्यादिसिद्धिकालीनाया नीलपर्व्वतो वह्नि-मानित्यादिसिद्ध्यभावजन्यतावच्छेदकानाक्रान्तायाः तथाविधपरा-

(१) परामर्शजन्यतावच्छेदकधर्म्मावच्छिन्नोत्पादकत्वनिर्व्वाहायेत्यर्थः ।

(२) पर्य्याप्त्यनिवेशे ।

मर्शजन्यतावच्छेदकाक्रान्ततया अन्यलिङ्गकशुद्धपर्व्वतत्वावच्छिन्न-विशेष्यकवह्न्यनुमितेस्तादृशपरामर्शजन्यतावच्छेदकानाक्रान्ताया-स्तादृशसिद्ध्यभावजन्यतावच्छेदकाक्रान्ततया कार्य्यतावच्छेदकयो-र्व्याप्य-व्यापकभावविरहेण सामान्य-विशेषभावानुपपत्तेः,अन्यथा(१) परामर्शजन्यतावच्छेदके विषयनिवेशस्यापि निष्प्रयोजनकत्वापा-तात्। यदि चान्यलिङ्गकेच्छाकाले (२) सिद्धिसत्त्वेऽनुमितिवार-णाय सिद्ध्यनुत्तरत्वं पक्षताजन्यतावच्छेदककोटौ निवेश्यते तदा परामर्शजन्यतावच्छेदककोटावपि तादृशसिद्ध्यनुत्तरत्वं निवेशनीयं अन्यथा (३) सामान्य-विशेषभावानुपपत्त्या परस्परसहकारित्वा-

---

(१) तल्लिङ्गकानुमितीच्छाविरहविशिष्टसिद्ध्यनुत्तरानुमितं प्रति तत्पक्ष-साध्य-लिङ्गकानुमित्याविरहविशिष्टसिद्ध्यभावत्वेन हेतुत्वे इत्यर्थः, नन्वेतद्दोषस्य तल्लिङ्ग-कानुमितिं प्रति तल्लिङ्गकानुमित्याविरहविशिष्टसिद्ध्यभावत्वेन हेतुत्वेनापि वारण-सम्भव इति चेन्न, यत्रोभयलिङ्गकपरामर्शः सिद्ध्यात्मकः धूमलिङ्गकानुमितीच्छा तदुत्तरानुमितेरालोकलिङ्गकत्वेन जन्यतावच्छेदकाक्रान्ततया आलोकलिङ्गकेच्छा-विरहविशिष्टसिद्ध्यभावासत्त्वात् व्यभिचारप्रसङ्गात्। अस्मन्मते आलोकलिङ्ग-कानुमित्याविरहविशिष्टसिद्ध्युत्तरत्वाभावेन जन्यतावच्छेदकानाक्रतया व्यभिचारा-नवकाशादिति भावः।

(२) व्याप्य-व्यापकभावानभ्युपगमे वह्निव्याप्यधूमवान् पर्व्वत इति परामर्शो-त्तरानुमितिं प्रति तादृशपरामर्शत्वेन हेतुत्वमस्तु, यत्र वह्निव्याप्यवत्तापरामर्शः सिद्ध्यात्मकः सिद्ध्यनात्मकः द्रव्यव्याप्यवत्तापरामर्शः तदुत्तरं द्रव्यानुमितेस्तादृश-परामर्शजन्यतावच्छेदकाक्रान्तायाः पक्षताजन्यतावच्छेदकानाक्रान्ततया व्याप्य-व्यापकभावविरहेऽपि क्षत्यभावादिति।

(३) यत्र सिद्ध्यात्मकवह्निव्याप्यालोकपरामर्शात्मकधूमपरामर्शः धूमेनानु-मिनुयामितीच्छा तदुत्तरानुमितेरालोकलिङ्गकत्वेनालोकपरामर्शजन्यतावच्छेदका-क्रान्तायाः आलोकलिङ्गकेच्छाविरहविशिष्टसिद्ध्युत्तरत्वेनालोकलिङ्गकानुमित्या-

सम्भवात् इति नानुपपत्तिरिति सङ्क्षेपः। पक्षतात्व-परामर्शत्वयोः (१) अननुगतसाध्यादिघटिततया एकोपादानेऽन्यानुमितावव्याप्तिरित्याशङ्काह, 'तद्वत्तीति तादृशजन्यतावच्छेदकाश्रयवृत्त्यनुभवत्वव्याप्यजातिमत्त्वविवक्षयेत्यर्थः, 'नाव्याप्तिः' न एकोपादानेऽन्यानुमितावव्याप्तिः। 'चिन्त्यमिति, जन्यतायां अभावाविषयकवृत्तित्वनिवेशेनैव सकलातिव्याप्तिवारणसम्भवे गुरुतरपक्षताजन्यत्वनिवेशे गौरमेव चिन्तावीजमिति बोध्यम्।

---

चिन्तामणिदीधितिः।

तत्करणमिति। न च व्याप्त्यादिज्ञानजन्यज्ञानकरणत्वेनेतरभेदसाधने व्याप्तिज्ञानत्वं तादात्म्यसम्बन्धेन व्याप्तिज्ञानमेव वा गमकं, व्याप्तेरननुगमेऽपि अधिकस्य भागासिद्धिवारणमात्रप्रयोजनकत्वादिति वाच्यम्। फलोपहितस्य लक्ष्यतया व्याप्तिज्ञानत्वादेरतिप्रसक्तत्वात् करणत्वनिष्ठव्याप्तेस्तादृशव्याप्तिज्ञान-

---

विरहविशिष्टवह्न्यभावजन्यतावच्छेदकानाक्रान्ततया व्याप्य-व्यापकभावानुपपत्तिरतः परामर्शजन्यतावच्छेदके तन्निवेशः। तथाचालोकपरामर्शजन्यतावच्छेदकाभावान्न व्यापकत्वानुपपत्तिरिति भावः।

(१) ननु परामर्श एव व्यापकसामग्री वाच्या इति चेन्न, यत्र वह्न्यनात्मकधूममात्रपरामर्शादनुमितिस्तत्र तदनुमितेरालोकलिङ्गकानुमित्साविरहविशिष्टवह्न्यनुत्तरत्वेन तादृशपक्षताजन्यतावच्छेदकाक्रान्तायाः आलोकपरामर्शजन्यतावच्छेदकानाक्रान्ततया तत्रापि व्यापकत्वानुपपत्तिरिति ध्येयम्।

त्वत्वाद्यनवच्छेद्यत्वाद्यातिरिक्तव्याप्तेर्गमकतया वैयर्थ्य-
शङ्कानवकाशाच्चेति ।

---

गादाधरी विवृतिः ।

'तत्करणमितीति, 'तत्करणमनुमानमित्यत्र 'तत्पदेन पक्ष-
विशेषणतापन्नहेतुविशेष्यकत्वावच्छेदेन व्याप्तिप्रकारकं यज्ज्ञानं
तज्जन्यज्ञानं परामृश्यते, तेन तादृशज्ञानकरणत्वस्य अनुमान-
लक्षणत्वं लभ्यते, तच्च न घटते, इतरभेदानुमापकस्यैव लक्षणत्वात्,
तादृशलक्षणेन इतरभेदानुमाने तद्घटकस्य हेतुविषयकत्वावच्छेदेन
व्याप्तिप्रकारकज्ञानत्वस्यैवानुमापकतासम्भवेन इतरांशस्य वैयर्थ्येन
तस्यानुमानेतरभेदानुमापकत्वासम्भवात् । यदि च प्रकृतहेतुता-
वच्छेदकघटकधर्मस्यानुमापकतावच्छेदकत्वसम्भव एव इतरांशस्य
वैयर्थ्यं प्रकृते च व्याप्तिज्ञानत्वस्यानुमापकत्वे व्याप्तिप्रकारकत्व-
वैशिष्ट्यावच्छिन्नज्ञानत्वत्वमेवानुमापकतावच्छेदकं तच्च प्रकृतहेतु-
तावच्छेदकीभूततादृशज्ञानकरणतात्वस्य न घटकं तच्छरीरे
स्वरूपतो ज्ञानत्वस्यैव निवेशात् सामानाधिकरण्यरूपस्य व्याप्ति-
प्रकारकत्ववैशिष्ट्यस्य चानिवेशादिति मन्यते, तदापि व्याप्ति-
ज्ञानत्वावच्छिन्नस्य तादात्म्यसम्बन्धेनानुमापकत्वसम्भवात् वैयर्थ्यं
दुष्परिहरमेव । न च व्याप्तिज्ञानत्वं सामानाधिकरण्यसम्बन्धेन
व्याप्तिप्रकारकत्वावच्छिन्नज्ञानत्वं, तच्च नोक्तलक्षणघटकं तच्छरीरे
ज्ञानत्वावच्छिन्नज्ञान एव व्याप्तिप्रकारकत्वस्य विशेषणत्वादिति

कथं व्यर्थेति वाच्यम् । उक्तलक्षणघटकयोरेकत्र द्वयमिति रीत्या ज्ञानविशेषणतापन्नव्याप्तिप्रकारकत्व-ज्ञानत्वयोरेव व्यासज्यवृत्ति-व्याप्यतावच्छेदकत्वसम्भवेन वैयर्थ्यानुद्धारात् । न च साध्यादि-भेदेन विभिन्नानां व्याप्तीनामनुगतरूपेण निवेशासम्भवात् किञ्चिद्व्याप्तिप्रकारकज्ञानत्वमेव हेतूकार्य्यं तथाचानुमानमात्रस्य पक्षीभूतत्वात् भागासिद्धिरिति व्याप्तिज्ञानत्वादेर्नानुमापकत्व-सम्भवः यत्किञ्चिद्व्याप्तिप्रकारकपक्षधर्म्मताज्ञानजन्यज्ञानवृत्त्यनुभव-त्वव्याप्यजातिमत्करणत्वन्तु निखिलानुमानसाधारणमिति वाच्यम् । भागासिद्धिमात्रवारकविशेषणस्यापि व्यभिचारावारकतया तद-न्तर्भावेन व्याप्यवच्छेदकत्वविरहात् व्यर्थताया अनुद्धारात् इत्याशङ्कते, 'न चेत्यादिना वाच्यमित्यन्तेन, 'इतरभेदभेदसाधने' अनुमानरूपपक्षे तदितरभेदानुमाने, 'गमकं' अनुमापकं, तथाच इतरांशस्य वैयर्थ्यमिति भावः । 'अधिकस्य' व्याप्तिज्ञान-भिन्नांशस्य, 'वारणमात्रेति, मात्रपदेन व्यभिचारवारणप्रयोजनकत्व-व्यवच्छेदः । 'फलोपहितस्य' अनुमितिरूपफलोपहितकरणस्य, 'लक्ष्यतया' इतरभेदसाधने पक्षतया, 'व्याप्तिज्ञानत्वादेरित्यादिना तादात्म्यसम्बन्धेन व्याप्तिज्ञानपरिग्रहः । 'अतिप्रसक्तत्वात्' पक्षाति-रिक्तेऽनुमित्यनुपहितव्याप्तिज्ञानेपि वृत्तेः । तथाच व्याप्तिज्ञान-त्वादेरनुमितिफलोपहितकरणरूपपक्षेतरभेदात्मकसाध्यव्यभिचारि-तया व्यभिचारवारकत्वेन इतरांशसार्थक्यमिति भावः । स्वरूप-योग्यकरणमात्रस्यैव लक्ष्यतामभ्युपेत्य समाधत्ते, 'करणत्वनिष्ठ-व्याप्तेरिति, 'तादृशव्याप्तिज्ञानत्वत्वाद्यनवच्छेद्यत्वादिति, व्यभि-

करणत्वेनेत्यादिः। तथाच तन्निष्ठतत्साध्यनिरूपितव्याप्तौ लघोरवच्छेदकस्य सम्भवे तद्घटितगुरुधर्म्मस्यानवच्छेदकत्वं गौरवज्ञानस्यावच्छेदकत्वग्रहविरोधित्वात् अन्यथोपपत्त्या तस्यावच्छेदकत्वे मानाभावाच्च इत्येव व्यर्थविशेषणताया दूषकतावीजं यथा वह्निमान् नीलधूमादित्यादौ, प्रकृते च करणत्वनिष्ठेतरभेदव्याप्तौ व्याप्तिज्ञानत्वस्य व्यधिकरणतया अवच्छेदकत्वासम्भवेन व्याप्तेस्तावच्छिन्नत्वनियमेनान्यथानुपपत्त्या गुरोरपि तादृशज्ञानकरणतात्वस्यावच्छेदकत्वं वाच्यमिति न व्यर्थविशेषणता दोषः। उक्तञ्च यन्निष्ठा यन्निरूपिता व्याप्तिर्येन विशेषणेन विना ग्रहीतुं न शक्यते तत्तस्य सार्थकमिति। अतएव वह्निमान् धूमप्रागभावादित्यादौ धर्म्मिभेदान्न वैयर्थ्यमित्यभिप्रायः। न च व्याप्तिज्ञाननिष्ठं करणत्वं न व्याप्तिज्ञानत्वावच्छिन्नमनुमितिनियतपूर्व्ववर्त्तित्वम् फलानुपधायकव्याप्तिज्ञानाद्यसंग्रहात् अपि तु तन्नियतपूर्व्ववर्त्तितावच्छेदकधर्म्मवत्त्वमेव तादृशधर्म्मस्य व्याप्तिज्ञानत्वमेव तन्निष्ठव्याप्तेः कथं व्याप्तिज्ञानत्वत्वावच्छेद्यत्वासम्भव इति वाच्यम्। स्वरूपसम्बन्ध एव करणत्वं इत्यभिप्रायेणैव तल्लिखनात्। वस्तुतो व्याप्तिज्ञानत्वं न निखिलव्याप्तिज्ञानवृत्तिकरणतानिष्ठव्याप्त्यवच्छेदकं व्याप्तिज्ञानत्वत्वरूपावच्छेदकघटकस्य ज्ञानविशेषणतापन्नव्याप्तिप्रकारकत्वस्यापि करणतात्मकत्वात्, व्याप्तिज्ञानत्वत्वस्य तदवृत्तित्वात् ज्ञानत्वे सति व्याप्तिप्रकारकत्वत्वस्य च ज्ञानत्वात्मककरणत्वावृत्तित्वान्नियतपूर्व्ववर्त्तितावच्छेदकत्वरूपकरणतात्वस्य च उभयसाधारणेन उभयनिष्ठव्याप्त्यवच्छेदकत्वं निष्प्रत्यूहमेव।

व्याप्तेः (१) साध्यादिभेदेनाननुगततया न निखिलव्याप्तिप्रकारकत्व-साधारण्यं धर्म्मान्तरस्य (२) तादृशज्ञानजन्यज्ञानवृत्त्यनुभवत्वव्याप्य-जातिमत्करणत्वन्तु सर्व्वसाधारणमेवेति नानुपपत्तिलेशोऽपि। धर्म्मिभेदेऽपि वैयर्थ्यमभ्युपेत्य समाधत्ते, 'व्यतिरेकव्याप्तेरिति, लक्षणस्य केवलव्यतिरेकिहेतुतया व्यतिरेकव्याप्तिरेव प्रकृते गमकतौपयिकी, तथाच साध्याभावत्वाद्यवच्छेदेन हेत्वभावव्याप्ते-र्ग्राह्यतया हेतुतावच्छेदकस्य साध्यव्याप्यतानवच्छेदकत्वेऽपि न क्षतिरिति भावः (३)।

---

चिन्तामणिदीधितिः।

लिङ्गस्यानित्यत्वेऽप्यनुमितिकरणस्य स्वरूपतः प्रत्य-क्षोपजीवकत्वं व्यवस्थापयन्नाह, 'तच्चेति।

अनुमितेर्ज्ञानाकरणकज्ञानत्वेन प्रत्यक्षमितिमध्य-निवेशे तत्करणस्यापि प्रत्यक्षप्रमाणान्तर्भावः स्यादिति तन्निरस्यति, 'तच्चेतीत्यपि केचित्।

---

(१) ननु ज्ञानीयव्याप्तिप्रकारकत्वामेक्षया व्याप्तिप्रकारकज्ञानत्वस्य गुरुतया विनिगमनाविरहात् तदेव पूर्व्ववर्त्तितावच्छेदकं तथाच व्याप्तिप्रकारत्वस्य हेतुत्वसम्भवे अधिकवैयर्थ्यमस्त्येव इत्यत आह, व्याप्तेरिति।

(२) व्याप्तिप्रकारत्वत्वस्येत्यर्थः।

(३) तथाचाखण्डाभावघटकतया सार्थक्यमिति भावः।

## गादाधरी विवृतिः ।

अथ 'प्रत्यक्षोपजीवकत्वादिति यदुक्तं तन्न घटते ज्ञायमान-धूमादेरनुमितिकरणतया तस्य प्रत्यक्षानुपजीवकत्वात्, धूमादे-रदृष्टद्वारा (१) प्रवृत्तिजनकीभूतोपादानप्रत्यक्षोपजीकत्वेऽपि नित्यहेतोरतथात्वेन अनुमानत्वावच्छेदेन तथात्वानुपपत्तेः अनु-मानसामान्यस्यैव निरूपणीयतया अनुमानत्वावच्छेदेन उपजीव-कत्वसङ्गतावेव तद्ग्रन्थतात्पर्य्यादित्याशङ्कोद्धारपरतया 'तच्चेत्यादि-मूलमवतारयति, 'लिङ्गस्येत्यादिना, 'स्वरूपतः' अनुमिति-करणत्वावच्छेदेन ।

अन्ये तु अनुमानस्य प्रत्यक्षान्तर्भावशङ्कापरीहारकतया तद्ग्रन्थमवतारयन्ति, तन्मतमाह, 'अनुमितेरिति, 'ज्ञाना-करणकज्ञानत्वेनेति तादृशज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वेनेत्यर्थः। यथाश्रुते विशेषणतावच्छेदकप्रकारकज्ञानकरणकविशिष्टवैशिष्ट्य-बोधादावव्याप्तिस्तस्यैव प्रत्यक्षलक्षणत्वादिति भावः । 'प्रत्यक्षमिति-मध्यनिवेशे' प्रत्यक्षविशेषात्मकत्वे,'तत्करणस्य' अनुमितिकरणस्य, 'प्रत्यक्षप्रमाणान्तर्भावः स्यादिति, प्रमितिवैलक्षण्यस्यैव स्वतन्त्र-प्रमाणतानियामकत्वादिति भावः । 'तत्' अनुमितेर्ज्ञानाकरणक-ज्ञानत्वं, अत्र चानुमितेर्ज्ञानाकरणकज्ञानत्वेऽपि अनुमितेर्न प्रत्यक्षमित्यन्तर्भावः । अनुमिनोमि न साक्षात्करोमीत्यनुव्यव-

---

(१) हविराद्युपादानप्रत्यक्षात् यागप्रवृत्तिः, तया च यागः, तेनादृष्टं, तस्य जन्यमात्रं प्रति हेतुत्वादिति भावः ।

सायबलात् अनुमितेः प्रत्यक्षत्वविरुद्धानुमितित्वसिद्धेः । उक्तलक्षणे च चाक्षुषादिवृत्तित्वादिकं जातिविशेषणमुपगम्यानुमितिव्याव-र्त्तनसम्भवादित्यस्वरसः 'केचिदित्यनेन सूचितः ।

---

तत्त्वचिन्तामणिः ।

अथानुमानं न प्रमाणं योग्योपाधीनां योग्यानुपलब्ध्याभावनिश्चयेऽप्ययोग्योपाधिशङ्कया व्यभिचारसंशयात् शतशः सहचरितयोरपि व्यभिचारोपलब्धेश्च लोके धूमादिदर्शनानन्तरं वह्न्यादिव्यवहारश्च सम्भावनामात्रात् संवादेन च प्रामाण्याभिमानादिति नाप्रत्यक्षं प्रमाणमिति, न, अप्रमाणसाधर्म्येणाप्रामाण्यसाधने दृष्टसाधर्म्यस्यानुमानत्वात् एतद्वाक्यस्य सन्दिग्धविपर्य्यस्तान्यतरं प्रत्यर्थवत्त्वात् तयोश्च परकीययोरप्रत्यक्षत्वात् अनुमानमप्रमाणमिति वाक्यस्य प्रामाण्याप्रामाण्ययो-र्व्याघाताच्च ।

---

चिन्तामणिदीधितिः ।

अनुमानप्रामाण्यं परीक्षितुं चार्व्वाकमतमुत्थापयति, 'अथेति, 'अनुमानं' अनुमानत्वेनाभिमतं धूमादिज्ञानं, असत्ख्यात्युपनीतमनुमानमेव वा, 'संवादेन' संवादाभिमानेन, सम्भावितस्यासतोऽनुगताकारस्य

परमार्थसत्त्वलक्षणमात्रसाक्षिणाध्यक्षेणानुल्लेखात् अध्यक्षमूलकविकल्पोल्लिखितत्वाद्वा संवादः, अनुमानाप्रामाण्ये च तन्मूलकसमयनिर्णयाद्यधीनप्रवृत्तिकयोः शब्दोपमानयोः सुतरामप्रामाण्यान्नाप्रत्यक्षं प्रमाणमित्याह, 'इतीत्यादि। 'अप्रमाणसाधर्म्म्येण' प्रमाणताप्रयोजकरूपशून्यत्वेन, 'दृष्टसाधर्म्म्यस्य,' साधर्म्म्यदर्शनस्य वा, (१) नन्वभिहितमेव साधर्म्म्यदर्शनं सम्भावनां भावयति सम्भावनैव च बहुशो व्यवहारहेतुरित्यत आह, 'अनुमानमिति।

---

गादाधरी विवृतिः।

'परीक्षितुं' परमतं निराकृत्य व्यवस्थापयितुं, अनुमित्यात्मकप्रमितिश्चार्वाकेनानभ्युपगमात् तत्करणत्वरूपानुमानत्वावच्छिन्नेतेषामप्रामाण्यसाधनं न सम्भवति, अतोऽनुमानपदमन्यथा व्याचष्टे, 'अनुमानमिति, 'अभिमतसित्यस्य परैरित्यादिः, 'धूमादिज्ञानं' धूमादिज्ञानत्वावच्छिन्नं, 'अनुमानं' अनुमानपदार्थः, तथाच धूमादिज्ञानत्वेनैव पक्षतेति नानुपपत्तिरिति (२) भावः। अनुमानपदाद्धूमादिज्ञानत्वादिना बोधो लक्षणयैवेत्यभिप्रेत्य मुख्यार्थ-

---

(१) 'दृष्टसाधर्म्म्यस्य' 'साधर्म्म्यदर्शनस्य वा' इत्यनयोः मूलोक्तेन 'अनुमानत्वात्' इत्यनेन सहान्वयः।

(२) न पक्षाज्ञानरूपानुपपत्तिरित्यर्थः।

परतामपि सङ्गमयति, 'असदिति, 'ख्यातिः' ज्ञानं, 'उपनीतं' विषयीकृतं, 'अनुमानमेव वा' अनुमितिकरणत्वावच्छिन्नमेव वा, अनुमानपदार्थं इत्यनुषज्यते, तन्मते अलीक एव पदानां शक्तिर्न तु पारमार्थिके, सदसत्सम्बन्धाभावेन तत्र प्रवृत्तिनिमित्ती-भूतानुगताकारासम्बन्धात् (१) अनुगताकारस्य गोत्वादेरतद्व्या-वृत्त्यात्मकत्वेन (२) अभावरूपतया अलीकत्वात् असतोप्यनुमिति-करणत्वावच्छिन्नस्य तन्मतेऽनुमानपदार्थतेति बोध्यम् । एवञ्च चार्व्वाकैरनुमित्यनभ्युपगमेऽपि असत्ख्यातिस्वीकर्त्तॄणां तेषां मते अनुमितिकरणत्वावच्छिन्नेऽप्रामाण्यसाधने नाश्रयाज्ञानरूपो दोष-इति भावः । ननु लिङ्गज्ञानस्य पर्व्वतो वह्निमानित्यादिप्र-मित्यजनकत्वे लिङ्गपरामर्शानन्तरं वह्निप्राप्त्यर्थिनः पर्व्वतादि-गमनप्रवृत्त्यनुपपत्तिः पर्व्वतादौ वह्न्यादिनिश्चयं विना तद्गमने वह्निप्राप्तिसाधनतावच्छेदकवह्निमद्देशगमनत्वनिश्चयायोगादित्या-शङ्कां परिहरति, मूले 'लोक इति,'सम्भावनामात्रादिति । यद्यपि लिङ्गदर्शनस्मारितसाध्यस्य मानसनिश्चयोपगमेनाप्यनुमानस्या-प्रामाण्यमायाति, तथापि सर्व्वत्र व्यभिचारसंशयसम्भवेन व्याप्ति-निश्चयासम्भवात् विपरीतकोटिभानविरोधिविशेषदर्शनस्य तन्मते-ऽसम्भवेन सोऽपि निश्चयस्तावदसम्भवीत्याशयेन सम्भावनादरः ।

---

(१) तन्मते अभावस्यालीकतया गोत्वादेरपि अलीकत्वं तन्मते गोत्वादेः गोभिन्नभिन्नत्वरूपत्वात् इति भावः ।

(२) अतद्व्यावृत्त्यात्मकत्वेन गोभिन्नभेदस्वरूपत्वेन ।

न च यत्र संशये कोटिद्वयांशे तुल्यता विपरीतकोट्यंशे एव वा औत्कट्यं ततः प्रवृत्त्यादिवारणाय तदभावाप्रकारकत्वस्य तत्प्रकारकज्ञानकरणतायामवश्यं निवेशनीयतया कथं सम्भावनात: प्रवृत्त्यादिकार्य्यनिर्व्वाहः तत्कोट्यंशे औत्कट्यरहिततदभावप्रकार-कान्यत्वस्य तत्कोटिकसम्भावनासाधारणस्य कारणतावच्छेदकत्वे च गौरवमिति वाच्यम् । अगत्या गौरवस्यादोषत्वात् । वस्तुतस्तु तन्मतेऽनुगतधर्म्मस्यालीकतया सर्व्वत्राव्यवहितपूर्व्वापरीभावापन्न-तत्तद्व्यक्त्योरेव हेतु-हेतुमद्भावसम्भवः । तत्र च तदभावाप्रकारक-त्वस्य निवेशो नास्त्येवेति तत्त्वम् ।

ननु सम्भावनायाः प्रमाणान्तरगृहीतग्राहित्वरूपसंवादेन प्रमितित्वसिद्धा तत्कारणस्य धूमादिज्ञानस्य प्रमाणत्वं सेत्स्यतीत्यत-आह, मूले 'संवादेन चेति । वक्ष्यमाणयुक्त्या प्रमाणान्तरगृहीत-ग्राहित्वरूपस्य संवादस्य तन्मते सम्भावनायामसत्त्वेन संवादेन च प्रामाण्याभिमानादित्यसङ्गतमतो व्याचष्टे, 'संवादेनेति, यथाश्रुत-त्यागे वीजमाह, 'सम्भावितस्येति, 'सम्भावितस्य' सम्भावनाविषयस्य, 'अनुगताकारस्य' वह्नित्वादेः, 'अध्यक्षेण' प्रत्यक्षप्रमित्या, 'अनुल्ले-खात' अविषयीकरणादित्यन्वयः । अनुगताकारस्य प्रमित्यविषय-तासम्पादकं विशेषणमाह, 'असत इति, वह्नित्वादेरतद्व्यावृत्ति-रूपतया अलीकत्वं बोध्यम् । अध्यक्षस्यालीकाविषयकत्वसम्पादकं विशेषणमाह, 'परमार्थसत्स्वलक्षणमात्रसाक्षिणेति, 'परमार्थ-सन्' पारमार्थिकोयः,'स्वलक्षणः' स्वतोव्यावृत्तो वह्न्यादिः, तन्मात्र-विषयकेत्यर्थः । वह्नित्वादेरनुगताकारस्य पारमार्थिकवह्न्यादाव-

सत्त्वे तस्य कथमितरव्यावृत्तिर्व्यावर्त्तकधर्म्माभावात् इत्याशङ्का-परिहाराय 'स्वलक्षणेत्युक्तं, तथाच सम्भावनायाः प्रमित्य-न्तरविषयविषयकत्वरूपसंवाद इति भावः। न चाध्यक्षस्य सम्भावनाविषयानुगताकाराविषयकत्वेऽपि अध्यक्षविषयवह्न्यादि-विषयकत्वेन सम्भावनायाः संवादिविषयत्वमक्षतमेवेति वाच्यम्। सदसतोरेकज्ञानाविषयतया अनुगताकारविषयिण्या विशिष्टबुद्धेः पारमार्थिकवह्न्यादिविषयकत्वासम्भवात्, अनुगताकारवह्नित्वादि-सम्बद्धालोकवह्न्यादेरेव विशिष्टधीविषयत्वात् भ्रमस्यासन्मात्र-विषयकत्वेन सङ्घटितस्य प्रमित्यन्तरविषयविषयकत्वस्वरूपसंवाद-स्याभिमानो न सम्भवति (१) इत्यत आह, 'अध्यक्षमूलकेति, 'सम्भावितस्येत्यनुषज्यते, 'विकल्पोल्लिखितत्वात्' तद्विषयत्वात्, अनादिवासनामूलकशशविषाणादिविकल्पव्यावर्त्तनाय अध्यक्षमूल-केति, (२) 'संवादः,' सम्भावनायाइति शेषः, तथाचाध्यक्ष-मूलकविकल्पोल्लिखितविषयकत्वमेव सम्भावनानिष्ठः संवादः स-एव प्रामाण्याभिमानप्रयोजकतया मूलकृतोक्त इति भावः। 'योग्योपाधीनामित्यादिग्रन्थेनानुमानाप्रामाण्य एव हेतुकथनात्

---

(१) सम्भावनाधर्म्मिकप्रमित्यन्तरविषयविषयकत्वभ्रमस्य संवादाभिमानपदार्थ-त्वेन तादृशाभिमानो न सम्भवति तस्य तादृशविषयकत्वविषयकत्वेन सद्विषयकत्वाद-सन्मात्रविषयकत्वाभावात् इति भावः। इदमत्रावधेयं तन्मते प्रामाण्यस्य सन्मात्र-विषयकत्वरूपस्य पारमार्थिकतया अभिमानासम्भवात् प्रामाण्याभिमानादिति मूलासङ्गतिरिति।

(२) वस्तुतस्तु तादृशसविकल्पके संवादो नास्तीति भावः।

'इति नाप्रत्यक्षं प्रमाणं' इत्यनुमानोपमान-शब्दानाम् त्रयाणामप्रामाण्योपसंहारो न घटत इत्याशङ्कां परिजिहीर्षुरनुमानाप्रामाण्यसाधकहेतोरेवोपमान--शब्दयोरप्रामाण्यसम्पादकहेतु--परतां दर्शयति, 'तन्मूलकसमयनिर्णयाद्यधीनप्रवृत्तिकयोरिति, तन्मूलोऽनुमानाधीनो यः 'समयनिर्णयादिः' शक्तिनिर्णयादिः, 'तदधीनप्रवृत्तिकयोः' तादृशसहकारिसमवधानाधीनप्रमारूपफलोपधानकयोरित्यर्थः, 'आदिपदात्तात्पर्य्यनिर्णयादिपरिग्रहः। समयादिसम्भावनात एव शाब्दादिप्रमा भविष्यतीत्यादिशङ्कापरीहाराय निर्णयेत्युक्तम्। न चैवं 'अनुमानमप्रमाणं' इत्यनेनानुमानाप्रामाण्यमात्रस्योपक्रान्ततया त्रयाणामप्रामाण्योपसंहारविरोध इति वाच्यम्। 'अनुमानमप्रमाणमिति वाक्यस्य त्रितयाप्रामाण्य एव तात्पर्य्यात्। अप्रामाण्यसाधनेऽप्रमाणसाधर्म्म्यस्य हेतुता न घटते प्रमाणेऽपि यत्किञ्चिद्रूपेणाप्रमाणघटादिसाधर्म्म्यसत्त्वादित्याशङ्कोद्धाराय प्रमाणतावच्छेदकरूपशून्यत्वधर्म्मेण साधर्म्म्यं विवक्षितं तथाच प्रमाणताप्रयोजकरूपशून्यत्वमेव पर्य्यवसितो हेतुरित्यभिसन्धायाह, 'अप्रमाणेत्यादि, अयञ्च असाध्याङ्को हेतुः (१)। नैयायिकमते व्याप्तिनिश्चयत्वरूपप्रमाणताप्रयोजकरूपस्यानुमाने सत्त्वादिति, अतएव (२) पूर्व्वं मणिकृतोक्तस्यैव तद्धेतोः सिद्ध्यर्थं योग्योपाधीनामित्यादिग्रन्थेन

(१) उभयवाद्यसिद्धो हेतुरित्यर्थः।

(२) हेतोः असाध्याङ्कत्वादेव इत्यर्थः, असाध्याङ्कत्वात् अनुमेयत्वादिति फलितार्थः।

सर्व्वत्र व्यभिचारसामग्रीसत्त्वमभिधाय व्याप्तिनिश्चयस्यैव दुर्घटत्वेन व्यभिचाराप्रकारकत्वे सति व्याप्तिप्रकारकज्ञानत्वरूपस्य व्याप्तिनिश्चयत्वस्याप्रसिद्धिः सूचिता। एवञ्चानुमानमप्रमाणं प्रमितिकरणतावच्छेदकरूपशून्यत्वादिति प्रथमतश्चार्व्वाकैः प्रयुज्यते तत्र च व्याप्तिनिश्चयत्वात्मकतादृशरूपस्यानुमाने सत्त्वाद्धेतुरयमस्माकमसिद्ध इति नैयायिकैरसिद्ध्युद्भावितायां व्याप्तिज्ञानत्वं व्यभिचाराप्रकारकत्वासमानाधिकरणं स्वावच्छिन्नोत्पत्त्यव्यवहितप्राक्चणत्वव्यापकव्यभिचारप्रकारकज्ञानसामग्रीकज्ञानमात्रधर्म्मत्वादिति—तैरुद्भावनीयं (१) तावता च निरुक्तनिश्चयत्वग्रहप्रतिबन्धात्तादृशनिश्चयत्वस्य प्रमाकरणतावच्छेदकत्वसन्देहाधीनासिद्धिसन्देहनिवृत्तिरिति ध्येयम्। 'दृष्टेत्यत्रातीतत्वमविवक्षितं तथाच ज्ञायमानेत्यर्थः, एतच्च ज्ञायमानलिङ्गकरणतामत एवोपपद्यते अतः स्वमताभिप्रायेण पूरयति, 'साधर्म्यदर्शनस्य वेति। 'अभिहितमित्यत्र 'हेतुरित्यनन्तरोक्तेतिपदोपस्थाप्यप्रकृतवाक्यार्थकर्म्मत्वेनान्वेति, 'सम्भावनैव' परकीयसंशयादिविषयकसम्भावनैव, (२) 'व्यवहारहेतुः' अनुमानमप्रमाणमिति शब्दप्रयोगप्रयोजक इत्यर्थः,

---

(१) तादृशक्षणत्वसमानाधिकरणेत्युक्तौ घटादिज्ञानान्तर्भावेन ज्ञानत्वे व्यभिचारः अतो व्यापकेति, यादृशघटव्यक्तेः पूर्व्वं नियमतो व्यभिचारप्रकारकज्ञानसामग्री तादृशघटव्यक्तित्वे व्यभिचारवारणाय ज्ञानधर्म्मेति, तादृशघटव्यक्तिज्ञानोभयवृत्तित्वे व्यभिचारवारणाय मात्रपदम्।

(२) दीधितौ 'सम्भावनां भावयति' इत्यनेन मूलोक्तप्रथमदोषोवारितः। 'सम्भावनैव चेत्यादिना द्वितीयदोषोवारित इति भावः।

तथाच परकीयसन्देह-विपर्य्ययज्ञानस्य तदुच्चारणरूपेष्टसाधनता-ज्ञानसम्पादकतया तादृशशब्दप्रयोगप्रयोजकस्योपपादनाय नानु-मानप्रामाण्यमिति भावः। इदमुपलक्षणं जल्पस्थले अवयवप्रयोगे-न मध्यस्थस्य स्वपरिगृहीत(१)कोटिसम्भावनासम्पादनयैव वादि-विजय इति बोध्यम्। तेन हेतुज्ञानान्मध्यस्थस्यानुमितेरव-श्याभ्युपेयतया अनुमानप्रामाण्यं निर्वहतीति प्रागुक्तदूषणमप्यु-द्धृतं भवतीति ध्येयम्।

---

तत्त्वचिन्तामणिः।

अपिचानुमानाप्रामाण्ये प्रत्यक्षस्याप्यप्रमाणत्वा-पत्तेः प्रामाण्यस्यानुमेयत्वात् स्वतश्च प्रामाण्यग्रहे तत्-संशयानुपपत्तेः। व्याप्तिग्रहोपायश्च वक्ष्यते।

---

चिन्तामणिदीधितिः।

ननु न वयमापाततो भ्रमजनकत्वलक्षणमप्रामाण्यं निरूपयामो येन भ्रमस्य विषयबाधाधीनतया प्रामाण्यं सम्भाव्येतापि परन्तु प्रमाकरणत्वव्यतिरेकमत आह, 'अपि चेति, 'स्वत इति। न चानुगताकारासंस्प-र्शिनि परमार्थसत्स्वलक्षणसाक्षिणि स्वसंवेदनसंविदित-

---

(१) वादिपरिगृहीतेत्यर्थः।

प्रामाण्ये निर्व्विकल्पकज्ञाने नाप्रामाण्यं सन्दिह्यते परन्तु तदुत्तरभाविनि समुल्लिखितालीकानुगताकारे सविकल्पक एवेति वाच्यम्। निर्व्विकल्पकस्य सन्मात्रावलम्बनत्व--स्वविषयत्व-प्रामाण्यावगाहित्वाना-मनुमानाधीनसिद्धिकत्वात्। सर्व्वमिदं सति व्याप्ति-निश्चये स्यात् स एव तु न सम्भवत्युपायाभावादित्यत-आह, 'व्याप्तीति।

---

गादाधरी विवृतिः।

'अनुमानमप्रमाणमितिवाक्यस्याप्रामाण्योपगमेऽप्रामाण्यस्य भ्रमजनकत्वरूपतयाऽनुमानस्य प्रामाण्यापातात् अप्रामाण्याभाव-वति च अप्रामाण्यप्रकारत्वरूपस्य तज्जन्यज्ञानभ्रमत्वस्य विशे-ष्यांशे प्रामाण्यसत्त्वनिर्व्वाह्यत्वादिति(१) मूलोक्तव्याघातमुद्धरति। 'नन्वित्यादिना, 'आपातत इति यावदसद्विषयकत्वस्य भ्रमत्व-रूपत्वं न व्यवस्थापितं तावदित्यर्थः, तस्य भ्रमत्वरूपत्वे तस्य प्रामाण्यवद्विशेष्यकत्वं विनाप्युपपत्तेः अनुानप्रामाण्यानापादकत्वा-दिति भावः। 'निरूपयामः' अभ्युपगच्छामः, 'विषयबाधाधीन-तया' विशेष्यतासम्बन्धेन विषयबाधव्याप्यतया, 'सम्भाव्येत' आपा-द्येत, 'प्रमाकरणत्वव्यतिरेकमिति 'निरूपयामः' इत्यनुषज्यते,

---

(१) प्रामाण्यसत्त्वनिर्व्वाहकत्वादितीति पा०।

तथाच प्रमाकरणत्व-तदभावयोरेव तृतीयपक्षो न सम्भवतीत्यन्यतराभ्युपगम एवावश्यकः न तु प्रमाकरणत्व-भ्रमकरणत्वयोरपीति तदुभयमेव नाभ्युपेयते, शब्दस्य विशिष्टज्ञानजनकत्वेऽपि पदार्थोपस्थितिद्वारा मानसविशिष्टज्ञानप्रयोजकत्वात् परप्रतिपत्त्यर्थं शब्दप्रयोग उपपद्यते मानसञ्च ज्ञानं निश्चयः सम्भावना वा इत्यन्यदेतदिति भावः। स्वतः प्रामाण्यग्रहे तत्संशयानुपपत्तिरूपमूलोक्तं बाधकमुद्धरति, 'न चेत्यादिना, अप्रामाण्यसंशयाभावसम्पादकहेत्वन्तरसूचकं निर्व्विकल्पकविशेषणमाह, 'अनुगताकारेत्यादिना, 'अनुगताकारासंस्पर्शिनि' वह्नित्वाद्यविषयके, एतेन निर्व्विकल्पके प्रामाण्यसंशयसम्पादकानुगताकारविषयकत्वरूपाप्रामाण्यसहचरितधर्माभावः सूचितः। 'परमार्थसत्स्वलक्षणसाक्षिणि' सन्मात्रविषयके, एतेन संशयविरोधिसन्मात्रविषयकत्वरूपाप्रामाण्यव्यावर्त्तकदर्शनं सूचितम्। 'स्वसंवेदनेति स्वात्मकं यत्संवेदनं ज्ञानं तेन संविदितं प्रामाण्यं यत्र तत्रेत्यर्थः, निर्व्विकल्पकस्य स्वांशे प्रामाण्यावगाहितायाः'स्वतः प्रामाण्येत्यादिपङ्क्त्यवतारार्थं प्रागेवाशङ्कितत्वेऽपि पुनरभिधानं निर्व्विकल्पकस्यैव तथात्वं न तु सविकल्पकस्येति सविकल्पके प्रामाण्यसंशयसम्पादकतत्सिद्धान्तसम्पादनाय। नन्वेवं प्रत्यक्षप्रमायामप्रामाण्यं सन्दिह्यत इत्यनुभवः कथमुपपद्यतामित्यत आह, 'तदुत्तरभाविनीति निर्व्विकल्पकाव्यवहितोत्तरभाविनीत्यर्थः, तथाच निर्व्विकल्पकस्य सविकल्पकातिसान्निध्यात्मकदोषाद्भ्रमात्मकस्तादृशानुभव इति भावः। एवञ्चाध्यक्षस्य स्वतः प्रामाण्यग्रहेऽपि न प्रामाण्यसंशया-

नुपपत्तिः प्रामाण्यग्रहस्य भिन्नधर्म्मिकतया अविरोधित्वादिति नानुमानप्रामाण्यसिद्धिरिति न वाच्यमिति समुदिततात्पर्य्यार्थः। 'निर्व्विकल्पस्येति, 'अनुमानाधीनसिद्धिकत्वात्' तन्मात्राधीन-व्यवस्थितिकत्वादित्यर्थः, तन्मते निर्व्विकल्पकस्य स्वप्रकाशतया अनुव्यवसायाभावेन स्वस्य स्वनिष्ठस्वविषयकत्वाद्यवगाहित्वोपगमे विषयानवस्थाप्रसङ्गेन सम्भावनायाश्चाप्रमात्वेन तद्व्यवस्थापक-प्रमाणाभावादिति भावः। 'सर्व्वमिदं' अनुमानप्रामाण्यव्यव-स्थापकयुक्तिप्रदर्शनं, 'व्याप्तिनिश्चये सतीत्यन्वयः, 'सएव' व्याप्ति-निश्चय एव, 'न सम्भवति' नोत्पत्तुमर्हति, 'उपायाभावात्' निश्चा-यकाभावात्।

इति महामहोपाध्यायश्रीगदाधरभट्टाचार्य्यविरचिता
अनुमितिविवृतिः समाप्तेति ।

---

## तत्त्वचिन्तामणौ

### व्याप्तिवादः ।

नन्वनुमितिहेतुव्याप्तिज्ञाने का व्याप्तिः, न तावद-व्यभिचरितत्वं, तद्धि न साध्याभाववदवृत्तित्वम् साध्यवद्भिन्नसाध्याभाववदवृत्तित्वं साध्यवत्प्रतियोगि-कान्योन्याभावासामानाधिकरण्यं सकलसाध्याभाव-

वह्निष्ठाभावप्रतियोगित्वं साध्यवदन्यावृत्तित्वं वा केवला-
न्वयिन्यभावात् ।

---

चिन्तामणिदीधितिः ।

समारब्धानुमानप्रामाण्यपरीक्षाकारणीभूतव्याप्ति-
ग्रहोपायप्रतिपादननिदानं व्याप्तिस्वरूपनिरूपणमार-
भते, 'नन्वित्यादिना, साध्याभाववदवृत्तित्वस्याव्याप्य-
वृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह, 'साध्यवद्भिन्नेति ।
साध्यवद्भिन्ने यः साध्याभावस्तद्वदवृत्तित्वमर्थः ।

---

गादाधरी विवृतिः ।

अनुमानप्रामाण्योपपादकतया व्याप्तिग्रहोपायस्यैव इदानी-
मभिधातुमुचितत्वात् 'वक्ष्यत इत्यनेन तत्प्रतीक्षां विधाय व्याप्ति-
स्वरूपनिरूपणमयुक्तमित्याशङ्कां परिजिहीर्षुस्तत्प्राथम्ये तस्य व्याप्ति-
ग्रहोपायप्रतिपादनौपयिकत्वरूपबीजं दर्शयन् 'नन्वित्यादि-
ग्रन्थमवतारयति, 'समारब्धेति, व्याप्तिग्रहोपायाकथनेन प्रामाण्य-
व्यवस्थापनस्यानिष्पन्नत्वात् 'समारब्धेति परीक्षाविशेषणं, 'परीक्षा'
परमतनिराकरणपूर्व्वकस्वमतव्यवस्थापनं, 'कारणीभूतेति 'प्रति-
पादनविशेषणम् । यद्यपि व्याप्तिग्रहोपायप्रतिपादनस्य अनुमान-
प्रामाण्यव्यवस्थापकत्वकथनं न तस्यावश्यकत्वप्रदर्शनाय 'व्याप्ति-
ग्रहोपायश्च वक्ष्यते' इत्येतद्ग्रन्थावतारणात् व्याप्तिग्रहोपायस्यानु-
मानप्रामाण्योपपादकतालाभेनैव तल्लाभात्, तथापि प्रामाण्य-

व्यवस्थापननिर्व्वाहकतया भवतु व्याप्तिग्रहोपायस्य इदानी-माकाङ्क्षितत्वं एवमपि तन्न व्याप्तिस्वरूपनिरूपणं विना सम्भवतीति प्रथमत एव तदेवोचितमित्येतत्सूचनायैतदभिहितम् । 'निदानमिति व्याप्तिघटकीभूताव्यभिचारांशभाने बाधाभाव-मुद्रया व्यभिचारज्ञानाभावो हेतुः । साध्यसमानाधिकरणवृत्तिहेतु-तावच्छेदकांशग्रहे च विशेषणज्ञानमुद्रया सहचारग्रहो हेतुरिति क्रमेण व्याप्तिग्रहोपायप्रतिपादनस्य व्याप्तिस्वरूपमप्रतिपाद्याशक्य-त्वादिति भावः । प्रथमतः पूर्व्वपक्षस्यैवाभिधानेन निरूपयतीत्य-सङ्गतमतः 'आरभते' इत्युक्तं, निरूपणस्य परमतनिराकरणपूर्व्वक-स्वसिद्धान्तकथनरूपतया पूर्व्वपक्षाभिधान-तत्खण्डनयोरपि तदा-रम्भतेति ध्येयम् । मूले 'न तावदव्यभिचरितत्वमिति, 'व्याप्तिरिति प्रश्नस्थमनुषज्यते, तथाच अव्यभिचारपदार्थौनानुमितिजनकज्ञान-विषय इत्यर्थः । अनुमितिजनकत्वं (१) न अव्यभिचारपदार्थाव-च्छिन्नहेतुविषयताघटितधर्म्मावच्छिन्नमिति तु पर्य्यवसितम् (२) । अत्र हेतुमाह, 'तद्धि न साध्याभाववदवृत्तित्वमित्यादि, यतः

(१) अत्र हेतुः साध्याभाववदवृत्तित्वस्वरूपत्वाद्यभावस्तोम एव, तथाच समूहालम्बनज्ञातविषयमादाय घटादौ व्यभिचारः अतो निष्कृष्टमाह, अनु-मितीत्यादिः ।

(२) यद्यपि साध्याभाववदवृत्तित्वादिव्याप्तिज्ञानकारणतावादिमतेऽपि अव्यभि-चारपदार्थविषयकज्ञानत्वेन न हेतुत्वमपि तु साध्याभाववदवृत्तित्वावगाहित्वेन इति सिद्धसाधनं तथापि अव्यभिचारपदप्रतिपाद्यतावच्छेदकीभूतधर्म्मनिष्ठा-वच्छेदकताकावच्छेदकताकहेतुविषयत्वावच्छिन्नत्वाभाव एव साधनीय इति नैषदोषः, अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वं बोध्यम् अन्यथा पक्षतानिष्ठजनकतामादाय सिद्धसाधनमिति भावः ।

साध्याभाववदवृत्तित्वादिरूपं तदव्यभिचरितत्वं न व्याप्तिरित्यनुषङ्गेणान्वयः, तथाच साध्याभाववदवृत्तित्वादिरूपा ये ये अव्यभिचारपदार्थास्तत्तदवच्छिन्नहेतुविषयताघटितधर्म्मावच्छिन्नत्वाभावकूटवत्त्वादिति निरुक्तपर्य्यवसितसामान्याभावसाधकः फलितो हेतुः। न चाप्रयोजकत्वं, विशेषाभावकूटस्य सामान्याभावव्याप्यतायामविवादात्। अत्र साध्याभाववदवृत्तित्वादिरूपा ये पञ्चाव्यभिचारपदार्थास्तदवच्छिन्नविषयताघटितधर्म्मानवच्छिन्नत्वकूटस्य प्रत्येकसाधकं हेतुं वक्ष्यति 'केवलान्वयिन्यभावादिति, साध्ये अत्यन्ताभावाप्रतियोगित्वान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपकेवलान्वयित्वग्रहदशायामत्यन्तान्योन्याभावयोः साध्यतदवच्छिन्नप्रतियोगिकत्वभानासम्भवेन प्रतियोगितया साध्यतदाश्रयविशेषितात्यन्तान्योन्याभाववदवृत्तित्वत्वावच्छिन्नविषयतायास्तादृशदशाविशेषीयानुमितिजनकज्ञाने अभावादित्यर्थः। एवञ्च तादृशविषयताशून्यवृत्तित्वमेव (१) अनुमितिजनकतायां दर्शितसाध्य (२) साधको हेतुरभिमत इति नासिद्ध्यादिः (३)। ईदृश-

(१) ननु पक्षतानिष्ठजनकतामादाय सिद्धसाधनवारणायावच्छेदावच्छेदेन साध्यसिद्धेरुद्देश्यत्वं वक्तव्यं तथाच जनकतावच्छेदकभेदेन जनकताया नानात्वात् साध्याभाववदवृत्तित्वावगाहिज्ञानत्वावच्छिन्नजनकताया व्यापकसामानाधिकरण्यस्य ज्ञानेऽभावात् भागासिद्धिरिति चेन्न, तत्तद्विषयताशून्यज्ञानवृत्तितावच्छेदकानुमितिजनकतात्ववत्त्वस्यैव हेतुत्वात्।

(२) ये पञ्चाव्यभिचारपदार्थास्तत्प्रत्येकावच्छिन्नविषयताघटितधर्म्मानवच्छिन्नत्वरूपसाध्येत्यर्थः।

(३) न स्वरूपासिद्ध्यादिः। केवलान्वयिन्यभावादित्यनुक्तौ हेतुभूताभावकूटस्य जनकतायामसिद्धतया स्वरूपासिद्धिः स्यादिति भावः।

दिशा अग्रिमाग्रिमहेतवोऽपि परिष्करणीयाः । दीधितौ 'अव्याप्येति कपिसंयोगी एतत्त्वादित्यादावित्यर्थः, 'अव्याप्तिरिति, तत्र हेत्वधिकरणे तद्वृत्त्यादावप्यन्यदेश-कालावच्छेदेन (१) कपिसंयोगाद्यभावसत्त्वादिति भावः । साध्यवद्भिन्नो यः साध्याभाववान् इति कर्म्मधारये अभेदसम्बन्धेन साध्यवद्भिन्नीयं यत्साध्याभावाधिकरणं तदवृत्तित्वमर्थः स्यात्तथासति तद्घटकीभूतस्य अभेदसम्बन्धेन साध्यवद्भिन्नीयं यत्तदवृत्तित्वस्यैव लक्षणत्वसम्भवात् साध्याभाववत्त्वांशस्य वैयर्थ्यमतः सप्तमीतत्पुरुषं व्याचष्टे, 'साध्यवद्भिन्न इति, तथाच साध्यवद्भिन्नवृत्तिर्यः साध्याभावस्तद्वदवृत्तित्वमर्थः, तत्र साध्यवद्भिन्नीयावृत्तित्वादेर्न लक्षणघटकता अवृत्त्यादिविशेषणतया साध्यवद्भिन्नस्यानिवेशादिति न साध्याभावांशवैयर्थ्यमिति भावः । अभावे साध्यीयत्वानिवेशे ह्रदादिवृत्तिगगनाद्यभाववति पर्व्वतादौ धूमादेर्वृत्तेरसम्भव इति तद्वारणाय साध्यपदसार्थक्यम् । न चाधिकरणभेदेनाभावभेदमत एवैतल्लक्षणकरणात् पर्व्वतादेर्न ह्रदादिवृत्त्यभाववत्त्वमिति वाच्यम् । अव्याप्यवृत्तिप्रतियोगिकाभावस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वरूपविरुद्धधर्म्माध्यासेन भेदस्य लक्षणकर्त्तृसम्मतत्वात् आकाशाभावादेर्भेदकाभावेन तस्यैक्यात्, अतएवोक्तधर्म्माणां भेदकत्वं एतानि च न भेदकानीत्यनेन दीधितिकृन्निराकरिष्यति, अथवा साध्याभावपदमनुयोगिताविशेषसम्बन्धेन साध्यीयपरं अभावीयविलक्षणानुयोगितालाभायैवाभावपदं न त्वभावत्वमपि निविशते प्रयोजनाभावात् तादृश-

(१) उत्पत्तिकालावच्छेदेनेत्यर्थः ।

विलक्षणसम्बन्धेन यः साध्यीयस्तद्वदवृत्तित्वमित्येवार्थः। तत्र च साध्यस्य यत्पदार्थाविशेषणत्वे ह्रदादिवृत्तिप्रमेयत्वादिमति पर्व्वतादौ हेतोर्वृत्तेरसम्भवः स्यादिति तन्निवेशः। अत्र च साध्याभावः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः अन्यथा वह्निमान् धूमादित्यादौ ह्रदादिनिष्ठमहानसीयवह्नित्वाद्यवच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य धूमवति सत्त्वेन पृथिवीत्वाभाव-द्रव्यत्वाभावान्यतरवान् जलत्वादित्यादौ साध्यवह्निन्नपृथिव्यादिनिष्ठद्रव्यत्वाद्यात्मकस्य साध्यप्रतियोगिकाभावस्य जलादौ सत्त्वेन च अव्याप्त्यापत्तेः, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया अन्यथा ह्रदादिवृत्तिसमवायादिसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य धूमादिमत्यपि वृत्तेरसम्भवस्य कालिकसम्बन्धेन (१) द्रव्यत्वाभावादौ साध्ये कालत्वादिहेतौ साध्यवह्निन्नपरमाणु-गगनादिवृत्तिदैशिकविशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावात्मकद्रव्यत्वादेर्हेत्वधिकरणवृत्तित्वेनाव्याप्तेर्वा प्रसङ्गात्। अत्र च साध्यभाववत्तायां सम्बन्धविशेषावच्छिन्नत्वानिवेशे वह्निमान् धूमादित्यादित्यादौ ह्रदादिवृत्तिवह्न्याद्यभावस्य कालिकसम्बन्धेन पर्व्वतादौ वृत्तेरव्याप्तिः दैशिकविशेषणताविशेषावच्छिन्नत्वनिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावादौ (२) दैशिकविशेषणतया साध्ये आत्मत्वादिहेतौ साध्यवह्निन्नकालादिवृत्ते-

(१) अधिकरणभेदेनाभावभेद इति मते कालिकेत्यादिः।

(२) आकाशाभावाभावोऽतिरिक्त एव नाकाशस्वरूप इति भावः।

राकाशाभावात्मकसाध्याभावस्यात्मादिषु वृत्तेर्घटत्वाभावादिसाध्यकसद्धेतौ साध्याभावस्य घटत्वादेर्दैशिकविशेषणतासम्बन्धेन वृत्तितायां मानाभावेन चाव्याप्तिरतः साध्यतावच्छेदकसम्बन्धेन साध्यवत्ताज्ञानं प्रति यादृशसम्बन्धेन स्वप्रकारकनिश्चयः प्रतिबन्धकस्तेन सम्बन्धेनाभाववत्त्वं निवेश्यं संयोगेन वह्न्यादौ साध्ये तादृशसम्बन्धो दैशिकविशेषणता, कालिकसम्बन्धेनाभावाभावे दैशिकविशेषणतया साध्ये कालिकसम्बन्ध एव तथा, समवायादिना घटत्वादेरभावे दैशिकविशेषणतया साध्ये समवायादिरेवेति न दोषः । न चैवं वृक्षनिष्ठा या कपिसंयोगाभावीयमूलावच्छिन्नविशेषणता तादृशसम्बन्धेन वृक्षादौ तादृशाभाववत्ताज्ञानेऽपि संयोगवत्ताज्ञानोत्पत्तेस्तादृशसम्बन्धो न लक्षणघटकः(१) इति साध्यवद्भिन्नवृत्तित्वमभावविशेषणं व्यर्थमिति वाच्यम् । संयोगतदभावयोरविरुद्धत्वज्ञानाभावदशायां वृक्षः कपिसंयोगाभाववानितिज्ञानस्यापि वृक्षे कपिसंयोगवत्ताज्ञानविरोधितया वृक्षनिष्ठतदभावीयविशेषणताया अपि साध्यवत्ताज्ञानप्रतिबन्धकतावच्छेदकीभूतसंसर्गगताश्रयत्वात् ।

केचित्तु साध्यात्मकस्वाभावनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वं विवक्षितं, स च सम्बन्धो यत्सम्बन्धावच्छिन्नप्रतियोगिताकः स्वाभावः साध्यमिति नोक्तानुपपत्तिः । अथ

---

(१) ननु विशेषणतात्वेनैव विशेषणतासम्बन्धस्य विरोधिताघटकत्वात् कथं मूलावच्छिन्नविशेषणताया लक्षणाघटकत्वमिति चेन्न, विशेषणतात्वस्याननुगतस्याभावात् तत्तद्व्यक्तित्वेनैव तासां विरोधिताघटकत्वादित्यभिप्रायात् ।

समवायेन प्रमेयत्वावच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविषयत्वादि-हेतुकस्थले (१) कालिकसम्बन्धस्यापि तत्सम्बन्धावच्छिन्नप्रति-योगिताकघटाभावरूपप्रमेयनिरूपितप्रतियोगितावच्छेदकत्वात्तेन सम्बन्धेन साध्याभाववति काले हेतोर्वृत्तेरव्याप्तिः। न च साध्य-निरूपितस्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धनिवेशान्नायं दोषः कालिकसम्बन्धावच्छिन्नघटाभावादिरूपप्रमेयस्य कालिकसम्ब-न्धावच्छिन्नप्रतियोगिताया घटादाविव सत्त्वात् कालिकसम्बन्धस्य समवायसम्बन्धावच्छिन्नप्रमेयाभावात्मक-स्वनिष्ठप्रतियोगितावच्छे-दकसम्बन्धत्वविरहादिति वाच्यम्। तादृशप्रमेयाभावस्य कालिक-सम्बन्धावच्छिन्नप्रतियोगिताकोयोऽभावस्तस्यापि प्रमेयत्वेन साध्य-तया तन्निरूपिततादृशप्रमेयाभावरूपस्वनिष्ठप्रतियोगितावच्छेद-कत्वस्य कालिकसम्बन्धेऽक्षततया अव्याप्तेर्दुर्व्वारत्वात्। न च यावत्साध्यनिरूपितत्वेन प्रतियोगिता विशेषणीया तथाचोपदर्शिता-भावात्मकयत्किञ्चित्प्रमेयनिरूपितस्वनिष्ठप्रतियोगितावच्छेदकका-लिकसम्बन्धमादाय न दोष इति वाच्यम्। असमवेतप्रमेयस्य समवायसम्बन्धावच्छिन्नप्रमेयाभावोनास्तीति प्रत्ययाविषयतया तस्य तादृशप्रमेयाभावाभावत्वे मानाभावात्, तादृशप्रमेयाभावनिष्ठ-यावत्प्रमेयनिरूपितप्रतियोगित्वाप्रसिद्ध्या उक्तस्थले अव्याप्तिताद-वस्थ्यात्। न च साध्यतावच्छेदकसम्बन्धेन वृत्तिमत्यावत्साध्य-निरूपितप्रतियोगिताया निवेशनीयतया नोक्ताप्रसिद्धिरिति

---

(१) द्रव्यत्वस्य हेतुत्वे साध्याभाववत्सामान्यादिनिरूपितसमवायसम्बन्धेन वृत्ति-त्वाप्रसिद्धिः स्यादतो द्रव्यत्वप्रकारकेत्याद्युक्तम्।

वाच्यम् । सर्व्वत्र समवायिनि एकया सत्तयैव तादृशप्रमेया-भावाभावत्वनिर्व्वाहे सर्व्वसमवाय्यसंग्राहकगुणादीनां तादृशप्र-मेयाभावाभावत्वे प्रमाणाभावेन दर्शितप्रसिद्धेर्दुर्व्वारत्वात्, इति चेन्न, साध्यतावच्छेदकसम्बन्धेन वृत्तिमद्यत्किञ्चित्साध्यनिरूपित-स्वनिष्ठप्रतियोगितावच्छेदकसम्बन्धनिवेशेनैवोपपत्तेः कालिकसम्ब-न्धावच्छिन्नप्रतियोगिताकस्य दर्शितसाध्याभावाभावस्य साध्यत्वेऽ-पि तस्य साध्यतावच्छेदकसम्बन्धेनावृत्तित्वात् । नचैतत्कल्पेऽपि कालिकसम्बन्धेन प्रमेयसाध्यक-कालत्वादिहेतावव्याप्तिः कालिक-सम्बन्धावच्छिन्नप्रमेयाभावस्य यः कालिकसम्बन्धावच्छिन्नाभाव-स्तस्य स्वाभावात्मकस्य प्रमेयत्वेन साध्यस्य प्रतियोगितावच्छेदकी-भूतकालिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नप्रमेयाभावाधिकरणे हेतोर्वृत्तेरिति वाच्यम् । तादृशप्रतियोगितावच्छेदकीभूतयत्सम्ब-न्धेन साध्यवद्भिन्नवृत्तित्वमभावस्य तत्सम्बन्धेन तद्वदवृत्तित्वस्य विवक्षणीयत्वात्, उक्तस्थले च साध्याभावस्य कालिकसम्बन्धेन साध्यवद्भिन्नेऽवृत्तेः । अथैवं तादृशप्रतियोगितायां स्वनिष्ठत्व-निवेशो विफलस्तदनिवेशे घटभिन्नं घटत्वाभावादित्यादौ घट-भेदात्मकसाध्यनिरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन घट-त्वात्मकसाध्याभाववति घटत्वे हेतोर्वृत्तेः प्रसक्तायाः अव्याप्ते-रीदृशविवक्षयैव वारणसम्भवात् घटत्वरूपसाध्याभावस्य साध्य-निरूपितप्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन साध्यवद्भिन्ने घटे-ऽवृत्तेः । नचैवं तादृशसाध्यस्य तादृशसम्बन्धेन साध्यवद्भिन्न-वृत्तिरभाव एवाप्रसिद्ध इति कथमव्याप्तिपरीहार इति वाच्यम् ।

घटभेदस्य घटत्वाभावसमनियतत्वेन ऐक्यात्। घटत्वेऽपि समवाय-सम्बन्धावच्छिन्नायास्तादृशप्रतियोगितायाः सत्त्वेन तादृशप्रति-योगितावच्छेदकसमवायसम्बन्धेन साध्यवद्भिन्नवृत्तिघटत्वरूपसाध्या-भावस्य प्रसिद्धिसम्भवात्। तादृशाभावयोर्भेदे स्वनिष्ठत्वस्य प्रति-योगिताविशेषणत्वेऽपि घटत्वरूपसाध्याभावनिष्ठसाध्यनिरूपित-प्रतियोगित्वाप्रसिद्ध्या तद्दोषतादवस्थ्यात्, संयोगिभेदस्य व्याप्य-वृत्तित्वाव्याप्यवृत्तित्वरूपवैधर्म्येण संयोगाभावाभेदासम्भवेऽपि सं-योगवत्त्वप्रमाविषयत्वाभावाभेदे बाधकाभावात् स्वरूपसम्बन्ध-स्यापि साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धतया तेन सम्ब-न्धेन साध्यवद्भिन्नवृत्तेस्तादृशप्रमाविषयत्वरूपसाध्याभावस्य प्रसिद्ध्या संयोगिभिन्नं गुणत्वादित्यादावव्याप्तेरनवकाशादिति चेन्न, प्रति-योगितायां स्वनिष्ठत्वानिवेशे कालिकसम्बन्धावच्छिन्नप्रतियोगि-ताके आकाशाभावाभावादौ साध्ये आत्मत्वादावव्याप्तेर्दुर्व्वारत्वात् तादृशसाध्यस्य यः कालिकसम्बन्धावच्छिन्नाभावः दैशिकसम्बन्धा-वच्छिन्नतदभावस्य तादृशसाध्यस्वरूपतया दैशिकविशेषणतासम्ब-न्धस्य साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वात् तेन सम्ब-न्धेन आकाशाभावरूपसाध्याभावस्य साध्यवद्भिन्ने काले हेतुमति च वृत्तेः, प्रतियोगितायां स्वनिष्ठत्वनिवेशे च दैशिकविशेषण-ताया आकाशाभावनिष्ठसाध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्ध-त्वविरहेणाव्याप्तेरनवकाशात्। न च साध्यनिरूपितस्वनिष्ठप्रति-योगितानिवेशे साध्याभावपदोपादानवैयर्थ्यं अभावान्तरनिष्ठप्रति-योगितायाः साध्यनिरूपितत्वविरहेणैव तद्व्यावृत्तेरिति वाच्यम्।

स्वपदार्थस्य द्विधा निवेशेन साध्याभावनिष्ठ-साध्यीयप्रतियोगितावच्छेदकसम्बन्धेन साध्याभाववत्त्वनिवेशधौव्येण तत्पदवैयर्थ्यानवकाशात् तादृशसम्बन्धेन साध्यवद्भिन्नवृत्ति यत् तद्वत्त्वमात्रनिवेशे साध्यवद्भिन्नवृत्त्यभावान्तरवति हेतोर्वृत्त्या अनुपपत्तेरित्याहुः।

अत्रेदं बोध्यं, साध्यवत्त्वग्रहविरोधिग्रहविषयसम्बन्धेन साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धेन वा नानुमित्यौपयिकव्याप्तिशरीरेऽभावसम्बन्धनिवेशसम्भवः साध्यभेदेन व्याप्तेर्भेदाल्लाघवेन तत्तत्साध्यकस्थले तत्तत्साध्याभाववति दैशिक-कालिकविशेषणतासमवायादिसंसर्गाणामेव विशिष्याभावसम्बन्धतया निवेशौचित्यात् उक्तगुरुरूपेण विशेषणतादीनां सम्बन्धताया अत्यन्ताप्रामाणिकतया तद्रूपावच्छिन्नस्य सम्बन्धविधया व्याप्तिघटकत्वायोगाच्च परन्तु यादृशसाध्यकस्थले यादृशः सम्बन्धोऽभावसम्बन्धतया व्याप्तिघटकस्तत्परिचयायैव दर्शितोक्तयः, तथाच यादृशसम्बन्धेन प्रकृतसाध्यवति तद्भिन्नवृत्तिसाध्याभावो न वर्त्तते तादृशसम्बन्धेन तद्वत्त्वं निवेश्यं इत्युक्त्यैव तत्परिचयसम्भवादलं वाग्जालेन। तत्र च साध्याभाववत्पदेन साध्याभावत्वविशिष्टाधिकरणं विवक्षणीयं तेन गुणान्यत्वविशिष्टसत्ताभाववान् गुणत्वादित्यादौ विशिष्टस्यानतिरिक्ततया साध्याभावस्य गुणादौ सत्त्वेऽपि न क्षतिः गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्तीत्यप्रत्ययात् तत्र तादृशाभावत्वविशिष्टाधिकरणत्वानभ्युपगमात्। अथैतल्लक्षणे घटत्व-घटाकाशसंयोगान्यतराभाववान् आकाशत्वादित्यादावव्याप्तिः घटत्वस्य व्याप्यवृत्तितया तद्घटितान्यतराभाववद्भिन्ने घटे वर्त्तमानस्य घटाकाशसंयोगात्मक-

साध्याभावस्य हेत्वधिकरणे गगनेऽपि वृत्तेः निरवच्छिन्नसाध्या-भाववत्तानिवेशे च साध्यवद्भिन्नवृत्तित्वांशस्य वैयर्थ्यादिति चेन्न, एतल्लक्षणकर्त्तुर्मते स्वप्रतियोगिसामानाधिकरण्य-स्वप्रतियोगि-वैयधिकरण्यरूपविरुद्धधर्म्माध्यासोऽभावस्य भेदकः इत्येतादृश-युक्त्या (१) द्रव्यवृत्तिसंयोगाभाव-गुणवृत्तिसंयोगाभावयोर्भेदसिद्धि-रित्यनुसृत्याव्याप्यवृत्तिसाध्यकस्थलेऽव्याप्तिः समाधीयते तथाच घटाकाशसंयोगस्य उक्तान्यतराभावप्रतियोगित्वेऽपि न तदभाव-रूपता तथासति तादृशधर्म्मयोः समावेशापत्तिः (२) तयोर्विरो-धाभावे संयोगाभावस्याप्यधिकरणभेदेन भेदासिद्धेरव्याप्यवृत्ति-साध्यके सर्व्वत्रैवाव्याप्तेरेतदभिप्रायेण लक्षणान्तरस्यावतारणीय-त्वादिति (३) गगनेऽतिरिक्त एव तदभावः स्वीकरणीयः, स च न साध्यवद्भिन्नवृत्तिरिति न दोषः। साध्यवद्भिन्ने वर्त्तत इत्य-नेनानवच्छिन्नाया एव वृत्तेर्विवक्षणान्न घटाकाशसंयोगात्मकाभा-वमादाय दोष इति तु न श्रद्धेयं, तथा सति सुषुप्त्यादिकाला-वच्छेदेनास्मदाद्यात्मवृत्तौ स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्न-(४)प्रति-योगिताकज्ञानत्वाद्यभावे साध्ये सुखादावव्याप्तिः तत्र साध्यवद्भिन्ने ईश्वरे तादृशसम्बन्धेन निरवच्छिन्नवृत्तिकस्य ज्ञानत्वादिरूपाभावस्य तत्सम्बन्धेन सुखाद्यधिकरणेऽस्मदाद्यात्मन्यपि वृत्तेः, उत्पत्तिकाला-

(१) इति रीत्येति पा०।

(२) अविरुद्धत्वापत्तिः इत्यर्थः।

(३) लक्षणान्तरस्यादरणीयत्वादितीति पा०।

(४) स्वाश्रयघटितसम्बन्धावच्छिन्नेति पा०।

वच्छिन्नघटादिवृत्तिताद्दृसम्बन्धावच्छिन्न (१)प्रतियोगिताकसत्ताभावादिसाध्यकघटत्वादिहेतावव्याप्तिश्च (२)। संयोगाभावनिष्ठयोर्व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोः प्रयियोगिसामानाधिकरण्य-प्रतियोगिवैयधिकरण्ययोर्वक्ष्यमाणरीत्या न विरोधः (३) इत्यव्याप्यवृत्तिसाध्यकस्थले (४) अव्याप्त्या लक्षणान्तरमवतारयति,'कर्म्मादाविति ।

अनुमानदीधितिः ।

**कर्म्मादौ संयोगाद्यभावस्य भिन्नत्वे मानाभावादाह,'साध्यवदिति, हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह, 'सकलेति, साकल्यं शाध्याभाववति साध्ये च बोध्यं साध्याभावो वा साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यस्तेन विपक्षैकदेशनिष्ठाभाव प्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः न वा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः,अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्ते-**

(१) स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नेत्यर्थः ।

(२) अस्मन्मते च तादृशाभावस्यातिरिक्तत्वेनाधिकरणभेदेन भिन्नत्वात् न दोष इति भावः ।

(३) व्याप्यवृत्तित्वं निरवच्छिन्नवृत्तिकत्वं न त्ववच्छिन्नवृत्तिकान्यत्वं, प्रतियोगिवैयधिकरण्यं प्रतियोग्यनधिकरणवृत्तित्वं, न तु प्रतियोग्यधिकरणावृत्तित्वं इति न विरोधः ।

(४) इति तदभिप्रायेणाव्याप्यवृत्तिसाध्यकस्थले इति पा० ।

वारणायाभावद्वये प्रतियोगिव्यधिकरणत्वं बोध्यं हेत्वभावोऽपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः, तत्प्रतियोगित्वञ्च हेतुतावच्छेदकरूपेण बोध्यं तेन द्रव्यत्वादौ साध्ये विशिष्टसत्तादौ नाव्याप्तिः न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्तादावतिप्रसङ्गः ।

---

गादाधरी विवृतिः ।

इदन्त्ववधेयं द्रव्यवृत्तिसंयोगाभावो न गुणादौ स्वीक्रियते अपि तु क्लृप्ते तद्वृत्तिसंयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावएव संयोगाद्यभावत्वं कल्प्यतेऽनन्तगुणाद्यधिकरणे संयोगाभावकल्पनामपेक्ष्य तथाविधैकाभावे संयोगाद्यभावत्वकल्पने लाघवात् । न च संयोगवत्त्वप्रकारकप्रमाविषयत्वाद्यभावे द्रव्यत्वाभावे द्रव्यभेदे संयोगिभेदादौ वा संयोगाभावत्वं कल्प्यते इत्यत्र विनिगमकाभाव-इति वाच्यम्। तादृशाभावानां समनियततया अभेदात्, एवञ्च द्रव्यवृत्तिसंयोगाभाव-गुणवृत्तिसंयोगाभावयोर्भेदः सप्रमाण एव। अथैवं द्रव्यत्वाभावादीनामप्यानन्त्यापत्तिः (१) कर्म्मादौ गुणवृत्तिद्रव्यत्वाभावो न कल्प्यते अपि तु क्लृप्ते तद्वृत्तिद्रव्य-गुणान्यतरत्वाभाव एव तदभावत्वमित्यादितर्कगवेषणाया कर्म्मादिवृत्ति-

---

(१) द्रव्यत्वाभावस्य नानात्वे तत्र संयोगाभावत्वल्पनायां धर्म्मिणामानन्त्यात् तादृशाभावे अनेकधर्म्मिसम्बन्धकल्पनामपेक्ष्य लाघवरूपविनिगमकस्याभाव इत्यर्थः ।

द्रव्यत्वाभावस्य गुणादिवृत्तितदभाववतोभेदसिद्धिरिति चेदिष्टमेवैतदधिकरणभेदेनाभावभेदाङ्गीकर्त्तृणाम्। न चैवं संयोगाभावत्वकल्पनायां धर्म्मिणामप्यानन्त्यात् उक्तविनिगमकाभावसम्भव इति वाच्यम्। विनिगमनाविरहेऽपि द्रव्यत्वाभावादौ संयोगाद्यभावत्वकल्पनाया निष्प्रत्यूहत्वादिति, 'हेतोरिति, नानाधिकरणकस्येत्यादिः,'अव्याप्तेरिति, एतद्रूपवान् एतद्रसादित्यादौ एतद्रसाद्यधिकरणे एतद्रूपादिकरणस्य द्वित्वादिना भेदसत्त्वेऽपि व्यासज्यवृत्तिधर्म्मानवच्छिन्नत्वेन साध्यवन्निष्ठप्रतियोगितायाः प्रतियोग्यवृत्तित्वेन वा भेदस्य विशेषितत्वे लक्षणगमनसम्भवान्नासम्भवो दर्शितः। 'साकल्यमिति, 'बोध्यमित्यस्य विशेषणमित्यादिः, अत्र साध्याभाववति साकल्यविशेषणसत्त्वे साध्ये तद्विशेषणव्यावृत्तिः सङ्गच्छते अन्यथा साध्याभाववत्ताया हेतुमत्साधारण्येऽपि साध्याभाववद्यत्किञ्चिद्व्यक्तिनिष्ठाभावप्रतियोगित्वमादाय नानाव्यक्तिसाध्यकसद्धेतौ लक्षणसमन्वयसम्भवादतः साध्ये तदभाववति चेत्यनुक्त्वा साध्याभाववति साकल्यविशेषणं प्रथमतो दर्शितम्। न च साध्याभाववति साकल्यविशेषणासत्त्वेऽपि वह्निमान् पर्व्वतान्यत्वादित्यावतिव्याप्तिवारणमेव साध्ये साकल्यविशेषणप्रयोजनमस्ति उभयत्र साकल्यविशेषणादाने यत्किञ्चित्साध्याभाववति पर्व्वते हेत्वभावसत्त्वेनातिव्याप्तिः साध्ये साकल्यविशेषणसत्त्वे ह्रदादेरेव सकलसाध्याभाववत्तया हेतुसत्त्वेन अतिव्याप्त्युद्धारादिति नोक्ताभिप्रायोपवर्णनं सम्यगिति वाच्यम्। साध्याभाववति साकल्यविशेषणासत्त्वे साध्ये साकल्यविशेषणस्य उक्तातिव्याप्ति-

वारणप्रयोजनकत्वसम्भवेऽपि वक्ष्यमाणप्रयोजनस्यैव (१) वास्तविक-तया तस्य साध्याभाववति साकल्यविशेषणसत्त्व एव सङ्गतेरादौ तत्प्रदर्शनस्य उचितत्वात्। वस्तुतस्तु साध्ये साकल्यविशेषणं परि-त्यज्य साध्याभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वनिवे-शनरूपकल्पान्तरस्य अवलम्बनीयतया चरममेव तत्प्रदर्शनमुचितं 'साध्ये तदभाववति च बोध्यं' इत्युक्त्वा 'साध्यतावच्छेदकावच्छिन्न-प्रतियोगिताको वा अभावो ग्राह्यः' इत्युक्तौ साध्याभाववति च साकल्यं निवेश्यते साध्याभावो वा एतादृशः (२) निवेश्यते इत्ये-तादृशो विकल्पः प्रतीयते स चाविवक्षितः (३) इति सारम्। साध्याभावे साकल्यविशेषणे धूमवान् वह्निरित्यादौ साध्यताव-च्छेदकीभूतसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकसकलसाध्याभावा-धिकरणं गुणादिरेव स्यात् अयोगोलकादेर्व्वह्निसंयुक्तत्वावच्छिन्ना-भावानधिकरणत्वादित्यतिव्याप्तिर्व्वह्निसत्त्वप्रकारकप्रमाविषयः (४) धूमादित्यादौ साध्यतावच्छेदकीभूतस्वरूपसम्बन्धावच्छिन्नप्रति-योगिताकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावस्य तत्तद्विपक्षमात्र-

---

(१) इतरविशेषणावारणीयवारणरूपप्रयोजनन्तु नोक्तातिव्याप्तिवारणं किन्तु वक्ष्यमाणाव्याप्तिवारणमेव तथा तच्च साध्याभाववति साकल्यविशेषणसत्त्वएव सम्भवतीति भावः।

(२) साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकः इत्यर्थः।

(३) तादृशविकल्पविवक्षयापि अतिव्याप्तेरवारणादिति भावः।

(४) वह्नेः साध्यत्वे साध्यतावच्छेदकसम्बन्धेन साध्याभावाधिकरणं गुणादिरेव प्रसिद्ध इति तन्नोक्तम्।

वृत्तितया सकलसाध्याभावाधिकरणाप्रसिद्धा अव्याप्तिश्चेति (१) तदुपेक्ष्य साध्ये साकल्यविशेषणं निवेशितम्। ननु साध्ये साकल्यविशेषणदानेऽपि वह्निमान् धूमादित्यादावव्याप्तितादवस्थ्यं पर्व्वतादावपि पर्व्वतीयवह्नेर्हिलादिना अभावस्य सत्त्वेन सकलसाध्याभावसत्त्वात् व्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकत्वेन अभावविशेषणे च वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिः वह्निमतस्तथाविधसकलसाध्याभावानधिकरणत्वात् साध्यतावच्छेदकातिरिक्तो यो व्यासज्यवृत्तिधर्म्मस्तदनवच्छिन्नप्रतियोगिताकत्वनिवेशे च लाघवात् साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वमेवाभावे विशेषणमुचितं किं साध्ये साकल्यविशेषणेन इत्यभिप्रेत्य तथैवाह,'साध्यतावच्छेदकेति। साध्याभाववति साकल्यविशेषणप्रयोजनमाह, 'विपक्षेति, वैकल्पिकयोः साध्य-तदभावयोः साकल्य--साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविशेषणयोर्व्याप्तिमाह, 'न वेति। एकव्यक्तिसाध्यके एतद्रूपवान् एतद्रसादित्यादौ हेत्वधिकरणे पूर्व्वक्षणवृत्तित्वविशिष्टसाध्याभावो न प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः पूर्व्वक्षणवृत्तित्वविशिष्टैतद्रूपादेरेतद्रसाधिकरणे वृत्तेः एतद्रूप-तद्रूपोभयत्वावच्छिन्नाभावोऽपि न तथा प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्धेरिति तत्र लक्षणसङ्गतिरित्यतो नानाव्यक्तिसाध्यक-इत्युक्तम्, अतएव अव्याप्तिरेवोक्ता नासम्भव इति। अत्र 'नाना-

(१) एतद्रूपवान् एतद्रसादित्यादावपि रूप-घटोभयाभावमादाय लक्षणागमनादसम्भव एव वक्तुमुचित इति ध्येयम्।

व्यक्तिसाध्यकत्वं' व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदककत्वम्, अत- एव एतद्व्यक्तिवृत्तियावद्धर्म्मवान् एतद्रसादित्यादौ नानाव्यक्ति- साध्यके अव्याप्तिविरहेऽपि न क्षतिः। 'अव्याप्यवृत्तीति कपि- संयोगी एतत्त्वादित्यादावित्यर्थः, 'अव्याप्तेर्वारणायेत्यन्वयः, 'व्यभि- चारिणि चेति पृथिवी कपिसंयोगादित्यादावित्यर्थः। 'अभावद्वये' साध्याभावे हेत्वभावे च, तथाचाव्याप्यवृत्तिसाध्यकव्याप्यवृत्ति- सद्धेतोरव्याप्तेर्व्वारणाय साध्याभावे, व्यभिचारिणि च अव्याप्य- वृत्तावतिव्याप्तेर्व्वारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यमित्यर्थः। यद्यपि हेत्वभावे प्रतियोगिवैयधिकरण्यस्य आवश्यकतया कपि- संयोगी कपिविभागादित्याद्यव्याप्यवृत्तिहेतुकेऽव्याप्तिवारणप्रयो- जनकत्वं साध्याभावे तद्विशेषणस्य सम्भवतीति व्याप्यवृत्तीत्यकि- ञ्चित्करं, तथापि हेत्वभावे तादृशविशेषणप्रतिसन्धानं विनैव व्याप्यवृत्तिहेतुकस्थले अव्याप्तिनिर्णयो भवतीत्येतदभिसन्धा- येव तदुक्तं, प्रतियोगिवैयधिकरण्यञ्च न प्रतियोग्यधिकरणावृत्ति- त्वम् अव्याप्यवृत्तिसाध्यके तथाविधहेतुके च तादृशसाध्याभाव- हेत्वभावाप्रसिद्ध्या अव्याप्तेरपि तु प्रतियोग्यनधिकरणवृत्तित्वं, तथाच प्रतियोग्यनधिकरणवृत्तित्वविशिष्टसाध्याभावाधिकरणेषु यावत्सु प्रतियोग्यनधिकरणवृत्तित्वविशिष्टः सन् वर्त्तते योऽभाव- स्तत्प्रतियोगित्वमर्थः। तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाद्यनधिकरणगुणादिवृत्तित्वोपलक्षितकपिसंयोगाद्यभा- वस्य हेत्वधिकरणे सत्त्वेऽपि न अव्याप्तिर्न वा एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ तथाविधकपिसंयोगाद्यभावस्य सकलसाध्या-

भावाधिकरणे सत्त्वेऽपि अतिव्याप्तिः, प्रतियोग्यनधिकरणीभूत-साध्याभावाधिकरणयावन्निष्ठस्वप्रतियोग्यनधिकरणताकाभावप्रति-योगित्वमिति फलितार्थः । प्रथमे साध्यतावच्छेदकसम्बन्धेन चरमे हेतुतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं बोध्यं तेनाय-मात्मा आत्म-महाकालान्यतरत्वात् इत्यादौ व्यभिचारनिरूपकाधि-करणस्य कालस्य कालिकसम्बन्धेन साध्याधिकरणत्वेऽपि नाति-व्याप्तिर्न वा वह्निमान् धूमादित्यादौ साध्याभावाधिकरणयाव-दन्तर्गतकाल-ज्ञानादिषु कालिक-विषयत्वादिसम्बन्धेन हेत्वभाव-प्रतियोग्यधिकरणत्वेऽपि असम्भवः अव्याप्तिर्वा (१) इत्यत्र प्रतियो-गित्वं सम्बन्धविशेषावच्छिन्नत्वेन न निवेशनीये सम्बन्धान्तराव-च्छिन्नप्रतियोगिताकयोः साध्याभाव-हेत्वभावयोरुक्तसम्बन्धेन प्रति-योगिसमानाधिकरणतया असम्भवातिव्याप्त्योरनवकाशात् ( २ ) 'हेत्वभावोऽपि' इत्यपिशब्देन साध्याभावेऽपि प्रतियोगितावच्छेद-कावच्छिन्नवैयधिकरण्यं निवेश्यम् इति सूच्यते, तेन (३) विशिष्ट-सत्तावान् जातेरित्यादौ हेत्वधिकरणगुणादिषु साध्याभावप्रति-योगिसत्तादेः सत्त्वेऽपि नातिव्याप्तिः अत्र साध्याभावोऽपि इत्युक्तौ अग्रिमतत्पदेन हेत्वभावपरामर्शासम्भवः तत्र हेत्वभावपददाने चाक्षराधिक्यमिति तन्नोक्तं, 'तत्प्रतियोगित्वं' साध्याभाववन्निष्ठा-

(१) आत्मभिन्नं घटत्वादित्यादौ लक्षणगमनादाह, अव्याप्तिर्वेति ।

(२) धूमवान् वह्नेरित्यादौ यावत्साध्याभावाधिकरणस्य प्रतियोगितावच्छेदक-सम्बन्धेन प्रतियोग्यनधिकरणत्वासम्भवान्नातिव्याप्तिः किन्तु अयोगोलकभिन्नं वह्नेरित्यादावेव ।

(३) साध्याभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशेन ।

भावप्रतियोगित्वं, 'हेतुतावच्छेदकरूपेण' हेतुतावच्छेदकावच्छिन्न-मित्यर्थः। हेत्वभावनिष्ठप्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशप्रयोजनमाह, 'द्रव्यत्वादाविति, 'विशिष्टेति गुण-कर्म्मान्यत्वविशिष्टेत्यर्थः। प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशप्रयोजनमाह, 'न वेति, अत्रापि द्रव्यत्वादौ साध्ये इत्यनुषज्यते, 'विशिष्टसत्तात्वादिना' गुणकर्म्मान्यत्वविशिष्टसत्तात्वादिना, तृतीयार्थश्चावच्छिन्नप्रतियोगिताकत्वं, तस्य च अभावे अन्वयः, प्रतियोगिपदार्थैकदेशप्रतियोगित्वान्वितम् अवच्छिन्नत्वं वा तदर्थः, 'तादृशाभावेति सकलसाध्याभाववन्निष्ठाभावेत्यर्थः। न च हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यस्थले हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेश्यतां ततोऽपि तत्प्रयोजननिर्व्वाहात् तथाच द्रव्यं सत्त्वादित्यादौ गुणादिनिष्ठविशिष्टसत्ताभावस्य हेतुतावच्छेदकावच्छिन्नसमानाधिकरणतयैवातिव्याप्तिवारणसम्भवात् प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशनमफलमिति वाच्यम् (१)। हेत्वभावे हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणता तन्निरूपकाभावप्रतियोगित्वमित्यर्थः स्यात् तदपेक्षया सकलसाध्याभाववन्निष्ठा हेतुतावच्छेदकावच्छिन्नयादृशप्रति-

---

(१) यद्यपि हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे हेत्वभावोऽपीत्यपिना साध्याभावसत्त्वस्यासम्भवः, स्वतन्त्रतदुपादाने च ग्रन्थगौरवं तथापि ग्रन्थगौरवभिया लक्षणे विशेषणान्तरदानमनुचितमिति।

योगितावच्छेदकावच्छिन्नानधिकरणता तद्वत्त्वरूपस्यास्मदीयफलितार्थस्यागुरुत्वात्। न च ममापि सकलसाध्याभाववन्निष्ठं यद्धर्मावच्छिन्नानधिकरणत्वं तद्धर्मवत्त्वमित्येवार्थः स च अतिलघुरेवेति वाच्यम्। एतादृशार्थकरणे मूलोक्तं प्रतियोगिताया व्याप्तित्वं व्याहन्येत इति मूलानुसारेण दीधितिकृता गुर्व्वर्थस्यानुसरणात् उक्तविशेषण-विशेष्यभावेनानिवेशे व्यर्थविशेषणतानवकाशात्।

केचित्तु हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठविशिष्टसत्तात्वावच्छिन्नव्यधिकरणाभावप्रतियोगित्वरूपव्याप्तिविशिष्टवैशिष्ट्यज्ञानस्य गुणेऽपि सत्त्वात् बाधानवतारदशायां तत्र द्रव्यत्वानुमित्यापत्तिः अस्मन्मते तु तत्प्रतियोगित्वञ्चेत्यतो लब्धस्य तादृशप्रतियोगितावच्छेदकहेतुतावच्छेदकस्य(१) व्याप्तितया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य गुणेऽपि भ्रमत्वादित्याहुः।

---

अनुमानदीधितिः।

**यत्रैकव्यक्तिकं साध्यं विपक्षोवा तत्र निर्धूमत्वादिव्याप्ये तत्त्वेन साध्ये निर्वह्नित्वादौ चाव्याप्तिस्तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह, 'साध्यवदन्येति, अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं व्युत्पत्तिबललभ्यम्। न हि भवति नीलो घटो घटादन्यदिति।**

---

(१) तथाच प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशादेव तत्प्रतियोगितावच्छेदकीभूतहेतुतावच्छेदकपर्य्यन्तस्य प्राप्तत्वादिति भावः।

गादाधरी विवृतिः।

एतल्लक्षणं दूषयित्वोत्तरलक्षणमवतारयति, 'यत्रैकव्यक्तिक-मिति। यत्रैकव्यक्तिकं साध्यं तत्राव्याप्तिरित्यन्वयः, एतद्रूपवान् एतद्रसादित्यादौ अनेकाशेषत्वरूपसाकल्यस्य साध्येऽसत्त्वादिति भावः। साध्ये साकल्यविशेषणं परित्यज्य कल्पान्तरानुसरणान्नैत-द्दोषावकाश इत्यत आह, 'विपक्षो वेति, विपक्षः साध्याभाववान् अत्राप्येकव्यक्तिक इत्यस्य विशेषणस्य लिङ्गव्यत्ययेनानुषङ्गः (१) तथाच एतद्घटभिन्नं पटत्वादित्यादौ साध्याभाववति एतद्घटादौ साकल्याप्रसिद्धाव्याप्तिरित्यर्थः। सकलपदस्य अशेषमात्रपरत्वे दोषान्तरमाह, 'निर्धूमत्वादिव्याप्य इति, 'तत्त्वेन' निर्धूमत्वव्याप्य-त्वेन, तथाच धूमत्वावच्छिन्नाभावव्याप्यवान् वह्नित्वावच्छिन्नाभा-वादित्यादावित्यर्थः, निर्धूमत्वत्वावच्छिन्ने साध्ये एकव्यक्तिक-तया पूर्व्वदोषाक्रान्तत्वेन तद्व्याप्यसाध्यकानुसरणं, निर्धूमत्व-व्याप्यह्रदत्वादेस्ताद्रूप्येण साध्यतायां सद्धेतुत्वानुपपत्तिरतस्तत्त्वे-नेत्युक्तं, 'हेत्वभावस्येति। अथ वह्न्यात्मकहेत्वभावस्य प्रत्येकं सकल-साध्याभाववन्निष्ठत्वासम्भवेऽपि सकलतन्निष्ठवह्न्यभावादिभेदप्रति-योगितामादायैव लक्षणं सङ्गमनीयं हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशादेव व्यभिचारिणि (२) सम्बन्धान्त-

(१) विपरिणतस्यानुषङ्ग इति पा०।

(२) अयोगोलकभिन्नं वह्नेरित्यादौ प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगि-वैयधिकरण्यनिवेश एव समवायेन हेत्वभावमादायातिव्याप्तिः स्यात् न तु हेतुतावच्छेदकसम्बन्धेन तन्निवेशे तथाच कथं हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयमिति भावः।

रावच्छिन्नप्रतियोगिताकहेत्वभावमादायातिप्रसङ्गानवकाशेन हेत्व-भावप्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशात् ।

यत्तु वह्निमद्भेदहेतुताभिप्रायकोऽयं ग्रन्थः, भेदभेदस्यानवस्था-भयेनाधिकरणस्वरूपतया तस्य च प्रत्येकविश्रान्ततया याव-द्विपक्षवृत्तित्वासम्भवात् तत्र हेतुभेदमादायापि लक्षणगमनासम्भ-वात् इति तन्न, आकाशभावाधिकरणकभेदभेदस्याकाशाद्यभाव-स्वरूपतया तस्य च यावद्विपक्षवृत्तित्वेन तमादायैव लक्षण-गमनसम्भवात् । न च एतादृशरीत्या आकाशाभावमादाय भेद-हेतुकव्यभिचारिणि अतिप्रसक्त्या हेत्वभावत्वेन सकलसाध्याभा-वाधिकरणवृत्तित्वं विवक्षणीयं तथासति अधिकरणस्वरूपाभावस्य च स्वस्मिन्नेव तदभावत्वेन वृत्तिरिति नातिव्याप्त्यवकाशः एवञ्चाकाशाभावमादाय नोक्ताव्याप्तिपरिहारसम्भव इति वाच्यम् । उक्तस्थले आकाशाभावस्य हेतुतावच्छेदकसम्बन्धेन प्रतियोगि-वैयधिकरण्यविरहादेवातिव्याप्तिवारणसम्भवेन तादृशविवक्षाया-निष्प्रयोजनकत्वात् वह्निमद्भेदहेतुकस्थले च साध्याभावाधि-करणस्य हेतुरूपप्रतियोग्यनधिकरणत्वेनाकाशाभावरूपहेतुभेदस्य प्रतियोगिव्यधिकरणत्वेनाव्याप्तिवारणसम्भवादिति दिक् ।

अत्र केचित्, यत्र वक्त्राभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यं साध्यं वक्त्राभावान्यत्वविशिष्टवक्त्राभावः(१)हेतुस्तत्र वक्त्राभावस्यापि सकल-साध्याभाववदन्तर्गततया तत्र वक्त्राभावभेदासत्त्वेन तमादाय लक्षणगमनासम्भवात् । न च तादृशविशिष्टहेतुकस्थले हेतुभेदस्य

(१) वक्त्राभावे व्यभिचारवारणाय हेतौ वक्त्राभावान्यत्वेति ।

सकलसाध्याभाववन्निष्ठत्वासम्भवेऽप्यखण्डस्य तस्य विशिष्टात्यन्ताभावस्य तथात्वमादायैव लक्षणगमनं सम्भवतीति वाच्यम्। प्राचीनमते विशिष्टाभावस्य विशेषणाभाव-विशेष्याभावाभ्याम् अनतिरिक्ततया तादृशविशिष्टभावस्य वह्न्यभावत्व-वह्न्युभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वासम्भवात्। अथैवमपि विषयितादिसम्बन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावात्यन्ताभावस्य अखण्डतया सकलधूमवन्निष्ठतया तमादाय एव लक्षणगमनं सम्भवतीति चेत्, न, वृत्त्यनियामकतया विषयितादिसम्बन्धानामत्यन्ताभावप्रतियोगितानावच्छेदकत्वात् संयोगादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्याखण्डस्य सकलधूमवन्निष्ठत्वेऽपि तदभावप्रतियोगिता न हेतुतावच्छेदकीभूतवह्न्यभावत्वावच्छिन्ना, तत्र लाघवेनाभावत्वस्यैव तदवच्छेदकत्वात् इति न तमादायापि लक्षणसङ्गतिः। न च गुरुधर्म्मावच्छिन्नहेतुकस्थले लक्षणसङ्गमनाय पारिभाषिकमेवावच्छेदकत्वं हेतुतावच्छेदके निवेश्यं तथाच वह्न्यभावत्वादेरपि तादृशावच्छेदकत्वमक्षतमेवेति वाच्यं। एतल्लक्षणस्य परित्याज्यतया निखिलदोषोद्धारानावश्यकत्वेन पारिभाषिकावच्छेदकत्वं न निविष्टमित्याशयेनैव तद्दोषदानादिति, तदसत्, तथा सत्यपि सकलसाध्याभाववन्निष्ठं कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभावमादाय लक्षणसमन्वयसम्भवात्। न च जन्यमात्रस्य कालोपाधितानये साध्याभाववति पर्व्वतादौ कालिकसम्बन्धेन वह्न्यभावादिसत्त्वात् तत्र तादृशसम्बन्धेन तस्याभावो न वर्त्तते

एवेति वाच्यम्। कालिकसम्बन्धेन तत्र वह्न्यभावसत्त्वेऽपि प्रतियोग्यनधिकरणीभूतवह्निमदवयवावच्छेदेन तत्र तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्यापि सत्त्वात् एवं विशिष्टाभावस्य विशेष्याभाव-विशेषणाभावाभ्याम् अनतिरिक्तत्वे द्रव्यं विशिष्टसत्त्वादित्यादावेव अव्याप्तिसम्भवे तदुपेक्ष्याभावसाध्यकाभावहेतुकस्थलानुधावने वीजाभावात्। तस्मात् प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिवैयधिकरण्यं निविष्टं प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्नैव निविष्टेत्यभिप्रायेणैव तद्दोषदानम्। हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यदाने (१) तु अग्रिमलक्षणापेक्षया गौरवमेव तल्लक्षणावतारे वीजं बोध्यम्। एतेन सकलग्रन्थस्य व्यापकतार्थकतया साध्याभावव्यापकीभूताभावप्रतियोगित्वमेव निष्कृष्टतल्लक्षणार्थः, धूमवान् वह्नेरित्यादौ प्रमेयत्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वेऽपि न क्षतिः यद्रूपावच्छिन्नाभावत्वं साध्याभावव्यापकतावच्छेदकं तद्रूपवत्त्वस्यैव लक्षणत्वात्, एवञ्च हेत्वभावे प्रतियोगिवैयधिकरण्यं न निवेश्यते व्यापकतालक्षणे प्रतियोगिवैयधिकरण्यानिवेशेन अव्याप्यवृत्तिहेतुकव्यभिचारिणि हेत्वभावस्य साध्याभाववन्निष्ठहेतुरूपाभावप्रतियोगितया व्यापकत्वाभावेनातिप्रसङ्गविरहात्, व्यापकताशरीरे च हेतुतावच्छेदकसम्बन्धेन साध्याभाववन्निष्ठत्वसम्भावे निवेश्यं तेन वह्न्याद्यभावादिमति कालिकादिसम्बन्धेन धूमादिरूपाभावस्य वृत्तावपि धूमाभावादेर्न साध्याभावव्यापकता-

(१) प्रतियोगिवैयधिकरण्यप्रवेशे इति पा०।

त्तिः। सत्तावान् जातेरित्यादौ साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धा अव्याप्तिश्च लक्षणपञ्चक एव दोषः, अस्तु वा हेतुतावच्छेदकसम्बन्धेन हेतुमत्ताज्ञानं प्रति यादृशसम्बन्धेन हेत्वभाववत्ताग्रहः प्रतिबन्धकस्तादृशसम्बन्धेन स्वावच्छिन्नाधिकरणभिन्नसाध्याभावाधिकरणकं यद्यत् स्वं तद्भिन्नत्वमेव साध्याभावव्यापकतावच्छेदकत्वम्, इत्थञ्च सत्तावान् जातेरित्यादौ एतादृशं स्वं जातित्वाभावत्वादिकमेव तद्भिन्नञ्च जात्यभावत्वमिति लक्षणसमन्वयः, इत्थञ्च एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ कपिसंयोगाभावत्वावच्छिन्नानधिकरणाप्रसिद्धा कपिसंयोगाभावत्वं नैतादृशं स्वमिति कपिसंयोगाभावत्वस्य साध्यव्यापकतावच्छेदकत्वादतिव्याप्तिवारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणं देयमेव, न देयमेव वा अधिकरणत्वाभावस्यैवाधिकरणभिन्नत्वस्थले निवेशनीयत्वात्, कपिसंयोगाभावादिवत्तदधिकरणताया अपि अव्याप्यवृत्तितया तदभावस्य साध्याभाववति सत्त्वेनातिव्याप्त्यनवकाशात्, अधिकरणत्वाभावादिश्च भावप्रतियोगिकतया अतिरिक्त एवेति विशेषणताविशेषेणैव तद्वत्त्वं साध्यभाववति विशेषणीयमिति, एवञ्च निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वेऽपि हेत्वभावत्वेन तेषां साध्याभावव्यापकत्वात् नाव्याप्तिरिति पूर्व्वपक्षोऽप्यकिञ्चित्करः। यत्र यावतां साध्याभाववतां सम्भवस्तत्र प्रातिस्विकरूपेण तत्तधिकरणवृत्तित्वमेव हेत्वभावविशेषणतया लक्षणघटकं न तु साध्याभावव्यापकत्वमित्यभिप्रायेणैव एतद्दोषदानात्,

प्रकारान्तरानुसरणेन परिष्कारे सकललक्षणानामेव परिष्कार-सम्भवादिति कृतं पल्लवितेन ।

परे तु 'निर्धूमत्वव्याप्ये तत्त्वेन साध्ये' इत्यस्य सामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावव्याप्ये साध्ये तत्सम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावादौ अव्याप्तिरित्यर्थः (१) । तत्र च हेतोरपि सकलसाध्याभाववदन्तर्गततया तत्र हेतुभेदासत्त्वेन न वह्न्यभावभेदमादाय लक्षणसङ्गतिरित्यव्याप्तिर्दुर्व्वारैव, तथाहि सामानाधिकरण्यसम्बन्धेन पर्व्वतत्वादौ वर्त्तमानस्य वह्नेस्तादृश-सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य पर्व्वतादौ सत्त्वेन तत्र-सामानाधिकरण्यसम्बन्धावच्छिन्न--प्रतियोगिताकधूमाभावसत्त्वात् साध्याभावाधिकरणत्वमविवादमेव इति ध्येयमित्याहुः (२) ।

साध्यवद्व्यक्तिविशेषभेदमादायाव्याप्तिं परिहरति, 'अत्रेति; 'साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वमिति साध्यतावच्छेदकविशिष्ट-साध्यवत्त्वपर्य्याप्तप्रतियोगितावच्छेदकताकत्वमित्यर्थः, तेन वह्नि-मान् धूमादित्यादौ तत्तद्वह्निमत्त्वावच्छिन्नप्रतियोगिताकभेदमा-

---

(१) यस्य लक्षणस्याव्याप्तिदोषदुष्टत्वं तेन लक्षणेन लक्ष्येतरभेदानुमाने पक्षतावच्छेदकसामानाधिकरण्येन पक्षे लक्षणरूपहेत्वभावात् भागासिद्धिदोषो भवति । यस्य लक्षणस्यासम्भवदोषदुष्टत्वं तेन लक्षणेन लक्ष्येतरभेदानुमाने पक्षतावच्छेदकावच्छेदेन हेत्वभावात् स्वरूपासिद्धिदोषो भवति । यस्य लक्षणस्यातिव्याप्तिदोषदुष्टत्वं तेन लक्षणेन लक्ष्येतरभेदानुमाने लक्ष्येतरभेदरूपसाध्याभाववतिलक्षणरूपहेतोर्वर्त्तमानत्वेन व्यभिचारदोषो भवतीति ध्येयम् ।

(२) परे त्वित्यादिराहुरित्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति ।

दाय न दोषस्तादृशप्रतियोगितावच्छेदकतायाः तत्ताविशिष्टवह्नि-मत्त्व एव पर्य्याप्तत्वात्। 'व्युत्पत्तिबललभ्यम्' अन्यादिपदसमभि-व्याहारलभ्यं, नञ्पदसमभिव्याहारज्ञानस्येवैतादृशपदसमभिव्या-हारज्ञानस्यापि अन्वयितावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताका-भावशाब्दत्वावच्छिन्नं प्रत्येव जनकत्वादिति भावः। 'व्युत्पत्ति-बललभ्यमित्यनेन यथाश्रुतलक्षणवाक्यार्थ एवायमिति सूचितम्। तादृशसमभिव्याहारस्थले तत्प्रतियोगिकाभावमात्रबोधे अतिप्रसङ्गं सूचयति, 'न हि भवतीति, प्रामाणिकव्यवहार इति शेषः, तथा-चान्वयिप्रतियोगिकाभावमात्रबोधे नीलघटेऽपि पीतघटादिभेद-सत्त्वेन तादृशव्यवहारोऽपि स्यादिति भावः। द्रव्यं न घट इत्याद्य-प्रयोगात् अन्वयितावच्छेदकावच्छेदेन (१) अन्योन्याभावादि-रन्यादिपदेन प्रत्याय्यते अनुयोगितावच्छेदकस्य प्रतियोग्यवृत्तिरेव धर्म्म इति प्रकाशकृदङ्गीकृतव्युत्पत्त्यन्तरविरोधात् घटो घटादन्य-इति प्रयोगवारणसम्भवात् 'नील इति, घटादन्य इत्यादौ प्राचीन-मते पञ्चम्याः प्रतियोगित्वमर्थः, तत्र च प्रकृत्यर्थस्य घटत्वादि-विशिष्टस्य घटत्वाद्यवच्छिन्नत्वविशिष्टाधेयतासम्बन्धेनान्वयः, अथवा केवलमाधेयत्वमेव सम्बन्धः, धर्म्मिपारतन्त्र्येण घटत्वादेरप्यव-च्छिन्नत्वसम्बन्धेनान्वयोपगमात् एकविशेषणत्वेनोपस्थितस्याप्यन्यत्र पारतन्त्र्येण अन्वयस्य व्युत्पत्तिसिद्धत्वात्, प्रतियोगित्वस्य व्युत्पत्ति-वैचित्र्येणान्यपदार्थैकदेशे भेदे निरूपकतासम्बन्धेनान्वयः,घटादन्य-इत्यादौ निरूपकतासम्बन्धेन घटत्वावच्छिन्नप्रतियोगिताविशिष्टो

(१) अनुयोगितावच्छेदकावच्छेदेनैवेति पा०।

लक्षणया घटादिपदार्थस्तत्पुरुषस्थले पूर्व्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्टलाक्षणिकत्वात्, तादृशघटादिपदार्थस्याभेदसम्बन्धेन भेदेऽन्वयः । नवीनमते च घटादन्य इत्यादौ अनुयोगित्वं पञ्चम्यर्थः, तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य स्ववृत्तिघटत्वाद्यवच्छिन्नप्रतियोगितानिरूपकताकत्वसम्बन्धेनान्वयः, अनुयोगितायाश्चाश्रयतासम्बन्धेन भेदेऽन्वयः, समासस्थले च घटत्वावच्छिन्ननिरूपितानुयोगिताविशिष्टे पूर्व्वपदस्य लक्षणा तस्य चाभेदसम्बन्धेन भेदेऽन्वयः । अथैवं साध्यवदन्यावृत्तित्वमित्येतादृशलक्षणवाक्यादभेदसम्बन्धेन तादृशप्रतियोगिताविशिष्टविशेषितस्तादृशानुयोगिताविशिष्टविशेषितो वा यो भेदस्तद्वदवृत्तित्वमेव प्रतीयते, तथाच अनुमित्यौपयिकव्याप्तिस्वरूपजिज्ञासायां तादृशलक्षणाभिधाने अर्थान्तरप्रसङ्गः तादृशप्रतियोगितासम्बन्धेन तादृशानुयोगितासम्बन्धेन वा साध्यवद्विशेषितभेदवदवृत्तिताज्ञानस्यैव लाघवेन अनुमितिहेतुत्वात् इति चेत्, न, यादृशव्याप्तिज्ञानमनुमितिहेतुः तस्यामेव अस्य तात्पर्य्यात् शाब्दबोधविषयत्वेऽपि तन्मूलकोदीच्यव्याप्तिविषयकमानसोपनीतभानस्यैव तादृशतात्पर्य्यनिर्व्वाह्यत्वात्, नीलो घटः कम्बुग्रीवादिमदन्य इत्यादिवाक्यस्य अप्रमाणत्वात्, पटः कम्बुग्रीवादिमदन्य इत्यादिवाक्यस्य प्रमाणत्वादन्वयितावच्छेदकनिरूपितपारिभाषिकमवच्छिन्नत्वं प्रतियोगितायां भासत इत्युपेयम् अतः साध्यवदन्य इत्यादौ मतुवन्तप्रतिपाद्यतावच्छेदकस्य साध्यसम्बन्धस्य साध्यापेक्षया गुरुतया अनवच्छेदकत्वेऽपि नोक्तलक्षणवाक्यार्थाप्रसिद्धिः । पारिभाषिकं तदवच्छिन्नत्वञ्च तद्वि-

शिष्टसम्बन्धिनिष्ठाभावीया या या प्रतियोगिता तदवच्छेदकत्वा-भावकूटवदवच्छिन्नत्वम्। एतादृशावच्छिन्नत्वस्य सम्बन्धतया प्रातिस्विकरूपेण तत्तत्प्रतियोगिताव्यक्तीनां दुर्ज्ञेयत्वेऽपि न क्षतिः। सम्बन्धज्ञानस्य विशिष्टबुद्धावनपेक्षितत्वात्, अनुमितिं प्रति च साध्यावच्छिन्नप्रतियोगिताकत्वावगाहिज्ञानमेव कारणं कल्प्यते लाघवात् न तु साध्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वावगाहि ज्ञानम्। अनुमित्यौपयिकव्याप्तिशरीरे तादृश्येव प्रतियोगिता निवेश्यते, कम्बुग्रीवादिमत्त्वात् घटादित्यादौ विशेषदर्शिनामनुमितेः प्रामाणिकत्वे निरुक्तपारिभाषिकावच्छिन्नत्वमेवानुमित्यौपयिक-व्याप्तिघटकं तादृशगुरुधर्म्मावच्छिन्नसाध्यकानुमानस्य केवलान्वयि-साध्यकानुमानसमशीलतावादिनस्तु स्वरूपसम्बन्धरूपावच्छिन्नत्वमेव तादृशव्याप्तिशरीरे निवेशयन्तीति समासः। मूले 'केवलान्वयिन्य-भावादित्यादौ एतादृशलक्षणपञ्चकस्य केवलान्वयिनि अप्रसिद्धे-रित्यर्थः। न च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्या-वश्यं निवेशनीयतया सत्तावान् द्रव्यत्वादित्यादौ अव्याप्तिरस्तीति केवलान्वयिसाध्यकमात्रे अव्याप्तिकथनमसङ्गतमिति वाच्यम्। केव-लान्वयिपदेन हेतुतावच्छेदकसम्बन्धेन यत्किञ्चिदधिकरणवृत्त्य-भावाप्रतियोगित्वरूपकेवलान्वयित्वाश्रयसाध्यकमात्रस्य उक्तत्वात्। अथवा हेतुतावच्छेदकसम्बन्धेन वृत्तित्वमनिवेश्य हेतुतावच्छेदक-सम्बन्धातिरिक्तो यो हेतुप्रतियोगिकः सम्बन्धः तदन्यसम्बन्धाव-च्छिन्नवृत्तित्वमेव निवेश्यं वह्निमान् धूमादित्यादौ कालिकसम्ब-न्धेन धूमादेः साध्याभाववद्वृत्तित्वेऽपि तत्सम्बन्धस्य हेतुतावच्छेदक-

सम्बन्धातिरिक्तत्वात् हेतुप्रप्रतियोगिकत्वाच्च लक्षणाघटकतया तदन्यसम्बन्धेन तद्वृत्तित्वाभावः अस्त्येवेति भावः। एवञ्च सत्तावान् द्रव्यत्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वाप्रसिद्धावपि हेतुतावच्छेदकसम्बन्धातिरिक्तहेतुप्रतियोगिकसम्बन्धान्यविशेषणताविशेषादिना वृत्तित्वप्रसिद्ध्या नाव्याप्तिरिति ध्येयम्।

इति श्रीगदाधरभट्टाचार्य्यविरचिता शिरोमणिकृत-
व्याप्तिपञ्चकव्याख्याया विवृतिः समाप्ता
समाप्तं व्याप्तिपञ्चकम्।

---

तत्त्वचिन्तामणिः ।

## सिंह-व्याघ्रनामकव्याप्तिद्वयम् ।

नापि साध्यासामानाधिकरण्यानधिकरणत्वं साध्य-वैयधिकरण्यानधिकरणत्वं वा, तदुभयमपि साध्यानधि-करणानधिकरणत्वं, तच्च तत्र यत्किञ्चित्साध्यानधिकर-णाधिकरणे धूमे चासिद्धम् ।

---

तत्त्वचिन्तामणिदीधितिः ।

'नापीति, साध्यमसमानाधिकरणं यस्य यदधि-करणानधिकरणं साध्यं तत्त्वम् साध्यनिष्ठासामानाधि-करण्यप्रतियोगित्वम् साध्यनिष्ठाधेयत्वानिरूपकाधि-करणवृत्तित्वमिति यावत्, तदनधिकरणत्वमित्यर्थः, साध्यवह्निभिन्नस्य च साध्यनिष्ठाधेयत्वानिरूपकत्वात्तद्-वृत्तौ नातिप्रसङ्गः साध्यनिष्ठाधेयत्वानिरूपकाधिकरण-त्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्वमिति निष्कर्षस्तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः ।

---

गादाधरी विवृतिः ।

'साध्यासामानाधिकरण्यानधिकरणत्वलक्षणे यदि तदधि-करणावृत्तित्वरूपासामानाधिकरण्यं निवेश्यते तदा द्रव्यं सत्त्वा-दित्यादावतिव्याप्तिः सत्ताया द्रव्यत्वाधिकरणवृत्तितया तादृशा-

सामानाधिकरण्यानधिकरणत्वात् तदनधिकरणवृत्तित्वस्यासामानाधिकरण्यपदार्थत्वे अनन्तरवक्ष्यमाणलक्षणाभेद इत्यतो व्याचष्टे, 'साध्येति, साध्यं असमानाधिकरणं यस्येत्यत्रासमानाधिकरणपदस्य स्वानधिकरणार्थकत्वे (१) द्रव्यं सत्त्वादित्यादावेवातिव्याप्तिः द्रव्यत्वादेः सत्तानधिकरणाधिकरणकत्वविरहेण यत्पदेन सत्तादेरुपादानासम्भवात्, सत्तावान् द्रव्यत्वादित्यादावव्याप्तिश्च सत्तादेर्द्रव्यत्वानधिकरणाधिकरणकत्वात् अतस्तदधिकरणानधिकरणकत्वपरतया तत्पदं व्याचष्टे, 'यदधिकरणेति, यदधिकरणानधिकरणकं साध्यं तत्त्वानधिकरणत्वस्य व्याप्तित्वे व्याप्तेर्विशिष्टैकार्थरूपतानुपपत्त्या विशिष्टपरामर्शस्यानुमितिहेतुत्वानिर्व्वाहः, यत्त्व-तत्त्वाननुगमेन तत्त्वाधिकरणत्वाभावकूटस्य निवेशनीयतया दुर्ज्ञेयत्वं गौरवञ्च इत्याशयेन यत्त्व-तत्त्वाघटितसाध्यासामानाधिकरण्यपदार्थमाह, 'साध्यनिष्ठेति, साध्यनिष्ठं यदसामानाधिकरण्यं स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वाभावस्तत्प्रतियोगित्वं तत्प्रतियोगिकोटिनिविष्टाधिकरणवृत्तित्वं साध्यवन्निष्ठाभावीयाधेयत्वनिष्ठप्रतियोगितायां निरूपितत्वसम्बन्धेन यदवच्छेदकं तद्वृत्तित्वमिति यावत्, वह्निमान् धूमादित्यादौ साध्यनिष्ठाभावो ह्रदाधेयत्वाभावस्तदीयप्रतियोगितायामुक्तसम्बन्धेनावच्छेदकीह्रदादिस्तद्वृत्तित्वानधिकरणत्वं धूमादाविति लक्षणसमन्वयः। अत्र साध्यनिष्ठाभावप्रतियोग्याधेयत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम् अन्यथा वह्निमान् धूमादित्यादौ पर्व्वतादिसमवेतत्वाद्य-

(१) सद्धेतुस्थले स्वपदम् उदासीनव्यक्तिपरम्, असद्धेतुस्थले हेतुपरमिति भावः।

भावमादायानुपपत्तेस्तथाच सत्तावान् समवायित्वादित्यादौ साध्य-निष्ठाभावीय-समवेतत्वनिष्ठप्रतियोगितावच्छेदकीभूताधिकरणाप्रसिद्धेरव्याप्तिः। वह्निमान् धूमादित्यादावपि धूमादेरयोगोलकीयवह्न्यादिनिष्ठपर्व्वतादिवृत्तित्वाभावस्य प्रतियोगितावच्छेदकपर्व्वतादिवृत्तित्वादव्याप्तिश्च साध्यतावच्छेदकव्यापकीभूताभावनिवेशे च गौरवं इत्याशयेन फलितार्थमाह, 'साध्यनिष्ठाधेयत्वेति, आधेयत्वमिह साध्यतावच्छेदकव्यापकीभूतं ग्राह्यं तेन वह्निमान् धूमादित्यादौ महानसादेः पर्व्वतीयवह्निनिष्ठाधेयत्वानिरूपकत्वेऽपि नाव्याप्तिः। एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधेयता विशेषणीया तेनायमात्मा आत्म-महाकालान्यतरत्वादित्यादौ कालस्य कालिकसम्बन्धावच्छिन्नात्मत्वादिनिष्ठाधेयत्वनिरूपकत्वेऽपि नातिव्याप्तिः, तादृशाधेयत्वानिरूपकाधिकरणत्वेत्यत्राधिकरणत्वमविवक्षितं तदनिरूपकत्वमात्रं निविष्टं (१) प्रथमतो द्रव्यं सत्त्वादित्यादावतिव्याप्तेराशङ्कितया व्यभिचारिसामान्य-एवातिव्याप्तिमुद्धरति, 'साध्यवद्भिन्नस्येति व्यभिचारनिरूपकाधिकरणस्येत्यर्थः, अत्राधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन वाच्यम्, अन्यथा वह्निमान् धूमादित्यादौ वह्न्यादिनिष्ठाधेयत्वानिरूपकस्यावयवादौ धूमादेः समवायेन वृत्तेरव्याप्त्यापत्तेः इत्यञ्च सत्तावान् द्रव्यत्वादित्यादौ अव्याप्तिः साध्यनिष्ठाधेयत्वानिरू-

---

(१) स्ववृत्तिहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतावत्त्वसम्बन्धेन साध्यनिष्ठाधेयत्वानिरूपकवदन्यत्वम् इत्यर्थस्तेन धूमाधिकरणतामादाय धूमादौ नाव्याप्तिरिति ध्येयम्।

पकाधिकरणे सामान्यादौ हेतुतावच्छेदकसम्बन्धात्मकसमवायादिना वृत्तेरप्रसिद्धेः, एवं द्रव्यं गुण-कर्म्मान्यत्वविशिष्टसत्त्वादित्यादावपि विशिष्टसत्त्वादेः सत्ताद्यनतिरेकितया साध्यनिष्ठाधेयत्वानिरूपकाधिकरणगुणादिवृत्तित्वानधिकरणत्वासम्भवादव्याप्तिरित्यतो निष्कृष्टार्थमाह, 'साध्यनिष्ठेति, अत्रापि पूर्व्वदोषवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधेयत्वं विशेषणीयम्, एवमधिकरणत्वमप्यविवक्षितं, तादृशाधेयत्वानिरूपकत्वव्यापकतैवाभावे निवेशनीया, तादृशाधेयत्वानिरूपकवृत्तित्वमात्रनिवेशे धूमवान् वह्नेरित्यादौ वह्न्यधिकरणत्वसामान्याभावस्य धूमनिष्ठाधेयत्वानिरूपकह्रदादिवृत्तित्वादतिव्याप्तिरतो व्यापकतानिवेशः, व्यापकत्वञ्च तद्वन्निष्ठान्योन्याभावीयप्रतियोगितानवच्छेदकत्वं, न तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं, सर्व्वस्यैव तथाविधद्वित्वाद्यवच्छिन्नाभावप्रतियोगितया तदप्रसिद्धेः, न वा तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वं तादृशप्रतियोगितानवच्छेदकीभूताभावत्वादिकमादाय वह्न्यधिकरणत्वसामान्याभावस्यापि धूमानधिकरणत्वव्यापकतया अतिव्याप्त्यापत्तेः, अनवच्छेदकत्वञ्चावच्छेदकतापर्य्याप्त्यनधिकरणत्वम् अत उभयवद्भेदमादाय न दोषः। अथ वा यदधिकरणतासामान्याभावत्वं साध्यनिष्ठाधेयत्वानिरूपकवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमेव समुदायार्थः, अतोऽभावत्वादिना व्यापकतामादाय न दोषः। अधिकरणता च हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या तेन वह्निमान् धूमादित्यादौ वह्न्यनधिकरण-

धूमावयवादौ धूमाधिकरणत्वसामान्याभावसत्त्वेऽपि न क्षतिः, धूमवान् वह्नेरित्यादौ यत्किञ्चिदधिकरणत्वाभावस्यैव धूमानधिकरणत्वव्यापकतया अतिव्याप्तिवारणाय सामान्यपदं, तथाच तादृशाधेयत्वानिरूपकत्वव्यापकाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नाधिकरणतात्वं, यद्रूपावच्छिन्नाधिकरणतात्वावच्छिन्नाभावत्वं वा तादृशाधेयत्वानिरूपकत्वव्यापकतावच्छेदकं तद्रूपवत्त्वं व्याप्तिरिति फलितार्थः, तेन धूमानधिकरणत्वव्यापकीभूतधूमाधिकरणत्व-वह्न्यधिकरणत्वोभयसामान्याभावप्रतियोगितायावह्न्यधिकरणत्वसामान्यनिष्ठत्वेऽपि नातिव्याप्तिः, यदधिकरणतामात्रनिवेशे द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः द्रव्यत्वानधिकरणगुणादौ हेत्वधिकरणतात्वावच्छिन्नाभावासत्त्वात् अतः यद्रूपावच्छिन्नेति, हेत्वभावस्य व्यापकतानिवेशे हेतुतावच्छेदकसम्बन्धेन तद्वन्निष्ठत्वं निवेश्यं अन्यथा वह्निमान् धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकाधिकरणजलादौ धूमाभावाभावस्य कालिकसम्बन्धेन वृत्तेरव्याप्त्यापत्तेः तथाच सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेरतो हेत्वधिकरणत्वाभावस्य व्यापकताघटितमेव तल्लक्षणं तथाचाधिकरणताया विशेषणताविशेषेण वृत्तिमत्तया तेन सम्बन्धेन तद्वन्निष्ठत्वं निवेश्यम् अतो न दोषः। पूर्व्वकल्पपरित्यागे वीजमाह, 'तेनेति, 'न दोष इति, सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धावपि तत्तत्सम्बन्धावच्छिन्नाया द्रव्यत्वाधिकरणताया द्रव्ये प्रसिद्धाया अप्य-

भावस्य साध्यनिष्ठधेयत्वानिरूपकाधिकरणत्वव्यापकत्वादिति (१) भावः।

तत्त्वचिन्तामणिदीधितिः।

साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणकत्वस्वरूपाधिकरणत्वांशस्यानतिप्रयोजनकतया तदपहाय द्वयमेकोक्त्या अनूद्य दूषयति, 'तदुभयमपीति। साध्येत्यादेः साध्यं यदधिकरणानधिकरणं तत्त्वाभावः, साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावस्यार्थः, तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिद्ध्या नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनिष्ठाधेयत्वानिरूपकाधिकरणत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः क्वचिद्व्यभिचारिण्यतिप्रसङ्गश्चाद्ये, द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदो विवक्षितस्तदा केवलान्वयिनि, यदि च यत्किञ्चित्साध्यवद्व्यक्तिभेदस्तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः।

गादाधरी विवृतिः।

साध्यवैयधिकरण्यस्य निरुक्तार्थकत्वे पौनरुक्त्यमतस्तद्व्याचष्टे, 'साध्येति। ननु मूले 'तदुभयमपि साध्यानधिकरणानधिकरण-

(१) साध्यानधिकरणत्वव्यापकत्वादितीति पा०।

त्वम्' इत्यनेनोक्तलक्षणद्वयार्थानुवादोऽसङ्गतः असमानाधिकरण्य-वैयधिकरण्ययोरधिकरणताद्वयघटितत्वेन तादृशलक्षणयोरधि-करणताद्वयघटितत्वादनुवादे चाधिकरणताद्वयमात्रस्य निवेशा-दतस्तादृशमूलं सङ्गमयति, 'चरमेति, (१) 'अनतिप्रयोजनक-तयेति, अनधिकरणत्वस्याधिकरणत्वाभावरूपतया तद्घटकाधि-करणत्वांशं परित्यज्य साध्यासामानाधिकरण्याभाव-साध्यवैयधि-करण्याभावनिवेशेनैवोपपत्तिरिति भावः। असामानाधिकर-ण्याद्यधिकरणत्वाभावस्यासामानाधिकरण्याद्यभावाघटिततया न वैयर्थ्यमित्यनतिप्रयोजनकतयेत्युक्तं, 'तदपहाय' चरमाधिकरण-त्वांशं परित्यज्य, 'इयं' साध्यासामानाधिकरण्याभाव-साध्यवैय-धिकरण्याभावरूपलक्षणार्थद्वयं, साध्यानधिकरणानधिकरणत्व-मित्यनेन सत्तावान् द्रव्यत्वादित्यादावव्याप्तिवारणायावलम्बि-तस्य प्रथमलक्षणीयनिष्कृष्टार्थस्य (२) कथञ्चिदपि प्रतिपाद-नासम्भवात्तदनुवादतानुपपन्नेति यथाश्रुतानुवादपरतया सङ्गमयि-तुम् अनुवादनीयलक्षणार्थद्वयमाह, 'साध्येत्यादेरिति, लक्षण-द्वयस्य क्रमेणेति शेषः, 'तत्त्वाभावः' इत्यन्तेन प्रथमलक्षणार्थ-कथनम्, एवञ्च साध्यानधिकरणानधिकरणशब्देन साध्यं यदधि-करणानधिकरणकं तद्बोध्यते तदुत्तरत्वप्रत्ययेन तत्त्वं साध्यपदो-त्तरसन्निविष्टनञा तदभावः प्रत्याय्यते इति प्रथमलक्षणार्थबोध-कत्वं साध्यानधिकरणानधिकरणत्वमित्यस्य। न च साध्याधि-

(१) चरमाधिकरणत्वांशस्येतीति पा०।

(२) प्रथमलक्षणार्थनिष्कर्षस्येति पा०।

करणानधिकरणत्वमित्यनेन नञ्समासे सत्येव तदर्थाभावः नञा प्रत्याययितुं शक्यते तथाच साध्यपदोत्तरनञ्निपातोऽसम्भवी समस्यमानपदपूर्व्वनिपतितस्यैव नञः साधुत्वादन्यथा अचित्र-गुरित्यादौ चित्रादिपदोत्तरमपि नञ्निपातापत्तेरिति वाच्यम्। ससम्बन्धिकार्थबोधकोत्तरपदघटितसमुदायेन समं नञ्समासस्थले नञो मध्यनिवेशस्यापि साधुतासम्पादकत्वात् अन्यथा घटानधि-करणत्वं साध्याभाववदवृत्तित्वमित्यादौ च घटाद्यधिकरणत्वाद्य-भावप्रत्ययानुपपत्तेः (१) न हि तत्रानधिकरणत्वपदानां घटादिपदैः समासे तादृशार्थप्रतीतिरुपपद्यते, अनधिकरणत्वपदादिजन्यप्रती-तिविशेष्यीभूताभावेन सममेव घटादिसंसर्गभानात् समस्य-मानपदप्रतिपाद्यतावच्छेदककोटिनिविष्टेनापरपदार्थान्वये राज-पुरुषादन्य इत्यर्थे राजापुरुष इत्यादिसमासापत्तेः, एवं नञा अन्वयितावच्छेदकावच्छिन्नाभावस्यैव बोधनात् अधिकरणसामा-न्यभेदवानेवानधिकरणपदार्थः स्यात्तस्य चाप्रसिद्धत्ता नञ्पदाधि-करणपदयोः प्राथमिकसमासासम्भवाच्चेति, साध्यनिष्ठाधेयत्वा-निरूपकाधिकरणवृत्तित्वाभावरूपप्रथमलक्षणार्थस्य निष्कृष्टयथा-श्रुतार्थोऽपि साध्यानधिकरणानधिकरणत्वमिति शब्देन प्रति-पाद्यते तथाहि आधेयतानिरूपकार्थकचरमाधिकरणपदघटि-तेनाधिकरणानधिकरणपदेन स्वाधिकरणमनधिकरणम् आधेय-त्वानिरूपकं यस्येति व्युत्पत्त्या अधिकरणनिष्ठभेदप्रतियोगितावच्छे-दकीभूतनिरूपकताकाधेयतावत्त्वेनान्यपदार्थो बोध्यते बहुव्रीहौ

(१) घटाधिकरणत्वाभाव-साध्याभाववद्वृत्तित्वाभावयोः प्रत्ययानुपपत्तेरिति पा०।

विग्रहवाक्याद्‌याद्दशविशेषण-विशेष्यभावापन्नस्य बोधस्तद्विपरीत-विशेष्य-विशेषणभावापन्नस्य प्रत्ययात् चित्रा गौर्यस्येति वाक्यात् यत्पदार्थसम्बन्धित्वेन चित्रगो: चित्रगुरित्यतश्चित्रगोनिष्ठसम्बन्ध-प्रतियोगित्वेन यत्पदार्थस्य बोधात्, प्रकृतस्थले च विग्रवाक्याद-न्यपदार्थनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवत्त्वेनाधिकरणप्रतीतेः, एवं साध्यं यदधिकरणानधिकरणकं यदधिकरणनिष्ठभेदप्रति-योगितावच्छेदकीभूतनिरूपकताकाधेयतावदिति व्युत्पत्त्या साध्य-निष्ठाधेयत्वनिरूपकत्वावच्छिन्नभेदवधिकरणवृत्तित्वं 'साध्याधिक-रणानधिकरणत्वशब्देन प्रत्याय्यते तदभाव: साध्यपदोत्तरनिविष्ट-नञ्‌पदघटिततद्‌वाक्येनेति। द्वितीयलक्षणार्थमाह, 'साध्यस्येति, तथाच साध्यानधिकरणमधिकरणम् आधेयतानिरूपकं यस्येति व्युत्पत्त्या साध्यानधिकरणाधिकरणत्वशब्देन साध्यानधिकरणवृ-त्तित्वं प्रत्याय्यते, तदभावश्च द्वितीयनञेति उक्तशब्दस्य एतद-र्थानुवादकतेति भाव:। पूरणसम्बलितं तत्रेति ग्रन्थं व्याचष्टे, 'तत्रेत्यादिना, मूले केवलान्वयिनि वह्निमान् धूमादित्यादौ चाव्या-प्तेर्हेत्वकथनात् प्रथमलक्षणे केवलान्वयिन्यव्याप्तिहेतुं पूरयति, 'साध्येत्यादिना 'अप्रसिद्धेरित्यन्तेन, साध्यनिष्ठाधेयतानिरूपकसामा-न्यभेदनिवेशाभिप्रायेण इयमप्रसिद्धिरभिहिता, यत्किञ्चिन्निरूपकभेद-निवेशे च तादृशभेदवदधिकरणे हेतोर्वृत्तेरव्याप्तिर्बोध्या, वक्ष्य-माणक्रमेण नानाव्यक्तिसाध्यकहेत्वन्तरेऽप्यव्याप्तिसत्त्वात् धूममात्रे तत्कथनं मूलकृतां न्यूनतासम्पादकमतो धूम इत्यस्य उपलक्ष-णत्वाभिप्रायेण पाठमध्यत्वेव व्याचष्टे, 'नानाव्यक्तिकेति, अत्र च

यथासम्भवमव्याप्तिर्बोध्या तेनैतद्वृत्तिधर्म्मवान् एतत्त्वादित्यादौ वक्ष्यमाणरीत्या अव्याप्तिविरहेऽपि न क्षतिः, अतएवाग्रे नानाधिकरके सर्व्वत्रेति वक्ष्यति । यद्वा नानाव्यक्तिसाध्यक इत्यस्य मिथोव्यधिकरणद्वयवृत्तिसाध्यतावच्छेदकक इत्यर्थः, अत्राव्याप्तेर्हेतुं पूरयति, 'एकेत्यादिना 'इतीत्यन्तेन, अनया रीत्या अव्याप्तिश्च यत्किञ्चित्साध्यनिष्ठाधेयत्वनिरूपकत्वावच्छिन्नभेदनिवेशाभिप्रायेण, साध्यनिष्ठाधेयतानिरूपकसामान्यभेदनिवेशे च केवलान्वयिन्यव्याप्तिरेव दोष इति ध्येयम् । 'क्वचिदिति पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत् द्रव्यत्वादित्यादावतिव्याप्तिरिति, विशिष्टद्रव्यत्वस्य शुद्धद्रव्यत्वानतिरेकितया पृथिव्यादेः साध्यनिष्ठाधेयत्वानिरूपकत्वासम्भवादिति भावः । आधेयतायां साध्यतावच्छेदकावच्छिन्नत्वविवक्षणे नैषदोषः अधिकरणतानिरूपकतावच्छेदकस्यैवाधेयतावच्छेदकतया पृथिवीनिष्ठाधिकरणतानिरूपकतानवच्छेदकपृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वादेः पृथिवीनिरूपिताधेयतानवच्छेदकत्वादिति ध्येयम् । द्वितीयलक्षणे साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदनिवेशे धूमादौ नाव्याप्तिः अतस्तत्कल्पे केवलान्वयिसाध्यकाव्याप्तिरेव, यत्किञ्चित्साध्यवद्व्यक्तिनिवेशे च उभयस्थलएवाव्याप्तिरिति मूलाभिप्रायं स्फुटयति, 'द्वितीये चेत्यादिना, साध्यवत्त्वावच्छिन्नप्रतियोगिताको भेदः साध्यवैयधिकरण्ये विवक्षित इति योजना, साध्यवैयधिकरण्यघटकतया विवक्षित इत्यर्थः, 'केवलान्वयिनि' केवलान्वयिन्येव, नानाधिकरणके एकव्यक्तिसाध्यकेऽपि सत्तावान् द्रव्यत्वादित्यादौ एकस्य साध्यवतोभेदस्यान्यत्र साध्यवति सत्त्वादव्याप्तेर्नाना-

व्यक्तिसाध्यकेऽपि एतद्वृत्तिधर्म्मवान् एतत्त्वादित्यादावव्याप्त्यसम्भवात् नानाव्यक्तिकेति नोक्तं, तथाच द्वितीयलक्षणाभिप्रायेण धूम इति मूलं नानाधिकरणसाध्यसामान्योपलक्षणमिति भावः ।

---

तत्त्वचिन्तामणिदीधितिः ।

केचित्तु साध्यासामानाधिकरण्यं हेतुतावच्छेदक-सम्बन्धेन हेत्वधिकरणे तेनैव सम्बन्धेन साध्यवद्वृत्ति-त्वाभावस्तदधिकरणभिन्नत्वमर्थस्तेन धूमस्य स्वावयवे संयोगेन वह्निमति च समवायेनावृत्तावपि न क्षतिः, तादृशाभावश्च सम्बन्धान्तरेण तत्रैव वर्त्तमाने सुलभः व्यभिचारिणस्तु व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्वं, सत्तायां गुणे न द्रव्यत्वसामानाधि-करण्यमित्यनुभवात् । न चैवं गुण-कर्म्मान्यत्वविशिष्ट-सत्त्वेऽव्याप्तिः, विशिष्टस्यातिरिक्तत्वात् अनतिरिक्तत्वे तु विशेषण-विशेष्यसम्बन्धस्यैव परम्परया व्याप्तत्वात्, केवलान्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्राये-णेत्याहुः, तच्चिन्त्यं, सत्तायां गुणे न द्रव्यत्वसामानाधि-करण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामा-नाधिकरण्यमितिप्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधि-करण्यावच्छेदकत्वस्य परम्परासम्बन्धेन सामानाधि-

करण्यस्य वा अभावं गुणेऽवगाहते न तु सत्तायामेव द्रव्यवृत्तित्वाभावं सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्य-वृत्तित्वाभावो न सत्तावृत्तिरित्यादिसर्व्वजनसिद्धप्रतीति-बाधितत्वात् बाधकाभावात्तु संयोग-तदभावयोरव-च्छेदकभेदेनैकत्र प्रतीत्या तदुभयोरेकत्र सिद्धिः। अती-न्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारिण्यतिप्रसङ्गाच्च तत्र सामानाधिकरण्याभावस्य प्रत्यक्षत्वासम्भवेनासिद्धेः। न च तदभाववद्वृत्तित्वेन तत्र तदनुमेयं, तद्वृत्ति-भिन्नत्वस्योपाधित्वात्। किन्तु इदमिदानीमितिप्रतीति-नियामकविशेषणताविशेषेण हेतुतायां सद्धेतावव्याप्तिः तेन सम्बन्धेनाधिकरणे काले तेन सम्बन्धेन साध्य-वद्वृत्तित्वस्य विरहिणोऽप्रसिद्धेः।

इत्यनुमानदीधितौ सिंह-व्याघ्रनामकव्याप्ति-द्वयं समाप्तम्।

---

गादाधरी विवृतिः।

साध्यासामानाधिकरण्यानधिकरणत्वमित्यत्र साध्यासामा-नाधिकरण्यपदेन साध्याधिकरणवृत्तित्वाभावविवक्षणेऽपि द्रव्यं सत्त्वादित्यादावतिव्याप्तिर्न सम्भवति सामानाधिकरण्यस्याव्याप्य-वृत्तितया सत्तादावपि गुणाद्यवच्छेदेन द्रव्यत्वादिसामानाधि-

करणाभावसत्त्वात् किन्तु वह्निमान् धूमादित्यादावव्याप्तिः स्वावयवावच्छेदेन धूमादेरपि वह्न्यादिसामानाधिकरण्याभावसत्त्वात्। सापि हेतुतावच्छेदकसम्बन्धेन यद्धेतुमत् तदवच्छिन्नत्वेनाभावं विशिष्य वारयितुं शक्यते इत्यभिप्रायेण तत्पदं तादृशाभावपरतया वर्णयतः सार्वभौमस्य मतमुत्थापयति, 'केचि त्त्विति, 'हेत्वधिकरण इति सप्तम्यर्थोऽभावान्वयि अवच्छिन्नत्वं, 'तेनैव सम्बन्धेनेति तृतीयार्थो वृत्त्यन्वितमवच्छिन्नत्वं, 'वृत्तिपदस्य सम्बन्धार्थकत्वे तु अभेदएव तदर्थः, अनधिकरणत्वपदस्याधिकरणत्वाभावोऽभावमात्रं वा यद्यर्थः स्यात् तदा अव्याप्यवृत्त्यधिकरणतया अव्याप्यवृत्तितया सत्तादौ द्रव्याद्यवच्छेदेन साध्यसामानाधिकरण्याभावाधिकरणत्वाभावस्य सामानाधिकरण्यरूपतदभावाभावस्य चाचतत्वादतिव्याप्तिस्तदवस्थैवेत्यनधिकरणपदमधिकरणभेदवदर्थकतया व्याकरोति, 'तदभीति, यद्यप्यधिकरणभेदेनाभावभेदाभावात् संयोगादिना धूमाद्यधिकरणपर्व्वताद्यवच्छिन्नो यः सम्बन्धान्तरेण तद्वृत्तिरूपादिनिष्ठवह्न्यादिमत्संयुक्तत्वाद्यभावस्तस्यैव स्वावयवाद्यवच्छेदेन धूमादौ वर्त्तमानतया धूमादेस्तादृशाभावानधिकरणत्वं दुर्घटं, तथापि तादृशहेत्वधिकरणावच्छिन्नत्वविशिष्टाभावाधिकरणत्वस्यैव विवक्षणीयतया न दोषः। रूपे पर्व्वते न वह्निमत्संयुक्तत्वमिति प्रतीतिवत् पर्व्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रतीत्यनुदयात् पर्व्वतावच्छिन्नत्वविशिष्टनिरूपितायाः वह्निमत्संयुक्तत्वाभावीयविलक्षणाधिकरणतायाः रूपादावेवोपगमात्, अभावाधिकरणता-

याभेव वाधिकरणविशेषावच्छिन्नत्वं निवेशनीयं तावतापि धूम-रूपयोरभिन्नस्याप्यभावस्य परस्परानवच्छेदकावच्छिन्नाधिकरणता-भेदेन कथितदोषनिराकरणसम्भवात्। उभयत्र हेतुतावच्छेदक-सम्बन्धप्रवेशप्रयोजनं क्रमेण दर्शयति, 'तेनेति स्वावयवे संयोगेना-वृत्तावपीत्यर्थः। तथाच धूमावयवावच्छेदेन साध्यवत्संयुक्तत्वाभाव-सत्त्वेन (१) तदभावस्याव्यततया प्रथमतो हेतुतावच्छेदकसम्बन्धा-निवेशे स्वावयवरूपस्वाधिकरणावच्छिन्नसाध्यवत्संयुक्तत्वाभावानधि-करणत्वविरहेण संयोगेन धूमहेतौ कस्यापि साध्यस्य व्याप्तिर्न स्या-दिति भावः। यद्यपि तादृशसम्बन्धनिवेशेऽपि वह्निमत्संयुक्तत्वादेः कालिकाव्याप्यवृत्तितया धूमादावुत्पत्तिकालावच्छेदेन वह्निमत्-संयुक्तत्वाभाववृत्तेः पर्व्वतादेरपि कालोपाधितया तादृशाभावाव-च्छेदकत्वादव्याप्तिस्तादवस्थ्यं तथापीदानीमितिप्रतीतिनियामक-कालस्यावच्छेदकत्वादिहेतिप्रतीतिनियामकदेशनिष्ठावच्छेदकताया वैलक्षण्यं दुरपह्नवं यदभावात् पर्व्वते धूमे न वह्निमत्संयु-क्तत्वमिति प्रत्ययाभावः हेतुमन्निष्ठतादृशावच्छेदकतानिरूपकत्व-मेव निवेश्यमिति न दोषः। न च कालोपाधेरवच्छेदकतायाम् अवच्छेद्याधिकरणेनावच्छेदकस्य कालिकसम्बन्धो नियामकः इत्यच्च तादृशसम्बन्धेनानवच्छिन्नत्वमेव देशस्यावच्छेदकतायां वैलक्षण्यं अन्यस्य दुर्वचत्वात् तथाच व्यभिचारिणि कालिकसम्बन्धेन हेतो-र्वर्त्तमानसाध्यसामानाधिकरण्याभावे व्यभिचारनिरूपकाधिकर-णीयावच्छेदकतायां कालिकसम्बन्धानवच्छिन्नत्वविरहात् अति-

(१) साध्यवत्संयुक्तत्वासत्त्वेनेति पा०।

व्याप्तिरिति वाच्यं। कालिकव्याप्यवृत्तावपि कालिकसम्बन्धघटितात्मत्वाकाशत्वादिसामानाधिकरण्ये दैशिकसम्बन्धेनात्मत्वाद्यनधिकरणकालस्य देशविधयैवावच्छेदकत्वात् कालविधया कालस्यावच्छेदकत्वे तादृशसामानाधिकरण्यस्य कालिकव्याप्यवृत्तित्वापत्तेः कालिकसम्बन्धानवच्छिन्नत्वादन्यस्यैव वैलक्षण्यस्य देशविधया अवच्छेदकतायां स्वीकरणीयत्वात् हेत्वधिकरण इत्यत्र हेतुपदम् अधिकरणभिन्नत्वानुयोगितत्तद्धेतुपरम् अतो धूमाद्यन्तरसंयुक्तस्वावयवावच्छेदेन धूमादेस्तादृशाभाववत्त्वेऽपि न क्षतिः। एवञ्च व्याप्तिः प्रतिधूमादिकं भिन्नत्वेऽपि केनापि रूपेणानुगतानां तासां धूमत्वादिकमवच्छेदकम्। यत्तु (१) हेतुपदं हेतुतावच्छेदकावच्छिन्नपरमेव हेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरणं तदनवच्छिन्ना या अधिकरणता तदन्यत्वेन साध्यसामानाधिकरण्याभावाधिकरणताया विशेषणीयत्वान्नोक्तदोषावकाशो न वा अननुगमः। एवञ्च कालोपाधिविधया हेत्वधिकरणदेशस्य अवच्छेदकत्वेन उक्तदोषस्य हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकत्वनिवेशेनापि वारणसम्भवः पर्व्वतरूपादौ हेतुतावच्छेदकसम्बन्धावच्छिन्नपर्व्वतादिनिष्ठावच्छेदकताकसाध्यसामानाधिकरण्याभाववत्त्वाप्रसिद्धावपि रूपादिनिष्ठनिरुक्ताभावाधिकरणतायां धूमादिप्रसिद्धनिरुक्ताधिकरणतानां भेदस्याक्षततया तदन्यत्वेन धूमादौ लक्षणसमन्वयादिति, तन्न(२)साधु, तथा सति

(१) यत्त्वित्यत्र अथवेति पा०।

(२) तन्नेत्यादिः प्रसिद्धेरित्यन्तः पाठः कस्मिंश्चित् आदर्शपुस्तके नास्ति।

किञ्चेत्याद्यग्रिमग्रन्थासङ्गतेः गगननिष्ठसाध्यसामानाधिकरण्या-भावाधिकरणतायाः एवोक्ताधिकरणताभिन्नायाः प्रसिद्धेः। 'वह्निमति चेति, तथाच तेनैव सम्बन्धेनेत्यनुक्त्वा यत्किञ्चित्सम्बन्धे-नेत्युक्तौ पर्व्वताद्यवच्छिन्नवह्निमत्संयुक्तत्ववत्यपि तदवच्छिन्नवह्नि-मत्समवेतत्वाभावसत्त्वाद्धूमस्य वह्निव्याप्यत्वं नोपपद्येतेति भावः। साध्यवत्सम्बन्धसामान्याभावनिवेशे वह्निमत्समवेतत्वाद्यभावस्य लक्षणाघटकत्वेऽपि हेत्वधिकरणविशेषावच्छिन्नसाध्यवत्सम्बन्ध-सामान्याभावाप्रसिद्ध्या असम्भवो बोध्यः, साध्यवदसम्बद्धस्य गगनादेर्हेतुमति सम्बन्धासम्भवादवच्छेद्याधिकरणसम्बन्धिन एव अवच्छेदकतया तन्निष्ठाभावे हेतुमतोऽनवच्छेदकत्वात्, 'न क्षति-रिति नाव्याप्तिरसम्भवश्चेत्यर्थः, साध्यवत्त्वं साध्यतावच्छेदक-सम्बन्धेन बोध्यं, तेन समवायेन वह्नौ साध्ये संयोगेन हेतौ धूमे पर्व्वताद्यवच्छेदेन वह्निमद्वृत्तित्वसामान्याभावस्यासत्त्वेऽपि नाति-व्याप्तिः, न वा सद्धेतावपि यत्किञ्चित्सम्बन्धेन यः साध्यवांस्तद्वृ-त्तित्वाभावस्य स्वाधिकरणावच्छेदेन सत्त्वेऽपि दोषः। साध्यञ्च उपलक्षणविधया अभावप्रतियोगितावच्छेदककोटौ निवेशनीयं न तु विशेषणविधया, तेनोत्पत्तिक्षणावच्छिन्नघटादौ गन्धाद्यसत्त्वात् तादृशघटाद्यवच्छेदेन पृथिवीत्वादौ गन्धादिविशिष्टवृत्तित्वाभाव-सत्त्वेऽपि गन्धवान् पृथिवीत्वादित्यादौ मूलावच्छिन्नवृक्षादौ कपि-संयोगाद्यसत्त्वात्तादृशवृक्षाद्यवच्छेदेन एतद्वृक्षत्वादौ कपिसंयोगा-दिविशिष्टवृत्तित्वाभावसत्त्वेऽपि कपिसंयोगी एतद्वृक्षत्वादित्यादौ वा नाव्याप्तिः तत्तत्काल-देशावच्छिन्नतत्तदधिकरणाद्यवच्छेदेनापि

तत्र तत्र हेतौ तादृशसाध्योपलक्षितधर्म्मिवृत्तित्वसत्त्वात्। न चैवमपि धूमादौ पर्व्वतादिवृत्तेरनवच्छेदको यो देशः कालो वा तदवच्छिन्नपर्व्वताद्यवच्छेदेन वह्न्यादिमद्वृत्तित्वाभावस्य धूमादौ सत्त्वादव्याप्तिर्दुर्व्वारैवेति वाच्यम्। तत्तद्देश-कालावच्छिन्नपर्व्वतादेर्धूमाद्यसम्बन्धितया धूमादावभाववृत्तावपि तादृशस्यानवच्छेदकत्वात्। न चैवम् उत्पत्तिक्षणविशिष्टपर्व्वते धूमस्य न वह्निमत्संयुक्तत्वमित्यादिप्रतीत्यनुपपत्तिः द्रव्यत्वे गुणे न पृथिवीत्वादिसामानाधिकरण्यमित्यादिवदुक्तप्रतीतेः सामानाधिकरण्यावच्छेदकत्वाभावावलम्बनता न सम्भवति विशेष्यस्यावच्छेदकत्वे विशिष्टस्यानवच्छेदकत्वासम्भवादिति वाच्यम्। तादृशप्रतीतीनां सामानाधिकरण्ये विशिष्टपर्व्वताद्यवच्छेद्यत्वाभावावगाहितयैवोपपत्तेः उत्पत्तिक्षणे पर्व्वते धूमस्य न वह्निसंयुक्तत्वमित्यादौ पर्व्वतावच्छिन्नं यद्धूमस्य वह्निमत्संयुक्तत्वं तस्य उत्पत्तिक्षणो नावच्छेदक इत्यादिरप्यर्थः सम्भवति धूमनिष्ठवह्निमत्संयुक्तत्वाभावे उत्पत्तिक्षण-पर्व्वतोभयावच्छिन्नत्वन्तु नार्थः पर्व्वतस्य प्रतियोग्यवच्छेदकतया तदन्तर्भावेन द्वयोरभावावच्छेदकत्वासम्भवात् घटपटयोर्घटत्वाभावाधिकरणतावत्। एतेनोक्तोभयावच्छिन्नसाध्यसामानाधिकरण्याभाववत्त्वव्यावर्त्तनाय हेत्वधिकरणमात्रावच्छिन्नत्वप्रवेशनं केषाञ्चिदनुपादेयमेव, तथा सति वह्न्यादिनिष्ठधूमसामानाधिकरण्याभावस्यापि अयोगोलक-स्वावयवोभयावच्छिन्नतया हेतुतावच्छेदकसम्बन्धेन हेतुमन्मात्रावच्छेद्यतयाऽतिव्याप्तिप्रसङ्गाच्च।

केचित्तु विशिष्टपर्व्वतादेरवच्छेदकतामादायाव्याप्तिवारणाया-वच्छेदकान्तरानवच्छिन्नहेत्वधिकरणावच्छिन्नत्वम् अभावे निवे-शनीयम् एवञ्च पर्व्वतादेः कालविधया धूमनिष्ठवह्निमत्संयुक्त-त्वाद्यभावावच्छेदकत्वस्यापि व्यावृत्तिः पर्व्वतादेः स्थूलकालतया वह्निमत्संयुक्तत्वादिरूपप्रतियोगिनोऽप्यवच्छेदकत्वात् तन्निष्ठा-भावावच्छेदकताया अविरोधायावान्तरकालावच्छिन्नत्वोपगमा-दित्यप्याहुः ।

हेतुमदसम्बद्धे साध्यसामानाधिकरण्याभावस्योक्तयुक्त्या हेत्व-धिकरणावच्छिन्नत्वविरहात् हेतुतानवच्छेदकसम्बन्धेन हेतुमत्-सम्बद्धे हेतुमदवच्छिन्नतादृशाभावप्रसिद्धिमाह, 'तादृशेति हेतुता-वच्छेदसम्बन्धेन साध्यवद्वृत्तित्वस्य तेन सम्बन्धेन हेतुमदवच्छिन्ना-भावस्येत्यर्थः, 'तत्रैव' तादृशहेतुमत्येव । न च तथाविधे रूपादौ वह्निमत्संयुक्तत्वाद्यभावो व्याप्यवृत्तिरेवेति तत्राधिकरणविशेष-स्यावच्छेदकत्वं निर्युक्तिकं प्रतियोगिमत्यभाववृत्तावेव विरोध-भञ्जनार्थमवच्छेदकभेदापेक्षणात् धूमवत्कपालादिसमवेतवह्निमन्-महानसादिसंयुक्तघटादौ महानसाद्यवच्छेदेन वह्निमत्संयुक्तत्व-वति हेतुमत्कपालाद्यवच्छेदेन वह्निमत्संयुक्तत्वाभावसौलभ्येऽपि एतद्रूपवान् एतद्रसादित्यादौ एतद्रूपादिमत्समवेतत्ववति हेत्व-धिकरणावच्छेदेन प्रतियोगिसत्त्वात्तदवच्छेदेन साध्यसामानाधि-करण्याभाववृत्त्यसम्भवादेतद्रूपादिमति सम्बन्धान्तरेण वर्त्तमान-साध्यवत्समवेतत्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणानवच्छिन्न-त्वान्निरुक्ताभावाप्रसिद्धिर्दुर्वारत्वादिति वाच्यम् । पर्व्वते रूपे न

वह्निमत्संयुक्तत्वमिति प्रतीतिबलेन व्याप्यवृत्तेरपि सामानाधिकरण्याभावस्याधिकरणविशेषावच्छिन्नत्वोपगमात् ।

यत्तु व्याप्यवृत्तेरभावस्य अधिकरणविशेषावच्छिन्नत्वानभ्युपगमे हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये हेत्वनुयोगिकत्व-हेत्वधिकरणविशेषावच्छिन्नत्वोभयाभावो विवक्षणीयः तथाच धूमादिनिष्ठस्वावयवाद्यवच्छिन्नतदधिकरणतायां हेतुतावच्छेदकसम्बन्धेन हेतुमदवच्छिन्नत्वस्य रूपादिनिष्ठवह्निमत्संयुक्तत्वाद्यभावाधिकरणतायां घटादिनिष्ठधूमवत्कपालाद्यवच्छिन्नतदधिकरणतायाञ्च हेत्वनुयोगिकत्वस्याभावेनोभयाभावसत्त्वात् लक्षणसमन्वय इति, तन्न, व्याप्यवृत्तेरवच्छेदकानभ्युपगमे पृथिवी रूपादित्यादावतिव्याप्तिः पृथिवीत्वादिव्यभिचारिजलीयरूपादिनिष्ठसाध्यसामानाधिकरण्याभावस्य व्याप्यवृत्तितया तदधिकरणतासामान्ये निरुक्तोभयाभावस्याक्षतत्वात् हेत्वधिकरणावच्छिन्नत्वस्थाने अवच्छिन्नत्व-हेत्वधिकरणानवच्छिन्नत्वोभयाभावस्यैव निवेशनीयत्वान्नायं दोषः जलरूपादिनिष्ठपृथिवीसमवेतत्वाभावाधिकरणतायामवच्छिन्नत्वविरहेणोभयाभावसत्त्वात् एवञ्च एतावतैव दर्शिताप्रसिद्धेरपि निवारितत्वात्तादृशोभयाभाववत्तादृशाधिकरणतावदन्यत्वमेव निवेशनीयं न तूक्ताधिकरणतासामान्ये हेत्वनुयोगिकत्व-तादृशोभयाभाववत्त्वोभयाभावः प्रयोजनविरहादिति चेदेवमपि वक्ष्यमाणायाः कालिकादिसम्बन्धेन हेतावव्याप्तेरसङ्गतिर्दुर्व्वारैवेति तत्र कालिकादिसम्बन्धेनावृत्तौ गगनादावेव दर्शितोभयाभाववत्साध्यसामानाधिकरण्याभावाधिकरण-

तायाः प्रसिद्धेः अवृत्तावेव सर्व्वत्र तादृशाभाववत्त्वप्रसिद्ध्या सम्ब-न्धान्तरेण वर्त्तमानपर्य्यन्तानुधावनविरोधः तस्मात् व्याप्यवृत्तेरप्यव-च्छेदकत्वमेव ग्रन्थकारानुमतमित्यवधेयम् । द्रव्यं सत्त्वादित्यादा-वाशङ्कितामतिव्याप्तिमुद्धरति, 'व्यभिचारिण्येति, 'तादृशीति हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः, अवच्छेदकत्वं सप्तम्यर्थः, 'तादृशाभाववत्त्वं' हेतुतावच्छेदकसम्बन्धेन साध्यवद्वृत्तित्वाभाव-वत्त्वम् । अत्र प्रमाणाकाङ्क्षायामाह, 'सत्तायामिति, तादृश-प्रतीत्या द्रव्यत्वसामानाधिकरण्यवत्यामपि सत्तायां तदनव-च्छेदकगुणाद्यवच्छेदेन तदभाववत्त्वावगाहनादिति ध्येयम् । एवं सत्तायां द्रव्यत्वसामानाधिकरण्याभावोपगमे विशिष्टसत्त्वे गुणाद्यन्यत्वविशिष्टसत्तात्वाद्यवच्छिन्नेऽव्याप्तिरिति गुणाद्यवच्छेदेन साध्यसामानाधिकरण्याभाववत्यां केनापि रूपेण तदनधिकर-णत्वासम्भवादिति भावः । 'विशिष्टस्येति, तथाच विशिष्टसत्त्वं द्रव्यमात्रवृत्ति तदधिकरणत्वं न गुणादेरिति न हेत्वधिकरणाव-च्छेदेन हेतौ साध्यसामानाधिकरण्याभाववत्त्वमिति नाव्याप्ति-रिति भावः । यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छि-न्नत्वं निवेश्यापीयमव्याप्तिः शक्यते वारयितुं तथापि प्रकारान्त-रेणाव्याप्तिवारणसम्भावे लक्षणेऽधिकनिवेशनमनुचितमित्यभिप्रेत्य विशिष्टस्यातिरिक्तत्वादिपक्ष आश्रितः । न च हेतुतावच्छेदक-विशिष्टाधिकरणतानिवेशनमावश्यकम् अन्यथा इदं स्पर्शवत् भूतत्व-मूर्त्तत्वोभयस्मादित्यादौ भूतत्वे मूर्त्तत्वे च हेतौ स्वाधि-करणे गगने मनसि च साध्यसामानाधिकरण्यविरहेणाव्याप्ति-

प्रसङ्गादिति वाच्यम्। उभयत्वस्य एकविशिष्टापरत्वरूपतामत-मवलम्ब्य विशिष्टस्यातिरिक्तत्वेन तत्र स्वावच्छिन्ननिरूपिताधि-करणत्वरूपपरम्परासम्बन्धेनोभयत्वस्यैव हेतुत्वमिति स्वीकृत्यैव वा तत्राव्याप्तेः समाधानसम्भवात्। ननु द्रव्यं गुणाद्यन्यत्वे सति सत्त्वादित्यादौ विशिष्टस्यातिरिक्ततापक्षमवलम्ब्याव्याप्तिवारणं न विचारसहं तथाहि गुणादिवृत्तिसत्त्वादितो गुणाद्यन्यत्वविशिष्ट-सत्तादेरतिरिक्तत्वेऽनुगतधर्म्ममात्रोच्छेदः एकव्यक्तिवृत्तित्वविशिष्ट-स्यापरव्यक्तिवृत्त्यन्यत्वात्। न च तत्तद्व्यक्तिवृत्तित्वविशिष्टसत्तादीनां मिथो भेदेऽपि शुद्धसत्तादिकमनुगतं निराबाधमेवेति वाच्यम्। शुद्धसत्तादौ तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्याभ्युपगमे भवतान्तदेकत्वा-सम्भवात् तदनभ्युपगमे तस्यावृत्तित्वप्रसङ्गात् एवं सर्व्वेषामेव वस्तूनां तत्तत्क्षणवृत्तित्वरूपविशेषणभेदात् भेदप्रसक्त्या क्षण-भङ्गापत्तिपर्य्यवसानं दुर्व्वारमेव। अथ प्रत्यभिज्ञाद्यनुरोधेन एक-स्मिन् नानादेश-कालवृत्तित्ववैशिष्ट्यं स्वीक्रियत एव परन्तु गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्ति इदानीं पूर्व्वक्षणवृत्तित्वविशिष्ट-घटो नास्तीति प्रतीत्यनुरोधेन मिथो भिन्ना अपि तत्तद्विशे-षणविशिष्टसत्त्व-घटादयः स्वीक्रियन्ते तदवलम्बनेनैव तादृशप्रती-त्युपपत्तेः द्रव्यवृत्तित्वादिवैशिष्ट्यपुरस्कारेण चानुगतसत्तादेर्द्रव्य-त्वानुमापकता न स्वीक्रियते अपि तु तदन्यतादृशविशेषणविशिष्ट-गुणाद्यवृत्तिवस्तुन एवेति तत्र द्रव्यत्वादिव्याप्तिविरहेऽपि न क्षति-रिति चेत्, तादृशवस्तूनां केन रूपेण व्याप्यता, न द्रव्यवृत्तित्वादि-विशिष्टत्वेन, तादृशरूपस्याव्याप्यानुगतधर्म्मसाधारण्यात्, नापि

तादृशविशेषणविशिष्टतत्तद्व्यक्तित्वादिना, तादृशविशेषणवैशिष्ट्यांशस्य व्यर्थत्वात् तद्व्यक्तित्वाद्यनुपस्थितावनुमानानिर्व्वाहाच्च, एवं विशिष्ट-सत्ता नास्तीत्यत्र विशिष्टसत्तात्वाद्यवच्छिन्नाभावस्य न विधेयता-सम्भवः तद्रूपावलीढ़ानुगतसत्तावति तद्रूपावच्छिन्नाभावासम्भवात् । नापि तत्तद्व्यक्तित्वाद्यवच्छिन्नाभावस्य, तत्तद्व्यक्तित्वस्य प्रतियोगि-कोटावनुल्लेखात्, विशेषणावच्छिन्नप्रतियोगिकः सम्बन्धो विलक्षणः स च नानुगतसत्तायाः सम्बन्धः अपि त्वतिरिक्तविशिष्टसत्ताया-एवेति प्रतियोगितावच्छेदकधर्म्मस्य गुणादिवृत्तिसत्तादिसाधारण्ये-ऽपि तत्र विशिष्टसत्ताभावोऽत्रतएव प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिताकसम्बन्धशून्यत्वमात्रस्य विशिष्टाभावसत्त्वेऽपेक्षितत्वा-दिति चेत्, तर्हि गुणादिसाधारणसत्ताया एव तादृशातिरिक्त-सम्बन्धेन गुणादिव्यावृत्तिः क्रियतां किं सम्बन्धान्तरकल्पनेनेत्यभि-प्रत्याह, 'अनतिरिक्तत्वे त्विति, 'विशेषण-विशेष्यसम्बन्धस्यैवेति सत्तानिष्ठगुणाद्यन्यत्ववैशिष्ट्यस्यैवेत्यर्थः, 'परम्परया' परम्परा-सम्बन्धेन स्वावच्छिन्ननिरूपितसमवायादिसम्बन्धेनेति यावत्, 'व्याप्तत्वादिति, गुणाद्यन्यत्ववैशिष्ट्यावच्छिन्नाधिकरणताया गुणा-दावसत्त्वात् तादृशसम्बन्धेन तद्वैशिष्ट्यस्य द्रव्यमात्रवृत्तित्वात् इति भावः । 'एवकारेण सत्ताया व्याप्यत्वव्यवच्छेदः, यत्र विशेषण-विशेषावच्छिन्नसत्तादिहेतुकद्रव्यत्वाद्यनुमितिरभिमता तत्र तद्वै-शिष्ट्यहेतुकानुमितिरेवोपेयते वैशिष्ट्येऽपि परम्परासम्बन्धेन व्याप्तिधीविरहे चानुमितिरसिद्धैवेति भावः । यद्यपि विशिष्ट-निरूपितसम्बन्धस्य विलक्षणत्वे तादृशसम्बन्धेन सत्तायाअपि

व्याप्यत्वं निर्व्वहति तथापि विशेषणावच्छिन्ननिरूपितसमवायत्वादिना न सत्तादिसम्बन्धता किन्तु विशिष्टसत्तावानिति प्रत्यये वैशिष्ट्यस्यैव सत्तादिविशेषणतापन्नस्य उक्त परम्परासम्बन्धेन धर्म्मिणि विशेषणतोपगमान्नातिप्रसङ्गः इत्याशयेन इदमभिहितम्। नन्वेवं रीत्या प्रथमलक्षणपरिष्कारे वक्ष्यमाणकेवलान्वयिसाध्यकाव्याप्त्यसङ्गतिः तत्रापि सम्बन्धान्तरेण हेतुमद्वृत्तौ हेत्वधिकरणावच्छिन्नसाध्यसामानाधिकरण्याभावप्रसिद्ध्या लक्षणगमनसम्भवादित्यत आह, 'केवलान्वयिनीति, 'द्वितीयलक्षणेति। न च 'तच्चेत्यनेन (१) उभयत्वावच्छिन्नस्यैव परामर्शात् प्रथमलक्षणे अव्याप्त्यभावे असङ्गतिर्दुर्व्वारैवेति वाच्यम्। केवलान्वयिसाध्यके धूमे चाव्याप्तिप्रदर्शनादुभयत्वेनोपस्थितेऽपि लक्षणद्वये यथायोगं तत्तत्स्थले व्याप्त्यन्वये तात्पर्य्यात्। यद्यपि धूमादावपि साध्यसामानाधिकरण्यसामान्याभावघटितस्य प्रथमलक्षणार्थस्य नाव्याप्त्यवकाशः, तथापि यत्किञ्चित्साध्यवद्वृत्तिभेदनिवेशाभिप्रायेण द्वितीयलक्षणस्येव यत्किञ्चित्साध्यसामानाधिकरण्याभावनिवेशाभिप्रायेणैव प्रथमलक्षणस्यापि नानाव्यक्तिसाध्यके अव्याप्तिप्रदर्शनमविरुद्धं। मूले च 'यत्किञ्चित्साध्यानधिकरण इत्युपलक्षणं यत्किञ्चित्साध्याधिकरणावृत्तिरित्यपि बोध्यम्, तेन प्रथमलक्षणाव्याप्तिसम्पादकहेत्वकथनात् न्यूनत्वस्य नावकाश इति ध्येयम्। सामानाधिकरण्यस्याव्याप्यवृत्तितायां प्रमाणसिद्धायामेव दर्शितातिव्याप्तिर्वारयितुं शक्यते तत्रैव न प्रमाणम् उक्तप्रतीतेरन्यविषयकत्वादित्याह,

(१) मूलोक्ततच्चेत्यनेनेत्यर्थः।

'सत्तायामिति, 'प्रतीतिर्हीति,'अभावं गुणेऽवगाहत इत्यनेनान्वयः, 'अवच्छेदकत्वस्येति निरूपकत्वस्येत्यर्थः । तेन सामानाधिकरण्यस्य व्याप्यवृत्तितामते तदवच्छेदकत्वस्याप्रामाणिकत्वेऽपि न क्षतिः, उक्ताकारप्रतीतौ अवच्छेदकत्वानुल्लेखादवच्छेदकत्वाभावावगाहिता न सम्भवतीत्याशङ्क्याह, 'परम्परेति । ननूक्तपरम्परासम्बन्धेन वृत्ति-नियामकः आकाशं द्रव्यत्वसामानाधिकरण्यवदित्यप्रत्ययात् इत्युक्त-सम्बन्धावच्छिन्नाभाव एवाप्रामाणिक इति तादृशावलम्बनतापि नोक्तप्रतीतेः सम्भवतीत्याशङ्कोद्धारायानुरूपं दृष्टान्तमाह, 'द्रव्यत्व-इति, गुणस्यावच्छेदकतानियामकद्रव्यत्वसम्बन्धशून्यतया द्रव्यत्व-निष्ठाभावावच्छेदकत्वं न सम्भवतीत्यगत्या गुणनिष्ठो द्रव्यत्ववृत्ति-पृथिवीत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धावच्छिन्न-तादृशसामानाधिकरण्यस्याभाव एव वा तादृशप्रतीतिविषय इत्य-वश्यमुपेयं तद्वदत्रापीत्यर्थः । स्वरसतो यादृशशब्दाद्यादृशोऽर्थः प्रतीयते तादृशशब्दोल्लेखिप्रत्यये तादृशार्थविषयकत्वमेवासति बाधके युज्यत इत्याशयेन दर्शितप्रतीतेः सत्तायां गुणावच्छिन्न-द्रव्यवृत्तित्वाभावावगाहितायां बाधकप्रतीतिमाह, 'सत्ता न द्रव्य-वृत्तित्वाभाववतीति । न च द्रव्यवृत्तित्वाभावाभावस्य द्रव्यवृत्तित्व-रूपस्य सत्तायामसम्मतेऽपि सत्तानैतस्याः प्रतीतेः बाधकत्वं सम्भ-वति विरोध्यविषयकत्वादिति वाच्यम् । तादृशशब्देन द्रव्यवृत्ति-त्वाभाववद्भेदस्यैव प्रत्यायनात् तदाकारप्रतीतेरपि तद्भेदावगाहि-तया बाधकत्वात् भेदस्याव्याप्यवृत्तित्वविरहेण सामानाधिकरण्या-भावद्भेदस्य तदभावविरोधित्वात् । यदि च भेदस्याव्याप्यवृत्तित्वमत-

मवलम्ब्य तादृशप्रतीत्योर्विरोध्यविषयकत्वमुपपाद्यते तदा सत्तायां द्रव्यत्वसामानाधिकरण्याभावेऽपि तदधिकरणभिन्नत्वस्याक्षततया अतिव्याप्तिवारणमशक्यमेव इति भावः। अव्याप्यवृत्तिताबाधकदर्शितप्रतीतेरभावरूपविशेष्ये सत्तावृत्तित्वावगाहिताया उपगमात् तत्राभावविशेष्यकसत्तावृत्तित्वरूपविरोधिविषयकप्रत्ययं बाधकतया उपन्यस्यति, 'द्रव्यवृत्तित्वाभाव इति।

यत्तु द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वं गुणाद्यवच्छेदेन न तु द्रव्यावच्छेदेनेति तदवच्छेदेन तत्र सत्तावृत्तित्वाभावः सम्भवति, एवं सत्तावृत्तित्वं सत्तात्वसामानाधिकरण्यं सामानाधिकरण्यस्याव्याप्यवृत्तितामते अव्याप्यवृत्तीति तदनवच्छेदकगुणाद्यवच्छेदेन द्रव्यवृत्तित्वाभावः सम्भवत्येवेति न विरोधः, तथाप्युक्तयुक्त्या दर्शितप्रतीतेः सत्तावृत्तिभेदावगाहिताबाधकत्वं दुर्व्वारमेव। यत्तु सत्तावृत्तावभावे अवच्छेदकभेदेन सत्तावृत्तित्वाभावसम्भवेऽपि अवच्छेदकाप्रतीतिदशायां जायमानतत्प्रत्ययस्य सत्तावृत्तित्वग्रहप्रतिबन्धकतया तदुत्तरजायमानायाः सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतेः सामानाधिकरण्याभावे सत्तावृत्तित्वावगाहित्वासम्भवेन गुणनिष्ठसामानाधिकरण्यावच्छेदकत्वाद्यवगाहित्वे सर्व्वत्रैव तदवगाहित्वकल्पनमुचितमिति भाववर्णनं, तदसत्, एवं सत्यवच्छेदकविषयिण्या द्रव्यत्वसामानाधिकरण्यत्वेन सत्तायां तत्सामानाधिकरण्यविषयकप्रतीतेरपि बाधकतासम्भवेन सत्ता न द्रव्यवृत्तित्वाभाववतीत्यादिप्रतीतिपर्य्यन्तानुधावनस्य निर्व्वीजतापातात्।

नन्वेवं संयोगादिमति संयोगादेरप्यभावो मा सैतसीत् मूले न कपिसंयोग इत्यादिप्रतीतिरपि मूलनिष्ठसंयोगावच्छेदकत्वाभावावलम्बनतयोपपत्तिरित्यत आह, 'बाधकाभावादिति, तत्र कपिसंयोगाभावो वृत्त्यावृत्तिरित्यादिप्रत्ययस्याननुभवादिति भावः। संयोगाभावे वृत्त्यावृत्तित्वप्रत्यय इव द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वप्रत्ययेऽपि विवादसम्भवात् यत्र सामानाधिकरण्याभावस्य प्रत्यक्षासम्भवस्तत्र तत्सत्त्वे मानाभावेन तदनधिकरणत्वं निष्प्रत्यूहमित्यतिव्याप्तिरित्यत आह, 'अतीन्द्रियसाध्यक इति, इदं गुरु द्रव्यत्वात् पृथिवी गुरुत्वादित्यादावित्यर्थः (१)। 'तत्रेति गुरुत्वादिसाध्यकस्थले सामानाधिकरण्याभावस्यातीन्द्रियप्रतियोगिकत्वेनातीन्द्रियतया अतीन्द्रियहेतुकस्थले च धर्म्मिण एव तथात्वेन हेतौ साध्यसामानाधिकरण्याभावस्य प्रत्यक्षासम्भवेन तत्र तदसिद्धिरित्यर्थः। 'तदभाववद्वृत्तित्वेन' गुरुत्वाभाववद्वृत्तित्वेन, 'तत्र' द्रव्यत्वादौ, 'तत्' गुरुत्वादिमद्वृत्तित्वाभाववत्त्वम्, 'अनुमेयमिति तद्विरुद्धदृष्टान्तेनेत्यादिः, 'तदिति गुरुत्वादिमदित्यर्थः, 'उपाधित्वादिति, तद्वृत्तिभिन्नत्वस्य विरुद्धदृष्टान्ते साध्यव्यापकतायाः पक्षीभूते प्रकृतहेतौ च भेदस्य व्याप्यवृत्तित्वेन साधनव्यापकतायाः सुग्रहत्वात्, पक्षे साध्यसन्देहेन पक्षावृत्तितादृशोपाधौ साध्यव्यापकतानिश्चयासम्भवेऽपि सन्दिग्धोपाधित्वस्य दुर्व्वारत्वात् अनुकूलतर्कविरहेण सन्दिग्धोपाधेरपि दूषकत्वादिति भावः। नन्वेवमतीन्द्रियसंयोगादेरप्यव्याप्यवृत्तित्वं न स्यात् तद्वति तदभावस्य

(१) इदं गुरु द्रव्यत्वात् आकाशाभावादित्यादावित्यर्थः इति पा०।

प्रत्यक्षासम्भवेनासिद्धेरनुमानस्याप्रयोजकत्वात्, एवं सामानाधिकरण्यस्याव्याप्यवृत्तितामतमाश्रित्य मणिकृतैव सिद्धान्तलक्षणे हेतुसमानाधिकरणाभावे प्रतियोगिसामानाधिकरण्याभावस्य विशेषणताकल्पे 'कर्म्मणि च संयोगाभावः प्रतियोग्यसमानाधिकरणः' इति ग्रन्थेनाव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिव्याप्तिरुद्धृता तथाच तन्मते युक्तिर्भवतु मा वा उभयथापि तदाश्रित्य पूर्व्वपक्षलक्षणं व्याचक्षाणो नापराध्यतीत्याशङ्क्य दूषणान्तरमाह, 'इदमिदानीमिति कालिकविशेषणतात्मकविलक्षणसम्बन्धेनेत्यर्थः, अभावादेरिहेतिप्रत्ययनियामको यो दैशिकविशेषणताविशेषस्ततस्तादृशसम्बन्धवैलक्षण्यस्य प्रामाणिकतालाभाय विलक्षणप्रतीतिनियामकत्वाभिधानम्। न चेदानीमिति प्रतीतौ सम्बन्धवैलक्षण्याभावेऽपि कालत्वेनाधिकरणावगाहनादिहेतिप्रत्ययात् तस्य वैलक्षण्यमुपपद्यत इति किं सम्बन्धवैलक्षण्येनेति वाच्यं। सम्बन्धविशेषानुयोगित्वादन्यस्य कालत्वस्य दुर्वचत्वात् इदानीं कालत्वाभाव इत्यादिप्रतीत्या काले कालत्वाद्यभाववृत्तेः प्रामाणिकत्वेऽपि काले कालत्वं नास्तीति प्रतीत्यनुदयात् नास्तीत्याकारप्रतीतौ कालिकसम्बन्धव्यावृत्तरूपावच्छिन्नाया एव विशेषणताया नियामकत्वस्यावश्यकत्वात् दैशिक कालिकसम्बन्धसाधारणसम्बन्धतावच्छेदकस्याप्रामाणिकतया कालिकसम्बन्धसम्बन्धतावच्छेदकीभूतस्य वैलक्षण्यस्य सिद्धेर्निष्प्रत्यूहत्वाच्च। 'सद्धेताविति कालत्वादिसाध्यकघटादिहेतावित्यर्थः, 'काल इति कालावच्छेदेनेत्यर्थः, 'अप्रसिद्धेरिति, वृत्तिमतः कालावच्छेदेन कालत्वादिसामानाधिकरण्यवत्त्वात्

अवृत्तिनिष्ठतदभावस्य च कालानवच्छिन्नत्वात् अवच्छेद्याधिकरण-सम्बन्धिनोऽनवच्छेदकत्वात्।

अथ हेत्वधिकरणमहाकालावच्छेदेन महाकाल एव काल-वृत्तित्वाभावः प्रसिद्ध्यति महाकालस्य गगनादिवदवृत्तितया तत्र कालवृत्तित्वस्यासत्त्वात् स्वस्य तादात्म्यसम्बन्धेन स्वसम्बन्धितया स्वनिष्ठाभावावच्छेदकत्वसम्भवाच्च। न च तादात्म्यसम्बन्धो नाव-च्छेदकतानियामकः रूपे पर्व्वते न वह्निमत्संयुक्तत्वमिति प्रती-तिवत् स्वस्मिन् न वह्निमत्संयुक्तत्वमित्यादिप्रतीतेः सविवादत्वा-दिति वाच्यम्। तथा सति तादात्म्यसम्बन्धेन व्यभिचारिणि तदतिरिक्तसम्बन्धेन स्वासम्बद्धे हेतौ तेन सम्बन्धेन हेतुमत्त्वावच्छे-देन साध्यासामानाधिकरण्यवत्त्वविरहेणातिव्याप्तेः स्फुटतया तद्दो-षोपेक्षाया अनुचितत्वापातात्।

अत्र केचित् कालिकसम्बन्धेन गगनादेरपि वृत्तिमत्त्वमिति-मताभिप्रायकोऽयं ग्रन्थः, तथाच कालावच्छेदेन महाकालेऽपि कालिकसम्बन्धेन साध्यवदवृत्तित्वसत्त्वात्तद्विरहिणोऽप्रसिद्धिर्न विरु-ध्यत इति वदन्ति।

वस्तुतस्तु स्वस्मिन् सामानाधिकरण्य-तदभावयोर्वृत्तावच्छेद-कत्वे स्वाधिकरणत्वमेव नियामकं न तु स्वसम्बन्धित्वमात्रं स्वाधि-करणावच्छेदेनैव स्वस्मिन् तत्प्रतीतिरनुभवसिद्धत्वात् अतएव सम्बन्धान्तरेण सम्बद्ध इत्युपेक्ष्य सम्बन्धारेण वर्त्तमान इत्यभिहि-तम्। न च तादात्म्यादिवृत्त्यनियामकसम्बन्धेन व्यभिचारिण्य-तिव्याप्त्यकथनान्न्यूनता दुर्व्वारैवेति वाच्यम्। तादृशसम्बन्धेन साध्य-

वद्वृत्तित्वस्य हेत्वधिकरणत्वस्य चाप्रसिद्धा अतिव्याप्त्यसम्भवात्। न च तेन सम्बन्धेन सद्धेतौ लक्षणसङ्गमनाय वृत्तेरधिकरणतायाश्च स्थाने सम्बन्धप्रतियोगित्वानुयोगित्वयोरेव निवेशनीयत्वादतिव्याप्तेरावश्यकतेति वाच्यम्। प्राचां तेन सम्बन्धेन व्याप्त्यनभ्युपगमसम्भवेन वृत्त्यादेरपि निवेशसम्भव इत्यभिप्रायेणैवातिव्याप्त्यनुद्भावनात्। एतेन हेत्वधिकरणखण्डकालविशेषावच्छेदेन कालिकसम्बन्धेन तद्वृत्तौ तद्विषयकज्ञान एव साध्यासामानाधिकरण्यप्रसिद्धिः सम्भवति। न चैवमपि कालत्ववान् सर्व्वस्मादित्यादौ खण्डकालस्य हेत्वधिकरणतया हेत्वधिकरणावच्छिन्नसाध्यासामानाधिकरण्याप्रसिद्धिर्दुर्व्वारैवेति वाच्यम्। हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणतापर्य्यन्तानिवेशि वैशिष्ट्य-व्यासज्यवृत्तिधर्म्मावच्छिन्नस्य यत्र हेतुत्वमभिहितं तत्र तत्र तादृशधर्म्मस्यैव तन्मते स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासम्बन्धेन हेतुत्वस्यानुमततया उक्तस्थले सर्व्वत्वस्यैव तादृशसम्बन्धेन हेतुतया तादृशसम्बन्धेनावृत्तौ कालिकसम्बन्धेन कालवृत्तौ गगनत्वादावेव तादृशसम्बन्धेन साध्यवद्वृत्तित्वाभावस्य हेत्वधिकरणकालावच्छेदेन प्रसिद्धेरित्यपि निरस्तम्। तादृशकाले तज्ज्ञानस्य विषयतासम्बन्धसत्त्वेऽपि तादृशसम्बन्धस्य वृत्तिनियामकत्वानभ्युपगमेन तज्ज्ञानस्य तत्कालीनताविरहेण च तस्य तज्ज्ञानानधिकरणत्वात्तज्ज्ञाने अभाववृत्तौ तत्कालस्यानवच्छेदकत्वात् महाकालानुयोगिकविशेषणताविशेषेण घटादिहेतुकस्थलाभिप्रायकोवाऽयं ग्रन्थः तादृशसम्बन्धेन हेतुमत्तायाः खण्डकालेऽभावान्नोक्तदिशा प्रसिद्धिरित्यपि कश्चित्।

अत्र स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावा-नवच्छेदकतादृशसम्बन्धावच्छिन्नस्वाधिकरणतावत्सामान्यकत्वविव-क्षणान्नोक्ताव्याप्त्यवकाशः स्वावयवपरमाण्वाद्यवच्छेदेन घटादौ वर्त्तमाने कालत्वादिसामानाधिकरण्याभावे तदधिकरणकाल-सामान्यस्यानवच्छेदकतया तत्र लक्षणगमनसम्भवात् केवलान्वयि-साध्यके मेयत्वादौ सर्व्वाधिकरणावच्छेदेनैव हेतुतावच्छेदकसम्ब-न्धावच्छिन्नसाध्यवद्वृत्तित्वस्य सत्त्वात् स्वनिष्ठतदभावाप्रसिद्ध्याऽ-व्याप्तिर्न क्षतिमावहति मूलकृतैव तदव्याप्तेर्वक्ष्यमाणत्वात् । यदि चैवमात्मभिन्नं ज्ञानवदन्यत्वादित्यादौ हेतोरात्मान्यसकलवस्त्व-वच्छेदेनैव दैशिकविशेषणतया साध्यवद्वृत्तित्वसत्त्वात् आत्मनश्च केनापि सम्बन्धेन हेतुमत्त्वाभावात्तदवच्छेदेन हेतौ साध्यसामा-नाधिकरण्याभावस्यासम्भवाद्धेतुनिष्ठतादृशाभावाप्रसिद्ध्याऽव्याप्ति-रिति विभाव्यते तदा हेतुतावच्छेदकसम्बन्धेन यत्स्वाधिकरणं तदवच्छेदेन स्वस्मिन् वर्त्तते योऽभावस्तत्प्रतियोगितानवच्छेदकता-दृशसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वकत्वं व्याप्तिरित्येव विवक्षणीयं कालत्ववान् घटादित्यादौ कालावच्छेदेन घटादौ वर्त्तमानः कपालसमवेतत्वाद्यभावएव प्रसिद्धः तत्प्रतियोगितानच्छेदकञ्च कालिकसम्बन्धावच्छिन्नकालवृत्तित्वादिकमिति लक्षणसमन्वयः, हेतुतावच्छेदकसम्बन्धेन यद्वृत्तिमत् तन्निष्ठतत्सम्बन्धावच्छिन्नसाध्य-तद्वृत्तित्वाभावानच्छेदकतत्सम्बन्धावच्छिन्नतद्वस्तु-प्रकृतहेतूभयाधिक-रणतावत्सामान्यकत्वं वा वक्तव्यम् आत्मभिन्नं ज्ञानवदन्यत्वादित्यादौ आत्माद्यवच्छेदेन घटत्वाभावादिनिष्ठस्यानात्मवृत्तित्वाभावस्यानव-

च्छेदकं घटत्वाभाव-ज्ञानवह्निन्नत्वोभयाधिकरणसामान्यमिति लक्षणसमन्वयः। उभयाधिकरणत्वनिवेशाद्वह्निमान् धूमादित्यादौ धूमादिसंयोगिनः कपालादेर्घटादिनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकत्वेऽपि न क्षतिः कपालादेः संयोगेन तद्घटानधिकरणतया उक्तोभयाधिकरणतावत्सामान्यानन्तर्गतत्वात्। अथवा हेतुतावच्छेदकसम्बन्धेन यत् स्वाधिकरणं तदवच्छिन्नस्ववृत्तिकान्यहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावकत्वविवक्षणान्न कश्चिद्दोषः सर्व्वत्र सद्धेतौ अन्ततोऽवृत्तौ प्रसिद्धे साध्यसामानाधिकरण्याभाव एव तादृशस्ववृत्तिकान्यत्वसत्त्वेन लक्षणसमन्वयात्। वह्न्यादिनिष्ठधूमादिसामानाधिकरण्याभावे अयोगोलकादेरिव तद्वृत्तित्वस्याप्यवच्छेदकत्वात् स्वनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्त्यनच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यसामानाधिकरण्याभावकत्वं वा विवक्षणीयमित्यादयः परिष्कारस्य पन्थानो द्रष्टव्याः (१)॥

इति महामहोपाध्याय-श्रीगदाधर-भट्टाचार्य्य-विरचितायां
अनुमानदीधितिविवृतौ सिंहव्याघ्रनामक-
व्याप्तिद्वयं सम्पूर्णमिति।

---

(१) 'परिष्कारस्य पन्थानो द्रष्टव्याः' इत्यनन्तरं 'अथवा साध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये यदधिकरणावच्छिन्नत्व-यद्वृत्तित्वोभयाभावकत्त्वं यद्वा यदधिकरणावच्छिन्नयद्वृत्तिसामान्ये साध्यवद्वृत्त्यभावान्यत्वं साध्यवद्वृत्त्यभावे वा यदधिकरणावच्छिन्नयद्वृत्त्यन्यत्वं तत्त्वम्'। इत्यधिकः पाठः कस्मिंश्चिदादर्शपुस्तके वर्त्तत इति।

तत्त्वचिन्तामणौ

## व्यधिकरणधर्म्मावच्छिन्नाभावः।

अथेदं वाच्यं ज्ञेयत्वादित्यत्र समवायितया वाच्यत्वाभावो घटएव प्रसिद्धः व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्य केवलान्वयित्वात्। न चैवं घटएव व्यभिचारः, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वं हि व्यभिचारः,नच वाच्यत्वाभावस्तादृशो घट इति चेत्तर्हि तादृशसाध्याभावसामानाधिकरण्याभावोव्याप्तिः। तथाचाप्रसिद्धिः।

---

तत्त्वचिन्तामणिदीधितिः।

'समवायितयेति, वाच्यत्वं न यथा समवायि तथा वच्यते, घटादिसमवायितयेत्यर्थः इत्यप्याहुः, प्रमेयसाध्यके च भावत्वेनाभावानां अभावत्वेन भावानां वह्नित्वेन निर्व्वह्नौ अवृत्तिमात्रवृत्तिगगनत्वादिना विरुद्धघटत्व-पटत्वाभ्याञ्च सर्व्वत्र प्रमेयमात्रस्याभावः सुलभः

---

गादाधरी विवृतिः।

'अथ समवायितयेति मूलम्, अथ व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमे सर्व्वत्र तादृशाभाववति हेतोर्वृत्तेरसम्भवः

साध्याभाववद्वृत्तित्वस्य तादृशाभावमादाय लक्षणसङ्गमने सर्व्वत्र व्यभिचारिण्यतिव्याप्तिरिति लक्षणपरिष्कारासम्भवेन सोन्दडमतावलम्बनेन मूललक्षणपरिष्कर्त्तुरौद्दृशाशङ्का न गच्छते इति चेद्दलोपाध्यायमतानुयायिनः केवलान्वयिनि साध्याभावाप्रसिद्धिनिबन्धनदोषस्य उद्भावितत्वात् साध्याभावस्य कथञ्चित् प्रसिद्धावेव लक्षणस्य निर्द्दोषतेत्यभिमानेनेयमाशङ्का तादृशाभिमानमेव निराकरिष्यतीत्यग्रे 'तर्हीत्यादिग्रन्थेन। व्यधिकरणधर्म्मावच्छिन्नाभावोपगमे यथा व्यभिचारलक्षणे साध्यतावच्छेदकावच्छिन्नसाध्याभावो निवेश्यते तथा व्याप्तिलक्षणेऽपि तादृशसाध्याभावएव निवेशनीयः अन्यथा असम्भवस्यातिव्याप्तेर्वा प्रसक्तिः व्याप्तेरव्यभिचाररूपतानुपपत्तिश्चेति (१) पुनरप्रसिद्धिनिबन्धनाव्याप्तिः। केवलान्वयिसाध्यकस्थल इति तदर्थः। न चैवमपि तत्तद्वृत्तित्वापच्छिन्नाभावव्यावर्त्तकसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपेणैव साध्याभावस्य विशेषणीयतया वाच्यत्वत्वावच्छिन्नसाध्यकस्थले समवायित्वावच्छिन्नतदभावस्यातादृशत्वात्तादृशाभावप्रसिद्धिरनुपयोगिनीति कथमियमाशङ्का साध्यप्रतियोगिकाभावमात्रनिवेशाभिमानस्याप्याशङ्कावीजत्वे केवलान्वयिसाध्यकस्थले व्यासज्यवृत्तिरूपावच्छिन्नप्रतियोगिताकस्य विशिष्टाभावरूपस्य च तादृशाभावस्य प्रसिद्धिसम्भवेन सोन्दडमतावलम्बनस्य निर्व्वीजत्वापातादिति वाच्यम्।

---

(२) साध्याभाववद्वृत्तित्वस्य व्यधिकरणधर्म्मावच्छिन्नाभावमादायासम्भवासम्भवादाह, अतिव्याप्तेर्व्वेति, यदि वा पारिभाषिकमेव लक्षणं क्रियते तदाप्याह, व्याप्तेरिति।

महानसीयवह्नित्वावच्छिन्नाभाववारणाय साध्यतावच्छेदकापर्य्याप्त-स्वसमानाधिकरणनिष्ठावच्छेदकताकप्रतियोगिताभिन्नप्रतियोगि-ताकाभाव एव निवेशनीय इत्यभिप्रायेणाशङ्कासङ्गतिः। प्रमेयत्वादि-ना प्रमेयमात्रं यत्र साध्यतावच्छेदकं तत्र प्रमेयत्वादिविशिष्टप्रमेया-पर्य्याप्तं तदविशेषितघटत्वादिनिष्ठमेवावच्छेदकत्वं प्रसिद्धं स्वसमा-नाधिकरणवृत्तिताद्दशावच्छेदकतानिरूपकप्रतियोगिताभिन्नञ्च व्य-धिकरणधर्म्मावच्छिन्नप्रतियोगितामात्रमेव। यत्र यादृशं साध्यताव-च्छेदकं विशिष्टमविशिष्टं वा तत्र तदनवच्छिन्नत्व-समानाधिकरण-धर्म्मावच्छिन्नत्वोभयाभाववत्प्रतियोगिताकाभावनिवेशाभिप्रायको-ऽयं ग्रन्थ इत्यप्याहुः। न चैवं प्रमेयत्वाद्यवच्छिन्नसाध्यकस्थलेऽपि व्यधिकरणधर्म्मावच्छिन्नाभावमात्रस्यैव लक्षणघटकतासम्भवाद्दी-धितिकृतां तत्र गगनत्व-घटत्वपटत्वोभयाद्यवच्छिन्नप्रमेयसामान्या-भावपर्य्यन्तानुसरणप्रयासोव्यर्थः इति वाच्यम्। महानसीयवह्नि-त्वाद्यवच्छिन्नाभाववारणाय साध्यतावच्छेदकसमनियतप्रतियोगि-ताकः साध्यतावच्छेदकापर्य्याप्तसाध्यवृत्तिधर्म्मनिष्ठावच्छेदकता-कान्यप्रतियोगिताको वाऽभावो निवेशनीय इत्यभिप्रायेण तैस्तथा-विधाभावानुसरणात्। न च घटत्व-पटत्वोभयावच्छिन्नप्रतियोगि-ताकाभावप्रतियोगितावच्छेदकत्वं साध्यवृत्तिधर्म्मनिष्ठमेव घटत्व-पटत्वयोः प्रत्येकं साध्यवृत्तित्वादिति कथमसौ लक्षणघटक इति वाच्यम्। साध्यवृत्तिधर्म्मनिष्ठेत्यनेन यत्पर्य्याप्त्यधिकरणधर्म्मविशिष्टा-धिकरणं साध्यं तस्य विवक्षिततया घटत्व-पटत्वोभयपर्य्याप्ताव-च्छेदकताया अन्यत्वप्रतियोगिकोटावनन्तर्भावात्। वस्तुतस्तु वृत्ति-

मद्वृत्तयोयावन्तः साध्यतावच्छेदकसमनियतप्रतियोगिताकाभाव-कूटाधिकरणवृत्तित्वाभावास्तद्वत्त्वमेव साध्याभाववदवृत्तित्वमित्य-स्यार्थः, इत्यभिप्रायकतया 'अथेत्यादिग्रन्थः सार्व्वभौमैर्व्याख्यातः, दीधितिकृतामपि तादृशग्रन्थस्य तदभिप्रायकत्वमेवानुमतं कूट-घटितलक्षणस्य स्वयमग्रे दूषणीयत्वेऽपि आपाततः सम्भवदुक्तिकतयैव तत्शङ्कितुरभिप्रायविषयत्वौचित्यात्। व्यधिकरणधर्म्मावच्छिन्ना-भाववादिमतेऽपि (१) निर्दोषस्यापि लक्षणस्य सम्भवेन तदुपेक्ष्य सदोषं कूटघटितलक्षणमवलम्ब्य 'प्रतियोग्यवृत्तिश्चेत्यादिग्रन्था-वतारणमनुचितमित्यभिप्रेत्यैव अग्रे तल्लक्षणमाक्षिप्यमिति न सन्दर्भ-विरोधः। 'यत्समानाधिकरणा इत्यादिलक्षणाभिप्रायकता चात्र न युज्यते तादृशव्याप्तेः साध्याभाववदवृत्तित्वादिरूपत्वाप्रसक्तेः मूलोक्तलक्षणपरिष्कारासम्भवात् व्यभिचारशरीरे साध्यतावच्छेद-कावच्छिन्नसाध्याभावनिवेशस्यावश्यकतां प्रदर्श्य केवलान्वयि-साध्यकसाधारणसाध्याभाववदवृत्तित्वरूपव्याप्तेरव्यभिचाररूपता न सम्भवतीत्यभिधानेन अव्यभिचारपदार्थरूपसाध्याभाववद्वृत्तित्वा-

---

(१) व्यधिकरणधर्म्मावच्छिन्नाभावत्वं "विवादोऽप्यतिरिक्तायामेव प्रतियोगि-तायाम्" इत्यादिग्रन्थस्वरसेन अतिरिक्तप्रतियोगिताकाभावत्वम्, अथवा प्रति-योगिताविशिष्टप्रतियोगिताकाभावत्वं व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताका-भावत्वं वैशिष्ट्यं स्वतादात्म्य-स्वाश्रयनिष्ठाधेयतावच्छेदकताविशिष्टान्यावच्छेदकताक-त्वोभयसम्बन्धेन, सम्बन्धघटकवैशिष्ट्यं स्वसामानाधिकरण्य-स्वावच्छेदकसम्बन्धावच्छि-न्नत्व-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वञ्च स्वानव-च्छेदकानवच्छिन्नत्वसम्बन्धेनातो विशिष्टसत्त्वेन गुणो नास्तीतिप्रतीतिसिद्धाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावत्वव्याघात इति विवेचनीयम्।

भावस्य व्याप्तित्वे निराकृते च साध्याभाववद्वृत्तित्वाभावस्य व्याप्तित्वानभ्युपगमेऽपि न क्षतिरित्याशयेन 'यत्समानाधिकरणा इत्यादि-निर्द्दोषलक्षणमवलम्ब्यैव स्वयं प्रतियोग्यवृत्तिस्चेत्यादिग्रन्थस्यावतारणीयत्वात्। न च साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावकूटवद्वृत्तित्वस्यापि व्यभिचारपदार्थत्वसम्भवात्, कूटघटितव्याप्तेरव्यभिचारत्वमुपपद्यत इति वाच्यम्। तादृशाभावकूटसामानाधिकरण्यस्य व्यभिचारपदार्थत्वे 'न चैवं घट एवेत्यादिना दर्शिताया ज्ञेयत्वादिहेतौ वाच्यत्वव्यभिचारित्वव्यवहारापत्तेर्दुर्व्वारत्वात् वाच्यत्वादेः समानाधिकरणधर्म्मावच्छिन्नाभावाप्रसिद्धेर्व्यधिकरणधर्म्मावच्छिन्नाभावकूटवति च हेतोर्वृत्तेरिति सर्व्वमनाकुलम्। एवञ्च कूटघटितलक्षणाभिप्रायेणैव प्रमेयसाध्यकस्थले उक्ताभावानुसरणं ग्रन्थकृतां सफलं घटत्वाद्यवच्छिन्नपटाद्यभावस्य साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहादित्यवधेयम् (१)।

ननु वाच्यत्वं पदशक्तिः सा च तत्तत्पदबोद्धव्यत्वप्रकारिका भगवदिच्छैव (२) न तु पदार्थान्तरम् अपसिद्धान्तत्वात्(३) तथाच समवायित्वं समवायप्रतियोगित्वरूपं तदनुयोगित्वरूपं वा भवतु उभयथैव वाच्यत्ववृत्तीति तेन रूपेण तदभावस्य कथं व्यधिकरणधर्म्माव-

---

(१) अथ समवायितयेति मूलमित्यादिः इत्यवधेयमित्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति।

(२) अस्माच्छब्दादयमर्थोबोद्धव्य इत्याकारकभगवत्सङ्केतस्य पदशक्तिरूपत्वमिति भावः।

(३) सिद्धान्तविरुद्धत्वादित्यर्थः, अवश्यक्लृप्तपदार्थेनैव चरितार्थत्वे अतिरिक्तपदार्थस्वीकारो न सङ्गच्छत इति भावः।

च्छिन्नप्रतियोगिताकत्वम्। न च भगवदिच्छाया वाच्यत्वपदार्थत्वे पटादेर्घटादिपदवाच्यत्वापत्तिर्घटादाविव पटादावपि घटादिपद-बोध्यत्वप्रकारिकाया भगवदिच्छाया विषयतासम्बन्धेन सत्त्वात् तदिच्छाया एकत्वादिति वाच्यम्। यद्धर्म्मांशे यस्य प्रकारता तस्यैव धर्म्मिणो विशेष्यतासम्बन्धेन तद्धर्म्मप्रकारकत्वविशिष्टवत्त्वोपगमात् पटादेर्घटादिपदबोद्धव्यतया भगवदिच्छया अनवगाहनात् तत्र विशेष्यतासम्बन्धेन तद्बोद्धव्यत्वप्रकारकत्वविशिष्टभगवदिच्छाविरहेण तदवाच्यत्वोपपत्तेः। न चैवं विशिष्टेच्छाया वाच्यत्वरूपत्वे विशेषणांशे समवायित्वाभावात्तेन रूपेण विशिष्टाभावस्य व्यधिकरण-धर्म्मावच्छिन्नप्रतियोगिताकत्वमव्याहतमेवेति वाच्यम्। यतो विशि-ष्टाभावप्रतियोगिता न विशेषणान्तर्भावेन पर्य्याप्ता अपि तु विशेष्यांशमात्रे, अवच्छिद्यते पुनरपि विशेषणेन, प्रतियोगिताया अव्यास-ज्यवृत्तित्वात् (१) तथाच विशेष्यवृत्तेः समवायित्वस्य कथं प्रतियोगि-ताव्यधिकरणत्वमिति। न च प्रतियोगिताया व्यासज्यवृत्तित्वानुप-गमे सर्व्वत्र घटत्वेन घट-पटोभयं नास्तीतिप्रतीतिः कथमुपपद्यतां घटादिमति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिसत्त्वेन तद्विष-याभावस्य सत्त्वासम्भवात् इति अभावविशेषीयप्रतियोगित्वमवश्य-मेव व्यासज्यवृत्त्युपेयं तथा सति च तत्र प्रतियोगितापर्य्याप्त्यधि-करणस्योभयत्वावच्छिन्नस्य प्रतियोगितावच्छेदकघटत्वादिविशिष्ट-त्वासम्भवाद्यद्धर्म्मावच्छिन्ने प्रतियोगितायाः पर्य्याप्तिः प्रतियोगिता-वच्छेदकविशिष्टस्य तदवच्छिन्नस्यैवाभावविरोधितया न तादृशा-

(१) व्यासज्यवृत्तित्वञ्च एकत्वानवच्छिन्नपर्य्याप्तिकत्वम्।

भावस्य सार्व्वत्रिकत्वानुपपत्तिरिति वाच्यम् । प्रतियोगितायाअव्यासज्यवृत्तित्वेऽपि तन्नैकधर्म्मावच्छिन्नापर्य्याप्तिरूपविरोधशालिनोर्घटत्व-पटघटोभयत्वयोः प्रतियोगितावच्छेदकत्वस्य व्यासज्यवृत्तित्वोपगमात्तादृशाभावस्य विरुद्धघटत्व-पटत्वाद्युभयावच्छिन्नाभाववत् केवलान्वयित्वोपपत्तेः । यद्यपि घट-पटौ नस्त इत्यादिप्रतीतिविषयसमानाधिकरणधर्म्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमपि घटत्वाद्यन्तर्भावेन पर्य्याप्तं तथापि तत्र द्वित्वधर्म्मितावच्छेदकतापन्नस्यैव घटत्वादेरवच्छेदकत्वं प्रतीयते अत्र च स्वातन्त्र्येणापीति भेदः । अस्तां वा तत्रोभयाभावप्रतियोगितायां गत्यन्तरविरहाद्व्यासज्यवृत्तित्वं तथापि विशिष्टाभावप्रतियोगितायास्तथात्वमप्रामाणिकमेव दण्डिपुरुषादिमति पुरुषत्वेन दण्डविशिष्टो नास्तीत्यादिप्रतीतेरसिद्धेः इत्यत आह, दीधितौ 'वाच्यत्वं न यथेति, 'तथा वक्ष्यत इति, अयमाशयः वाच्यत्वं शक्तिविषयत्वं न तु शक्तिः धातुनैव शक्तिप्रतिपादनात् प्रत्ययस्य निरर्थकतापत्तेः विषयत्वञ्च पदार्थान्तरम् इति प्राचीननैयायिकैकदेशिसिद्धान्तः तस्य च न समवायः सम्बन्धः अपि तु स्वरूपमेवेति समवायितया वाच्यत्वपदार्थाभावो व्यधिकरणधर्म्मावच्छिन्नाभाव एवेति एकदेशिमतानुयायितया मणिकारलिखनसङ्गतिरिति । 'घटादिसमवायितयेति, तथाच वाच्यत्वपदस्य भगवदिच्छापरत्वेऽपि नासङ्गतिरिति भावः । यथाश्रुतपरतयैवोपपत्तेः समवायिपदस्य विशेषपरतया व्याख्यानमनुचितमित्याहुरित्यनेनास्वरसः सूचितः ।

ननु वाच्यत्वादिसाध्यकस्थले समवायित्वरूपव्यधिकरणधर्म्मा-

वच्छिन्न साध्याभावप्रसिद्धिसम्भवेऽपि प्रमेयत्वादिना प्रमेयसामान्य-साध्यकस्थले साध्याभावाप्रसिद्धिर्दुर्व्वारैवेति प्रमेयसामान्यावृत्ति-धर्म्मस्याप्रसिद्धया व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यापि तस्यासम्भवात् इत्यत आह, 'प्रमेयसाध्यके चेति (१) 'भावत्वेनेति, 'अभावानां भावनामित्युभयत्रैव 'अभाव इत्यग्रिमस्य सम्बन्धः, अभावत्व-भावत्वाभ्यां भावाभावयोरभावौ समनियततया अभिन्ना-विति तत्प्रतियोगितात्वेन प्रमेयत्वसमनैयत्यमित्येतादृशाभावोऽपि कूटघटनया परिष्करणीयसाध्याभाववदवृत्तित्वरूपप्रथमलक्षण-घटको भविष्यतीत्यभिप्रायः। न च यदभावीयप्रतियोगिता-त्वेन साध्यतावच्छेदकसमनैयत्यमिति विवक्षणे वाच्यत्वादिसाध्यके वह्न्यादिसाध्यके च तादृशाभावाप्रसिद्धिः निखिलव्यधिकरण-धर्म्मावच्छिन्नाभावानां समनियतत्वेनाभिन्नतया घटादेरपि तथा-विधवाच्यत्वाभावप्रतियोगित्वात् किञ्चिद्विशिष्टस्याभावादेरपि (२) वह्न्याद्यभावप्रतियोगित्वादिति तत्तत्प्रतियोगितात्वेन समनैयत्य-मिति विवक्षणीयमिति कथमुक्ताभावस्य लक्षणघटकतेति वाच्यम्। समनैयत्यशरीरे व्यापकतायास्तदभावप्रतियोगितात्वावच्छिन्नाया-व्याप्यतायाश्च विशेषरूपावच्छिन्नाया निवेशनेनानुपपत्त्यभावात्। ननु साध्यनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वरूपव्यापकता चेत् समनैयत्यशरीरे निविश्यते तदा व्यधिकरणधर्म्मावच्छिन्नयो-र्भावाभाववृत्तिप्रतियोगितयोर्द्वयोरेव प्रत्येकं प्रमेयनिष्ठान्योन्याभाव-

---

(१) प्रमेयसामान्यसाध्यके चेति पा०।

(२) समनियताभावानामैक्यानभ्युपगमेऽपि दोषमाह, किञ्चिदित्यादि।

प्रतियोगितावच्छेदकतया नोक्ताभावस्य साध्यतावच्छेदकसम-
नियतप्रतियोगिताकत्वम् इत्यतोऽभावान्तरमाह, 'वह्नित्वेनेति
'प्रमेयमात्रस्याभाव इत्यग्रिमेनान्वयः, वह्नित्वेन प्रमेयं नास्तीति-
प्रतीत्या प्रमेयसामान्य एव वह्नित्वावच्छिन्नप्रतियोगित्वावगाह-
नात् प्रमेयत्वव्यापिकैव तादृशाभावीयवह्नित्वावच्छिन्नप्रतियोगि-
तेति भावः। यदि च तत्र वह्निर्नास्तीतिप्रतीतिसिद्धवह्नि-
मात्रनिष्ठप्रतियोगितैव प्रमेयत्वसामानाधिकरण्येन भासत इत्यु-
पेयते प्रमेयसामान्यस्यैव तत्प्रतियोगितया भानोपगमे वह्नि-
र्नास्तीत्यादावपि तादृशप्रतीतिसिद्धनिखिलप्रमेयनिष्ठप्रतियोगि-
ताया वह्नित्वादिविशेषितप्रतियोगिवृत्तित्वेन भानोपगमसम्भ-
वात् समानाधिकरणधर्म्मावच्छिन्नवह्नित्वादिसमनियतप्रतियोगि-
त्वाप्रसिद्ध्या वह्निभिन्नत्वादिना वह्न्याद्यभावमादाय वह्निमान्
प्रमेयत्वादित्यादावतिव्याप्त्यापत्तेरित्युच्यते, तदा तादृशाभावस्यापि
नोक्तरूपत्वमित्याशङ्क्य अभावान्तरमुपन्यस्यति,(१) 'अवृत्तिमात्रेति,
गगनं नास्तीत्यत्र गगनत्वसामानाधिकरण्येन या गगनत्वावच्छिन्न-
प्रतियोगिता प्रतीयते सैव गगनत्वेन गगनभिन्नं नास्तीत्यादौ गगन-
भिन्नत्वादिसामानाधिकरण्येन प्रतीयते अवच्छेदकैक्येऽसति बाधके
प्रतियोगिताया अप्यैक्यस्वीकारात् गगनभिन्ननिष्ठप्रतियोगिताया-
गगनावृत्तित्वेन (२) गगनत्वरूपप्रतियोगितावच्छेदकविशिष्टप्रति-
योगिनोऽवृत्तित्वेन गगनतया गगनभिन्नाभावस्य केवलान्वयितोप-
पत्तेः, वह्नित्वाद्यवच्छिन्नघटादिनिष्ठप्रतियोगितायाश्च वह्निनिष्ठ-

(१) अभावान्तरमाहेति पा०।   (२) गगनवृत्तित्वेऽपीति पा०।

तादृशप्रतियोगित्वाभेदे वह्न्यादिमति वह्नित्वादिना घटाभावसत्त्वा-नुपपत्त्या उक्तरीत्या तत्रैकप्रतियोगितापत्त्यसम्भवः एवञ्च गगनत्वा-द्यवच्छिन्नैव प्रमेयत्वसमनियतप्रतियोगिता प्रसिद्ध्यतीति भावः। उक्तविशेषणाभायैवावृत्तिमात्रवृत्तित्वकथनम् (१)। नन्वेवमपि यत्र विषयितया प्रमेयसामान्यं साध्यम् ईश्वरज्ञानत्वादिकं हेतुस्तत्र सत्तावान्जातेरित्यादौ साध्याभावकूटवति हेतुतावच्छेदकसम्ब-न्धेन वृत्त्यप्रसिद्ध्याव्याप्तेर्व्वारणाय उपादेयसाधनसामानाधिकरण्य-रूपविशेषणाक्रान्तसाध्यतावच्छेदकसमनियतप्रतियोगिताकाभावा-प्रसिद्धिर्गगनादेरपि विषयितासम्बन्धेन ईश्वरज्ञानादिसम्बद्धत्वात् तादृशसम्बन्धेन गगनत्वादिना प्रमेयसामान्याभावस्य साधन-सामानाधिकरण्यासम्भवादित्यतोऽभावान्तरमाह, 'विरुद्धेति येन सम्बन्धेन घटत्व-पटत्वाद्योर्व्विरोधस्तत्सम्बन्धावच्छिन्नतदुभयनिष्ठ-प्रतियोगितावच्छेदकताकप्रमेयसामान्याभाव इत्यर्थः, प्रतियोगि-तावच्छेदकतावच्छेदकोभयत्वविशिष्टघटत्व–पटत्वाद्यवच्छिन्नप्रति-योगिनोऽप्रसिद्ध्या विरोधविरहेणास्याभावस्य केवलान्वयितेत्यव-धेयम्। इदमुपलक्षणं व्यधिकरणधर्म्मावच्छिन्नाभाववादिनां प्रति-योगितावच्छेदकतावच्छेदकरूपेणैव तादृशसम्बन्धेनाप्यवच्छेदकस्य वृत्तिमत्ताया अवच्छेदकतायामतन्त्रत्वात् समवायादिसम्बन्धेन गगनाद्यवच्छिन्नप्रमेयसामान्याभावस्यापि सौलभ्यं बोध्यम्। अत्य-न्ताभावस्येवान्योन्याभावस्यापि व्याधिकरणधर्म्मावच्छिन्नप्रतियोगि-ताकत्वोपगमात् प्रमेयसामान्यस्य यत्र तादात्म्यसम्बन्धेन साध्यता

(१) अवृत्तिमात्रवृत्तित्वकीर्त्तनमिति पा०।

तत्र घटत्व-पटत्वाभ्यां समवायेन गगनादिना वा प्रमेयसामान्य-भेदो लक्षणघटकः प्रतियोगितावच्छेदकावृत्तिसमवायित्वाद्यवच्छिन्नप्रमेयत्वादिना प्रमेयसामान्यभेदो वा तथेत्यवधेयम् ।

---

तत्त्वचिन्तामणिदीधितिः ।

ननु पारिभाषिकमेवाव्यभिचरितत्वं, तथाहि यत्-समानाधिकरणाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः प्रतियोगि-समानाधिकरणास्तत्त्वं सर्व्वत्र वाच्यत्वाद्यभावस्य तथा-त्वाद्यावत्त्वोपादानम् । अतएव भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ द्वित्वावच्छिन्नाभावस्य प्रतियोगिसामा-नाधिकरण्येऽपि भूतत्व-मनोन्यत्वाद्यभावस्यातथात्वा-न्नातिप्रसङ्गः । गोत्वाद्यभावस्य तत्तत्साध्यव्यक्त्यभावस्य वा तथात्वात् साध्यतावच्छेदकेत्यादि ।

---

गादाधरी विवृतिः ।

ननु व्यधिकरणधर्म्मावच्छिन्नसाध्याभावप्रसिद्धावपि व्यभिचारा-भावरूपव्याप्तौ साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य लक्षणघट-कतया अप्रसिद्धिनिबन्धनाव्याप्तेर्दुरुद्धरतयैव वादिनो निवृत्ते-र्व्यधिकरणधर्म्मावच्छिन्नभावखण्डनपरग्रन्थानुत्थितिरित्यतस्तादृश--ग्रन्थमवतारयति, ‘नन्वित्यादिना, ‘पारिभाषिकमिति तात्विक-

शङ्कितरूपपरिभाषया व्याप्तिप्रतिपादकं न तु योगेनेत्यर्थः, 'अव्यभि-चरितत्वम्' अव्यभिचरितत्वपदम्, अथवा 'पारिभाषिकमव्यभि-चरितत्वं' परिभाषया अव्यभिचरितत्वपदप्रतिपाद्यं, व्याप्यत्वमिति शेषः, न तु योगेन तत्पदलभ्यमित्येवार्थः, तथाच व्यभिचारघटक-साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य व्याप्तिघटकत्वविरहेऽपि न क्षतिरिति भावः। 'यदिति, 'यत्पदं यद्धर्म्मावच्छिन्नपरम्, अग्रे 'तत्-पदमपि तद्धर्म्मावच्छिन्नपरं, स च धर्म्मो हेतुतावच्छेदकीभूतधूम-त्वादिः, सद्धेतुस्थले हेतुतावच्छेदकावच्छिन्नसमानाधिकरणः साध्य-तावच्छेदकावच्छिन्नेत्यादिविशेषणाक्रान्तः व्यधिकरणधर्म्मावच्छिन्न-प्रतियोगिताको घटत्वादिना वह्न्याद्यभावादिरेव तस्य च प्रतियोगि-सामानाधिकरण्यमावश्यकमिति लक्षणसमन्वयः। व्यभिचा-रिणि व्यभिचारनिरूपकाधिकरणीभूतहेत्वधिकरणे साध्यतावच्छे-दकेत्यादिविशेषणाक्रान्तसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकः साध्याभावादिरपि (१) तस्य च प्रतियोगिसामानाधिकरण्याभावात् तादृशाभावस्य च प्रतियोग्यधिकरणे कालिकादिसम्बन्धेन वृत्तावपि विवक्षणीयस्य स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन प्रतियोगिसा-मानाधिकरण्यस्य विरहान्नातिव्याप्तिः। अयमात्मा ज्ञानादित्यादौ समानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकसाध्याभावादिमादाया-व्याप्तेर्वारणाय हेतुतावच्छेदकविशिष्टहेतुसामानाधिकरण्यमभाव-विशेषणम् अभावस्य वृत्तौ सम्बन्धभेदानिवेशेन वह्निमान्धूमा-दित्यादौ वह्नित्वादिना वह्न्याद्यभावस्य प्रतियोगिमति पर्व्व-

(१) आदिपदात् व्यभिचारस्थलान्यत्वाभावपरिग्रहः।

तादौ कालिकसम्बन्धेन वृत्तेर्लक्षणसमन्वयसम्भवान्न तत्राव्याप्ति-वारणं तत्फलमिति तु ध्येयम् । अयमात्मा पृथिव्याद्यष्टद्रव्याति-रिक्तत्वे सति द्रव्यत्वादित्यादौ द्रव्यत्वसमानाधिकरणात्मत्वत्वा-द्यवच्छिन्नात्मत्वाद्यभावानां प्रतियोगिसामानाधिकरण्यविरहात् अव्याप्तिरतो हेतुसामानाधिकरण्यघटकहेतौ हेतुतावच्छेदकाव-च्छिन्नत्वनिवेशः । यद्यप्ययमात्मा ज्ञानादित्यादौ समानाधिकरण-धर्म्मावच्छिन्नाभावमादायाव्याप्तिरभावे साध्यतावच्छेदकविशिष्ट-साध्यसामानाधिकरण्यविशेषणेनापि वारयितुं शक्यते धूमवान् वह्ने-रित्यादौ धूमादिसमानाधिकरणस्य घटत्वादिना धूमाद्यभावस्य प्रतियोगिसामानाधिकरण्यावश्यकत्वेऽपि स्वविशिष्टयावद्धेत्वधिकर-णान्तर्भावेन प्रतियोगिसामानाधिकरण्यस्यैव विवक्षणीयतया अयोगोलकाद्यन्तर्भावेन च तादृशाभावस्यातथात्वान्नातिप्रसङ्गः, स्वविशिष्टहेत्वधिकरणेत्यत्र यत्पदेनैव हेतोरुपादेयतया तत्त्व-मित्यत्र तत्पदेन तस्यैव परामर्शाद्व्याप्तेर्हेतुनिष्ठतोपपत्तिरिति, तथापि कपिसंयोगाभाववान्जातित्वादित्यादौ साध्यसमानाधि-करणस्य कपिसंयोगाद्यात्मकाभावस्य स्वविशिष्टहेत्वधिकरणा-प्रसिद्ध्या सत्तावानात्मत्वादित्यादौ (१) सत्ताधिकरणे काले कालिकादिसम्बन्धेन वर्त्तमानस्य सत्ताभावस्य तदप्रसिद्ध्या (२) अव्याप्तिर्दुर्व्वारैवेति हेतुतावच्छेदकविशिष्टहेतुसामानाधिकरण्य-मेवोपात्तम् ।

---

(१) अभावे भावभिन्नत्वं निवेश्य तत्राव्याप्तिवारणं सम्भवतीत्यतः स्थला-न्तरानुसरणम् । (२) स्वविशिष्टहेत्वधिकरणाप्रसिद्धेरित्यर्थः ।

यत्तु अयमात्मा ज्ञानादित्यादौ आत्मत्वत्वादिना आत्मत्वादे-रभावस्य लक्षणघटकत्वेऽपि नाव्याप्तिस्तस्यापि प्रतियोग्यधि-करणीभूते आत्मादावेकज्ञानविषयत्व-स्वाश्रयाश्रयत्वादिरूपपर-म्परासम्बन्धेन वर्त्तमानतया प्रतियोगिसमानाधिकरणत्वात् इति सामानाधिकरण्यान्तविशेषणमनर्थकम्, तन्न, एकज्ञानविषयत्वा-दिना विशिष्टबुद्धौ प्रमाणाभावेन तेषां संसर्गत्वाभावात्। नचैव-मपि यदभावो व्यभिचारविरोधीत्युपाधिलक्षणे इह हेतावुपा-धिर्नेह हेतावुपाधिरिति प्रतीतिव्यवहारानुरोधेन अव्याप्यत्वस्य सम्बन्धतया ग्रन्थकृतैव स्वीकृतत्वात् तेन सम्बन्धेनैवात्मादावात्म-त्वाभावादेर्वृत्तेः प्रतियोगिसामानाधिकरण्यमक्षतमेवेति वाच्यम्। अव्याप्यत्वादेः सम्बन्धतायां विवादेन यदभावपदस्य यदव्याप्यत्वा-द्यभावपरतामभ्युपगम्यापि ग्रन्थकृता तादृशलक्षणव्याख्यानात् तत्सम्बन्धतायाम् अप्रामाणिकत्वाभिप्रायेणैवात्र यत्समानाधि-करणा इत्युपादानात्। यावत्पदासत्त्वे साध्यतावच्छेदकेत्यादि-विशेषणस्य व्यावृत्तिर्न सङ्गच्छते यत्किञ्चिदभावमादायैव लक्षण-समन्वयसम्भवात् अतश्चरमोक्तस्यापि तत्पदस्य व्यावृत्तिं प्रथमतो दर्शयति, 'सर्व्वत्रेति, 'तथात्वात्' प्रतियोगिसमानाधिकरणत्वात्, तथाच यावत्पदानुपादाने व्यभिचारिमात्र एवातिव्याप्तिरिति भावः। यद्यपि व्यभिचारिस्थल एव दोषस्य कथनीयतया सर्व्वत्र तादृशाभावस्य तथात्वकथनमयुक्तं, तथापि यावत्पदानु-पादानेऽतिव्याप्तिरेव नाव्याप्तिरित्येतत्सूचनाय सर्व्वत्रेत्युक्तम्। अथवा 'सर्व्वत्र' सर्व्वाधिकरणावच्छेदेन, तथाच विवक्षणीयस्य

स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन प्रतियोगिसामानाधिकरण्यस्य सत्त्वं सूचितम्। ननु यावत्पदानुपादाने साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वं परित्यज्य साध्यतावच्छेदकव्याप्यप्रतियोगिताकत्वेनैवाभावो विशेषणीयः तद्व्याप्यत्वञ्च स्वव्यापकतत्कत्वम् अतो नानवस्था, वह्निमान् धूमादित्यादौ तत्तद्वह्न्याद्यभावानां साध्यतावच्छेदकव्याप्यप्रतियोगिताकानां यथाविवक्षणीयप्रतियोगिसामानाधिकरण्यविरहेऽपि घटत्वादिना वह्न्याद्यभावमादायैव लक्षणसमन्वयः (१) इत्थञ्च धूमवान् वह्नेरित्यादौ वाच्यत्वाद्यभावमादाय नातिव्याप्तिसम्भवस्तस्य धूमत्वाद्यव्याप्यप्रतियोगिताकत्वेन लक्षणघटकताविरहात् एवं सति हेतुसमानाधिकरणत्वविशेषणमप्यनर्थकमिति (२) चेत्तदपि तर्हि त्यज्यतामित्याशङ्कापरिहाराय तथाविधाभावनिवेशनेऽपि (३) यत्रातिव्याप्तिस्तत्र तत्पदव्यावृत्तिमाह, 'अतएवेति, 'अतएव' यावत्पदोपादानादेव, 'द्वित्वाद्यवच्छिन्नाभावस्य' भूतत्व-मूर्त्तत्वोभयत्वाद्यवच्छिन्नाभावस्य, 'प्रतियोगिसामानाधिकरण्येऽपि' मनोगगनयोः प्रत्येकं भूतत्व-मूर्त्तत्वरूपप्रतियोगिसामानाधिकरण्येऽपि, तथाच यावत्पदानुपादाने साध्यतावच्छेदकव्याप्यप्रतियोगिताकतादृशोभयाभावस्यैव प्रतियोगिसमानाधिकरणतया अति-

---

(१) लक्षणसङ्गतिरिति पा॰ ।

(२) घटत्वादिना आत्मत्वाद्यभावमादाय अयमात्मा ज्ञानादित्यादौ लक्षणगमनसम्भवादिति भावः ।

(३) साध्यतावच्छेदकव्याप्यप्रतियोगिताकाभावनिवेशनेऽपीत्यर्थः ।

व्याप्तिः स्यादिति भावः। यावत्पदसत्त्वे यादृशाभावमादाया-तिव्याप्तिवारणं तादृशाभावं दर्शयति, 'भूतल-मनोऽन्यत्वाद्यभाव-स्येति भूतत्वाभावस्य मनोऽन्यत्वाभावस्य चेत्यर्थः, 'अतथात्वात्' प्रतियोग्यसमानाधिकरणत्वात्, यावत्पदे दत्ते साध्यतावच्छेदक-व्याप्यप्रतियोगिताकत्वनिवेशने वह्निमान् धूमादित्यादौ तादृश-यावदभावान्तर्गतमहानसीयवह्न्याद्यभावमादायाव्याप्तिः स्यात् इति यथोक्तविशेषणस्यैव (१) उपादेयतया तादृशाभावयोरपि (२) लक्षणघटकत्वादिति भावः। भूतत्वस्य बहिरिन्द्रियग्राह्यविशेष-गुणात्मकतया प्रतियोगिस्वरूपाणां तन्निष्ठप्रतियोगितानाञ्चाल-नीन्यायेन उत्पत्तिकालावच्छेदेन वा साध्यवन्निष्ठाभावप्रतियोगि-तावच्छेदकतया भूतत्वाभावस्य न साध्यतावच्छेदकावच्छिन्नव्याप-कतावच्छेदकप्रतियोगिताकत्वमित्याशयेनाखण्डव्याप्यवृत्तिमनोभे-दाभावानुधावनमिति। उक्तरीत्या 'अतएवेत्यादिग्रन्थावतारात् प्रथमतो वाच्यत्वाद्यभावमादाय सर्व्वत्रैव व्यभिचारिण्यतिव्याप्ते-र्दर्शितत्वात् साध्याभावमादाय व्यभिचारिविशेषेऽतिव्याप्तिप्रदर्शनं सन्दर्भविरुद्धमित्याशङ्कानवकाशः।

केचित्तु यावत्पदानुपादाने वाच्यत्वादेरुदासीनपदार्थस्याभाव-मादाय व्यभिचारिसामान्येऽतिव्याप्तिर्व्विश्राम्यतु साध्याभावमादा-याऽपि क्वचिदतिव्याप्तिः स्यात् सा च यावत्पदोपादानान्न भवती-त्यभिप्रायकतया न सन्दर्भविरोध इत्याहुः।

---

(१) साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वविशेषणस्यै-वेत्यर्थः। (२) भूतत्वाभाव-मनोऽन्यत्वाभावयोरित्यर्थः।

परे तु ननु साध्यतावच्छेदकव्यापकीभूतप्रतियोगिताकयावदभावनिवेशेनैवोपपत्तेः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकयावदभावनिवेशनमफलं तादृशप्रतियोगिताकत्वविशेषणव्यावर्त्तनीयस्य तत्तद्वह्न्याद्यभावस्य वह्नित्वव्यापकप्रतियोगिताकत्वाभावेनोक्तविशेषणेनापि व्यावर्त्तनसम्भवात् अतआह, 'अतएवेति यतः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावे यावत्त्वमुपात्तं न तु साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावे अतएवेत्यर्थः, 'भूतत्वेति, साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशे भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वात् इत्यादौ भूतत्वाभाव-मनोऽन्यत्वाभावप्रतियोगिताया उभयत्वाव्यापकत्वेन उभयत्वावच्छिन्नाभावादेरेव लक्षणघटकतया अतिव्याप्तिः स्यात् यथोक्तविशेषणाक्रान्ताभावनिवेशे च भूतत्व-मनोऽन्यत्वाभावानामपि लक्षणघटकतया नातिव्याप्तिरिति भावः(१)। न च साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशेऽपि हेतुसमानाधिकरणस्य मनोभिन्नभेदस्य प्रतियोगितावच्छेदकतादात्म्यसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः साध्यतावच्छेदकव्यापकप्रतियोगितायाः लक्षणे अनिवेशे तादृशव्यापकताघटकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशासम्भवात् प्रतियोगितावच्छेदकसम्बन्धेनैव तत्सामानाधिकरण्यस्य विवक्षणीयत्वादिति वाच्यम्। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशे वह्निमान् धूमादित्यादौ हेतुसमा-

(१) नातिव्याप्तिरित्यर्थं इति पा०।

नाधिकरणस्य वह्नित्वव्यापकप्रतियोगिताकस्य पर्व्वतभिन्नभेदस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यं पर्व्वतान्तर्भावेन नास्तीत्यव्याप्त्यापत्त्या तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यस्य निवेशासम्भवात् साध्यतावच्छेदकसम्बन्धेनैव प्रतियोगिसामानाधिकरण्यमगत्या वाच्यं तथाच मनोभिन्नभेदस्य तेन सम्बन्धेन मूर्त्तत्वादिरूपप्रतियोगिसामानाधिकरण्यमक्षतमेवेत्यतिव्याप्तेः साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशे वक्ष्यमाणस्थलान्तरेऽप्यतिव्याप्तिः (१) स्यादिति तु नास्माकं दोषः इत्यभिप्राय इति व्याचक्षुः । तत्समीचीनतया न प्रतिभाति साध्यतावच्छेदकेत्यादिविशेषणव्यावृत्तेः पश्चाद्वक्ष्यमाणतया तदुत्तरमेव साध्यतावच्छेदकेत्यादिविशेषणस्थले साध्यतावच्छेदकव्यापकप्रतियोगिताकत्वविशेषणं किन्नोपात्तमित्याकाङ्क्षोदयादादावेव तादृशविशेषणपरित्यागवीजकथनस्यासङ्गतत्वादिति ।

'गोत्वाद्यभावस्येति, प्रतियोग्यसमानाधिकरणत्वादित्यर्थकेन 'अतथात्वादित्यनेनान्वयः, तथाच साध्यतावच्छेदकेत्याद्यनुपादाने चासम्भव इति भावः । यद्यपि गोत्वाभावादेरपि पूर्व्वक्षणवृत्तित्वादिविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यं पर्व्वतादावप्यस्ति तथापि व्यापकताया लक्षणघटकत्वे भावरूपप्रतियोगिसामानाधिकरण्यं धूमवान् वह्नेरित्यादौ धूमाभावादेः पूर्व्वक्षणवृत्तित्व-

(१) घटत्वाभाववान् मेयत्वादित्यादौ घटत्वाद्यात्मकस्वाभावस्य साध्यतावच्छेदकदैशिकविशेषणताविशेषसम्बन्धेन किञ्चिद्विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणत्वादिति भावः ।

विशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमादाय अतिव्याप्ते-र्वारणायावश्यं विवक्षणीयं तथाचायमसम्भव इति भावः । साध्य-प्रतियोगिकाभावनिवेशे गोत्वाभावमादायासम्भवस्य वारणसम्भ-वात् 'तत्तत्साध्यव्यक्त्यभावस्येति, अस्य च नानाव्यक्तिसाध्यक-इत्यादिः, तथाच साध्याभावनिवेशेऽपि वह्निमान् धूमादित्यादा-वव्याप्तिः स्यादिति भावः । साध्यतावच्छेदकावच्छिन्नव्यापकताव-च्छेदकत्वञ्च साध्यतावच्छेदकावच्छिन्नसाध्यवन्निष्ठाभावप्रतियोगि-तानवच्छेदकत्वं, गुण-कर्म्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्ताव्यापकतावच्छेदिकाया अपि द्रव्यत्वाद्यभावीयप्रति-योगिताया न साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वं सत्त्वावति गुणादौ तादृशप्रतियोगित्वावच्छिन्नाभावसत्त्वादतो विशिष्टसत्ता-द्यभाव एव लक्षणघटकः तस्य च गुणादौ सत्तादिरूपप्रतियोगि-समानाधिकरणत्वादतिव्याप्तिरिति साध्यतावच्छेदकावच्छिन्नत्वो-पादानं, तथाच सति द्रव्यत्वाद्यभावीयप्रतियोगिताया अपि विशि-ष्टसत्तात्वावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकतया तादृशा-भावानाञ्च गुणादावतथात्वान्नातिव्याप्तिः । यत्किञ्चिद्रूपावच्छिन्न-साध्यवत्त्वनिवेशे च सत्तावान् जातेरित्यादौ विशिष्टसत्ताव्याप-कतावच्छेदकप्रतियोगिताकद्रव्यत्वाभावादिकमादायाव्याप्तिर्बोध्या, साध्यवत्त्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यम् अन्यथा धूमवान् वह्नेरित्यादौ धूमाभावायोगोलकान्यत्वाभावादिप्रतियोगितायाः कालिकविशेषणता-विषयितादिसम्बन्धेन धूमादिमति काल-श्मानादौ संयोगादिसम्बन्धेन स्वावच्छिन्नाभावसत्त्वात् केनापि

सम्बन्धेन न व्यापकतावच्छेदकत्वमिति केवलान्वयिवाच्यत्वादि-
निष्ठप्रतियोगितैव स्वरूपादिसम्बन्धघटितव्यापकतावच्छेदिका
स्यादित्यतिव्याप्तिः। न च सम्बन्धसामान्येन धूमादिमन्निष्ठो यो-
ऽभावस्तदीयविषयतासम्बन्धावच्छिन्नप्रतियोगितावच्छेदिका या
प्रमानिष्ठप्रतियोगिता तन्निरूपकप्रमाभावस्य च न विवक्षणी-
यसाध्यतावच्छेदकसम्बन्धेन साध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियो-
गित्वावच्छिन्नव्यापकताघटकयावत्सम्बन्धेन स्वविशिष्टयावद्वेत्वधि-
करणे प्रतियोगिसामानाधिकरण्यं साध्यतावच्छेदकसंयोगादिसम्ब-
न्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगिनिष्ठव्यापकतायां
संयोगादिसम्बन्धावच्छिन्नधूमादिप्रकारतानिरूपितविशेष्यतासम्ब-
न्धस्यापि घटकतया तेन सम्बन्धेनायोगोलकादौ प्रतियोगिनो-
ऽसत्त्वादिति वाच्यम्। यतो विषयताया विषयतात्वेनैव सम्ब-
न्धता प्रामाणिकी न तु तथाविधविशेष्यतात्वेनेति, परन्तु तादृश-
दिशा समवायेन ज्ञानादिसाध्यकद्रव्यत्वादिहेतावेवातिव्याप्ति-
वारणं सम्भवति तत्र ज्ञानाभावस्य सम्बन्धसामान्येन साध्य-
निष्ठव्याप्यतानिरूपितविषयतासम्बन्धघटितव्यापकतावच्छेदकप्रति-
योगिताकस्य साध्यतावच्छेदकसम्बन्धेन साध्यनिष्ठव्याप्यतानि-
रूपितस्वप्रतियोगिनिष्ठव्यापकताघटकयावत्सम्बन्धान्तर्गतसमवायेन
घटादौ प्रतियोगिसामानाधिकरण्यविरहात्। न च सम्बन्ध-
सामान्येन धूमादिमन्निष्ठो योऽभावस्तदीयसम्बन्धसामान्यावच्छिन्न-
प्रतियोगितायां धूमाद्यभावीयसम्बन्धसामान्यावच्छिन्नप्रतियोगि-
त्वसप्यनवच्छेदकं संयोगत्वावच्छिन्नसंयोगादिसम्बन्धेन धूमादे-

धूमादिमत्त्वभावसत्त्वेऽपि सम्बन्धत्वरूपव्यापकधर्म्मावच्छिन्न(१)-संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकतदभावासत्त्वात् तथाच धूमाद्यभावस्यापि लक्षणघटकतया तस्य च साध्यतावच्छेदक-सम्बन्धावच्छिन्नसाध्यनिष्ठव्याप्यतानिरूपितस्वप्रतियोगित्वावच्छिन्न-व्यापकताघटकसंयोगत्वाद्यवच्छिन्नसंयोगादिसम्बन्धेन प्रतियोगि-सामानाधिकरण्यविरहान्नातिव्याप्तिरिति वाच्यम् । सम्बन्धत्वेन सम्बन्धानामभावप्रतियोगितावच्छेदकसम्बन्धत्वे मानाभावात् तेन रूपेण सम्बन्धानां व्यापकताघटकत्वासम्भवात् । वस्तुतस्तु प्रति-योगिसामानाधिकरण्यशरीरे व्यापकतायाः स्वातन्त्र्येण निवेशस्य प्रतिक्षेप्यत्वात् ज्ञानवान् द्रव्यत्वादित्यादावतिव्याप्तिरस्त्येवेति ध्येयम् । वस्तुतस्तु संयोग-समवायादिसाधारणानुगतसम्बन्धत्वस्य कथञ्चित् सुवचत्वेऽपि तेन रूपेण संयोगादीनां संसर्गतया भानस्य निर्युक्ति-कतया व्यापकताशरीरे लाघवानुरोधात् साध्यप्रकारिणाधिकरणस्य निवेशे साध्यसम्बन्धो विशिष्य संसर्गतया निवेशनीयः तथाच वि-शिष्य साध्यतावच्छेदकसम्बन्धनिवेशनमावश्यकं यत्किञ्चित्सम्बन्धेन साध्यवत्ताया व्यापकताघटकत्वे तु वह्निमान् धूमादित्यादौ विष-यितादिसम्बन्धेन साध्यं प्रति गुणत्वाद्यभावप्रतियोगिताया अपि व्यापकतावच्छेदकतया तादृशाभावस्य च पर्व्वतादौ प्रतियोगिसा-मानाधिकरण्यविरहात् असम्भवो बोध्यः । साध्यवन्निष्ठाभावाप्रति-योगिप्रतियोगिकत्वनिवेशे सर्व्वस्यैव साध्यवन्निष्ठद्वित्वाद्यवच्छि-न्नाभावप्रतियोगितया तादृशाभावाप्रतियोगिनोऽप्रसिद्धिरित्यतो-

(१) सम्बन्धत्वरूपानुगतधर्म्मावच्छिन्नेति पा० ।

ऽवच्छेदकगर्भता तादृशप्रतियोगितानवच्छेदकत्वञ्च तादृशप्रतियोगितायाः समानाधिकरणं सत् यदवच्छेदकं तदन्यत्वम्, अन्यथा व्यतिरेकिप्रतियोगितामात्रस्यैव व्यधिकरणधर्म्मतया साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकतया विरुद्धघटत्व-पटत्वोभयाद्यवच्छिन्नप्रतियोगिताकप्रमेयसामान्याभावस्यैव लक्षणघटकत्वेन व्यभिचारिण्यतिप्रसङ्गात्।

यत्तु साध्यतावच्छेदकावच्छिन्नसाध्यवन्निष्ठभेदप्रतियोगितानवच्छेदकप्रतियोगिकत्वरूपसाध्यतावच्छेदकावच्छिन्नव्यापकप्रतियोगिकत्वनिवेशेनैव सर्व्वसामञ्जस्ये निरुक्तव्यापकतावच्छेदकप्रतियोगिताकत्वनिवेशनमफलं वह्निमान् धूमादित्यादौ घटत्वादिना वह्न्याद्यभावप्रतियोगिनां वह्न्यादीनां चालनीन्यायेन साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि घटत्वादिना द्रव्यत्वाभावमादायैव लक्षणसमन्वयसम्भवात् व्यभिचारिणि व्यभिचारनिरूपकाधिकरणभेदाभावमादायैवातिव्याप्तिवारणसम्भवाच्च। न च साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकप्रतियोगिताकत्वापेक्षया तादृशविशेषणस्य न लघुशरीरतेति वाच्यम्। व्यापकतावच्छेदकघटकाभावप्रतियोगितावच्छेदकतायां स्वरूपसम्बन्धावच्छिन्नत्वस्याधिकस्य निवेशनीयत्वात् एतन्मते तदनिवेशेन लाघवात्, तन्मते तदनिवेशे सर्व्वासामेव प्रतियोगितानां साध्यवन्निष्ठो यो विषयितादिसम्बन्धेन प्रतियोगिताविशिष्टस्याभावः (१) तत्प्रतियोगितावच्छेदकतया व्यापकतावच्छेदकप्रतियोगितायाः एवाप्रसिद्ध्यापत्तेः,

(१) स्वावच्छिन्नस्याभाव इति पा०।

भेदप्रतियोगितावच्छेदकतायां व्यापकताघटकसम्बन्धावच्छिन्नत्व-स्यैतन्मते निवेशवद्वन्मतेऽपि अभावप्रतियोगितायां तन्निवेशस्या-वश्यकतया तदंशे साम्यादिति। तदसत्, यतोऽनवच्छेदकप्रति-योगिकत्वम् अनवच्छेदकनिष्ठप्रतियोगितानिरूपकत्वं प्रतियोगि-तायां तन्निष्ठत्वञ्च स्वरूपसम्बन्धेन वाच्यम् अन्यथा वह्निमान् धूमादित्यादावपि विषयतासम्बन्धेन साध्यव्यापके प्रमेयमित्याका-रकविश्वविषयकज्ञाने विषयितासम्बन्धेन जलत्वाद्यभावप्रतियोगि-ताया वृत्तेस्तादृशाभावस्य लक्षणघटकत्वापातात्। विषयिताया वृत्त्य-नियामकतया एतद्दोषानवकाश इति चेदेवमपि एतद्वह्निमान् एत-द्धूमात् एतद्रूपवान् एतद्रसादित्यादौ जलत्वाद्यभावप्रतियोगितायाः कालिकसम्बन्धेन साध्यव्यापकसाध्य-तत्समानाधिकरणकर्म्मादौ वर्त्तमानतया लक्षणघटकतापातात् तथाच व्यापकनिरूपितवृत्तौ स्वरूपसम्बन्धावच्छिन्नत्वनिवेशस्यैव तन्मतेऽप्यावश्यकतया न लाघवा-द्यवकाशो विपरीतमेव गौरवम् आधेयत्वांशाधिक्येनेति (१)। न च व्यापकनिष्ठप्रतियोगिताकत्वेन नाभावो विशेषणीयः येनोक्तं गौरवं स्यादपि तु अनुयोगितासम्बन्धेन व्यापकविशेषित एव तत्र च व्यापकतावच्छेदकप्रतियोगिताकत्वेनाभावनिवेशापेक्षया लाघवम-क्षुण्णमेवेति वाच्यम्। प्रतियोगिविशेषणतापन्नधर्म्मावच्छिन्ननिरू-पितत्वानवच्छिन्नानुयोगितायाः (२) अभावांशे प्रतियोगिसम्बन्ध-

---

(१) विपरीतगौरवमेवाधेयत्वनिवेशाधिक्येनेतीति पा०।

(२) प्रतियोगितावच्छेदकविशेषानवच्छिन्ननिरूपितत्वावच्छिन्नानुयोगितायाः इति पा०।

तया भाने (१) पटादिमति घटत्वाद्यवच्छिन्नाभावविषयिन्या द्रव्यं नास्तीत्याकारिकायाः प्रतीतेरापत्तेः तदवच्छिन्ननिरूपितानुयोगितायाः एव संसर्गतया भानोपगमाम् व्यापकत्वावच्छिन्नविशेषिताभावस्य लक्षणे निवेशे व्यापकत्वावच्छिन्ननिरूपितानुयोगितायाः संसर्गतया निवेशनीयतया सद्धेतौ हेतुसमानाधिकरणसाध्यव्यापकत्वावच्छिन्नाभावस्य (२) सम्बन्धविशेषावच्छिन्नप्रतियोगिताकस्य कथञ्चित् प्रसिद्ध्या लक्षणसमन्वयेऽपि व्यभिचारिण्यतिव्याप्तिः व्यभिचारनिरूपकाधिकरणेऽपि कस्यचित् साध्यव्यापकस्य वृत्तेः व्यधिकरणधर्म्मावच्छिन्नाभावस्य लक्षणघटकत्वानुपपत्तिश्चेति। एवं अनवच्छेदकपदेन अवच्छेदकत्वपर्य्याप्त्यनधिकरणत्वमवश्यं वाच्यम् (३) अन्यथा द्रव्यत्वाभावादेरपि वह्निमन्निष्ठपूर्वक्षणवृत्तित्वविशिष्टद्रव्यत्ववद्भेदप्रतियोगितावच्छेदकद्रव्यत्वप्रतियोगिकत्वाल्लक्षणाघटकत्वापत्तेः (४) तथाच घटत्वावच्छिन्नघटाभावादेरपि लक्षणघटकत्वापत्तिः वह्निमन्निष्ठभेदप्रतियोगितावच्छेदकतायाः घटत्वविशिष्टपर्य्याप्ततया शुद्धघटस्य तत्-

---

(१) प्रतियोगितावच्छेदकविशेषावच्छिन्ननिरूपितत्वानवच्छिन्नानुयोगितायाः प्रतियोगिविशेषणतानापन्नधर्म्मावच्छिन्नप्रतियोगिताकत्वेनाभासमाने प्रतियोगिसम्बन्धतया भान इति पा०।

(२) हेतुसमानाधिकरणसाध्यव्यापकत्वावच्छिन्नसाध्यव्यापकाभावस्येति पा०।

(३) एवमनवच्छेदकपदेन अवच्छेदकानवच्छिन्नावच्छेदकताशून्यत्वपर्य्यन्तम् अवश्यं व्यक्तव्यमिति पा०।

(४) वह्निमन्निष्ठद्रव्यत्वाद्यवृत्तिघटत्वाद्यवच्छिन्नद्रव्यत्वादिमद्भेदप्रतियोगितावच्छेदकद्रव्यत्वप्रतियोगिकत्वात् लक्षणघटकत्वानुपपत्तेरिति पा०।

पर्य्याप्त्यनधिकरणत्वात् (१)। अथ निरुक्तव्यापकतायाः (२) निवेशे कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावानां लक्षणघटकत्वानुपपत्तिः कपिसंयोगाभावादिनिष्ठतत्प्रतियोगितानां साध्यवन्निष्ठकपिसंयोगात्मकाभावप्रतियोगितावच्छेदकत्वादित्यग्रिमग्रन्थविरोधः। न च व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणसत्त्वात् साध्यवन्निष्ठकपिसंयोगाद्यात्मकाभावस्य न व्यापकतालक्षणघटकतेति वाच्यम्। प्रकृते व्यापकतायां तादृशविशेषणप्रवेशस्य निष्प्रयोजनकत्वात्।

अत्र केचित्, व्यापकतालक्षणेऽभावे प्रतियोगिवैयधिकरण्यमावश्यकम् अन्यथा अभावे सम्बन्धसामान्येन साध्यवन्निष्ठत्वनिवेशे कालपरिमाणवान् द्रव्यत्वादित्यादौ व्यतिरेकितावच्छेदकप्रतियोगिताभावस्यैव कालिकसम्बन्धेन साध्यवद्वृत्तित्वं स्वावच्छिन्नाभावस्तत्प्रतियोगितावच्छेदकतया वाच्यत्वादिनिष्ठप्रतियोगितायां एव व्यापकतावच्छेदकतया अतिव्याप्त्यापत्तेः। दैशिकविशेषणताविशेषसम्बन्धेन तन्निष्ठत्वनिवेशे भावस्य तेन सम्बन्धेन वृत्तेरप्रामाणिकतया वह्निमान् धूमादित्यादौ पर्व्वतत्वाद्यभावनिष्ठप्रतियोगिताया अपि साध्यव्यापकतावच्छेदकतापत्त्या पर्व्वतत्वाद्यात्मकाभावस्यापि लक्षणघटकत्वापातात् हेतुसामानाधिकरण्यघटकाभावीयवृत्तावपि तादृशसम्बन्धावच्छिन्नत्वनिवेशने नानास्थाने तादृश-

(१) वह्निमद्भिन्नभेदप्रतियोगितावच्छेदकताया घटादिनिष्ठाया घटत्वाद्यवच्छिन्नत्वात् घटादेरपि निरुक्तव्यापकत्वाच्चतेरिति पा०।

(२) निरुक्तव्यापकतावच्छेदकताया इति पा०।

सम्बन्धनिवेशेन प्रतियोगितानवच्छेदकत्वमित्यत्र च व्यधिकरण-धर्म्मावच्छिन्नाभावप्रतियोगितावच्छेदकतावारणाय सामानाधि-करण्यप्रत्यासत्त्यवच्छिन्नत्वस्य निवेशेन च गौरवात् अभावे प्रति-योगिवैयधिकरण्यनिवेशनमेवोचितं, व्यधिकरणधर्म्मावच्छिन्ना-भावस्य प्रतियोगिसमानाधिकरणतयैव तमादाय दोषासम्भवादे-तन्मतेऽवच्छेदकतायां सामानाधिकरण्यप्रत्यासत्त्यवच्छिन्नत्वस्या-निवेशनात् अभावीयवृत्तौ सम्बन्धभेदानिवेशाच्च। प्रतियोगि-वैयधिकरण्यञ्च न प्रतियोगिसमानाधिकरणभिन्नत्वं तथा सति तद्वह्निसंयोगाद्यभावस्य प्रतियोगिसमानाधिकरणतया अभावा-न्तरमादाय तद्वह्निसंयोगादिनिष्ठप्रतियोगिताया अपि वह्नित्वा-द्यवच्छिन्नव्यापकतावच्छेदकतापत्त्या तदभावमादायाव्याप्त्यापत्तेः। किन्तु प्रतियोग्यनधिकरणवृत्तित्वं तथाच प्रतियोग्यनधिकरणी-भूतसाध्यवन्निष्ठात्यन्ताभावेत्यभावान्तार्थनिष्कर्षः। अत्र च व्याप-कताघटकत्वेनाभिमतो यः सम्बन्धस्तेन प्रतियोग्यनधिकरणत्वं वाच्यं तेन कालपरिमाणादिसाध्यकस्थले सम्बन्धसामान्येन प्रति-योग्यनधिकरणसाध्याधिकरणाप्रसिद्धावपि न क्षतिः। कालः सर्व्ववान् कालपरिमाणादित्यादौ साध्यतावच्छेदककालिकसम्ब-न्धेन प्रतियोग्यनधिकरणसाध्याधिकरणाप्रसिद्ध्या तादृशसम्बन्धस्य व्यापकताघटकत्वासम्भवेऽपि न क्षतिः। तत्र समवायादिसम्बन्ध-घटितव्यापकतावच्छेदकप्रतियोगिताकं घटत्वादिना द्रव्यत्वाद्य-भावमादायैव लक्षणसमन्वयसम्भवात्। अथैवं दैशिकविशेषणता-सम्बन्धस्य क्वापि व्यापकताघटकत्वं न स्यात् सर्व्वस्यैवाभावस्य

पूर्वक्षणवृत्तित्वविशिष्टस्वाभावात्मकप्रतियोगिनस्तेन सम्बन्धेन साध्यवति वृत्तेः तेन सम्बन्धेन स्वप्रतियोग्यनधिकरणीभूतसाध्यवन्निष्ठाभावाप्रसिद्धेः । न च तादृशसम्बन्धस्य व्यापकत्वाघटकत्वेऽपि क्षतिविरहः सामान्यादिमात्रवृत्तिसाध्यकस्थलेऽपि विषयतासम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकसाध्यवत्त्वादिप्रकारकप्रमाभावमादायैवोपपत्तिसम्भवात् इति वाच्यम् । तादृशसम्बन्धस्यातथात्वे तेन सम्बन्धेन कपिसंयोगाभावादिसाध्यकमेयत्वादिहेतुकस्थले तन्निष्ठकपिसंयोगाद्यात्मकाभावीयप्रतियोगिताया-व्यापकतावच्छेदकत्वानुपपत्त्या अग्रिमग्रन्थासङ्गतितादवस्थ्यादिति चेन्न, लाघवानुरोधेन येन सम्बन्धेन यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणं साध्यवत्तादृशप्रतियोगितानवच्छेदकत्वमेव तादृशसम्बन्धघटितव्यापकतावच्छेदकत्वमिति वक्तव्यम् इत्यञ्च कपिसंयोगाभावादिसाध्यकस्थले तन्निष्ठप्रतियोगित्वावच्छिन्नप्रतियोगिता नोक्तयादृशपदेनोपादातुं शक्यते तादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वस्य साध्यवत्यसम्भवात् किन्तु घटत्वाद्यभावनिष्ठप्रतियोगितैव, दैशिकविशेषणतया तदवच्छेदकावच्छिन्नानधिकरणत्वस्य (१) साध्यवति घटादौ सत्त्वात् तदनवच्छेदकत्वञ्च कपिसंयोगाभावादिनिष्ठप्रतियोगिताया इति कपिसंयोगादेर्दैशिकविशेषणताघटितव्यापकतावच्छेदकप्रतियोगिताकत्वनिर्व्वाहः, समनियततया अभावैक्यमते (२) घटाद्यभा-

(१) तदवच्छेदकवदनधिकरणत्वस्येति पा० ।

(२) समनियताभावैक्यमत इति पा० ।

वानामपि घटत्वादिना प्रमेयसामान्याभावाभिन्नतया प्रमेय-
मात्रप्रतियोगिकत्वेन प्रतियोग्यनधिकरणीभूतसाध्यवतोऽप्रसिद्धि-
रित्यतः प्रतियोगितावदनधिकरणत्वं विहाय प्रतियोगितावच्छे-
दकविशिष्टानधिकरणत्वनिवेशः। न च घटाद्यभावानां प्रमेय-
मात्रप्रतियोगिकत्वेऽपि तदीयघटादिमात्रवृत्तिप्रतियोगितावदन-
धिकरणत्वमादाय व्यापकतालक्षणसामञ्जस्यमिति वाच्यम्। तादृ-
शाभावानामभेदे घटो नास्तीत्यादिप्रतीतीनामपि घटत्वादि-
विशेषितघटादिवृत्तित्वेन यावत्प्रमेयनिष्ठप्रतियोगितावगाहित्वसम्भ-
वाद्घटादिमात्रवृत्तिप्रतियोगितायाः अप्रामाणिकत्वात्। सम-
नियताभावानामभेदानभ्युपगन्तृमतेऽपि साध्याभावादिप्रतियोगि-
तया साध्यवद्वृत्तिपदार्थाभावस्य प्रतियोगितामादाय तादृशप्रति-
योगितायां व्यापकतानवच्छेदकत्वापत्तिवारणाय तादृशप्रतियोगि-
तावच्छेदकविशिष्टानधिकरणत्वनिवेशनमावश्यकम्। अथ द्रव्यत्वा-
द्यभावीयद्रव्यत्वादिनिष्ठप्रतियोगितानामपि संयोगादिव्यधिकरण-
सम्बन्धघटितव्यापकतावच्छेदकत्वापत्तिः संयोगादिना तादृशप्रति-
योगितात्मकप्रतियोगितावच्छेदकविशिष्टाधिकरणाप्रसिद्ध्या यादृ-
शप्रतियोगितेत्यत्र तादृशप्रतियोगित्वावच्छिन्नायाः प्रतियोगिताया-
उपादातुमशक्यतया प्रतियोगितान्तरमुपादाय तत्रानवच्छेदकत्वा-
न्तसत्त्वात् तथाच यावद्व्यापकताघटकसम्बन्धान्तर्गतसंयोगादिना
द्रव्यत्वाद्यभावस्य प्रतियोगिसामानाधिकरण्यासम्भवादसम्भवः, एवं
समवायादिसम्बन्धावच्छिन्नाकाशनिष्ठप्रतियोगितायामपि तथा-
त्वापत्तिः। न च संयोगादिना द्रव्यत्वाद्यभावस्य स्वसमनियतघट-

त्वाद्यवच्छिन्नप्रतियोगिताकवक्ष्ाद्यभावाभिन्नतया संयोगादिना वक्ष्ादिरूपप्रतियोगिसामानाधिकरण्यसत्त्वान्नासम्भव इतिवाच्यम्। एवमपि सत्तावान् जातेरित्यादौ हेत्वधिकरणावच्छेदेन तादृशा-भावानां संयोगेन प्रतियोगिसामानाधिकरण्यासम्भवेनाव्याप्तेर्दुर्व्वा-रत्वात् मैवं, व्यापकताघटकसम्बन्धत्वेनाभिमतो यः सम्बन्धस्तेन सम्बन्धेन वृत्तिमन्निष्ठत्वेन प्रतियोगितायाः विशेषणीयत्वात्, द्रव्य-त्वादेः संयोगादिना अवृत्तितया उक्तदोषानवकाशादित्याहुः ।

वस्तुतस्तु लघुरूपसमनियतगुरुधर्म्मस्यानवच्छेदकत्वे घटाद्य-भावप्रतियोगिताया अपि वक्ष्ादिव्यापकतावच्छेदकत्वापत्तिः तादृशप्रतियोगिताविशिष्टघटाद्यभावप्रतियोगितायां लाघवेन घट-त्वादावेवावच्छेदकतया घटाद्यभावीयप्रतियोगितानां तदनवच्छेद-कत्वात् । न च प्रतियोगितायास्तत्तदभावीयप्रतियोगितात्वेना-वच्छेदकतायां गौरवेऽपि स्वरूपतोऽवच्छेदकत्वेऽविशेषः, प्रति-योगितायाः स्वरूपतोभानाभावेन तेन रूपेणावच्छेदकताया-अप्यसम्भवादिति पारिभाषिकमवच्छेदकत्वं व्यापकताशरीरे निवे-शनीयं तथाच साध्यवन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्म्म-स्तदवच्छिन्नाभाववदसम्बद्धत्वविशिष्टसामान्यकं फलतः साध्यवद्-यत्किञ्चिद्वात्त्यसम्बद्धत्वविशिष्टसामान्यकं यद्यत् स्वं तदन्यत्वमेव व्यापकतावच्छेदकत्वं, तथाच कपिसंयोगाद्यात्मकाभावस्यापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वमना-यासेनैव निर्व्वहति यतः कपिसंयोगाद्यभावनिष्ठप्रतियोगिता-विशिष्टस्य सर्व्वत्रैव साध्यवति वृत्तेः तस्याः स्वपदेनोपादातु-

मशक्यत्वात् तादृशं स्वं धर्मान्तरमेव तदन्यत्वञ्च तादृशप्रतियोगितायामक्षतमिति। स्वसम्बद्धत्वशरीरेऽपि व्यापकताघटकत्वेनाभिमतो यः सम्बन्धः स एव निवेशनीयः, द्रव्यत्वादिनिष्ठप्रतियोगित्वञ्च संयोगादिसम्बन्धेन साध्यवदसम्बद्धस्वविशिष्टसामान्यकमेवातो न संयोगादिघटितव्यापकतावच्छेदकत्वन्तस्येति नोक्तदोषावकाश इति दिक्।

---

तत्त्वचिन्तामणिदीधितिः।

**येन सम्बन्धेन हेतुः तेनैव तदधिकरणं बोध्यं तेनात्मत्वे साध्ये समवायेन हेतोर्ज्ञानस्य विषयतयाऽधिकरणे घटादौ वर्त्तमानस्य साध्याभावस्यातथात्वेऽपि न क्षतिः, एवं दलान्तरेऽपि सम्बन्धभेदनिबन्धनो दोषः सम्बन्धैक्यविवक्षया निरसनीयः।**

---

गादाधरी विवृतिः।

'येन सम्बन्धेन हेतुरिति व्याप्यताघटकत्वेनाभिमतो यः सम्बन्ध इत्यर्थः, 'बोध्यमित्यस्य हेतुसामानाधिकरण्यघटकमित्यादिः, 'तेन' तादृशसम्बन्धविवक्षणेन, 'आत्मत्वे साध्य इति अयमात्मा ज्ञानादित्यादावित्यर्थः, 'साध्याभावस्य' साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य, 'अतथात्वेऽपि' स्वविशिष्टस्य हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणस्याप्रसिद्ध्या विवक्षणीयस्वप्रतियोगिसामानाधिकरण्यविरहेऽपि, (१) 'न क्षतिः' नाव्याप्तिः, वह्नि-

---

(१) विवक्षणीयस्वप्रतियोगिसामानाधिकरण्यासम्भवेऽपीति पा०।

मान् धूमादित्यादौ धूमावयवादिवृत्तेर्व्वह्नित्वाद्यवच्छिन्नवह्न्या-द्यभावस्य स्वविशिष्टं यद्धेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तदवच्छेदेन प्रतियोगिसामाधिकरण्यं सम्भवत्येव तथाविधहेत्व-धिकरणस्य पर्व्वतादेर्जन्यमात्रस्य कालोपाधितया कालिकसम्बन्धेन तादृशाभावविशिष्टत्वात् तदन्तर्भावेन तेन सम्बन्धेन तादृश-प्रतियोगिसामानाधिकरण्यस्यापि सत्त्वात्। अभाववैशिष्ट्यादौ सम्बन्धविशेषानिवेशादित्यभिप्रायेन नित्यमात्रवृत्तिहेतुकस्थला-नुधावनम्। अथ वह्निव्यापकस्य चरमक्रियाभावस्य योऽभाव-श्चरमक्रियात्मकस्तस्य कालिकसम्बन्धेन हेत्वधिकरणे महाकाले वर्त्तमानस्य न विवक्षणीयप्रतियोगिसामानाधिकरण्यस्य सम्भवः स्वविशिष्टस्य हेतुतावच्छेदकसंयोगेन धूमाधिकरणस्याप्रसिद्धेः धूमाधिकरणपर्व्वतादेस्तदसमानकालीनतया तत्र कालिकसम्बन्धे-नापि तद्वैशिष्ट्यासम्भवादित्यात्मत्वसाध्यकपर्य्यन्तानुधावनमफलम्। न च वृत्त्यनियामकसंयोगेन धूमसम्बन्धिनि परमाणावेव चरम-क्रियावैशिष्ट्यस्य प्रसिद्ध्या तत्र चरमक्रियाभावप्रतियोगिनोऽपि सत्त्वात् सम्भवत्येव विवक्षणीयप्रतियोगिसमानाधिकरण्यं तादा-त्म्यसम्बन्धावच्छिन्नहेतुकस्थलानुरोधेन हेत्वधिकरणावच्छेदेनेत्यत्र हेतुसम्बन्धित्वमात्रस्यैव विवक्षितत्वादिति वाच्यम्। यादृशपरमाणौ कदापि धूमसंयोगो नासीत्तदीयचरमक्रियाद्यात्मकाभाववैशिष्ट्यस्य हेतुसम्बन्धिन्यसत्त्वेन तमादायैवाव्याप्तिवारणासम्भवादिति चेन्न, महाकालस्यैव वृत्त्यनियामकसंयोगसम्बन्धेन हेतुसम्बन्धितया तत्र कालिकसम्बन्धेन चरमक्रियात्मकाभाववैशिष्ट्यस्य दैशिक-

विशेषणतया तदभावस्यापि सत्त्वेन विवक्षणीयप्रतियोगिसामानाधिकरण्यसम्भवात्, वृत्त्यनियामकसंयोगस्यापि संयोगत्वेन हेतुतावच्छेदकसम्बन्धत्वात्। न च तथापि वृत्तिनियामकसंयोगेन धूमहेतुकस्थलेऽव्याप्तिरस्त्येवेति वाच्यम्। तेन रूपेण सम्बन्धतायां मानाभावात् कालस्यावृत्तितया काले धूमसंयोगस्य कालनिष्ठधूमाधेयत्वानियामकत्वेऽपि धूमस्य तेन सम्बन्धेन कालवृत्तित्वमस्त्येवेत्यस्यापि सुवचत्वाच्च वह्निमान् धूमादित्यादौ साध्याभावमादाय नाव्याप्तिसम्भवः किन्तु चरमक्रियात्मकाभावमादायैवेति, अव्याप्तेः स्फुटतरप्रतिपत्त्यर्थमात्मत्वादिसाध्यकस्थलानुधावनस्य सार्थकत्वाच्चेति। ननु ज्ञानवानात्म-महाकालान्यतरत्वादित्यादौ हेतुसमानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगितांकयावदभावानामेव स्वविशिष्टहेत्वधिकरणमहाकाले कालिकादिसम्बन्धेन प्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिः। न च तादात्म्येन ज्ञानव्यापकस्यात्मनोऽभाव एव काले न प्रतियोगिसमानाधिकरणः आत्मनोऽवृत्तितया कालिकसम्बन्धेनाप्यवृत्तेरिति वाच्यम्। आत्मनः कालावृत्तित्वे कालवृत्तित्वघटितकारणत्वाद्यनुपपत्त्या तदुपगमस्यावश्यकत्वात्। नित्यद्रव्याणां कालावृत्तित्वेऽपि महाकालभिन्नो द्रव्यत्वात् ईश्वरज्ञानभिन्नं गुणत्वादित्यादावतिव्याप्तिः वृत्तिमतामेव महाकालभेदेश्वरज्ञानभेदादीनां व्यापकतया तदभावानां यावतामेव महाकाले ईश्वरज्ञानादौ कालिकविशेषणता-विषयितादिसम्बन्धघटितप्रतियोगिसामानाधिकरण्यसत्त्वादित्यत आह, 'एवं दलान्तरेऽपीति, 'दलान्तरे' प्रतियो-

गिसामानाधिकरण्यघटकप्रतियोगिमत्त्वादले, 'सम्बन्धभेदनिबन्धनो-दोषः' कालिकादिसम्बन्धमादायातिव्याप्तिरूपः, 'सम्बन्धैक्यविव-क्षया' व्यापकताघटकसम्बन्ध-प्रतियोगिमत्ताघटकसम्बन्धयोरैक्य-विवक्षया, तथाच ज्ञानवानात्म-महाकालान्यतरत्वात् महाकालभि-न्नोद्रव्यत्वादित्यादौ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठव्या-प्यतानिरूपितव्यापकताघटकसमवाय-दैशिकविशेषणतादिसम्बन्धेन ज्ञानाभाव-महाकालभेदाभावादिप्रतियोगिनां (१) कालादाववृत्ते-र्नातिव्याप्तिरिति भावः । अत्र च येन येन सम्बन्धेन स्वप्रतियोगि-त्वावच्छिन्नस्य साध्यतावच्छेदकावच्छिन्नव्यापकता तेन तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यमभावस्य विवक्षणीयम् अन्यथा इदं नित्यज्ञानं नित्यत्वे सति सविषयकत्वादित्यादौ हेतुसमानाधि-करणनित्यज्ञानत्वाद्यभावस्य प्रतियोगिनः साध्यं प्रति विषयिता-सम्बन्धेनापि व्यापकतया तेन सम्बन्धेन हेत्वधिकरणेश्वरेच्छा-कृत्योः प्रतियोगिसामानाधिकरण्येनातिव्याप्तिः येन येनेत्युक्तौ च तथा-विधसमवायादिसम्बन्धेनातथात्वात् नातिव्याप्तिः । अत्र च साध्य-तावच्छेदकावच्छिन्ननिरूपितस्वप्रतियोगित्वावच्छिन्नव्यापकताघट-कसम्बन्धत्वेन तादृशसम्बन्धस्य प्रतियोगिसामानाधिकरण्यशरीरे न स्वातन्त्र्येण निवेशस्तथा सति अभावे साध्यतावच्छेदका-वच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकत्वविशेषणवैयर्थ्यात् । न हि तादृशविशेषणानुपादाने गोत्वाद्यभावमादायासम्भवः सम्भ-वति, गोत्वाद्यभावानामपि हेत्वधिकरणे पूर्व्वक्षणवृत्तित्वविशिष्ट-

---

(१) ज्ञानाभाव महाकालादिभेदाभावप्रतियोगिनामिति पा० ।

स्वाभावरूपप्रतियोगिना तन्निष्ठव्यापकताघटकदैशिकविशेषणता-सम्बन्धेन सामानाधिकरण्यसत्त्वात्, धूमवान् वह्नेरित्यादौ धूमाद्य-भावस्यायोगोलके पूर्व्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगि-सामानाधिकरण्येऽपि यावद्व्यापकताघटकसम्बन्धान्तर्गतसंयोगा-दिना प्रतियोगिसामानाधिकरण्यविरहात्। घटत्वाभाववान् प्रमेयत्वादित्यादौ घटत्वाद्यात्मकाभावस्य तादृशप्रतियोगिसामाना-धिकरण्येऽपि विशेष्यतासम्बन्धघटितसाध्यव्यापकावच्छेदकप्रति-योगिताकस्य घटावृत्तेर्घटत्वाभावादिप्रमायाः तादृशसम्बन्धेना-भावस्य यावद्व्यापकताघटकसम्बन्धान्तर्गततादृशसम्बन्धेन घटे प्रतियोगिसामानाधिकरण्यविरहादतिव्याप्त्यनवकाशात्। अपि तु साध्यतावच्छेदकावच्छिन्नव्याप्यतानिरूपितयद्यत्सम्बन्धघटितव्याप-कतावच्छेदकप्रतियोगिताका ये येऽभावास्तत्तत्सम्बन्धेन प्रतियोगि-समानाधिकरणाः एवं क्रमेणैव निवेशाद्व्यापकताया एकधैव लक्षणे निवेश इति।

यत्तु साध्यतावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्य-निवेशात् न ज्ञानवानात्म-महाकालान्यतरत्वादित्यादावतिव्याप्तिः, इत्यत्र व्यापकतापि साध्यतावच्छेदकसम्बन्धघटिता ग्राह्या, तेन वह्निमान् धूमादित्यादौ घटत्वादिना घटवृत्तित्वविशिष्टद्रव्यत्वत्वा-दिना वा द्रव्यत्वादेरभावस्य समवायादिसम्बन्धघटितसाध्यव्यापक-तावच्छेदकप्रतियोगिताकस्य साध्यतावच्छेदकसंयोगादिसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिरिति, तन्न, तथा सति कालिकविशेषणतया महाकालान्यत्वविशिष्टघटादौ साध्ये

कालत्वादिहेतावतिव्याप्त्यापत्तेः तत्र महाकालान्यत्वविशिष्ट-घटाभाव-महाकालान्यत्वाभावादीनां कालिकसम्बन्धेन महाकाले घटादिरूपप्रतियोगिसामानाधिकरण्यसत्त्वादिति। यदि च महा-कालान्यत्वविशिष्टोऽपि घटो महाकाले वर्त्तते अन्यथा सिद्धान्त-लक्षणे महाकालो घटवान् कालपरिमाणादित्यादौ महाकाला-न्यत्वविशिष्टघटाभावस्यैव प्रतियोगिव्यधिकरणस्य सुलभतया उभ-याभावघटितप्रतियोगिवैयधिकरण्यनिर्व्वचनायासस्य निष्प्रयोजन-कतापत्तेरिति दर्शितविशिष्टसाध्यकस्थले कालत्वादिः सद्धेतुरे-वेति मन्यते तदापि घटत्वाभाववान् प्रमेयत्वादित्यादौ घटत्वात्म-कस्याभावस्य साध्यतावच्छेदकदैशिकविशेषणतासम्बन्धेन किञ्चि-द्विशिष्टस्वाभावात्मकप्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्ति-रेतन्मते दुर्व्वारैव। न च तेन सम्बन्धेन भावरूपप्रतियोगिसामाना-धिकरण्यस्य विवक्षणीयतया नायं दोष इति वाच्यम्। तथा-सत्यभावसाध्यकसद्धेतौ निरुक्तयावदभावान्तर्गतभावरूपसाध्याद्य-भावस्य भावरूपप्रतियोग्यप्रसिद्ध्या भावरूपप्रतियोगिसामानाधि-करण्यासम्भवादव्याप्तिः, अभावपदस्य भावभिन्नाभावपरत्वे कपि-संयोगाभावसाध्यकस्थले कपिसंयोगात्मकाभावमादायाग्रे स्वविशि-ष्टपदव्यावृत्तिकथनस्यासङ्गत्यापत्तेः। एवं साध्यतावच्छेदकसम्ब-न्धेन व्यापकत्वादिनिवेशे 'सर्व्वत्रेत्यादिना धूमवान् वह्नेरित्यादौ वाच्यत्वाद्यभावमादायातिव्याप्तिप्रदर्शनस्यासङ्गत्यापत्तेश्चेति।

यत्तु दैशिकविशेषणताविशेषेण व्यापकता तेनैव च सम्बन्धेन प्रतियोगिसामानाधिकरण्यं सर्व्वत्र साध्यवत्त्वप्रकारकप्रमाविषय-

त्वाभावमादायैव लक्षणसङ्गमनमतिव्याप्तिवारणञ्चेति, तदपि उक्तातिव्याप्तेः (१) आत्मत्वादिसाध्यकस्थले साध्याभावमादाय हेतुतावच्छेदकसम्बन्धव्यावृत्तिप्रदर्शनविरोधाच्चानुपादेयमेव ।

केचित्तु प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामाधिकरण्यनिवेशान्न प्रागुक्तातिव्याप्तिः, इत्थञ्च व्यापकतापि तेन सम्बन्धेनैव वाच्या अतो वह्निमान् धूमादित्यादौ संयोगादिघटितव्यापकतावच्छेदकप्रतियोगिताकस्य समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्याद्यभावस्य हेत्वधिकरणे समवायादिना प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिः तादृशाभावानां साध्यतावच्छेदकसम्बन्धघटितसाध्यनिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकप्रतियोगिताकत्वेऽपि स्वप्रतियोगितावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकप्रतियोगिताकत्वाभावेन निरुक्तयावदभावानन्तःपातित्वात् । न चैवं व्यधिकरणधर्म्मावच्छिन्नाभावस्य सम्बन्धावच्छिन्नप्रतियोगिताकत्वे मानाभावेन तादृशाभावस्य लक्षणघटकत्वानुपपत्तिरिति वाच्यम् । संयोगेन घटत्वेन पटो नास्तीत्यनुभवबलात्तादृशाभावप्रतियोगितायामपि सम्बन्धस्यावच्छेदकत्वात् (२) अनुभवानादरे तु समानाधिकरणधर्म्मावच्छिन्नाभावप्रतियोगितायामपि सम्बन्धस्यावच्छेदकत्वासिद्धेः । अथ बाधबुद्धिप्रतिबन्धकतायाः सम्बन्धविशेषनियन्त्रितत्वानुरोधेन समानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्य सम्ब-

---

(१) घटत्वाभाववान् प्रमेयत्वादित्यादावतिव्याप्तेरित्यर्थः ।

(२) सम्बन्धावच्छिन्नत्वादिति पा० ।

न्धावच्छिन्नप्रतियोगिताकत्वमावश्यकम् अन्यथा एकैकविध-घटाद्यभावज्ञानस्य संयोग-समवायादिरूपनिखिलसंसर्गावगाहि-ज्ञानप्रतिबन्धकत्वप्रसङ्गात् (१)। न च संयोगादिसम्बन्धावच्छिन्न-घटादिप्रकारताकबुद्धिं प्रति वस्तुगत्या संयोगादिसम्बन्धेन घटादि-सत्ताविरोधी योऽभावस्तज्ज्ञानत्वेन प्रतिबन्धकत्वान्नोक्तातिप्रसङ्ग-इति वाच्यम्। वास्तवतादृशाभावज्ञानत्वादिना प्रतिबन्धकत्वे घटाभावत्वेन पदार्थान्तरावगाहिज्ञानस्य घटादिसत्ताज्ञानाविरो-धित्वप्रसङ्गात् (२) तस्मात् तत्तत्संसर्गकविशिष्टबुद्धौ तत्तत्संसर्गा-वच्छिन्नप्रतियोगिताकाभावत्वावगाहिज्ञानत्वेनैव प्रतिबन्धकताया-वक्तव्यतया समानाधिकरणधर्म्मावच्छिन्नप्रतियोगितायां सम्बन्ध-स्यावच्छेदकतासिद्धिरिति चेत्, तर्हि घटत्वविशिष्टपटाद्यवगाहि-भ्रम-घटत्वादिनापटाद्यभावज्ञानयोरपि प्रतिबध्य-प्रतिबन्धक-भावस्य सत्त्वात् तादृशप्रतिबध्य-प्रतिबन्धकभावस्य सम्बन्धविशेष-नियन्त्रितत्वानुरोधेन व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताया अपि सम्बन्धावच्छिन्नत्वावश्यकत्वाद्व्यधिकरणधर्म्मावच्छिन्नाभावज्ञानस्या-प्रतिबन्धकत्वे बाधग्रन्थे लाघवोपनीतकाञ्चनमयत्वादिना वह्न्या-द्यनुमितिविरोधितया काञ्चनमयत्वाद्यवच्छिन्नप्रतियोगिताक-वह्न्याद्यभावस्य हेत्वाभासतोक्तेरसङ्गत्यापत्तेरित्यलमप्रस्तुतविचारे-णेति वदन्ति। तदपि न साधीयः, निखिलाभावस्य किञ्चि-

(१) ज्ञानविरोधित्वप्रसङ्गादिति पा०।

(२) न चेत्यादिः ज्ञानाविरोधित्वप्रसङ्गादित्यन्तः पाठः कस्मिंश्चिदादर्शपुस्तके नास्ति।

द्विशिष्टस्वाभावनिष्ठप्रतियोगितावच्छेदकीभूतदैशिकविशेषणतासम्बन्धेन तादृशप्रतियोगिसमानाधिकरणत्वसत्त्वेन व्यभिचारिण्यतिव्याप्तेः। यावत्प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिसामानाधिकरण्यनिवेशे च निखिलव्यधिकरणधर्म्मावच्छिन्नाभावानामैक्यमते निखिलसम्बन्धानामेवैकैकतादृशाभावप्रतियोगितावच्छेदकतया क्वचिदपि हेत्वधिकरणे संयोग-विषयित्वादिरूपसकलसम्बन्धेन प्रतियोगिनोऽवृत्तेरसम्भवापत्तेः प्रकारान्तरानुसरणे च (१) गौरवादिति।

---

तत्त्वचिन्तामणि-दीधितिः।

रूपादिसामान्याभावे साध्ये पृथिवीत्वादिकं सद्धेतुरेव। प्रलये परमाणावुत्पत्तिकाले चावयविनि तत्सत्त्वात्। न च प्रतियोगिवत्तद्ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वं, मानाभावात् अतएव अन्तरा श्यामे रक्तं रूपं नास्तीतिप्रत्ययः, न चैष रक्तिमध्वंसाद्यवगाही, पूर्व्वापररक्तिमध्वंस-प्रागभाववति रक्तेऽपि तथा प्रत्ययप्रसङ्गात्। तत्सामानाधिकरण्यञ्च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यं तेन गोत्व-जन्यद्रव्यत्व-प्रलयावृत्तित्वादिना गवादेरभावस्य गवाद्यनधिकरणधर्म्मावच्छेदेन तद्वति काले

---

(१) साध्यवत्त्वव्यापकाधिकरणतानिरूपितस्वप्रतियोगिनिष्ठाधेयतावच्छेदकस्वप्रतियोगितावच्छेदकयावत्सम्बन्धेन प्रतियोगिसामानाधिकरण्योक्तौ चेत्यर्थः।

महाकाले वा वृत्तावपि यदा गोत्वं तदा गौर्यच्च कालत्वं तच्च जन्यद्रव्यं प्रलयावृत्तिर्वेत्यादौ नातिप्रसङ्गः हेतुमति प्रलये तत्सामानाधिकरण्याभावात्। स्वविशिष्टेतिविशेषणात् कपिसंयोगाभाववान् मेयत्वादित्यादौ संयोगाद्यात्मकस्य साध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः, जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावस्तु जलत्वाद्यभावो न तु धूमाद्यभावो जलादावपि तदभावप्रत्ययप्रसङ्गात्।

गादाधरी-विवृतिः।

अथ यावत्त्वमनुपादाय साध्यतावच्छेदकव्याप्यप्रतियोगिताकस्य तदुपादाय साध्यतावच्छेदकव्यापकप्रतियोगिताकस्य वा अभावस्य निवेशे उभयत्वावच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्तिरुक्ता न तु रूपसामान्याभावादिसाध्यकस्थले, प्राचां मते विरुद्धे पृथिवीत्वादिहेतावित्यत्र किं वीजं तथा सति तत्रापि रूपसामान्याभावाभावस्य रूपस्य (१) स्वध्वंस-प्रागभावादिरूपप्रतियोगिसामानाधिकरण्यसत्त्वेनातिव्याप्तिसम्भवादित्याशङ्कापरिहाराय तस्य स्वमते लक्ष्यत्वमेवोपपादयति, 'रूपादीति। यथोक्तलक्षणेऽतिव्याप्तिशङ्कया तु नैतद्ग्रन्थावतारः तत्र पृथिव्यन्यत्वाभावस्यापि

(१) रूपाद्यात्मकाभावस्येति पा०।

यावदन्तर्गततया तस्य पृथिव्यां प्रतियोगिसामानाधिकरण्यासम्भवे-
नातिव्याप्तेरनवकाशात् (१) ।

यत्तु उत्पत्तिकालावच्छेदेन रूपसामान्याभावस्य पृथिव्यामपि
सत्त्वेन पृथिव्यन्यत्वाभावस्य न रूपसामान्याभावव्यापकतावच्छेद-
कप्रतियोगिताकतेत्यभिसन्धिपूर्व्विका प्राचीनप्रवादमात्रेणासद्धेतु-
त्वाभिमानिनां तटस्थानं यथोक्तलक्षणेऽतिव्याप्तिशङ्कां निराकरोति,
'रूपादीति, 'सद्धेतुरेवेति यादृशरीत्या पृथिव्यन्यत्वाभावस्य लक्षणा-
घटकत्वोपपत्तिः तादृशरीत्या साध्यवति हेतुमत्ताया अप्यावश्यक-
तया सद्धेतुरेवेत्यर्थः, इति व्याख्यानं, तदनुपादेयमेव, तादृशा-
शङ्कितुः पृथिव्यां रूपसामान्याभावसत्त्वेऽविप्रतिपत्तावेवातिव्याप्ति-
शङ्कासम्भवेनाग्रे पृथिव्यां रूपसामान्याभावव्यवस्थापनौपयिकाकाङ्क्षा-
नुत्पत्त्या तदसङ्गत्यापत्तेः ।

'प्रलये' महाप्रलये, परमाणूनां नित्यतया तत्रोत्पत्तिकाला-
वच्छेदेन रूपसामान्याभावासम्भव इति भावः। यद्यपि पाका-
द्रूपनाशोत्पत्तिकाले पूर्व्वरूपात्मकप्रतिबन्धकसत्त्वेन रूपान्तरा-
नुत्पादेन तदानीमपि परमाणौ रूपसामान्याभावसम्भवः। तथाप्य-
विनश्यदवस्थस्य रूपस्य रूपप्रतिबन्धकत्वे पूर्व्वरूपनाशोत्पत्ति-
क्षण एव पाकजरूपान्तरोत्पत्तिसम्भव इत्यभिप्रायेण प्रलयपर्य्यन्ता-
नुधावनं, 'उत्पत्तिकाल इति, अवयविद्रव्यस्य जन्यतया प्रलये-
ऽसत्त्वात्तदवच्छेदेन तत्राभावासम्भव इति भावः। 'तत्सत्त्वात्'
रूपादिसामान्याभावसत्त्वात्। ननु सामान्यधर्म्मावच्छिन्नप्रति-

(५) अतिव्याप्त्यभावादिति पा०।

योगिताकाभावस्य अत्यन्ताभावात्मकतया रूपप्रागभाववत्युत्पत्तिकालावच्छिन्नावयविनि रूपध्वंसवति प्रलयावच्छिन्नपरमाणौ कथं रूपसामान्याभावसम्भवः ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वादित्याशङ्कां निरस्यति, 'न चेति, 'प्रतियोगिवदिति यथा प्रतियोगिन एककालावच्छिन्नैकदेशावृत्तित्वरूपस्वात्यन्ताभावविरोधिता तथा ध्वंस-प्रागभावयोरप्यत्यन्ताभावविरोधितेति नेत्यर्थः, 'मानाभावादिति। ननु रूपध्वंस-प्रागभावावच्छिन्नाधिकरणे तदत्यन्ताभावस्य वृत्तौ प्रमाणाभावः घटाद्युत्पत्तिक्षणे तद्द्वितीयक्षणे च तत्प्रत्यक्षासम्भवेन तद्वृत्तित्वेन रूपात्यन्ताभावप्रत्यक्षस्य सुतरामसम्भवात् द्वितीयादिक्षणावच्छेदेन रूपस्यैव तत्रोत्पत्त्या तदभावीयविशेषणताया असत्त्वेन तृतीयक्षणादावपि तादृशप्रत्यक्षासम्भवात् अनुभवे विप्रतिपन्नस्य प्रत्यक्षप्रमाणमनुज्ञाप्य निरसितुमशक्यत्वात् अनुमानञ्चाप्रयोजकमिति ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वमर्थायातमित्यत आह, 'अतएवेति ध्वंसप्रागभावयोरत्यन्ताभावाविरोधित्वादेव, 'अन्तरा श्यामे' पूर्व्वापरदशायां रक्ते मध्यदशायां श्याम इत्यर्थः, 'रक्तं रूपं नास्तीति प्रत्यय इति, ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वे तत्र पूर्व्वरक्तध्वंस-भाविरक्तप्रागभावयोः सत्त्वेनात्यन्ताभावावगाहिन्याः प्रमात्मकतादृशप्रतीतेरनुपपत्तिरिति भावः। 'एषः' रक्तः रूपं नास्तीतिप्रत्ययः, 'ध्वंसादीत्यादिना प्रागभावपरिग्रहः, 'पूर्व्वापरेति यत्र घटादौ पाकादेव रक्तनाशानन्तरं रूपान्तरमुत्पन्नं तन्नाशानन्तरञ्च रक्तान्तरं ततस्तन्नाशानन्तरोत्पन्नरूपान्तरनाशानन्तरं

रक्तान्तरमुत्पद्यते तत्र मध्यरक्तदशायां रक्तं रूपं नास्तीति प्रतीत्यापत्तेरित्यर्थः, तत्रापि रक्तरूपध्वंस-प्रागभावयोः सत्त्वादिति भावः। एतेन भवन्मते रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभाववत् तादृशावेव (१) ध्वंस-प्रागभावावेतादृशप्रतीतिविषयौ अन्तरा रक्तसमानकालीनौ पूर्व्वापररक्तध्वंस-प्रागभावौ च न तथाविधाविति नातिप्रसङ्ग इति निरस्तम्। तादृशध्वंस-प्रागभावयोरेव (२) रूपान्तरदशायां तादृशप्रतीतिनियामकतया तयोरपि तथात्वस्वीकारस्यावश्यकत्वात्। तत्र मध्यमरक्तरूपध्वंस-प्रागभावयोस्तथात्वस्वीकारे च पूर्व्वापररक्तदशायां तादृशप्रत्ययापत्तेः। अथ रक्तत्वावच्छिन्नप्रतियोगिताकत्वेन ध्वंस-प्रागभावावेव तादृशप्रतीतिविषयौ इत्यस्य रक्तरूपदशायां लौकिकप्रत्यक्षात्मकस्तादृशप्रत्यय आपाद्यते अनुमित्यात्मको वा आद्ये रक्तरूपलौकिकप्रत्यक्षसामग्रा रक्तत्वावच्छिन्नप्रतियोगिताकत्वेन तदभावप्रत्यक्षं प्रति प्रतिबन्धकत्वान्नापत्तिः अन्यथा भवन्मतेऽपि रूपान्तरकालावच्छेदेन तद्वृत्तिरक्तत्वावच्छिन्नात्यन्ताभावस्यैव तदानीं धर्म्मान्तरघटितसन्निकर्षात्तद्वृत्तितया प्रत्यक्षापत्तेः विशेष्यघटितसन्निकर्षत्वेन सन्निकर्षस्याहेतुत्वात् (३) रक्तरूपग्रहप्रतिबन्धकदोषादिसत्त्वे च तादृशप्रत्ययस्येष्टत्वात्। नान्त्यः तद्रूपावच्छिन्नव्याप्यवत्ताज्ञानादिसत्त्वे आनुमानिकतथाविधप्रत्यय-

---

(१) रक्तत्वावच्छिन्नप्रतियोगिताकावेवेत्यर्थः।

(२) रक्तसमानकालीनध्वंस-प्रागभावयोरेवेत्यर्थः।

(३) विशेष्यभेदेनानन्तकार्य्य-कारणभावप्रसङ्गेनेत्यादिः।

ध्येष्टत्वात् । न च तादृशप्रत्ययस्य प्रमात्वापत्तिः, भवन्मतेऽपि तथा-विधात्यन्ताभावस्य तत्र सत्त्वात्तादृशप्रत्ययस्य प्रमात्वेनेष्टापत्तेः । यदा च तत्र रक्तं रूपं तत्कालत्वावगाहिन इदानीमत्र रक्तं रूपं नास्तीतिप्रत्ययस्य प्रमात्वं पुनरशक्यापादनं तादृशप्रत्ययेन रक्तत्वा-वच्छिन्नप्रतियोगिताकत्वे तत्कालत्वावच्छिन्नत्वावगाहनात् यदा च तत्र न रक्तं रूपं तत्कालावच्छेदेनैव ध्वंस-प्रागभावयोः रक्तत्वाव-च्छिन्नप्रतियोगिताकत्वस्वीकारेण तादृशविषयबाधात् तद्धर्म्मोप-लक्षिताभावांशे तत्कालत्वावच्छिन्नत्वावगाहिप्रत्ययस्य प्रमात्वं पुन-रिष्टमेव । न च तद्धर्म्मिनिष्ठध्वंसादौ तत्कालावच्छेदेन रक्तत्वाव-च्छिन्नप्रतियोगिताकत्वं कल्प्यते किं वा तत्कालावच्छेदेन तद्धर्म्मि-ण्येव रक्तत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावः कल्प्यत इत्यत्र विनिगमनाविरहात् ध्वंसाद्यधिकरणे अत्यन्ताभावसिद्धिर्निष्प्रत्यू-हैवेति वाच्यम् । ध्वंस-प्रागभावाधिकरणेऽत्यन्ताभावाकल्पने ध्वंसा-देरतिरिक्तात्यन्ताभावाकल्पनेन लाघवात् रक्तरूपात्यन्ताभावस्यैत-न्मते रक्तरूपध्वंसात्यन्ताभावसमनियततया तस्यैव ध्वंसात्यन्ताभाव-त्वात् । मैवम् । तत्तद्धर्म्मावच्छिन्नप्रतियोगिताकत्वस्याव्याप्यवृत्ति-त्वोपगमे विशेषाभावानामेवाधिकरणविशेषवृत्तित्वावच्छेदेन सामा-न्यधर्म्मावच्छिन्नप्रतियोगिताकत्वसम्भवात् अतिरिक्तसामान्याभावा-प्रसिद्धिप्रसङ्गः । एवमेकस्यैवाभावस्य चाधिकरणविशेषकाल-विशेषवृत्तित्वावच्छेदेन घटत्व-पटत्वादिरूपनानाधर्म्मावच्छिन्नप्रति-योगिताकत्वसम्भवेनाभावभेदविलोपप्रसङ्गः । एवं रक्तानधिक-रणकालावच्छेदेन रक्तध्वंसादेः रक्तत्वावच्छिन्नप्रतियोगिताकत्वो-

पगमे तत्समानाधिकरणतदसमनियतध्वंसान्तरस्य (१) तत्स-मानाधिकरणस्यैकत्वादेरेव वा तादृशकालावच्छेदेन तत्कल्पना-मादाय विनिगमनाविरहप्रसङ्गश्चेति ध्वंस-प्रागभावाधिकरणेऽत्य-न्ताभावकल्पनमेव न्याय्यम्। अथैतादृशयुक्त्या रक्तध्वंसादिमति तद-त्यन्ताभावसिद्धावपि रूपध्वंसादिमत्यां पृथिव्यां रूपत्वावच्छिन्ना-भावो निर्युक्तिक एवेति चेन्न, रूपोत्पत्तिद्वितीयादिक्षणे पुनस्तद-धिकरणे सामान्यसामग्रीबलाद्रूपान्तरोत्पत्तिवारणाय रूपं प्रति रूपत्वावच्छिन्नाभावस्य हेतुत्वं कल्पनीयम् एवञ्च उत्पत्तिकाले पाकाद्रूपनाशोत्पत्तिक्षणे च रूपत्वावच्छिन्नाभावास्वीकारे तदुत्तरं रूपानुत्पादप्रसङ्गः रूपोत्पादानन्तरं रूपसामान्यस्य पुनरुत्पाद-प्रसङ्गश्च प्रागभावहेतुतयापि दुर्व्वारः रूपवत्यपि पाकजभाविरूप-प्रागभावसत्त्वात्। नचैवमपि पृथिव्यां रूपात्यन्ताभावो निर्युक्तिकः यत्कालावच्छेदेन तत्र रूपात्यन्ताभावो भवता स्वीक्रियते तत्काला-वच्छेदेन रूपप्रागभावे रूपत्वावच्छिन्नप्रतियोगिताकत्वस्वीकारेणै-वोपपत्तिरिति वाच्यम्। दत्तोत्तरत्वात्। इदन्त्ववधेयम् उक्तयुक्त्या उत्पत्तिकालावच्छेदेन घटादौ रूपत्वावच्छिन्नाभावसिद्धावपि प्रलयकालावच्छेदेन परमाणौ तत्सत्त्वे मानाभावः, एवं रूपं प्रति रूपत्वावच्छिन्नाभावहेतुत्वमेव न कल्प्यते स्पर्शोत्पत्त्यनुरोधेनावश्य-कल्पनीयस्पर्शसामान्याभावस्य तद्धेतुतयैव रूपवति रूपान्तरा-पत्तेः शक्यवारणत्वात्, वायौ स्पर्शोत्पत्त्यनन्तरं स्पर्शोत्पत्तिवारणस्य स्पर्शं प्रति रूपाभावहेतुतया अशक्यत्वात् तत्र स्पर्शाभावहेतुताया-

(१) तत्समानाधिकरणतत्समनियतसंयोगविशेषादिध्वंसान्तरस्येति पा०।

आवश्यकत्वात्। न च रूपं प्रति स्पर्शाभावहेतुत्वे यत्र पाका-द्रूपसत्त्व एव स्पर्शनाशस्तत्र स्पर्शान्तरोत्पत्तिकाले रूपान्तरोत्पाद-प्रसङ्ग इति वाच्यम्। एकजातीयस्यैवाग्निसंयोगस्य रूप-रस-गन्ध-स्पर्शनाशकतया स्पर्शनाशकाले रूपनाशस्यावश्यकत्वादिति। ध्वंस-प्रागभावाधिकरणे सामयिकात्यन्ताभावानभ्युपगन्तृमते तादृशात्यन्ताभावो न तदनधिकरणेषु कल्प्यते अनन्ताधिकरणेषु तादृशाभावकल्पनामपेक्ष्य लाघवादेकैकेषु तद्धर्म्मावच्छिन्नवङ्गदेषु तद्धर्म्मावच्छिन्नप्रतियोगिताकत्वकल्पनयैवोपपत्तेरिति ध्येयम्। 'तत्सा मानाधिकरण्यं' प्रतियोगिसामानाधिकरण्यं, 'स्वविशिष्टेति, स्वं यत्राभावे प्रतियोगिसामानाधिकरण्यं ग्राह्यं स एव, 'हेत्वधि-करणावच्छेदेनेति हेतुतावच्छेदकसम्बन्धेन यद्धेतुतावच्छेदकाव-च्छिन्नाधिकरणं तत्सामान्यान्तर्भावेनेत्यर्थः, तेन वह्न्याद्यभावस्य धूमावयवाद्यवच्छेदेन द्रव्यं विशिष्टसत्त्वादित्यादौ द्रव्यत्वाद्यभावस्य गुणाद्यवच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिः। पर्व्वतादेः कालोपाधित्वानभ्युपगमे धूमवत्त्वप्रकारकप्रमाविशेष्य-त्वाभावस्य क्वचिदपि प्रतियोगिसामानाधिकरण्यस्योपपादयितु-मशक्यतया धूमवान् वह्नेरित्यादावतिव्याप्त्यप्रसक्तेर्दर्शितविवक्षायाः स्थलान्तरे प्रयोजनमाह, 'तेन गोत्वेति, 'तद्वति' गवादिमति, कालिकसम्बन्धेन गोत्वादिना गवादौ साध्ये प्रलयान्तर्भावेन व्यभि-चारिणि गोत्वादिहेतौ लक्षणघटकानां गोत्वाद्यवच्छिन्नाभावानां गवादिमति एतत्काले गवाद्यनधिकरणदेशावच्छेदेन महाकाले तादृशदेशावच्छेदेन प्रलयादिकालावच्छेदेन च वर्त्तमानतया प्रति-

योगिसामासाधिकरण्यमक्षतमेव, एवं दैशिकविशेषणताविशेषेण गवादिव्यापकप्रलयान्यत्वादेरभावोऽपि तेन सम्बन्धेन प्रलयान्यत्वादिमति महाकाले कालिकसम्बन्धेन वर्त्तमानतया प्रतियोगिसमानाधिकरण एव प्रतियोगिसामानाधिकरण्यघटकीभूताभावीयवृत्तौ सम्बन्धविशेषानिवेशादित्यतिव्याप्तिः स्यात्, निरुक्तविवक्षणे च स्वविशिष्टयावद्धेत्वधिकरणान्तर्गतप्रलयान्तर्भावेन तादृशाभावानां न प्रतियोगिसामानाधिकरण्यं तत्र प्रतियोगिनोऽवृत्तेरिति समुदायार्थः। गवादिव्यापकस्य चरमध्वंसादेरभावस्य योऽभावश्चरमध्वंसादिस्तस्य गवादिमति खण्डकाले न प्रतियोगिसामानाधिकरण्यमिति न तत्र तद्व्याप्तिरतो 'महाकाले वेत्युक्तं, महाकाले च कालिकसम्बन्धेन वृत्तेस्तथात्वमक्षतमेव। गोसाध्यकस्थले साध्यव्यापकतावच्छेदकजन्यद्रव्यत्व-प्रलयावृत्तित्वाद्यवच्छिन्नाभावमादायातिव्याप्तिवारणं न सम्भवतीति स्फुटीकरणाय तद्रूपावच्छिन्नसाध्यकस्थलेऽप्यतिव्याप्तिमाह, 'यत्र कालत्वमित्यादिना। अथैतादृशविवक्षापेक्षया लाघवात् प्रतियोगिसामानाधिकरण्यघटकाभावीयवृत्तौ दैशिकविशेषणताविशेषसम्बन्धावच्छिन्नत्वमेव निवेश्यतां तथा सति दैशिकविशेषणताविशेषसम्बन्धेन प्रलयान्यत्वादेरभावस्य प्रतियोगिसामान्याधिकरण्यविरहेणातिव्याप्त्युद्धारस्य शक्यत्वात्। न चैवं वह्निमान् धूमादित्यादौ कालिकसम्बन्धेन हेत्वधिकरणवृत्तेर्द्रव्यत्वत्वादिना द्रव्यत्वादेरभावस्य दैशिकविशेषणतया द्रव्यवृत्तित्वाभावादव्याप्तिरिति वाच्यम्। हेतुसामानाधिकरण्यशरीरेऽपि अभावीयवृत्तौ दैशिकविशेषण-

तासम्बन्धाच्छिन्नत्वस्यैव निवेशनीयत्वात् तावतापि लाघवान-
पायात्। न च दैशिकविशेषणताविशेषेण प्रतियोगिसामाना-
धिकरण्यनिवेशेऽपि उक्तस्थलेऽतिव्याप्तिस्तदवस्थैव प्रलयान्यत्वा-
भावस्य प्रलयमात्रवृत्तेरभावमात्राधिकरणकतया प्रलयात्मकाधि-
करणस्वरूपत्वात् तस्य च प्रलयान्यत्वरूपप्रतियोग्यधिकरणे पर-
माणौ वृत्तेरिति वाच्यम्। एवमपि प्रलयान्यकालत्वप्रकारक-
प्रमाविशेष्यत्वादेरभावस्य प्रलयातिरिक्तगगनादावपि वर्त्तमानस्य
प्रलयानात्मकतया प्रतियोगिसामानाधिकरण्यस्य दुरुपपादतया
अतिव्याप्त्यनवकाशात्। मैवम्। दैशिकविशेषणतया प्रतियोगि-
सामानाधिकरण्यनिवेशेऽपि दैशिकविशेषणतासम्बन्धेन प्रलया-
वृत्तिसाध्यके कालत्वादिहेतावतिव्याप्तिर्दुर्वारैव तत्र प्रलयमात्रस्य
व्यभिचारनिरूपकाधिकरणतया साध्यतावच्छेदकसम्बन्धेन साध्यं
प्रति व्यापकतावच्छेदिका यदभावप्रतियोगिता व्यापकताघटक-
सम्बन्धावच्छिन्नप्रतियोगिताकस्य तस्य प्रलयमात्रवृत्तितया प्रलया-
त्मकत्वान्निरुक्तरीत्यैव प्रतियोगिसमानाधिकरणत्वात् इतरसम्ब-
न्धावच्छिन्नाभावस्य प्रलयानात्मकत्वेऽपि प्रलयान्यवृत्तितया सुत-
रामेव प्रतियोगिसमानाधिकरणत्वादिति निरुक्तविवक्षणमाव-
श्यकम् एतदभिप्रेत्यैव प्रलयावृत्तिसाध्यकानुसरणं ग्रन्थकृत इति।
वस्तुतस्तु प्रलयादिमात्रवृत्तेरभावस्य प्रलयाद्यनात्मकत्वेऽपि दर्शि-
तस्थलेषूक्तविवक्षामन्तरेणातिव्याप्तिवारणमशक्यं प्रलयान्यत्वादेर-
भावस्यापि स्वप्रतियोगिनिष्ठव्यापकताघटकस्वरूपविशेषसम्बन्धेन
प्रलयात्मकनानाध्वंसान्तर्गतयत्किञ्चिद्ध्वंसवृत्तित्वविशिष्टस्वाभावरू-

पप्रतियोगिनोऽधिकरणे ध्वंसान्तरे स्वस्य प्रतियोगिसमानाधिकरणत्वात् यत्किञ्चिद्ध्वंसान्यत्वाभावस्य यत्किञ्चिद्ध्वंसमात्रवृत्तेस्तद्ध्वंसवृत्तित्वविशिष्टस्वाभावाधिकरणे ध्वंसान्तरेऽसत्त्वेऽपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य स्वानधिकरणध्वंसावच्छेदेन स्वाधिकरणेऽपि सत्त्वेन तत्रैव तत्प्रतियोगिसमानाधिकरणत्वात् प्रलयान्यविषयकत्वोपलक्षितप्रमाया विषयतासम्बन्धेन केवलान्वयितया तादृशसम्बन्धावच्छिन्नतादृशप्रमाभावाप्रसिद्धेः प्रलयान्यविषयकत्वविशिष्टप्रमाभावस्य प्रलये प्रसिद्धावपि प्रलय-तदन्यविषयकप्रमारूपप्रतियोगिसमानाधिकरणत्वात् प्रलयाविषयकप्रमाभावस्य च जन्यप्रमामात्रप्रतियोगिकतया कालिकाव्याप्यवृत्तित्वेन प्रतियोगिमत्यपि तच्छून्यकालावच्छेदेन वृत्तेस्तादृशाभावमादायाप्यतिव्याप्तिवारणासम्भवात् प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रतियोगिभेदेन भिन्नतया प्रलयान्यभेदप्रतियोगिताया न तादात्म्येन साध्यव्यापकतायामवच्छेदकत्वमिति तादृशभेदस्याधिकरणे प्रलयान्यरूपप्रतियोगिनस्तेन सम्बन्धेनासत्त्वेऽपि नातिव्याप्त्युद्धारः (१)। उक्तविवक्षणे तु प्रलये प्रलयाविषयकप्रमाभावस्य (२) विषयतया प्रतियोगिसामानाधिकरण्यविरहादतिव्याप्तिवारणसम्भवः। एवमुक्तरीत्या घटत्वाभाववान्मेयत्वा-

---

(१) प्रतियोगितायाः इत्यादिः नातिव्याप्त्युद्धार इत्यन्तः पाठः कस्मिंश्चिदादर्शपुस्तके नास्ति।

(२) प्रलये प्रलयाविशेष्यकप्रलयान्यत्वप्रकारकयावत्प्रलयान्यविशेष्यकप्रमाभावस्येति पा०।

दित्यादावपि व्यावृत्तिर्बोध्या । 'हेतुमति प्रलय इति हेतुमत्-सामान्यान्तर्गतप्रलयान्तर्भाविनेत्यर्थः, 'तत्सामानाधिकरण्याभावात्' गवादिरूपप्रतियोगिसामानाधिकरण्याभावात्, अत्र 'गवादेरभाव-स्येत्यनुषज्यते । हेतुमति स्ववैशिष्ट्यदलनिवेशनस्य फलमाह, 'स्व-विशिष्टेतीति, साम्प्रदायिकैर्द्रव्ये संयोगसामान्याभावानभ्युपगमात् सद्धेतुत्वार्थं कपिसंयोगाभावपर्य्यन्तानुधावनं, 'सकलहेत्वधिकरणा-वृत्तित्वेऽपीति, नित्यगुणादौ कपिसंयोगासत्त्वादिति भावः, एतेन हेत्वधिकरणसामान्यान्तर्भावेन प्रतियोगिसामानाधिकरण्यं नास्ती-तिसूचितम् । 'नाव्याप्तिरिति, नित्यगुणादेः स्वविशिष्टत्वाभावात्तद-न्तर्भाविनातथात्वेऽपि स्वविशिष्टहेत्वधिकरणान्तर्भावेन तथात्वस्या-क्षतत्वात् । अत्रोक्तयुक्त्या व्यापकताघटकाभावे प्रतियोगिवैयधिक-रण्यस्य निवेशनीयतया साध्यवद्यत्किञ्चिद्व्यक्त्यसम्बद्धस्वविशिष्टसा-मान्यकभिन्नत्वरूपव्यापकतावच्छेदकत्वस्य वा निवेशनीयतया कपि-संयोगाभावादिनिष्ठप्रतियोगिताया अपि व्यापकतावच्छेदकता-निर्व्वाह इत्यभिप्रेत्य कपिसंयोगाद्यात्मकाभावमादायाव्याप्तिरा-शङ्किता अन्यथा पुनः सत्तावान् जातेरित्यादौ काले कालिक-सम्बन्धेन हेतुसमानाधिकरणानां सत्तात्वाद्यवच्छिन्नाभावानां हेत्व-धिकरणसामान्यान्तर्गतगगनाद्यन्तर्भावेन प्रतियोगिसामानाधि-करण्यविरहात् प्रसक्ताव्याप्तेर्व्वारणाय 'स्वविशिष्टेतिविशेषणमा-वश्यकमिति, आदिपदग्राह्यमपि तादृशस्थलमेवेति बोध्यम् । अत्र च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगि-ताका यावन्तोऽभावाः प्रत्येकं हेतुतावच्छेदकविशिष्टाधिकरण-

सामान्यान्तर्भावेन तत्प्रतियोगिसामानाधिकरण्यं तादृशा यावन्तो-ऽभावा यद्रूपविशिष्टाधिकरणत्वव्यापकतावच्छेदकप्रतियोगिताका-स्तद्रूपवत्त्वमित्यादिकं तादृशाभावे हेतुसामानाधिकरण्यविशे-षणाघटितं हेत्वधिकरणे स्वविशिष्टत्वविशेषणाघटितञ्च व्यधि-करणधर्म्मावच्छिन्नाभावघटितलघुलक्षणं सम्भवतीति बोध्यम्। ननु धूमवान् वह्नेरित्यादावतिव्याप्तिर्धूमाभावादेरप्ययोगोलकादौ गोत्वाद्यभावरूपप्रतियोगिसमानाधिकरणत्वात् गोत्वाद्यभावस्य तत्प्रतियोगित्वञ्च धूमाद्यभावे जलवृत्तित्वविशिष्टगोत्वाभावो-नास्तीति प्रतीतिनियामकाभावस्याभावाधिकरणकाभावप्रतियोगि-काभावतया अधिकरणीभूतधूमाभावस्वरूपत्वात् जलवृत्तित्वविशि-ष्टगोत्वाभावस्य शुद्धविशेष्यानतिरिक्तत्वात् इत्याशङ्क्य जलवृत्ति-त्वविशिष्टगोत्वाभावाभावस्य धूमाभावातिरिक्तत्वाभावस्वरूपतां प्रदर्शयंस्तत्स्वरूपतां प्रतिक्षिपति, 'जलेत्यादि'। न च धूमाभावस्य स्वप्रतियोगिनिष्ठव्यापकताघटकयावत्सम्बन्धान्तर्गतसंयोगसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहात् कथमतिव्याप्तिशङ्केति वाच्यम्। जलवृत्तित्वाविशिष्टगोत्वाभाव-द्रव्यान्यतराभावस्याप्युक्तयुक्त्या धूमा-भावस्वरूपतासम्भवात् संयोगसम्बन्धेन द्रव्यात्मकप्रतियोगिनैव सामा-नाधिकरण्यसत्त्वात्। न चैवं जलवृत्तिद्रव्यमेव तत्प्रतियोगि तस्यैव प्रतियोगितावच्छेदकजलवृत्तित्ववैशिष्ट्याक्रान्तत्वात् तस्य च धूमाभा-वविशिष्टसकलवह्निमति वृत्तौ मानाभावान्नातिव्याप्तिप्रसक्तिः(१)।

(१) नातिव्याप्तिः प्रसज्यत इति।

यदि च जलवृत्तित्ववैशिष्ट्यम् अन्यतरत्वघटकीभूतभेदप्रतियोगिनि गोत्वाभावत्वावच्छिन्न एव विशेषणं न त्वन्यतरत्वावच्छिन्नविशेषणतया प्रतियोगितावच्छेदकमिति जलवृत्तिद्रव्यस्यापि तत्प्रतियोगित्वमित्युच्यते, तदा तादृशाभावस्य विशिष्टाभावानात्मकतया अन्यतरत्वरूपप्रतियोगितावच्छेदकविशिष्टगोत्वाभावाधिकरणं यो धूमाद्यभावस्तदधिकरणकत्वानुपपत्तिरिति वाच्यम् । जलवृत्तिद्रव्यं धूमाभावविशिष्टयादृशहेत्वधिकरणे नियमतो वर्त्तते तादृशव्यभिचारिहेतुकस्थल एव धूमाभावात्मकनिरुक्तविशिष्टाभावप्रतियोगिद्रव्यसामानाधिकरण्यमादायातिव्याप्तिमाशङ्क्य 'जलवृत्तीत्यादिग्रन्थस्यावतारणीयत्वात् । न चैवं तादृशान्यतराभावस्यैव धूमाभावस्वरूपताप्रतिक्षेप उचित इति 'विशिष्टगोत्वाभावस्याभाव-इति ग्रन्थासङ्गतिर्दुर्व्वारैवेति वाच्यम् । एतादृशग्रन्थस्यापि गोत्वाभावप्रतियोगिकाभावत्वेन रूपेण जलवृत्तित्वविशिष्टतादृशान्यतरत्वावच्छिन्नप्रतियोगिताकाभावपरत्वात् । न चैवमप्ययोगोलकभेदाभावस्यायोगोलकत्वादिरूपभावात्मकस्य स्वनिष्ठजलवृत्तित्वविशिष्टगोत्वाभावाभावस्वरूपताविरहात् तस्य प्रतियोगिसामानाधिकरण्यं न घटत इत्यतिव्याप्त्यप्रसक्तिः साध्यतावच्छेदकसम्बन्धेन व्यापकताया लक्षणघटकत्वं प्रागेव दूषितमतो नायोगोलकभेदाद्यभावस्य लक्षणाघटकत्वसम्भव इति वाच्यम् । अयोगोलकभेदाभावादेरपि पूर्व्वक्षणवृत्तित्वादिविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसम्भवात् । अयोगोलकभिन्नभेदस्वरूपायोगोलकत्वनिरूपितायोगोलकभिन्ननिष्ठप्रतियोगितायास्तादात्म्यसम्बन्धेन साध्य-

व्यापकतायामवच्छेदकत्वं प्रतियोगितायाः प्रतियोगिस्वरूपता-मते न सम्भवतीति अयोगोलकभिन्नात्मकतत्प्रतियोगिनस्तादात्म्येनायोगोलकेऽसत्त्वेऽपि नातिव्याप्त्युद्धारः एवञ्च धूमसाध्यकस्थले धूमसामान्याभावीयप्रतियोगिताया धूमसामान्यव्यापकतावच्छेदकत्वासम्भवेऽपि तत्तद्धूमव्यक्तिसाध्यकस्थले तादृशाभावस्य लक्षणघटकतया तदभिप्रायेणैव तस्य गोत्वाभावप्रतियोगित्वनिराकरणं तत्तद्धूमव्यक्तेरप्यनेकाधिकरणवृत्तितया नायोगोलकभिन्नस्य तादात्म्येन तत्साध्यव्यापकत्वमिति। न चैवं धूमाभावस्य गोत्वाभावाद्यप्रतियोगिकत्वेऽपि पूर्व्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगि-सामानाधिकरण्यसत्त्वादतिव्याप्तितादवस्थ्यमिति वाच्यम्। तादृश-प्रतियोगिना स्वप्रतियोगिनिष्ठव्यापकताघटकयावत्सम्बन्धान्तर्गत-संयोगादिना सामानाधिकरण्यविरहात् घटत्वाभाववान् प्रमेयत्वादित्यादावपि घटत्वाभावादिप्रकारकप्रमाया अभावस्य याव-द्व्यापकताघटकसम्बन्धान्तर्गतविशेषतासम्बन्धेन प्रतियोगिसामा-नाधिकरण्यविरहेणातिव्याप्त्यनवकाशात्। न चैवं जलवृत्तित्व-विशिष्टगोत्वाभाव-द्रव्यान्यतराभावस्य धूमाद्यभावस्वरूपतया संयोगेन प्रतियोगिसामानाधिकरण्यसम्भवेन धूमादिप्रकारकप्रमा-भावस्य यावद्व्यापकताघटकसम्बन्धान्तर्गतविशेषतासम्बन्धेन प्रति-योगिसामानाधिकरण्याभावात् धूमवान् वह्नेरित्यादावतिव्याप्त्य-प्रसक्त्या तादृशाभावस्य धूमाभावस्वरूपताप्रतिक्षेपोऽयुक्त इति वाच्यम्। तादृशाभावस्य तत्स्वरूपत्वे तुल्ययुक्त्या धूमादिप्रकारक-प्रमाभावनिष्ठस्य जलादिवृत्तित्वविशिष्टगोत्वाभाव-द्रव्यत्वप्रकारक-

प्रमान्यतराभावस्य तत्स्वरूपतया द्रव्यत्वप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन तयैव समं विशिष्यतासम्बन्धेन तादृशाभावस्य सामानाधिकरण्यसत्त्वादतिव्याप्तिप्रसक्तेरिति। नन्वेवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिर्दुर्वारैव धूमाद्यभावस्य धूमत्वादिना प्रमेयसामान्याभावसमनियतत्वेन तदभिन्नत्वोपगमात् प्रमेयमात्रस्यैव तत्प्रतियोगित्वात्। यदि च धूमत्वादिना प्रमेयं नास्तीत्यादिप्रतीतौ धूममात्रस्यैव प्रतियोगित्वग्रहः न तु प्रमेयान्तरस्य, अथवा प्रतियोगिसामानाधिकरण्यशरीरे न्यूनवृत्तिसमानाधिकरणधर्म्मानवच्छिन्नप्रतियोगिता निवेशनीया यावत्प्रमेयनिष्ठप्रतियोगिता च तथाविधधूमत्वाद्यवच्छिन्नैव तादृशधर्म्मानवच्छिन्ना च धूमादिमात्रवृत्तिप्रतियोगितैव तदाश्रयसामानाधिकरण्यञ्च नायोगोलकाद्यन्तर्भावेनेति मन्यते, तथापि धूमाभावस्य वह्निधूमोभयत्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन वह्नेरपि तदभावप्रतियोगितया अयोगोलकान्यत्वाभावस्यायोगोलकान्यवृत्तित्वविशिष्टाकाशाभावाभावसमनियततया तदभिन्नत्वेनाकाशाभावस्यापि तत्प्रतियोगितया हेतुसमानाधिकरणधूमवत्त्वप्रकारकप्रमाभावस्य धूमवद्विशेष्यकत्वविशिष्टद्रव्यत्वादिप्रकारकप्रमाभावसमनियततया द्रव्यत्वादिप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन धूमभेदस्य धूमत्व-समवेतोभयत्वावच्छिन्नाभावसमनियतत्वेन समवेतमात्रस्यैव तत्प्रतियोगितया हेतुसमानाधिकरणतादृशाभावानां स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन दर्शितप्रतियोगिसामानाधिकरण्यमन्तत्तमेवेत्यतिव्याप्तिः।

तत्त्वचिन्तामणि-दीधितिः ।

**यत्सामानाधिकरण्यानां साध्यतावच्छेदकावच्छिन्न-व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकानां याव-दभावानां प्रतियोगितावच्छेदकावच्छिन्नसामानाधि-करण्यं तत्त्वं वा तत्, ज्ञेयत्वत्वादिना वाच्यत्वादीना-मभावः सुलभ एव । शेषं दर्शितदिशावसेयमत आह, प्रतियोग्यवृत्तिश्चेति ।**

---

गादाधरी-विवृतिः ।

अथ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका या या प्रति-योगिता तन्निरूपकाभावानां स्वविशिष्टयावद्धेत्वधिकरणावच्छेदेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयमिति नाति-व्याप्तिरिति चेत्, तर्हि तादृशी या या प्रतियोगिता तत्तदाश्रय-सामानाधिकरण्यं यत्र क्वचन यावदधिकरणान्तर्भावेन तत्त्वमित्ये-तावतैव सामञ्जस्येऽभावे यावत्त्वस्य, तत्तत्प्रतियोगितानिरूपकत्वस्य हेतुसामानाधिकरण्यविशेषणस्य, हेत्वधिकरणे च स्वविशिष्टत्व-विशेषणस्य वैयर्थ्यप्रसङ्गः, एवं सर्व्वत्र हेतुसमानाधिकरण-मुभयत्वावच्छिन्नप्रतियोगिताकसाध्याद्यभावमादाय लक्षणसमन्वय-सम्भवाद्व्यधिकरणधर्म्मावच्छिन्नाभावस्याप्रामाणिकत्वेऽपि क्षति-विरहेण एतादृशव्याप्तिलक्षणाशङ्कायां 'प्रतियोग्यवृत्तिश्चेत्यादिना तादृशाभावखण्डनस्यासङ्गत्यापत्तिः एवं जलवृत्तित्वविशिष्टगोत्वा-

भावाभावस्य जलत्वाभावस्वरूपतावत् धूमाभावाधिकरणकधूमवद्वृत्तित्वविशिष्टगोत्वाभाव-द्रव्यान्यतराभावस्य धूमाभावस्वरूपतया व्यापकताघटकयावत्सम्बन्धेन तादृशाभावस्य हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्यसत्त्वाद्धूमवान् वह्नेरित्यादावतिव्याप्तिश्च (१) इत्यतो लक्षणान्तरमाह, 'यत्समानाधिकरणानामिति, अत्रापि यत्तत्पदयोः पूर्व्ववत् यत्तद्धर्म्मावच्छिन्नपरता बोध्या, वह्निमान् धूमादित्यादौ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकधर्म्मावच्छिन्नप्रतियोगिताकाभावा वह्नित्वादिना घटाद्यभावा एव तेषाञ्च स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन वह्नित्वादिरूपप्रतियोगितावच्छेदकावच्छिन्नसमानाधिकरणतया लक्षणसमन्वयः। अत्रापि प्रतियोगिसामानाधिकरण्यनिवेशे उक्तक्रमेण धूमवान् वह्नेरित्यादावतिव्याप्तिरतः प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशः, तथाच धूमाद्यभावानां वह्नि-धूमोभयत्वाद्यवच्छिन्नप्रतियोगिताश्रयवह्न्यादिना सामानाधिकरण्यसत्त्वेऽपि प्रतियोगितावच्छेदकीभूततादृशोभयत्वावच्छिन्नसामानाधिकरण्याभावान्नातिव्याप्तिः, द्रव्यत्वेन धूमो नास्तीत्यादिप्रतीतौ च द्रव्यत्वादेः प्रतियोगितावच्छेदकत्वं न भासते अपि तु धूमत्वादेरेव द्रव्यत्वादेस्तु तृतीयोल्लिखितवैशिष्ट्यमात्रं धूमादौ भासते इत्युपेयते अतस्तादृशप्रतीतिविषयाभावस्य धूमाभावादिसमनियततया तत्प्रतियोगितावच्छेदकं द्रव्यत्वादिकमपि धूमाद्यभावप्रतियोगितावच्छेदकमिति प्रतियोगितावच्छेदकावच्छिन्नसामानाधि-

(१) एवमित्यादि अतिव्याप्तिश्चेत्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति।

करत्वविवक्षणेऽप्यतिव्याप्तेर्दुर्व्वारत्वाशङ्कायाः नावकाशः। एतेन धूमकालावच्छिन्नधूमवद्वृत्तित्वविशिष्टस्य वह्नित्वरूपेण योऽभावस्तस्य धूमाभावसमनियततया वह्नित्वमपि धूमाभावप्रतियोगितावच्छेदकमित्यपास्तम्। वह्नित्वेन तादृशधूमवद्वृत्तित्वविशिष्टं नास्तीति प्रतीतौ तादृशधूमवद्वृत्तित्ववैशिष्ट्यस्यैव प्रतियोगितावच्छेदकत्वावगाहनोपगमात् अन्यथा धूमवद्वृत्तिवह्निमति धूमशून्ये वह्नित्वरूपप्रतियोगितावच्छेदकविशिष्टवह्निरूपप्रतियोगिसत्त्वेन तादृशप्रतीत्यनुदयप्रसङ्गात्। अस्तु वा तादृशवैशिष्ट्यसहितस्य वह्नित्वस्य तथात्वं तावतापि न क्षतिः प्रतियोगितावच्छेदकपदस्य प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणपरत्वात्। अथैवमपि घटभिन्नत्वेन धूम-घटान्यतरन्नास्तीत्यत्र घट-धूमान्यतरत्वमात्रस्य न प्रतियोगितावच्छेदकत्वभानं धूमशून्ये घटवति तादृशप्रतीत्यनुपपत्तेः। नापि घटभिन्नत्वसहितस्य तस्य गौरवात्, किन्तु घटभिन्नत्वमात्रस्यैव, एवञ्च तादृशाभावस्य धूमाभावसमनियततया धूमाभावस्यापि घटभिन्नत्वं प्रतियोगितावच्छेदकम्, एवं भेदत्वेनायोगोलकभेद-घटात्यन्ताभावान्यतराभावस्यायोगोलकभेदत्वावच्छिन्नाभावसमनियततया भेदत्वमप्ययोगोलकभेदाभावप्रतियोगितावच्छेदकम् (१) एवं द्रव्यत्वभिन्नत्वेन द्रव्यत्व-धूमत्वान्यतराभावस्य धूमभेदसमनियततया द्रव्यत्वभिन्नत्वमपि धूमभेदप्रतियोगिता-

---

(१) तादृशान्यतराभावस्य तादृशान्यतरत्वमात्रस्य न प्रतियोगितावच्छेदकत्वभानम् अयोगोलकभेदशून्ये घटात्यन्ताभाववति अयोगोलके तादृशप्रतीत्यनुपपत्तेः, नाप्ययोगोलकभेदसहितस्य गौरवात् किन्तु भेदत्वमात्रस्यैवेति भावः।

वच्छेदकम्, एवम् इच्छान्यत्वेन इच्छायोगोलकाविषयकज्ञानान्यतराभावस्यायोगोलकाविषयकज्ञानाभावसमनियततया इच्छान्यत्वमपि तादृशज्ञानाभावप्रतियोगितावच्छेदकं तादृशधर्म्मावच्छिन्नानाञ्चायोगोलकादावपि सत्त्वादतिव्याप्तिस्तदवस्थैवेति चेत्तर्हि, प्रतियोगितावच्छेदकत्वमनेन प्रतियोगितायाः न्यूनवृत्तिभिन्नं सद्यदवच्छेदकं तदेव विवक्षणीयं, न्यूनवृत्तित्वञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति स्वसमानाधिकरणत्वं, तद्भिन्नत्वञ्च व्यधिकरणधर्म्मसाधारणमपि, घट-धूमान्यतरादिनिष्ठप्रतियोगितायाश्च न्यूनवृत्त्येव घटभिन्नत्वादिकम् । न च वह्नित्वेन प्रमेयं नास्तीत्यत्र प्रमेयसामान्यवृत्तित्वेन या वह्नित्वावच्छिन्नप्रतियोगिता प्रतीयते वह्निर्नास्तीत्यत्रापि वह्निवृत्तितया सैव प्रतियोगिता प्रतीयते, इत्युपेयते एकधर्म्मावच्छिन्नविभिन्नप्रतियोगिताकल्पने गौरवात्, तथाच कालिकादिसम्बन्धेन हेतुसमानाधिकरणवह्नित्वाद्यवच्छिन्नवह्न्याद्यभावप्रतियोगितायाः न्यूनवृत्तिभिन्नावच्छेदकाप्रसिद्ध्या अव्याप्तिरिति वाच्यम् । वह्नित्वेन प्रमेयं नास्तीति प्रतीतौ प्रमेयत्वविशेषितस्य वह्नेरेव प्रतियोगित्वं भासते नान्यस्येत्यभ्युपगमात् तादृशाभावप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वस्यैवासिद्धेः । अथवा प्रतियोगितावच्छेदकपदं प्रतियोगितायाः अनतिरिक्तवृत्ति सद्यदवच्छेदकं तत्परं अनतिरिक्तवृत्तित्वञ्च स्वव्यापकतत्कान्यत्व-तत्सामानाधिकरण्योभयाभाववत्त्वं (१) तथा-

(१) स्वम् अवच्छेदकत्वेनाभिमतं तथाच स्वव्यापकप्रतियोगिताकान्यत्व-प्रतियोगितासामानाधिकरण्योभयाभाववत्त्वमित्यर्थः ।

त्वञ्च व्यधिकरणधर्म्मसाधारणमपि, घट-धूमान्यतरादिनिष्ठप्रतियो-गितयाश्चातिरिक्तवृत्त्येव घटभिन्नत्वादिकं, प्रतियोगितायाः यावद्-घटभिन्नादिसाधारण्याप्रसक्तेः वह्नित्वाद्यवच्छिन्नप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वेऽपि तदनतिरिक्तवृत्त्यवच्छेदकं वह्नित्वादिक-मेव स्वव्यापकतत्कान्यत्वस्याप्रवृत्तौ प्रसिद्धत्वादिति नानुपपत्तिगन्धो-ऽपि। प्रतियोगितायाः स्वन्यूनवृत्तिभिन्नत्वं सत् यदवच्छेदकं तदव-च्छिन्नसामानाधिकरण्यं विवक्षितं, न्यूनवृत्तित्वञ्च सामानाधिकर-ण्यघटितमिति व्यधिकरणधर्म्मसंग्रहः, तत्प्रतियोगितासमानाधि-करणतत्प्रतियोगितानिरूपकाभाववद्वृत्तितावच्छेदकं यत् तदन्य-प्रतियोगितावच्छेदकं वा निवेश्यम्। एतल्लक्षणे साध्यतावच्छेदका-वच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावनिवेशे वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाभावसमनियतत्वेन घटत्वादिना वह्न्याद्यभावस्य हेत्वधिकरणावच्छेदेन वह्न्यादिरूपप्रतियोगि-सामानाधिकरण्यसम्भवेऽपि वह्नि-घटोभयत्वाद्यवच्छिन्नाभावस्यापि तथाविधतया तस्य च प्रतियोगितावच्छेदकावच्छिन्नसामानाधि-करण्याभावेनासम्भव इत्यतोव्यापकतावच्छेदकरूपावच्छिन्नप्रति-योगिताकत्वमुक्तम् अतएव व्यधिकरणधर्म्मावच्छिन्नाभावानभ्युपगमे हेतुसमानाधिकरणसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरू-पावच्छिन्नाभावस्याप्रसिद्ध्या असम्भवः। अयमात्मा ज्ञानादित्यादौ केवलान्वयिसाध्यके चाव्याप्तिर्वा भवतीत्यभिप्रायकतया प्रतियोग्य-वृत्तिश्चेत्यादिग्रन्थसङ्गतिः। न चायमात्मा ज्ञानादित्यादौ पूर्व्वक्षण-वृत्तित्वविशिष्टात्मत्वत्वादेरात्मत्वादिव्यापकतावच्छेदकतया तद-

वच्छिन्नाभावस्योत्तरक्षणावच्छेदेन हेतुसमानाधिकरणतया इदं वाच्यं ज्ञेयत्वादित्यादावपि एतत्क्षणान्यक्षणवृत्तित्वविशिष्टवाच्यत्वादेः(१) विषयतासम्बन्धेन जन्यज्ञानत्व-विश्वविषयकजन्यज्ञाननिष्ठतद्व्यक्तित्वादेश्च साध्यव्यापकतावच्छेदकतया तदवच्छिन्नाभावस्य तत्क्षणावच्छेदेन प्रलयाद्यवच्छेदेन च हेतुसमानाधिकरणतया च व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि न तादृशाभावाप्रसिद्धिरिति वाच्यम्। प्रतियोगिवैयधिकरण्याघटितव्यापकताया एव निवेशनीयतया निरुक्तधर्मावच्छिन्नाभावानामपि साध्यवति सत्त्वेन तादृशधर्माणां व्यापकतावच्छेदकत्वासम्भवात्। न च साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव किन्न निवेश्यते प्रमेयसाध्यकस्थले संयोग-समवायादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रमेयत्वादिनिष्ठप्रतियोगितावच्छेदकताकाभावमादाय लक्षणसमन्वयसम्भवादिति वाच्यम्। तथा सति लघुरूपसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वेन तद्रूपावच्छिन्नसाध्यके तथाविधाभावाप्रसिद्ध्या अव्याप्त्यापत्तेः। अत्र च ज्ञानवानात्म-महाकालान्यतरत्वादित्यादौ अतिव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेन व्यापकत्वं तेनैव सम्बन्धेन प्रतियोगिसामानाधिकरण्यं विवक्षणीयं, महाकालान्यत्वविशिष्टघटादि-

(१) पूर्वक्षणवृत्तित्वविशिष्टवाच्यत्वत्वादेः पूर्वक्षणवृत्तित्वविशिष्टवाच्यत्वत्वावच्छिन्नानधिकरणपूर्वक्षणावृत्तिपदार्थवन्निष्ठाभावप्रतियोगितावच्छेदकतया न व्यापकतावच्छेदकत्वम् अतएव तत्क्षणान्येति, तथाच क्षणिकपदार्थाप्रसिद्ध्या तदवच्छिन्नानधिकरणत्वं न कस्यचिदपीति न तदवच्छिन्नाभावस्य व्यापकत्वघटकतेति भावः।

साध्यके कालत्वादेर्व्यभिचारित्वेऽपि तत्र हेतुसमानाधिकरणस्य महाकालान्यत्वविशिष्टघटाद्यभावस्य प्रतियोगितावच्छेदकविशिष्ट-सामानाधिकरण्याभावेनातिव्याप्त्यभावात्, तादात्म्यसम्बन्धेन प्रमेयसाध्यकस्थले तादृशसम्बन्धेन साध्यं प्रति तादृशसम्बन्धेन व्यापकतायामवच्छेदकीभूतो यः प्रमेयत्वादिरूपकेवलान्वयिधर्म्मस्तदवच्छिन्नस्य संयोग-समवाय-विषयितादिसम्बन्धावच्छिन्नाभावमादायैव लक्षणसमन्वयसम्भवात्, अभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रयोजनविरहेणानिवेशात् तन्निवेशेऽपि व्यधिकरणसमवायित्वाद्यवच्छिन्नप्रतियोगितावच्छेदकताकप्रमेयत्वादिमद्भेदमादाय लक्षणसमन्वयसम्भवात् 'समवायितया वाच्यत्ववद्भेदोऽपि द्रष्टव्यः' इति मिश्रोक्तेः तादृशभेदस्यापि सौन्दड़सम्मतत्वादिति केचित्, तदसत्, घटत्वाभाववान् प्रमेयत्वादित्यादौ पूर्व्वोक्तदिशा अतिव्याप्तेः। स्वप्रतियोगितावच्छेदकावच्छिन्नव्यापकताघटकयावत्सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं विशेषणमपि न सत्, तथा सति (१) इदं वाच्यं ज्ञेयत्वादित्यादौ (२) विषयिता-संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावमादाय व्यधिकरणधर्म्मावच्छिन्नाभावानभ्युपगमेऽपि लक्षणसामञ्जस्यात् 'प्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासङ्गतेः। एतेन विषयतासम्बन्धेन व्यापकता तेन सम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्न-

(१) स्वप्रतियोगितावच्छेदकावच्छिन्नेत्यादिः तथा सतीत्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति।

(२) कथञ्चित् तद्ग्रावर्त्तनेऽपि इदं वाच्यं ज्ञेयत्वादित्यादाविति पा०।

सामानाधिकरण्यं विवक्षणीयं, साध्यवत्त्वप्रकारकप्रमात्वाद्यव-च्छिन्नाभावमादाय सर्व्वत्र लक्षणसङ्गमनमतिव्याप्तिनिरासश्चेत्यपि निरस्तं, 'ज्ञेयत्वत्वादिना वाच्यत्वादीनामभावः सुलभ इत्यतादृश-ग्रन्थासङ्गतेश्च, ज्ञेयत्वस्य ज्ञानविषयतात्मकस्य विषयतासम्बन्धेना-व्यापकत्वात्, किन्तु स्वप्रतियोगितावच्छेदकसम्बन्धेन व्यापकत्वं तेनैव च प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यं विवक्ष-णीयं व्यभिचारिणि साध्याद्यभावस्य किञ्चिद्विशिष्टस्वाभावनिष्ठ-प्रतियोगितावच्छेदकविशेषणताविशेषेण तादृशाभावत्वरूपप्रतियो-गितावच्छेदकावच्छिन्नसामानाधिकरण्येऽपि तदवच्छिन्नभावसा-मानाधिकरण्यासम्भवान्नातिव्याप्तिः । किञ्चिद्विशिष्टस्य स्वस्य योऽ-भावः सामानाधिकरण्यसम्बन्धेन तद्विशिष्टस्याभावश्च विशिष्टस्वस-मनियतोऽपि स्वस्मादतिरिक्त एव अभावमात्रप्रतियोगिकाभावस्यैव तदभावप्रतियोगिरूपतायाः सिद्धान्तसिद्धत्वात् । अतो धूमाद्य-भावस्य सामानाधिकरण्यसम्बन्धेन ह्रदादिवृत्तित्वविशिष्टधूमाद्य-भावाभावविशिष्टत्वावच्छिन्नाभावसामानाधिकरण्येऽपि न क्षतिः। वस्तुतस्तु प्रतियोगितावच्छेदकावच्छिन्ने भावत्वविशेषणमुपेक्ष्य प्रति-योगितावच्छेदके अभावावृत्तित्वं निवेशनीयं तादृशाभावविशिष्ट-त्वञ्च (१) अभावसाधारणमिति न दोषः (२) यावदभावानामित्य-त्राप्यभावपदं भावभिन्नपरम्, अतः कालिकादिसम्बन्धेन हेतु-समानाधिकरणस्य वह्न्यादिव्यापकतावच्छेदकह्रदत्वाभावत्वाद्य-

(१) सामानाधिकरण्यसम्बन्धेन ह्रदवृत्तित्वविशिष्टधूमाभावविशिष्टत्वञ्चेत्यर्थः।
(२) धूमवान् वह्नेरित्यादौ नातिव्याप्तिरित्यर्थः।

वच्छिन्नप्रतियोगिताकस्य ह्रदत्वादेः स्वप्रतियोगितावच्छेदकाव-
च्छिन्नभावसामानाधिकरण्यासम्भवेऽपि न क्षतिः। न च ह्रद-
त्वाभावाभावस्य ह्रदत्वाभावप्रकारकप्रमाविषयत्वाभावसमनियत-
तया स्वप्रतियोगितावच्छेदकताटृशप्रमाविषयत्वत्वावच्छिन्नाभाव-
सामानाधिकरण्यमस्त्येवेति वाच्यम्। तस्य भावतया भिन्नत्वात्।
एवं सति कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगात्या-
न्तकाभावस्य लक्षणाघटकत्वेऽपि विवक्षणीयस्वविशिष्टेत्यस्य सत्ता-
वान् जातेरित्यादौ सार्थकता पूर्व्वोक्तदिशावसेया। न च भावभि-
न्नाभावविवक्षणेऽपि अयमात्मा ज्ञानादित्यादौ दैशिकविशेषणतया
हेतुसमानाधिकरणस्य साध्यव्यापकतावच्छेदकीभूतकालिकसम्ब-
न्धावच्छिन्नप्रतियोगिताकाशाभावाभावत्वाद्यवच्छिन्नप्रतियोगिता--
कस्याकाशाभावादेः स्वप्रतियोगितावच्छेदकावच्छिन्नभावसामा-
नाधिकरण्यासम्भवाल्लक्षणसमन्वयासम्भव इति वाच्यम्। आकाशा-
भावीयताटृशाभावत्वस्य दैशिकविशेषणतया साध्यवद्वृत्तेराकाशा-
भावस्य प्रतियोगितावच्छेदकतया साध्यव्यापकतावच्छेदकत्व-
विरहेण तदवच्छिन्नाभावस्य लक्षणाघटकत्वात्। अस्तु वा व्यापक-
तावच्छेदकरूपांश एव भाववृत्तित्वविशेषणं, इदं वाच्यं ज्ञेयत्वादि-
त्यादौ च व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्य-
भावस्य प्रतियोगितावच्छेदकं न प्रतियोगितावच्छेदकसम्बन्ध-
घटितव्यापकतावच्छेदकमतस्ताटृशाभावस्य न लक्षणघटकतेति
नोक्तप्रतियोग्यवृत्तिश्चेत्यादिग्रन्थासङ्गतिरिति। न च प्रतियोगि-
तावच्छेदकसम्बन्धेन व्यापकताविवक्षणेऽपि इदं वाच्यं ज्ञेयत्वादि-

त्यादौ विषयितादिसम्बन्धेन वाच्यत्वत्वादिमतो ज्ञानादेर्यः स्व-रूपसम्बन्धेनाभावस्तस्य स्वप्रतियोगितावच्छेदकीभूतस्वरूपसम्बन्ध-घटितवाच्यत्वनिष्ठव्यापकतावच्छेदकवाच्यत्वत्वाद्यवच्छिन्नप्रतियोगि-ताकतया हेतुसामानाधिकरण्यतया स्वरूपसम्बन्धेन प्रतियोगिता-वच्छेदकावच्छिन्नवाच्यत्वादिसमानाधिकरणतया च तत्र व्यधि-करणधर्म्मावच्छिन्नाभावानभ्युपगमेऽपि तमादायैव लक्षणसामञ्जस्य-मिति तादृशग्रन्थासङ्गतितादवस्थ्यमिति वाच्यम् । धूमवान् वह्नेरित्यादौ संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाद्यभावस्य कालिकसम्बन्धेन धूमत्वादिविशिष्टवह्न्यादिना समं संयोगेन, सम-वायसम्बन्धावच्छिन्नप्रतियोगिताकस्यायोगोलकावृत्तिजातित्वाद्य-वच्छिन्नाभावस्य कालिकसम्बन्धेन तादृशजातित्वादिविशिष्टस्या-योगोलकीयरूपादिना समं समवायेन, स्वरूपसम्बन्धावच्छिन्न-प्रतियोगिताकस्य धूमवत्त्वप्रकारकप्रमाविषयत्वाद्यभावस्य कालि-कसम्बन्धेन तादृशविषयत्वत्वादिविशिष्टसंयोगादिध्वंसेन अनुयोगि-ताविशेषसम्बन्धेन तादृशविषयत्वत्वादिविशिष्टतादृशविषयत्वाद्यभा-वेन च समं स्वरूपसम्बन्धेन, विषयतासम्बन्धावच्छिन्नप्रतियोगिता-कधूमवत्त्वप्रकारकप्रमाद्यभावस्य विषयितासम्बन्धेन कालिकसम्ब-न्धेन वा तादृशप्रमात्वादिविशिष्टम् यद्गोलकादिविषयकज्ञानं तेन समं विषयतासम्बन्धेन सामानाधिकरण्यसत्त्वादतिव्याप्तेर्वारणाय प्रतियोगितावच्छेदकत्वघटकसम्बन्धेनैव प्रतियोगितावच्छेदकवैशि-ष्ट्यस्य विवक्षणीयतया वह्निमान् धूमादित्यादौ विषयितासम्बन्धेन द्रव्यत्वत्वादिमतः समवायादिसम्बन्धावच्छिन्नाभावस्य स्वप्रतियो-

गितावच्छेदकसमवायादिसम्बन्धघटितद्रव्यत्वादिनिष्ठव्यापकतायाः स्वरूपादिसम्बन्धेन अवच्छेदकीभूतो यो द्रव्यत्वत्वादिस्तदवच्छिन्न-प्रतियोगिताकस्य स्वप्रतियोगितावच्छेदकत्वघटकविषयितादिसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टज्ञानादिना समं हेत्वधिकरणे स्वप्रतियोगितावच्छेदकसमवायादिना सामानाधिकरण्यं न सम्भवतीति व्यापकतावच्छेदकतायामपि स्वप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यावश्यं निवेशनीयत्वेन इदं वाच्यम् ज्ञेयत्वादित्यादौ दर्शिताभावानां लक्षणघटकत्वाभावादिति दिक्। नन्वत्र लक्षणे समवायित्वादिना वाच्यत्वाभावीयसमवायित्वादिरूपप्रतियोगितावच्छेदकस्य वाच्यत्वादिव्यापकतानवच्छेदकत्वाद्वाच्यत्वादिसाध्यकस्थले न तादृशाभावानां लक्षणघटकता तथाच तत्र तादृशभाव एव दुर्लभ इत्यत आह, 'ज्ञेयत्वत्वादिनेति, 'वाच्यत्वादीनामित्यादिपदाद्घटादेरपि परिग्रहः, 'शेषमिति स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यविवक्षणं हेतुसामानाधिकरण्यादिशरीरे सम्बन्धविशेषनिवेशनं तत्प्रयोजनञ्चेत्यर्थः। अत्र च निरुक्ताभावेषु स्वविशिष्टहेत्वधिकरणसामान्यान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशापेक्षया प्रतियोगिवृत्तित्वमेव निवेशयितुमुचितं सद्धेतौ व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकानां तादृशाभावानां केवलान्वयितया प्रतियोगिन्यपि वृत्तेर्लक्षणसमन्वयसम्भवात् वह्निमान् धूमादित्यादौ कालिकादिसम्बन्धेन हेतुसमानाधिकरणस्य ह्रदान्यत्वप्रकारकप्रमाविषयत्वाद्य-

भावस्य (१) दैशिकविशेषणतया हेतुसामानाधिकरण्यनिवेशनेन वह्न्यादिभेदस्य प्रतियोगितावच्छेदकतादात्म्यसम्बन्धघटितसाध्य-व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविरहेण लक्षणाघटक-तया प्रतियोग्यवृत्तित्वेऽपि क्षतिविरहात्, कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगादेरुक्तरीत्या व्यापकतावच्छेदका-वच्छिन्नप्रतियोगिताकत्वविरहेण दैशिकविशेषणतया हेतुसा-मानाधिकरण्याभावेन भावभिन्नत्वविरहेण च लक्षणाघटक-तया प्रतियोग्यवृत्तित्वेऽपि न क्षतिः, धूमवान् वह्नेरित्यादौ च धूमाद्यभावस्य प्रतियोगिवृत्तित्वेऽपि अयोगोलकान्यत्वादि-प्रकारकप्रमाविषयत्वाभावस्य भावप्रतियोगिकतया अयगो-लकत्वाद्यतिरिक्तस्य प्रतियोग्यवृत्तित्वान्नातिव्याप्तिरित्यवधेयम्। नन्वयोगोलकान्यत्वप्रकारकप्रमाविशेष्यत्वाभावस्यायोगोलकावृत्ति-त्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन तादृशाभावप्रतियोग्य-योगोलावृत्तौ अयोगोलके अयोगोलकान्यत्वप्रकारकप्रमाविषयत्वा-भावसत्त्वादतिव्याप्तिरिति चेत्, न, हेतुसमानाधिकरणसाध्यताव-च्छेदकावच्छिन्नव्यापकतावच्छेदकायोगोलकत्वप्रकारकप्रमाविषय-त्वाभावत्वावच्छिन्नप्रतियोगिताकस्यायोगोलकत्वप्रकारकप्रमाविष-यत्वस्वरूपाभावस्याभावमात्रवृत्तिप्रतियोगिताकत्वेन स्वसमनिय-तादपि भाववृत्तिप्रतियोगिताकत्वेन अतिरिक्तादयोगोलकावृत्ति-त्वावच्छिन्नाभावादतिरिक्तस्य यावदन्तर्गतस्य प्रतियोगिवृत्तित्व-विरहेणातिव्याप्तिविरहात्। हेत्वधिकरणवृत्तित्वं प्रतियोगिवृत्ति-

(१) रूपान्यत्वप्रकारकप्रमाविषयत्वाद्यभावस्येति पा०।

त्वञ्च तादृशाभावत्वरूपेण बोध्यं, तेनाधिकरणस्वरूपाभावमादाय कुत्राप्यव्याप्त्यतिव्याप्तोर्नावकाशः। एवमयोगोलकभेदत्वेन प्रमेयसामान्याभावीयप्रतियोगितायां यदि यावत्प्रमेयवृत्तित्वं विचारसहं तदा प्रतियोगितावच्छेदकसमानाधिकरणत्वमेव विवक्षणीयमित्यवधेयम् (१)।

---

तत्त्वचिन्तामणि-दीधितिः।

केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणसाध्याभावस्य प्रतियोगिताया अनवच्छेदकं हेतुसमानाधिकरणस्य व्याप्यवृत्तेः प्रतियोगिव्यधिकरणस्य वा अभावस्य प्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिः। एवञ्च व्याप्तेरव्यभिचारिसम्बन्धरूपतापि सङ्गच्छते हेतौ साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात्, अवच्छेदकत्वञ्चेह तत्पर्य्याप्त्यधिकरणत्वं तेन विशिष्टवह्न्यभावस्य हृदत्व-वह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः। सत्त्ववति गुणादौ संयोगाद्य-

---

(१) नन्वित्यादिः अवधेयमित्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति।

भावोऽपि व्याप्यवृत्तिर्वक्ष्यमाणं वा प्रतियोगितावच्छेद-कानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यं, भवति च गुणत्व-गुणावृत्तित्व-द्रव्यमात्रसमवेतत्वाद्यव-च्छिन्नप्रतियोगिताक-व्याप्यवृत्त्यभावप्रतियोगितावच्छेद-कगुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः ।

---

गादाधरी-विवृतिः ।

चक्रवर्त्तिलक्षणमाह, 'केचित्त्विति, 'व्याप्यवृत्तेरिति, सद्धेतौ साध्यावृत्तित्वघटत्वादिना साध्याभाव एव लक्षणघटकस्तत्प्रतियोगि-तानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वात् लक्षणसमन्वयः, व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि लक्षण-घटकत्वान्नातिव्याप्तिः । कपिसंयोगी तत्त्वृक्षत्वादित्यादावव्याप्ते-र्वारणाय 'व्याप्यवृत्तेरिति, व्याप्यवृत्तित्वञ्च निरवच्छिन्नवृत्तिकत्वं, न त्ववच्छिन्नवृत्तिकान्यत्वं, कपिसंयोगी सत्त्वादित्यादौ कपिसंयोग-त्वावच्छिन्नकपिसंयोगाभावादेर्द्रव्येऽवच्छिन्नवृत्तिकतया तदन्यत्वा-भावाद्घटत्वादिना साध्याभावस्यैव लक्षणघटकतया अतिव्याप्त्या-पत्तेः । निरुक्तव्याप्यवृत्तित्वविशिष्टस्य च हेत्वधिकरणवृत्तित्वं बोध्यम्, अन्यथा कपिसंयोगी एतत्त्वादित्यत्र कपिसंयोगत्वावच्छि-न्नकपिसंयोगाभावस्य वृत्ते हेतुसमानाधिकरणतया गुणादौ च निरवच्छिन्नवृत्तिकतया तमादायाव्याप्तेर्व्वारणासम्भवात् हेत्वधि-करणनिरूपितानवच्छिन्नाधेयतावत्त्वं हेत्वधिकरणनिष्ठनिरवच्छि-न्नाधिकरणताकत्वं वा दलद्वयपर्य्यवसितार्थः ।

केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणसाध्याभावस्येतिसमुदायस्य हेत्वधिकरणे व्याप्यवृत्तिर्यः साध्याभावस्तस्येत्यर्थः, हेत्वधिकरणे व्याप्यवृत्तित्वञ्च हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठाभावप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यन्निष्ठतद्व्यक्तित्वं तत्त्वम्। न च विशिष्टसत्तावान् जातेरित्यादौ गुणादिनिष्ठसत्तादिरूपाभावप्रतियोगितया विशिष्टसत्ताद्यभावनिष्ठतद्व्यक्तित्वस्यावच्छेदकत्वात् विशिष्टसत्ताद्यभावस्य व्याप्यवृत्तित्वानुपपत्तिः यदभावाभावत्वावच्छिन्नानधिकरणत्वं हेतुमतस्तत्त्वमिति विवक्षणे व्यधिकरणधर्म्मावच्छिन्नाभावासंग्रहप्रसङ्गस्तदभावाप्रसिद्धेरिति वाच्यम्। यत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकानुयोगितानिरूपकतानवच्छेदकं यदभावत्वं तत्त्वस्य विवक्षितत्वात्। गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्तीत्यप्रत्ययेन (१) विशिष्टसत्ताभावत्वाद्यवच्छिन्ननिरूपितानुयोगिताविशिष्टायाश्च सत्ताया गुणादिवृत्तितानभ्युपगमेन विशिष्टसत्ताद्यभावस्य व्याप्यवृत्तित्वनिर्व्वाहादित्याहुः।

ननु संयोगिभिन्नं मेयत्वादित्यत्रातिव्याप्तिः संयोगिभेदाभावस्य

(१) अयं भावः वह्न्यादिसाध्यकसद्धेतौ घटत्वेन वह्न्यभावादिकमेव व्याप्यवृत्त्यभावः यतो यत्किञ्चिद्धेत्वधिकरणवृत्तितावच्छेदकीभूतं यद्वह्नित्वावच्छिन्नप्रतियोगितानिरूपितवह्न्यभावनिष्ठानुयोगित्वं तन्निरूपकतावच्छेदकत्वस्य वह्नित्वादौ सत्त्वात्, तदवच्छेदकत्वं वह्न्यभावत्वादावक्षतं, विशिष्टसत्तावान् जातेरित्यादौ तु गुणादिनिष्ठसत्तात्वादिरूपाभावत्वस्य तादृशनिरूपकतानवच्छेदकत्वविरहेण विशिष्टसत्ताभावत्वस्यैव तादृशनिरूपकतानवच्छेदकतया तमादायैव लक्षणागमनसम्भवेन न काप्यनुपपत्तिरिति ध्येयम्।

तद्भेदप्रतियोगितावच्छेदकीभूतसंयोगात्मकस्याव्याप्यवृत्तित्वेन लक्षणघटकत्वाभावाद्व्यधिकरणधर्म्मावच्छिन्नाभावमादाय लक्षणगमनादिति चेन्न, संयोगिभेदस्य व्याप्यवृत्तित्वे तस्य द्रव्यत्वसंयोगप्रकारकप्रमाविशेष्यत्वाद्यवच्छिन्नभेदसमनियततया तदभिन्नत्वेन तद्भेदप्रतियोगितावच्छेदकद्रव्यत्वादिकमपि संयोगिभेदाभावः तस्य इत्वधिकरणे व्याप्यवृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य च साध्यतावच्छेदके सत्त्वेनातिव्याप्त्यनवकाशात्। एवं द्रव्यान्यत्वविशिष्टसत्ताभाववान् द्रव्यत्वादित्यादौ व्याप्यवृत्तेः सत्तादिरूपाभावस्य प्रतियोगितावच्छेदकं साध्यतावच्छेदकमित्यव्याप्तिरित्यपि नाशङ्कनीयं, सत्तादिमत्त्वेऽपि द्रव्यादौ द्रव्यान्यत्वविशिष्टसत्ताभावो नास्तीत्यादिप्रत्ययानुदयात् विशिष्टनिरूपिताधिकरणताविशेषस्यैव विशिष्टाभावाभावत्वोपगमात् तावतापि नाभावाभावस्य प्रतियोगिरूपताक्षतिर्विशिष्टाभावस्य विशिष्टाधिकरणत्वाभावसमनियतत्वेन तदभिन्नतया विशिष्टसत्ताधिकरणताया अपि विशिष्टाभावप्रतियोगित्वात्।

परे तु संयोगत्वेन संयोगनिरूपिताया अधिकरणतायाः किञ्चिदवच्छिन्नत्वेऽपि संयोगिभेदाभावत्वेन तन्निरूपिताधिकरणता निरवच्छिन्नैव द्रव्ये संयोगिभेदस्याप्रत्ययादवच्छेदकमनन्तर्भाव्यैव तदभावत्वावच्छिन्नवत्ताप्रतीतेः। एवं द्रव्यादौ सत्तात्वाद्यवच्छिन्नसत्ताद्यधिकरणतासत्त्वेऽपि द्रव्यान्यत्वविशिष्टसत्तात्वादिनेव तदवच्छिन्नप्रतियोगिताकाभावाभावत्वेनापि न वृत्तिः तत्र विशिष्टाभावो नास्तीत्यप्रत्ययात्, तथाच साध्यनिष्ठयादृशप्रति-

योगिताकाभावत्वावच्छिन्ननिरूपितानवच्छिन्नाधिकरणता हेत्व-
धिकरणवृत्तिस्तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छे-
दके निवेश्यमिति न कश्चिद्दोष इत्याहुः।

अथ हेत्वधिकरणवृत्तित्वं यदि येन केनचित् सम्बन्धेन तदा
कालिकादिसम्बन्धेन धूमाधिकरणे वर्त्तमानं वह्नित्वावच्छिन्न-
वह्न्यभावादिकमादायाव्याप्तिः (१)। यदि च कालिकसम्बन्धेन
काले वह्न्यभावादेर्वृत्तिर्वह्न्यनधिकरणदेशावच्छिन्नैवेति नासौ हेत्व-
धिकरणे निरवच्छिन्नवृत्तिक इति मन्यते, तदापि सत्तावान्
जातेरित्यादौ हेतुमति ज्ञानादौ विषयितासम्बन्धेन वर्त्तमानं
साध्याभावमादायाव्याप्तिदुर्वारैव, दैशिकविशेषणतासम्बन्धेन हेत्व-
धिकरणवृत्तित्वनिवेशने च घटत्वाभावादिसाध्यकव्यभिचारिण्यति-
व्याप्तिः तत्र समानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्य भाव-
रूपसाध्याभावस्य तेन सम्बन्धेनावृत्तेर्व्यधिकरणधर्म्मावच्छिन्नाभाव-
स्यैव लक्षणघटकत्वात्। एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताके
आकाशाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिर्दैशिकविशेषण-
तया हेतुसमानाधिकरणस्याकाशाभावस्य प्रतियोगितावच्छेदक-
तायाः साध्यतावच्छेदके सत्त्वात्, कालिकसम्बन्धेनाकाशाभावरू-
पप्रतियोगिमत्ताया एव कालिकसम्बन्धावच्छिन्नप्रतियोगिताक-
आकाशाभावाभावो नास्तीति प्रत्ययनियामकत्वादाकाशाभावस्यैव
तादृशसाध्याभावरूपत्वादिति चेन्न, स्वीययादृशप्रतियोगिताश्रय-
वत्ताज्ञानं प्रति यादृशसम्बन्धेन स्वप्रकारकज्ञानं विरोधि तादृश-

(१) न पुनरसम्भवः वाच्यं ज्ञेयत्वादित्यादावेव लक्षणगमनात्।

सम्बन्धेन हेत्वधिकरणवृत्तिर्योऽभावस्तदीयतादृशप्रतियोगितानव-च्छेदकत्वस्यैव निवेशनीयत्वात्। आकाशाभावस्य दैशिकविशेषण-तासम्बन्धश्च न दर्शिताकाशाभावाभाववत्ताज्ञानविरोधिज्ञानविषयः अपि तु कालिकसम्बन्ध एव। न च तेन सम्बन्धेनाकाशाभाव-आत्मनि वर्त्तते, अत आकाशाभावीयसाध्यनिष्ठप्रतियोगितायाः यादृशप्रतियोगितेत्यनेनोपादानासम्भवः, अपि तु व्यधिकरणधर्म्मा-वच्छिन्नसाध्याभावीयप्रतियोगिताया एव, तादृशाभावज्ञानस्य (१) दैशिकविशेषणतासंसर्गकस्य व्यधिकरणधर्म्मप्रकारेण साध्यवत्त्वाव-गाहिनं भ्रमं प्रति विरोधित्वात्, सामान्यतश्च प्रतियोगिप्रकारक-ज्ञाननिवेशे आकाशप्रकारकज्ञानं प्रति दैशिकविशेषणतासम्बन्धेन आकाशाभावप्रकारकज्ञानस्य प्रतिबन्धकतया उक्तदोषतादवस्थ्य-मिति यादृशप्रतियोगिताश्रयेत्युक्तं, प्रतियोगिताश्रयवत्ताज्ञानञ्च तत्प्रतियोगितावच्छेदकधर्म्मावच्छिन्नप्रकारकं ग्राह्यं (२) तेनाकाश-त्वेन तादृशसाध्यवत्त्वज्ञानं प्रति दैशिकविशेषणतया आकाशाभाव-प्रकारकज्ञानस्य विरोधित्वेऽपि न क्षतिः। एवञ्च यादृशप्रतियोगि-ताश्रयावगाहित्वनिवेशे प्रयोजनाभावात् यादृशप्रतियोगितावच्छे-दकावच्छिन्नप्रकारताशालिज्ञानं प्रति प्रतिबन्धकमित्येव वक्तव्यं, साध्यवत्ताज्ञानविरोधित्वं वा एतल्लक्षणे निवेश्यं,(३), न च आकाश-त्वादिना साध्यवत्ताज्ञानविरोधितामादाय दर्शितदोषतादवस्थ्यात्

---

(१) व्यधिकरणधर्म्मावच्छिन्नसाध्याभावज्ञानस्येत्यर्थः।

(२) तत्प्रतियोगितावच्छेदकधर्म्मप्रकारकमिति पा०।

(३) साध्यवत्ताज्ञानविरोधित्वमप्येतल्लक्षणे शक्यते निवेशयितुमिति पा०।

साध्यतावच्छेदकावच्छिन्नप्रकारकज्ञानविरोधित्वपर्य्यन्तनिवेशे व्यधिकरणधर्म्माद्यवच्छिन्नप्रतियोगिताकसाध्याभाववत्ताज्ञानस्य व्यधिकरणधर्म्मादिप्रकारकसाध्यवत्ताज्ञानं प्रत्येव विरोधित्वेन साध्यतावच्छेदकावच्छिन्नप्रकारकज्ञानाविरोधितया तादृशसाध्याभावाप्रसिद्धेरिति वाच्यम्। घटत्वविशिष्टवह्निमदित्यादिज्ञानस्यापि साध्यतावच्छेदकावच्छिन्नप्रकारकत्वस्याधिकन्त्वित्यादिन्यायेनाक्षतत्वात्। न च तन्मात्रावच्छिन्नप्रकारताकत्वमवश्यमेव निवेश्यं अन्यथा आकाशत्व-निरुक्तसाध्यतावच्छेदकोभयरूपेण साध्यवत्ताज्ञानं प्रति दैशिकविशेषणतया आकाशाभाववत्ताज्ञानस्य विरोधितया तद्दोषतादवस्थ्यादिति कथं व्यधिकरणधर्म्मावच्छिन्नाभावसंग्रह इति वाच्यम्। प्रतियोगितावच्छेदकमात्राद्यवच्छिन्नप्रकारकत्वनिवेशेऽपि व्यधिकरणधर्म्मावच्छिन्नाभावासंग्रहात् तदवच्छिन्नप्रकारतामात्रनिवेशे उक्तस्थले आकाशाभावीयदैशिकविशेषणतावारणासम्भवात्, द्वितीयलक्षणे यादृशप्रतियोगितावच्छेदकयादृशप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकातिरिक्तानवच्छिन्नप्रकारताशालिज्ञानं प्रति येन सम्बन्धेन स्वप्रकारकज्ञानं विरोधीति विवक्षणवदेतल्लक्षणेऽपि साध्यतावच्छेदकप्रकृतप्रतियोगितावच्छेदकातिरिक्तानवच्छिन्नप्रकारताकज्ञानविरोधिताविवक्षणेन प्रतीकारसम्भवात् आकाशत्वादेस्तादृशाकाशाभावाभावत्वरूपसाध्यतावच्छेदकाद्यतिरिक्ततया तदवच्छिन्नप्रकारकज्ञानविरोधितामादाय न दोषः(१)। हेतुसमानाधिकरणस्य व्याप्यवृत्तेर्व्वह्नित्वादिना घटाद्यभावस्य

(१) दोषासम्भव इतीति पा०।

प्रतियोगितावच्छेदकमेव वह्नित्वादिरूपं साध्यतावच्छेदकमतः 'साध्याभावस्येति। यद्यपि वह्नित्वेन घटाभावादेर्घटत्वेन वह्न्यभावाद्यभिन्नतया तादृशाभावोऽपि साध्याभाव एव, तथापि प्रतियोगितावच्छेदकभेदेनाभावभेदमतेनेदं लक्षणं, समनियताभावानामैक्याभिप्रायेणाग्रिमलक्षणम्, अथवा हेतुसमानाधिकरणाभावीयसाध्यनिष्ठप्रतियोगितानवच्छेदकत्वनिवेशान्न दोषः वह्नित्वादिना घटाद्यभावस्य घटत्वादिना वह्न्याद्यभावाभिन्नत्वेऽपि तदीयघटादिनिष्ठप्रतियोगिताया एव व्यधिकरणवह्नित्वाद्यवच्छिन्नत्वेन वह्न्यादिनिष्ठप्रतियोगितायां वह्नित्वादेरनवच्छेदकत्वात् प्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन निवेशनीया तेन सम्बन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभावमादाय नासम्भवः, व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताया अपि सम्बन्धावच्छिन्नत्वं व्यवस्थितमेव। प्रतियोगितावच्छेदकत्वञ्च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं ग्राह्यं तेन गुणवान् द्रव्यत्वादित्यादौ हेतुसमानाधिकरणस्य विषयितया गुणत्वादिमतः समवायेनाभावस्य या ज्ञानादिनिष्ठप्रतियोगिता तदवच्छेदकत्वेऽपि साध्यतावच्छेदकस्य न क्षतिः (१) सर्व्वत्र द्वित्वाद्यवच्छिन्नप्रतियोगिताकसाध्याभाव-

---

(१) नन्वत्रापि लघुरूपसमनियतगुरुधर्म्मावच्छिन्नसाध्यकव्यभिचारिणि अतिव्याप्तिवारणाय पारिभाषिकावच्छेदकत्वमेवानुसरणीयं तथाच वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणस्येन्धनत्वेन वह्न्यभावस्य प्रतियोगितावच्छेदकं यदिन्धनत्वं तस्य वह्नित्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतया वह्नित्वस्यापि पारिभाषिकावच्छेदकत्वमित्यव्याप्तिरिति चेन्न, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं स्वसमानाधिकरणयद्धर्म्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगिता-

मादायैवैतल्लक्षणसमन्वयसम्भवात् व्यधिकरणधर्म्मावच्छिन्नाभावानभ्युपगमेऽपि क्षतिविरहेण व्यधिकरणधर्म्मावच्छिन्नाभावखण्डनं मूलकृतोऽकिञ्चित्करमतो लक्षणान्तरमाह, 'हेतुसमानाधिकरणस्येति, अत्र च (१) व्यधिकरणधर्म्मावच्छिन्नाभावस्याप्रामाणिकत्वे व्यधिकरणधर्म्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमादायाव्याप्तेर्व्वारणायोपात्तस्य सामानाधिकरण्येनेत्यस्य वैयर्थ्यात् लक्षणासामञ्जस्यमिति तादृशाभावखण्डनं सङ्गच्छते (२) अत्रापि 'हेतुसमानाधिकरणस्य व्याप्यवृत्तेरित्यस्य पूर्व्वोक्त एव पर्य्यवसितार्थः, व्यावृत्त्यादिकमपि पूर्व्वोक्तमेव। कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाशाभावाभाववान् आत्मत्वादित्यादावव्याप्तेर्व्वारणाय पूर्व्वोक्तरीत्यनुसरणे गौरवादव्याप्यवृत्तित्वं परित्यज्य प्रतियोगिव्यधिकरणत्वेनाभावं विशेषयति, 'प्रतियोगिव्यधिकरणस्येति, पूर्व्वलक्षणे साध्याभावस्य विशिष्योपादानात् तस्य च हेत्वधिकरणे साध्यरूपप्रतियोगिना सामानाधिकरण्यमावश्यक-

---

नवच्छेदकं तत्त्वमित्यस्य विवक्षितत्वात् तथाच वह्नित्वस्य इन्धनत्वसामानाधिकरण्याभावात् नोक्तदोष इति ध्येयम्।

(१) व्यधिकरणधर्म्मावच्छिन्नाभावविनिर्मोकेण सर्व्वत्र लक्षणसमन्वयेऽपि न मूलकृतस्तादृशाभावखण्डनम् अकिञ्चित्करं व्यधिकरणधर्म्मावच्छिन्नाभावासत्त्वे वह्नित्वादिना व्यधिकरणधर्म्मेण घटाद्यभावमादायाव्याप्तिकारकसाध्यघटितलक्षणस्य व्यर्थविशेषणघटितत्वेन दुष्टत्वादित्यवधेयम्।

(२) अत्रेदं बोध्यं पूर्व्वलक्षणे समनियताभावैक्ये वह्नित्वेन घटाभावप्रतियोगितावच्छेदकत्वमादायाव्याप्तिवारणायोक्तसाध्यनिष्ठप्रतियोगितेत्यस्य वैयर्थ्यात् लक्षणासामञ्जस्यमिति तादृशाभावखण्डनं निराबाधमिति।

मेवैकव्यक्तिवृत्तिसाध्यके (१) अतस्तत्र प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धा अव्याप्तिरिति तन्नोक्तम्। प्रतियोगिव्यधिकरणत्वञ्च न प्रतियोग्यधिकरणावृत्तित्वं, संयोगि सत्त्वादित्यादौ संयोगाद्यभावस्यातथात्वादभावान्तरमादायातिव्याप्तिः किन्तु प्रतियोग्यनधिकरणवृत्तित्वम्, एवञ्च प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तेरिति दलद्वयपर्य्यवसितार्थः, प्रतियोग्यनधिकरणत्वञ्च साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणभिन्नत्वम्, अतः समवायादिना ज्ञानादिसाध्यक-द्रव्यत्वादिहेतौ नातिव्याप्तिः, इत्यञ्च प्रतियोगिता न सम्बन्धविशेषावच्छिन्नत्वेन विशेषणीया विशेषणताविशेषेण अभावसाध्यके सर्व्वस्यैवाभावस्य तेन सम्बन्धेन किञ्चिद्विशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरतो यादृशप्रतियोगिताश्रयानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यमिति सिद्धान्तलक्षणवक्ष्यमाणरीत्या निष्कर्षणीयम्। अथ विशिष्टसत्तावान् जातेरित्यत्रातिव्याप्तेर्वारणाय यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं हेतुमत इत्यस्यैव वाच्यतया वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाद्यभावीयप्रतियोगितायां लक्षणघटकत्वासम्भवस्तदवच्छेदकवह्नित्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमत्यसत्त्वात् तथाच सामानाधिकरण्येनेत्यनर्थकम्।

अत्र केचित् यादृशप्रतियोगितावच्छेदकविशिष्टयादृशप्रति-

(१) तत्तद्घटवृत्तिरूपवान् तत्तद्रसादित्यादावित्यर्थः।

योगिताश्रयोभयानधिकरणत्वं हेतुमत इत्येव तत्तार्थक्याय विवक्षणीयं दर्शिताभावीयप्रतियोगितावच्छेदकवह्नित्वादिविशिष्टस्य हेतुमति सत्त्वेऽपि तादृशप्रतियोगिताश्रयघटादेरसत्त्वात् उभयानधिकरणत्वं हेतुमतोऽक्षतमेवेति तादृशप्रतियोगितावच्छेदकत्वमादाय दोषवारकतया सामानाधिकरण्येनेत्यस्य सार्थकता। न च वह्नित्वेन घटाद्यभावस्य प्रतियोगिता यावद्वह्निभिन्नवृत्तिरेकैव (१) स्वीक्रियते न तु घट-पटादिरूपप्रतियोगिभेदेन भिन्ना अभावस्य प्रतियोगितावच्छेदकस्य चैक्यात् तथाच घटादिनिष्ठप्रतियोगिताश्रयसाधनादेरेव साधनवति सत्त्वात् तादृशप्रतियोगिताश्रयानधिकरणत्वं न तत्रेति न सामानाधिकरण्येनेत्यस्य सार्थकतासम्भवः प्रतियोगिभेदेन प्रतियोगिताभेदे तु महानसीयवह्न्यादिनिष्ठाया वह्न्यादिसामान्यभावीयप्रतियोगितायाः पर्व्वतीयवह्न्याद्यवृत्तितया तादृशप्रतियोगिताश्रयानधिकरणत्वस्य हेतुमति पर्व्वतादौ सत्त्वात् वह्नित्वादेस्तदवच्छेदकत्वमादायाव्याप्तिरिति वाच्यम्। यतः प्रतियोगिभेदेन न प्रतियोगिताभेदः, अपि त्ववच्छेदकभेदेनैव, एवमपि वह्निभिन्नवान् घटादित्यादौ वह्निभिन्नत्वेन वह्न्यभावीयप्रतियोगिताया वह्निभिन्ने असम्भाविततया तदाश्रयानधिकरणत्वस्य वह्निशून्ये हेतुमत्यक्षततया तादृशप्रतियोगितावच्छेदकत्वमादायाव्याप्तेर्वारकतया सामानाधिकरण्येनेत्यस्य सार्थक्यं, महाकालो घटवान् कालपरिमाणादित्यादौ तु महाकालान्यत्वविशिष्टघटाद्यभावीयप्रतियोगितैव तादृशी महा-

(१) यावदिति वह्निभिन्नविशेषणम्।

कालस्य तदवच्छेदकमहाकालान्यत्वविशिष्टघटत्वाद्यवच्छिन्नाधिकरणताशून्यत्वात् । अथवा (१) वक्ष्यमाणरीत्या साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्व-यादृशप्रतियोगिताश्रयप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वैतन्नित्वावच्छिन्नाभावस्तदनवच्छेदकत्वमेव वाच्यं, एवञ्च तत्रावृत्तिगगनाद्यभावप्रतियोगितैव तादृशी, एवञ्च वह्नित्वादिना घटाद्यभावप्रतियोगितावच्छेदकवह्नित्वविशिष्टप्रतियोगिकत्व-तदाश्रयवह्निभिन्नप्रतियोगिकत्वयोरेकस्मिन् सम्बन्धे असत्त्वेन तादृशप्रतियोगिताया अपि तथात्वात् तद्वारकतयापि सामानाधिकरण्येनेत्यस्य सफलत्वमवधेयमित्याहुः ।

परे तु अत्यन्ताभावस्येवान्योन्याभावस्यापि प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोपगमात् पर्व्वतादौ वह्नित्वविशिष्टाद्यवच्छिन्नजलादिमद्भेदोऽपि प्रामाणिकः एवञ्च स्वावच्छेदकविशिष्टावच्छिन्नस्वाश्रयवन्निष्ठप्रतियोगिताकभेदवद्धेत्वधिकरणकं यत्प्रतियोगित्वं तदनवच्छेदकत्वं साध्यतावच्छेदकस्य निवेशनीयम् । एवञ्च वह्नित्वादिना जलाद्यभावीयप्रतियोगितापि तादृशं स्वं कथितभेदस्य (२) तदवच्छेदक (३) वह्नित्वादिविशिष्टावच्छिन्नतदाश्रयजलादिमन्निष्ठप्रतियोगिताकत्वात् अतस्तदवच्छेदकत्वमा-

---

(१) यदि च महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाधिकरणता महाकाले वर्त्तते तदाह, अथवेति ।

(२) वह्निमत्त्वादिना जलादिमद्भेदस्येत्यर्थः ।

(३) वह्नित्वादिना जलाद्यभावीयप्रतियोगितावच्छेदकेत्यर्थः ।

दाय दोषवारणाय 'सामानाधिकरण्येनेति, संयोगि द्रव्यत्वात् वह्निमान् धूमादित्यादौ संयोगत्व-वह्नित्वाद्यवच्छिन्नसंयोग-वह्न्या-द्यभावप्रतियोगितायाः गुणत्व-ह्रदत्वाद्यवच्छिन्नसंयोगि-पर्व्वतादि-भेदं (१) संयोग-वह्न्याद्यवच्छिन्नगुण-ह्रदादिभेदं (२) चादाय तथा-त्ववारणाय (३) अवच्छिन्नान्त-निष्ठान्तयोरुपादानम्। अथवा (४) यादृशप्रतियोगितावच्छेदकावच्छिन्नयादृशप्रतियोगिताश्रयवृत्ति(५) प्रतियोगितावच्छेदकताकभेदवत्त्वं हेतुमतस्तादृशप्रतियोगितान-वच्छेदकत्वं विवक्षणीयं वह्नित्वादिना घटाद्यभावप्रतियोगिताप्ये-तादृशी तादृशप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नतादृशप्रतियोगि-तासमानाधिकरणप्रतियोगितावच्छेदकताकस्य वह्नित्वेन घट-वान्नेति प्रतीतिविषयभेदस्य हेतुमति सत्त्वात् व्यधिकरणधर्म्म-स्यात्यन्ताभावप्रतियोगितावच्छेदकत्ववदन्योन्याभावप्रतियोगिताव-च्छेदकतायामप्यवच्छेदकत्वादतएव 'समवायितया वाच्यत्ववद्भेदो-ऽपि द्रष्टव्यः' इति मिश्रैरभिहितम्, इत्यञ्च तादृशप्रतियोगि-तावारणाय 'सामानाधिकरण्येनेति, हेतुमतो वह्नित्वेन घट-वद्भेदवत्त्वं घटत्वेन वह्निमद्भेदवत्त्वञ्चादाय वह्नित्वाद्यवच्छिन्न-

---

(१) गुणत्वाद्यवच्छिन्नसंयोगिभेदं ह्रदत्वाद्यवच्छिन्नपर्व्वतादिभेदमित्यर्थः।

(२) संयोगाद्यवच्छिन्नगुणादिभेदं वह्न्याद्यवच्छिन्नह्रदादिभेदमित्यर्थः।

(३) स्वाश्रयवन्निष्ठप्रतियोगिताकभेदवद्वृत्त्यधिकरणकत्व स्वावच्छेदकविशिष्टा-वच्छिन्नप्रतियोगिताकभेदवद्वृत्त्यधिकरणकत्वयोश्च वारणायेत्यर्थः।

(४) व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकभेदानभ्युपगमे त्वाह, अथवेति, व्यधिकरणधर्म्मावच्छिन्नावच्छेदकताकभेदस्य मिश्रादिभिः स्वीकृतत्वादिति भावः।

(५) प्रतियोगिताश्रयवृत्तित्वं प्रतियोगितावच्छेदकताया विशेषणम्।

वह्निनिष्ठप्रतियोगितायाः तादृशत्ववारणाय प्रकृतप्रतियोगिता-समानाधिकरणत्व-तदवच्छेदकावच्छिन्नत्वयोर्भेदप्रतियोगितावच्छेदकतायां निवेशनं, महाकालो घटवान् कालपरिमाणात् इत्यादौ महाकालान्यत्वविशिष्टघटाद्यभावीयप्रतियोगितामादायैव लक्षणसमन्वयः न तु गगनत्व-पटत्वादिना घटाद्यभावीयप्रतियोगितां, तस्या गगनाद्यवच्छिन्न-घटाद्यवच्छिन्नकालभेदं गगनत्व-पटत्वाद्यवच्छिन्नघटाद्यवच्छिन्नभेदञ्चादाय पूर्व्वप्रतीकाल्लाभसम्भवेऽपि (१) सामानाधिकरण्येन तदवच्छेदकस्याप्रसिद्धेः। अथवा तादृशप्रतियोगितासामान्ये यद्धर्म्मसामानाधिकरण्यविशिष्टयद्धर्म्मावच्छेद्यत्वाभावः यद्धर्म्मसामानाधिकरण्य-यद्धर्म्मावच्छेद्यत्वोभयाभावो वा तद्धर्म्मविशिष्टसामानाधिकरण्यं व्याप्तिरित्येव विवक्षणीयम्, एवञ्च व्यधिकरणधर्म्मावच्छिन्नप्रतियोगितामादायापि लक्षणसमन्वयस्तत्र सम्भवतीति ध्येयम्। वह्नित्वेन वह्नि-धूमोभयं नास्तीत्येतादृशप्रतीतिविषयाभावस्य वह्निमान् वह्नित्वेन वह्नि-धूमोभयवान् नेति प्रतीतिसिद्धभेदमादाय प्रतियोगिव्यधिकरणत्वेऽपि तस्य प्रतियोगितावच्छेदकत्वं न वह्नित्वमात्रे पर्य्याप्तं तथा सति वह्नित्वरूपप्रतियोगितावच्छेदकविशिष्टवह्निरूपप्रतियोगिमति तादृशाभावप्रत्ययाप्रसङ्गात्(२) किन्तु वह्नित्वसहिततदुभयत्व एव तत्पर्य्याप्तिरतस्तादृशप्रतियोगितायाः समानाधिकरणतया तदवच्छेदकत्वे-

---

(१) गगनत्व-पटत्वाद्यवच्छिन्नघटाद्यवच्छिन्नभेदञ्चादायानवच्छेदकपूर्व्वप्रतीकार्थलाभसम्भवेऽपीति, भेदञ्चादायानच्छेदकसम्भवेऽपीति च पा०।

(२) तादृशाभावाप्रत्ययप्रसङ्गादिति पा०।

ऽपि वह्नित्वस्य न क्षतिः। यदि च तादृशाभावप्रतियोगितावच्छेदकं वह्नित्वादिकमेव न तु प्रतियोगिविशेषणतापन्नमुभयत्वं, प्रतियोगिविशेषणतानापन्ने प्रतियोगितावच्छेदकत्वावगाहिप्रतीत्या तद्विशेषणतापन्ने तदनवगाहनात् अन्यथा वह्नित्वेन घटो नास्तीत्यादावपि घटत्व-वह्नित्वाद्युभयस्मिन्नवच्छेदकत्वपर्य्याप्त्यवगाहनौचित्यात् सामानाधिकरण्येनेत्यस्य वैयर्थ्यापत्तेः, वह्नित्वेनोभयाभावप्रतियोगिता च व्यासज्यवृत्तिरतो न तादृशाभावस्य केवलान्वयित्वानुपपत्तिरथवा सोन्दड़मते प्रतियोगितावच्छेदकधर्म्मावच्छिन्नस्यैव तद्धर्म्मावच्छिन्नप्रतियोगिनोऽपि नाभावविरोधित्वं किन्तु अभावबुद्धौ प्रतियोग्यंशे प्रकारीभूतो यो धर्म्मस्तद्विशिष्टप्रतियोगितावच्छेदकावच्छिन्नस्यैवेति न केवलान्वयित्वानुपपत्तिरिति मन्यते, तदा सामानाधिकरण्येनेत्यस्य प्रतियोगितापर्य्याप्त्यधिकरणवृत्तित्वेन, प्रतियोग्यंशे प्रकारीभूतधर्म्मपर्य्याप्त्यधिकरणवृत्तित्वेन वा इत्येवार्थः इत्याहुः। तदुभयमपि न युक्तम्, एवं सति घटत्वादिना साध्याभावप्रतियोगितायामपि निरुक्तप्रतियोगिवैयधिकरण्यनिरूपकत्वसम्भवेन प्रथमलक्षणे प्रतियोगिव्यधिकरणस्येत्यनभिधानस्य निर्वीजतया सन्दर्भविरोधापत्तेः। वस्तुतो यादृशप्रतियोगितासम्बन्धावच्छिन्नप्रकारकतावच्छेदकयत्किञ्चिद्धर्म्मावच्छिन्नानधिकरणत्वं हेतुमतस्तदनवच्छेदकत्वं साध्यतावच्छेदकस्य विवक्षणीयं कपिसंयोगत्वावच्छिन्नकपिसंयोगादिनिष्ठप्रतियोगितासंसर्गावच्छिन्नप्रकारताच्छेदकं कपिसंयोगत्वादिकमेव तदवच्छिन्नानधिकरणत्वञ्च न हेतुमत इति न कपिसंयोगी एतद्वृक्षत्वादित्यादावव्याप्ति-

घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन च प्रमेयत्वादिना प्रतियोगिनो घटत्वेन प्रमेयं नास्तीत्यादिज्ञाने भानात् प्रमेयत्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमत्यसम्भवात् घटत्वाद्यवच्छिन्नप्रतियोगिताया याद्दशप्रतियोगितेत्यनेन उपादानासम्भवात् तथाविधप्रतियोगिताया अप्रसिद्धिरतो यत्किञ्चिदित्युक्तं, दण्डिमान् दण्डसंयोगादित्यादौ तत्तद्दण्डावच्छिन्नानधिकरणत्वमादाय दण्डसामान्याभावस्य प्रतियोगिवैयधिकरण्येऽपि न क्षतिः तत्तद्दण्डावच्छिन्नात्यन्ताभावप्रतियोगितावच्छेदकत्वमादाय दोषवारणाय तत्र परम्परासम्बन्धेन दण्डत्वादेः साध्यतावच्छेदकत्वस्वीकारस्यावश्यकत्वात्, तत्संयोगत्व तद्वह्नित्वादिविशिष्टप्रतियोगिविषयकाभावभाने संयोगत्व-वह्नित्वादिरूपसामान्यधर्म्मावच्छिन्नप्रतियोगितायाः संसर्गतया भाने मानाभावात् तत्संयोगत्व-तद्वह्नित्वाद्यवच्छिन्नानधिकरणत्वेऽपि हेतुमतो न क्षतिः, वह्नित्वावच्छिन्नप्रतियोगिताया घटत्वाद्यवच्छिन्नत्वेन घटो नास्तीत्यभावबुद्धौ संसर्गतया भानोपगमे भ्रमानिरूपितत्वेन प्रकारता विशेषणीया, विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वाद्यवच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वान्नातिव्याप्तिः वह्नित्वाद्यवच्छिन्नघटत्वादिनिष्ठव्यधिकरणधर्म्मावच्छिन्नाभावीयप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकघटत्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वात् सामानाधिकरण्येनेत्यस्य सार्थकता, एकवृत्तिसाध्यकस्थले (१)

---

(१) अनेकव्यक्तिवृत्तिसाध्यकस्थले तु तत्तद्व्यक्तिवृत्तिसाध्याभावीयप्रतियोगिता-

साध्यनिष्ठप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकावच्छिन्नान- धिकरणत्वं न हेतुमत इति साध्यवृत्तितथाविधप्रतियोगिताया- अप्रसिद्ध्या न पूर्व्वोक्तलक्षणे प्रतियोगिव्यधिकरणत्वं निवेशितम्। वह्नित्वादिना उभयाभावमादाय दोषस्तु पूर्व्ववदेव वारणीय इति।

परे तु (१) यदि च घटत्वेन वह्निर्नास्ति वह्नित्वेन घटो- नास्तीत्यादौ वह्नित्व-घटत्वादिरूपसमानाधिकरणधर्म्मस्यापि प्रति- योगितावच्छेदकत्वं भासते, अन्यथा तादृशप्रतीतौ प्रतियोगिनि तद्धर्म्माणामुपलक्षणतया भानेन तद्विशिष्टवैशिष्ट्यानवगाहितया तन्निर्व्विकल्पकानन्तरमप्युत्पत्त्यापत्तेः। न च वह्नित्व-घटत्वादेः प्रति- योगितावच्छेदकत्वानवगाहने तन्निर्विकल्पकानन्तरं तादृशाभाव- बुद्धिरिष्टैव प्रतियोगितावच्छेदकतया यद्भासते तन्निर्व्विकानन्तर- मेवाभावप्रतीत्यनुपगमात् इति वाच्यम्। वह्नित्वादिनिर्व्विकल्प- कानन्तरं तथाविधप्रत्ययोपगमे विशेषाभावेन तदुत्तरम् उप- लक्षणविधया वह्नित्वाद्यवगाहिनो वह्निर्नास्तीत्याकारकसमाना- धिकरणधर्म्मावच्छिन्नाभावप्रत्ययस्यापि (२) स्वीकारापत्तेः एवं स्वातन्त्र्येण प्रतियोगितावच्छेदकत्वविषयकाभावबुद्धौ प्रतियोगिनि प्रकारस्योपलक्षणतया भानोपगमे वह्निमति वह्नित्वेन द्रव्यं नास्तीतिप्रतीत्यापत्तिः। यत्तु प्रतियोगिप्रकारविरुद्धधर्म्म एव

सम्बन्धावच्छिन्नप्रकारतावच्छेदकतत्तद्व्यक्तिवृत्तिसाध्यमात्रवृत्तिधर्म्मावच्छिन्नानधिक- रणत्वं हेतुमति सत्त्वात् तादृशप्रसिद्ध्या तत्र न दोषसम्भव इत्येकमात्रवृत्तीति।

(१) अन्ये त्विति पा०।

(२) तदुत्तरं वह्नित्वाद्यंशे प्रतियोगितावच्छेदकत्वानवगाहिवह्निर्नास्तीत्या- कारकसमानाधिकरणधर्म्मावच्छिन्नाभावप्रत्ययस्यापीति पा०।

स्वातन्त्र्येण प्रतियोगितावच्छेदकत्वं भासते इति नियमान्न तदापत्तिरिति, तन्न, तथा सति ह्रदादौ वह्नित्वेन किमपि द्रव्यं नास्तीति प्रतीत्यनुपपत्तेः । न च प्रतियोगित्वे प्रतीतिप्रकारीभूतधर्म्मान्यूनवृत्तित्वभाननियमात् पर्व्वतादिवृत्तिवह्नित्वाद्यवच्छिन्नाभावप्रतियोगिताया द्रव्यत्वन्यूनवृत्तित्वान्नोक्तापत्तिरिति वाच्यम्। वह्नित्वेन द्रव्यं नास्तीति शब्दजबोधे प्रतियोगिताया द्रव्यत्वान्यूनवृत्तित्वभासकाभावात् । न च संसर्गतया भासमाने वह्नित्वावच्छिन्नप्रतियोगित्वे द्रव्यत्वान्यूनवृत्तित्वस्य संसर्गतावच्छेदकतया भानमाकाङ्क्षाबलादेव सम्भवतीति वाच्यम् । अन्यूनवृत्तित्वस्य नानापदार्थघटितस्य संसर्गघटकतया भाने मानान्तरविरहेण स्वरूपसम्बन्धावच्छिन्नत्वभानोपगमस्यैवोचितत्वात् (१) । इत्युच्यते, तदा व्याप्यवृत्तितानिवेशपक्षे वह्नित्वादेर्व्याप्यवृत्तिघटत्वाद्यवच्छिन्नवह्न्याद्यभावप्रतियोगितावच्छेदकत्वमादायासम्भवप्रसक्तिरित्यालोच्य प्रतियोगिवैयधिकरण्यनिवेशनमनुससार । तदर्थश्च प्रतियोगितावच्छेदकविशिष्टानधिकरणवृत्तित्वमेव तथा सत्यपि हेतुमतो घटत्वादिविशिष्टानधिकरणतया वह्नित्वादिना घटाद्यभावमादाय दोषप्रसक्त्या सामानाधिकरण्येनेत्यस्य सार्थक्यसम्भवात् । न च प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताच्छेदकताकभेदवत्त्वं तथाच संयोगत्वावच्छिन्नघटादिमद्भेदमादाय संयोगात्यन्ताभावस्य प्रतियोगिवैयधिकरण्यापत्तिः भेदप्रतियोगितावच्छेदकतायां प्रकृत-

(१) एवमित्यादिः उचितत्वादित्यन्तः पाठः केषु चिदादर्शपुस्तकेषु नास्ति ।

प्रतियोगितासामानाधिकरण्यनिवेशनेन सामञ्जस्यात्। न च (१) परे त्वित्यादिनाभिहितद्वितीयकल्प एव पर्य्यवसानमिति घटत्वादिना वह्न्याद्यभावस्यापि घटत्वाद्यवच्छिन्नवह्निमद्भेदमादाय प्रतियोगिवैयधिकरण्यापत्त्या वह्नित्वादेस्तत्प्रतियोगितायाः सामानाधिकरण्येनावच्छेदकतया अव्याप्तिरिति वाच्यम्। व्यधिकरणधर्म्मावच्छिन्नप्रतियोगितावच्छेदकताकभेदानभ्युपगमेनैवोक्तापत्त्यसम्भवात्, घटत्वेन पटवान्नेत्यादौ घटत्वाद्यवच्छिन्नपटात्यन्ताभावस्यैव विषयत्वोपगमात्, प्रतियोगितावच्छेदकं सामानाधिकरण्येन यत्तावच्छेदकं तादृशप्रतियोगितावच्छेदकताक एव वा भेदो निवेश्यः(२)। अथैवमपि घटत्वाद्यवच्छिन्नवह्न्याद्यभावस्य घटत्वाद्यवच्छिन्नघटादिमद्भेदमादाय घटत्वाद्यवच्छिन्नघटादिव्यधिकरणस्य प्रतियोगितावच्छेदकत्वमादायाव्याप्तिर्दुर्व्वारैवेति चेन्न, सामानाधिकरण्येन प्रतियोगिताया अवच्छेदकं यद्यत् तदवच्छिन्नप्रतियोगितावच्छेदकताकभेदस्यैव निवेशनीयत्वात्। अथ वह्नित्वादिना

---

(१) सामञ्जस्यादित्यनन्तरं "न च घटत्वादिना वह्न्याद्यभावस्यापि घटत्वाद्यवच्छिन्नवह्न्यादिमद्भेदमादाय प्रतियोगिवैयधिकरण्यं दुर्व्वारं तादृशभेदीयवह्न्यादिनिष्ठप्रतियोगितावच्छेदकतायां घटत्वाद्यवच्छिन्नवह्न्यभावीयवह्न्यादिनिष्ठप्रतियोगिताव्यधिकरणघटत्वादेरिव तत्समानाधिकरणवह्नित्वादेरपि सामानाधिकरण्येनावच्छेदकतायास्तादृशात्यन्ताभावप्रतियोगितावच्छेदकतावदप्रत्याख्येयत्वात्, प्रकृतप्रतियोगितासमानाधिकरणधर्म्मावच्छिन्नत्वस्य भेदवारणासम्भवादिति वह्नित्वादेस्तत्प्रतियोगितायां सामानाधिकरण्येनावच्छेदकतया अव्याप्तिरिति वाच्यम्।" इत्यधिकः पाठः कुत्रचिदादर्शपुस्तके वर्त्तते।

(२) प्रतियोगितावच्छेदकसमानाधिकरण्येन यावच्छेदकता तादृशावच्छेदकताकप्रतियोगिताकभेद एव वा निवेश्य इति पा०।

घटाद्यभावस्य यदि घटत्वादिकं प्रतियोगितावच्छेदकं तदा घटादिमति तादृशाभावासत्त्वप्रसङ्ग इति वह्नित्व-घटत्वाद्योरेवावच्छेदकतापर्य्याप्तिरुपगन्तव्या तथाचानवच्छेदकपदस्यावच्छेदकतापर्य्याप्त्यनधिकरणपरतया व्याख्येयतयैव तादृशाभावप्रतियोगितामादाय दोषाप्रसक्तेः सामानाधिकरण्येनेत्यस्य वैयर्थ्यमशक्यवारणमेवेति चेन्न, प्रतियोगिविशेषणतापन्न-तदनापन्नयोरवच्छेदकतावैलक्षण्येन प्रत्येकमेवावच्छेदकतापर्य्याप्तेः पर्य्याप्तिविवक्षामात्रेण प्रतीकारासम्भवात् सामानाधिकरण्येनेत्यस्य सार्थक्यात् तदपि प्रतियोगिविशेषणतापन्नस्य यादृशं विलक्षणमवच्छेदकत्वं तत्पर्य्याप्त्यनधिकरणत्वलाभायैव, एवञ्च विलक्षणावच्छेदकतात्वेन प्रत्येकं पर्य्याप्तयोरवच्छेदकत्वयोस्तत्तत्प्रतियोगितावच्छेदकत्वत्वेनानुगतयोः समानाधिकरण-व्यधिकरणधर्म्मद्वये पर्य्याप्त्यन्तरं स्वीक्रियते तादृशानुगतरूपावच्छिन्नपर्य्याप्त्यधिकरण-धर्म्मावच्छिन्नस्यैवाभावविरोधितेति(१) व्यधिकरणधर्म्मावच्छिन्नाभावस्य प्रतियोगिमति सत्त्वोपपत्तिः। एवञ्च ह्रदत्व-वह्नित्वोभयावच्छिन्नवह्न्यभावमादाय पर्य्याप्तिनिवेशव्यावृत्तिप्रदर्शनं समानाधिकरणधर्म्मस्य व्यधिकरणधर्म्मावच्छिन्न-

---

(१) कुत्रचिदादर्शपुस्तके लक्षणाभिप्रायेणेतीत्यनन्तरम् अधिकपाठो वर्त्तते यथा, व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्यैव तत्प्रतियोगितावच्छेदकविशिष्टविरोधित्वोपगमेनोक्ताभावस्य घटादिमति वृत्तौ बाधकाभावात्, अस्तु वा विलक्षणावच्छेदकतात्वेन प्रत्येकं पर्य्याप्तयोरप्यवच्छेदकत्वयोस्तत्तत्प्रतियोगितावच्छेदकतात्वेनानुगतयोः समानाधिकरण-व्यधिकरणधर्म्मद्वये पर्य्याप्त्यन्तरं तादृशानुगतरूपावच्छिन्नपर्य्याप्त्यधिकरणधर्म्मावच्छिन्नस्यैव वाभावविरोधितेति नानुपपत्तिरिति वदन्ति।

प्रतियोगितानवच्छेदकत्वपक्षीयव्याप्यवृत्तित्वघटितलक्षणाभिप्राये-णेत्याहुः ।

'अव्यभिचारिसम्बन्धरूपता' अवयवशक्त्या अव्यभिचारिसम्बन्धपदप्रतिपाद्यता, तथाच पूर्व्ववन्न तत्पदस्य पारिभाषिकतेति भावः। ननु साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारपदार्थस्य तच्छरीरेऽनिवेशात् कथमेवमित्यत आह, 'हेताविति हेत्वन्वयि साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वं यथा व्यभिचारः तथा साध्यतावच्छेदकान्वयिनो हेतुसमानाधिकरणाभावप्रतियोगितायां सामानाधिकरण्येनावच्छेदकत्वस्यापि तथात्वादित्यर्थः, वह्निर्धूमस्य व्यभिचारीत्यत्राभाववद्वृत्तित्वं व्यभिचारपदार्थः, तदेकदेशे चाभावे षष्ठ्यर्थप्रतियोगिताया निरूपकत्वसम्बन्धेनान्वयः, प्रतियोगितायां चाधेयतासम्बन्धेन धूमस्य, अवच्छिन्नत्वसम्बन्धेन धूमविशेषणतापन्नधूमत्वस्यान्वय इति धूमत्वावच्छिन्नधूमाभाववद्वृत्तित्वलाभः, साध्यतावच्छेदकावच्छिन्नसाध्यान्तर्भावेण च न व्यभिचारपदार्थता शक्त्यानन्त्यप्रसङ्गात् साध्यवाचकपदवैयर्थ्यापाताच्च। एवं समानाधिकरणाभावप्रतियोगितायां सामानाधिकरण्येनावच्छेदकत्वं व्यभिचारपदार्थः, सामानाधिकरण्ये च व्युत्पत्तिवैचित्र्यात् प्रथमान्तपदोपस्थाप्यस्यापि वह्नेर्निरूपकत्वेनान्वयः, वह्न्याद्यन्तर्भावेनैव वा शक्तिः, धूमपदं लक्षणया धूमत्वपरम्, आधेयत्वं षष्ठ्यर्थः, अन्वयश्चास्यावच्छेदकत्वे, निरूपकत्वमिन्प्रत्ययार्थः, तथाच धूमत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपको वह्निरित्यन्वयबोधः। यद्यपि लाघवरूप-

विनिगमकसत्त्वादभाववद्वृत्तित्व एव व्यभिचारपदशक्तिकल्पनमुचितं, तथापि ज्ञेयत्वं वाच्यत्वस्याव्यभिचारीति प्रामाणिकव्यवहारानुरोधादुपदर्शितगुरुरूपस्यापि व्यभिचारपदार्थत्वमावश्यकं, तत्र वाच्यत्वाभावाप्रसिद्ध्या तदभाववद्वृत्तित्वाभावबोधासम्भवात्, उक्तरूपस्य व्यभिचारपदार्थत्वे च व्यभिचारस्याभावोऽव्यभिचारमित्यव्ययीभावाश्रयणात् ज्ञेयत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमव्यभिचारपदार्थः, इन्प्रत्ययार्थः निरूपकत्वं, वाच्यत्वपदं वाच्यत्वत्वपरं, षष्ठ्यर्थश्चाधेयत्वं, तथाच वाच्यत्वत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वनिरूपकं (१) ज्ञेयत्वमित्यन्वयबोधः। अथैवमपि अव्यभिचारिसम्बन्धपदेनोक्तव्याप्तिः कथं लाभः। न चाव्यभिचारिपदं तादृशप्रतियोगितानवच्छेदकत्वाश्रयपरं, सम्बन्धश्च तदाश्रयसामानाधिकरण्यमिति तल्लाभ इति वाच्यम्। धूमाव्यभिचारिवह्नित्वमितिप्रयोगाभावादुक्तधर्म्मबोधकाव्यभिचारपदसमभिव्याहृतमत्वर्थीयस्याश्रयत्वाबोधकत्वादव्यभिचारपदार्थान्वयितावच्छेदकं यद्रूपं तदवच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकताबोधकताया व्युत्पत्तिसिद्धत्वात्, साध्यतावच्छेदकस्याव्यभिचारिपदार्थत्वे हेतुसमानाधिकरणेत्यादिव्याप्तिबोधस्याशक्यत्वाच्चेति चेन्न, अव्यभिचारिसम्बन्ध इत्यस्याव्यभिचारिहेतुनिष्ठं साध्यसामानाधिकरण्यमित्यर्थः, एवञ्च साध्यतावच्छेदकनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकताकहेतुनिष्ठसाध्यसामानाधिकरण्यमिति पर्य्यवसितं, उक्तलक्षणवाक्य-

(१) स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकताकमिति पा०।

स्याप्यत्वैवार्थे तात्पर्य्यं न तु यथाश्रुतविशेष्य-विशेषणभावे, तदापन्न-स्याव्यभिचारिसम्बन्धपदेन बोधयितुमशक्यतया पारिभाषिकताया-दुर्व्वारत्वात्। न च यद्रूपावच्छिन्नस्य यस्य व्याप्तित्वं तदन्यरूपेण तस्याव्यभिचारिसम्बन्धपदार्थत्वेऽपि न क्षतिरिति वाच्यम्। एवं सति साध्याभाववद्वृत्तित्वमात्रस्य व्यभिचारपदार्थत्वेऽपि व्यतिरेकिसाध्यकोक्तव्याप्तेरव्यभिचारिसम्बन्धरूपतोपपत्तेरुक्तधर्म्मस्य व्यभिचारपदार्थत्वव्यवस्थापनाया अनुपयुक्तत्वात्। उक्तलक्षणेऽपि साध्यसामानाधिकरण्यमन्तर्भाव्याव्यभिचारिसम्बन्धरूपताया व्यवस्थापयितुं शक्यत्वात् साध्यसामानाधिकरण्यानन्तर्भावेऽपि प्रतियोगिसमानाधिकरणस्वसमानाधिकरणनिरुक्तयावदभावकत्वरूप-पर्य्यवसितपूर्व्वलक्षणार्थस्य सम्बन्धरूपतासम्भवात्। 'अवच्छेदकत्वमिति अनवच्छेदकमित्यत्र यदवच्छेदकपदं तत्तात्पर्य्यविषयताव-च्छेदकमित्यर्थः, 'तत्पर्य्याप्त्यधिकरणत्वं' पर्य्याप्तिसम्बन्धेनावच्छेदकतावत्त्वं, तथाच पर्य्याप्तिसम्बन्धेनावच्छेदकत्वावच्छिन्नस्य भेदोऽनवच्छेदकपदेन विवक्षित इति भावः। 'विशिष्टवह्न्यभावस्य' 'प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्येत्यन्वयः, महानसीयत्वादिविशिष्टवह्न्यभावस्य प्रतियोगितायां महानसीयत्वसहितवह्नित्वस्यावच्छेदकत्वेऽपि आश्रयतासम्बन्धेनावच्छेदकतावदन्यत्वस्य वह्नित्वे दुर्लभत्वादिति भावः। प्रतियोगिविशेषणतापन्नधर्म्मान्तरसहितवह्नित्वावच्छिन्नाभावमादाय दोषं प्रदर्श्य प्रतियोगिविशेषणतापन्नधर्म्मस्यैव प्रतियोगितावच्छेदकत्वं प्रतीयते इति नियमसनभ्युपगन्तुर्व्यधिकरणधर्म्मावच्छिन्नाभाववादिनः प्रति-

योग्यवृत्तिधर्म्मसहितप्रतियोगिवृत्तिधर्म्मपर्य्याप्तप्रतियोगितावच्छेद-कताकोऽप्यभावोऽस्तीति व्युत्पादनाय तादृशाभावमादायापि दूषणं दर्शयति, 'ह्रदत्वेति, उभयावच्छिन्नाभावप्रतियोगितावच्छेदकोभय-घटकप्रत्येकस्यावच्छेदकताया अव्याहतत्वादिति भावः। 'न चेति-रिति, अवच्छेद्याश्रयविशेषणभावापन्नेषु तदानापन्नेषु वा नाना-धर्म्मेषु पर्य्याप्तं यदवच्छेदकत्वं पर्य्याप्तिसम्बन्धेन तदवच्छिन्नभेदस्य तत्पर्य्याप्त्यनवच्छेदकप्रत्येकधर्म्ममात्रवृत्तिधर्म्मावच्छेदेन सत्त्वाद्वह्नि-त्वादेस्तादृशप्रतियोगितानवच्छेदकत्वस्य घटत्वाद्यवच्छिन्ने घट-पटोभयत्वावच्छिन्नभेदवन्निष्ठत्युहत्वादिति भावः। न च वह्नि-निष्ठह्रदत्वावच्छिन्नोभयावच्छिन्नप्रतियोगितायाः सामानाधिक-रण्येन यदवच्छेदकत्वं तद्वह्नित्वमात्रे पर्य्याप्तं ह्रदत्वस्य व्यधि-करणतयैवावच्छेदकत्वादिति कथं वह्नित्वस्य तादृशावच्छेदका-वच्छिन्नान्यत्वनिर्व्वाह इति वाच्यम्। यतः सामानाधिकरण्येना-नवच्छेदकमित्यस्य तत्तत्प्रतियोगितासमानाधिकरणवृत्तियत्-प्रतियोगितावच्छेदकत्वं तदवच्छिन्नभेदकूटवत्त्वमित्यर्थः, इत्यञ्च ह्रदत्व-वह्नित्वोभयावच्छिन्नप्रतियोगितायाः समानाधिकरणवृत्त्ये-कमेवावच्छेदकत्वमुभयत्रपर्य्याप्तं तदवच्छिन्नभेदो वह्नित्वेऽव्याहत-एवेति। ननु संयोगादिसाध्यकसद्धेतावव्याप्तिवारणाय तदभाव-व्यावर्त्तकव्याप्यवृत्तित्वादिविशेषणोपादाने तत्साध्यकसत्त्वादिरूप-व्यभिचारिहेतावतिव्याप्तिप्रसङ्गः अभावान्तरस्यैव लक्षणघटक-त्वादित्याशङ्कां व्यभिचारिहेतुकस्थले संयोगाद्यभावस्य लक्षणघट-कत्वप्रदर्शनेन परिहरति, 'सत्त्ववतीति, 'व्याप्यवृत्तिरित्युपलक्षणं

प्रतियोगिव्यधिकरणस्येत्यपि बोध्यम्। अयम्भावः व्याप्यवृत्तित्व-मत्र नावच्छिन्नवृत्तिकान्यत्वं न वा स्वसमानाधिकरणाभावप्रति-योगित्वसामान्याभावः, प्रतियोगिव्यधिकरणत्वञ्च न प्रतियोग्य-धिकरणावृत्तित्वं, किन्तु स्वाधिकरणयत्किञ्चिद्वृत्तिनिष्ठाभावाप्रति-योगित्वं निरवच्छिन्नवृत्तिकत्वं वा व्याप्यवृत्तित्वं, प्रतियोग्यनधि-करणवृत्तित्वञ्च प्रतियोगिवैयधिकरण्यं तच्च संयोगाद्यभावसाधा-रणं, हेत्वधिकरणे तथात्वस्य(१) विवक्षितत्वात् सद्धेतुस्थले न तादृ-शाभावस्य लक्षणघटकता तत्र गुणादेर्हेत्वनधिकरणत्वात्, सत्तादि-हेतुकस्थले तस्य हेत्वधिकरणतया तत्र व्याप्यवृत्तिः प्रतियोगि-व्यधिकरणश्च साध्याभावो लक्षणघटक एवेति। 'वक्ष्यमाणमिति सिद्धान्तलक्षण इत्यादिः, 'तदवच्छेदकत्वं' प्रतियोगितावच्छेदकत्वम्, 'इहापि' एतल्लक्षणेऽपि, 'बोध्यं' विवक्षणीयम्, अन्यथा लघुरूपसम-नियतगुरुधर्म्मावच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्तिरिति भावः। तथाच संयोगादिरूपसाध्याभावस्य व्याप्यवृत्तित्वादिविशेषणेन व्यावर्त्तनेऽपि न क्षतिः व्याप्यवृत्त्यभावान्तरप्रतियोगितावच्छेदका-नतिरिक्तवृत्तित्वस्य संयोगत्वादौ सत्त्वेन तदवच्छिन्नसाध्यकव्यभि-चारिण्यतिव्याप्त्यप्रसक्तेरिति यथाश्रुताशयोऽत्रावगम्यते स न सङ्ग-च्छते, सत्तावान् जातेरित्यादौ सत्तात्वस्य हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यनतिरिक्तवृत्तितायाः सत्त्वा-त्तत्साधारणतयाऽव्याप्तेर्वारणाय स्वविशिष्टसम्बन्धिनिष्ठाभावप्रति-

(१) हेत्वधिकरणे अनवच्छिन्नवृत्तिकत्वस्य प्रतियोग्यनधिकरणहेत्वधिकरण-वृत्तित्वस्य च विवक्षितत्वादित्यर्थः।

योगितानवच्छेदकतत्कत्वरूपतदनतिरिक्तवृत्तित्वस्यैव विवक्षणीय-
तया तद्घटकाभावे (१) व्याप्यवृत्तित्वनिवेशे प्रयोजनविरहेण संयो-
गादिसाध्यकसद्धेतौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदक-
संयोगत्वादेर्निरुक्तानतिरिक्तवृत्तित्वस्य संयोगत्वादिसाधारण्यविर-
हेणाव्याप्त्यनवकाशेन हेतुसमानाधिकरणाभावे व्याप्यवृत्तित्व-
विशेषणवैयर्थ्यात् । न च स्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्ति-
त्वविशेषणादाने संयोगेन द्रव्यस्याव्याप्यवृत्तितापत्तेः संयोगेन साध्य-
तायां हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभाव-
प्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठाभावीयसाध्यतावच्छेद-
कसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकं तादृशधर्माप्रसिद्धेः तादृ-
शाभावप्रतियोगितावच्छेदकीभूतसकलधर्मावच्छिन्नानामेव संयो-
गेनाभावानां केवलान्वयित्वादिति स्वविशिष्टसम्बन्धिनिष्ठा-
भावे व्याप्यवृत्तित्वविशेषणस्यावश्यकतेति वाच्यम् । संयोगाद्य-
भावव्यावर्त्तकस्यावच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वस्य निवेशे
संयोगेन साध्यतायां हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धा-
वच्छिन्नाभावो गुणादीनामेव व्याप्यवृत्तिर्न तु द्रव्यस्येति तादृशा-
भावप्रतियोगितावच्छेदकं यद्विशिष्टसम्बन्धिनिष्ठतादृशाभावप्रति-
योगितानवच्छेदकं तादृशधर्माप्रसिद्धितादवस्थ्यात् प्रतियोगितायाः
साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं परित्यज्य एकसम्बन्धावच्छिन्न-
त्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विशेषणत्वपक्षस्यैवावल-
म्बनीयतया व्याप्यवृत्तित्वविशेषणवैयर्थ्यस्य दुरुद्धरत्वात् तस्मात्

(१) तादृशपारिभाषिकावच्छेदकत्वघटकाभावे इत्यर्थः ।

'वच्यमाणं वेत्यादिग्रन्थस्य (१) अभावे व्याप्यवृत्तित्वविशेषणं न देयमेव तद्दानेऽपि संयोगत्वादौ द्रव्यत्वसमानाधिकरणाभावप्रतियोगित्वीयपारिभाषिकावच्छेदकत्वविरहेणाव्याप्तिप्रसक्तेरित्याशयः। ननु पारिभाषिकावच्छेदकत्वशरीरनिविष्टस्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणमावश्यकम् अन्यथा तुल्ययुक्त्या सत्त्वादिहेतुकेऽपि संयोगत्वादौ पारिभाषिकावच्छेदकत्वानिर्व्वाहादिति हेतुमन्निष्ठाभावेऽपि तद्विशेषणमावश्यकम् अन्यथाव्याप्तेरित्याशङ्कां सत्त्वादिहेतुकस्थले गुणत्वाद्यवच्छिन्नाभावप्रतियोगितायाः पारिभाषिकावच्छेदकत्वं संयोगत्वादौ प्रदर्श्य वारयति, 'भवति चेति, गुणत्वाद्यवच्छिन्नाभावानां व्याप्यवृत्तित्वाभिधानञ्च संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वसूचनाय, जन्यद्रव्येषूत्पत्तिकालावच्छेदेन गुणत्वाद्यवच्छिन्नाभावस्य नवीनैरुपगमात्तन्मते गुणत्वस्य संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकत्वं न सम्भवतीति 'गुणावृत्तित्वानुसरणं, संयोगि गुणान्यत्वे सति सत्त्वादित्यादौ गुणावृत्तित्वं न विशिष्टहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमतः संयोगसाध्यकव्यभिचारिमात्रे यादृशप्रतियोगितावच्छेदकमुपादाय संयोगत्वस्य पारिभाषिकावच्छेदकत्वं निर्व्वहति तादृशधर्म्ममाह, 'द्रव्यमात्रसमवेतत्वेति।

इति चक्रवर्त्तिलक्षणव्याख्या।

---

(१) ग्रन्थस्येत्यनेन आशय इत्यस्य सम्बन्धः।

## प्रगल्भलक्षणद्वयम् ।

### तत्त्वचिन्तामणि-दीधितिः ।

साध्यतावच्छेदकविशिष्ट(१)साध्यसामानाधिकरण्या-वच्छेदकस्वसमानाधिकरणसाध्याभावत्वकत्वं, यत्समा-नाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्ध-कत्वं नास्ति तत्त्वं वा व्याप्तिरिति तु न युक्तं सर्व्वत्र साध्याभावपदवैयर्थ्यात् ।

---

### गादाधरी विवृतिः ।

प्रगल्भलक्षणद्वयमेकदोषेण दूषयितुमुपन्यस्यति, 'साध्यतावच्छे-दकविशिष्टेत्यादि, विशिष्टाभावो विशेष्य-विशेषणसम्बन्धाभावरूपः, उभयाभावस्य परम्परासम्बन्धेन द्वित्वाभावरूप इति मतेनेदं लक्षण-मन्यथा व्यधिकरणधर्म्मावच्छिन्नाभावं विनापि तादृशाभावमादाय लक्षणसमन्वयसम्भवे 'प्रतियोग्यवृत्तिश्चेति ग्रन्थानुत्थितेरिति ध्येयम् । अवच्छेदकत्वमिहानतिरिक्तवृत्तित्वं न तु स्वरूपसम्बन्धविशेषः यथोक्तधर्म्मयोस्तादृशावच्छेद्यावच्छेदकभावे मानाभावात् । 'स्वपदं हेतुतावच्छेदकावच्छिन्नहेतुपरं, तथाच साध्यतावच्छेदकविशिष्ट-साध्यसामानाधिकरण्यानतिरिक्तवृत्ति यद्धर्म्मविशिष्टसमानाधिक-रणसाध्याभावत्वं तद्धर्म्मवत्त्वं व्याप्तिरिति तु समुदितार्थः, सद्धेतौ साध्यासमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य हेत्वसमानाधिकरणत्वनियमात् तादृशसाध्याभावत्वं साध्यसामा-

---

(१) साध्यतावच्छेदकावच्छिन्नेति पा० ।

नाधिकरणानतिरिक्तवृत्तीति लक्षणसमन्वयः। व्यभिचारिणि तादृशसाध्याभावस्यापि हेतुसमानाधिकरणतया तदतिरिक्त-वृत्त्येव तदिति न लक्षणसमन्वयः। गुण-कर्म्मान्यत्वविशिष्टसत्ता-वान् जातेरित्यादावतिव्याप्तेर्व्वारणाय 'साध्यतावच्छेदकविशिष्टेति, साध्याधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन बोध्यं तेन संयोगा-दिना धूमादेरभावस्य कालिकादिना धूमादिमति वृत्तावपि (१) नातिव्याप्तिः। द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तेर्व्वारणाय हेतु-तावच्छेदकविशिष्टत्वेनोपादानं, तद्विशिष्टाधिकरणत्वं हेतुताव-च्छेदकसम्बन्धेन बोध्यं तेन धूमादिसमवायिनिष्ठवह्नित्वाद्यवच्छि-न्नवह्न्याद्यभावस्य वह्न्यादिसामानाधिकरण्यविरहेऽपि न क्षतिः। साध्य-हेतुसामानाधिकरण्यघटकवृत्तिद्वयमेकसम्बन्धेन बोध्यं तेन द्रव्यं सत्त्वादित्यादौ दैशिकविशेषणतया हेतुसमानाधिकरणस्य द्रव्यत्वत्वाद्यवच्छिन्नद्रव्यत्वाद्यभावस्य कालिकादिसम्बन्धेन साध्य-वन्महाकालादिवृत्तित्वेऽपि न क्षतिः। यद्यपि हेतुसमाना-धिकरणसाध्याभावत्वघटकमभावत्वरूपं विशेष्यं व्यतिरेकिसाध्यके साध्यासमानाधिकरणाभावसाधारणमिति विशिष्टसाध्यसामाना-धिकरण्यशून्यावृत्तित्वरूपन्तदनतिरिक्तवृत्तित्वं दुर्व्वचं, तथापि यावन्तः स्वसमानाधिकरणसाध्याभावा विशिष्टसाध्यसमानाधिक-रणाः इत्यर्थस्य विवक्षणीयतया न दोषः। अव्याप्यवृत्तिसाध्यकव्यभि-चारिण्यतिव्याप्तिः साध्याभावस्य साध्यवत्यपि वृत्तेरिति तु नाश-ङ्कनीयं व्यभिचारनिरूपकाधिकरणं यत् तदवृत्तित्वावच्छिन्ना-

(१) समवायादिना धूमादिमति वृत्तावपीति पा०।

भावस्यापि साध्याभावतया तस्य च साध्यवत्यवृत्तेः(१)। 'यत्समानाधिकरणेति यद्रूपविशिष्टसमानाधिकरणेत्यर्थः, तेन द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यादौ सत्तासमानाधिकरणद्रव्यत्वत्वावच्छिन्नद्रव्यत्वाभावप्रमायां साध्यवत्त्वज्ञानप्रतिबन्धकत्वेऽपि न क्षतिः। यद्धर्म्मावच्छिन्नसामानाधिकरण्यशरीरे च हेतुतावच्छेदकसम्बन्धेन यद्धर्म्मावच्छिन्नाधिकरणत्वं निवेशनीयं तत्प्रयोजनन्तु स्फुटमेव (२)। अधिकरणवृत्तित्वञ्च निरवच्छिन्नं ग्राह्यं, तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ हेतुसमानाधिकरणकपिसंयोगत्वावच्छिन्नकपिसंयोगाभावादिविषयकप्रमाया अव्याप्यवृत्तित्वज्ञानविरहकालीनायाः साध्यवत्त्वज्ञानप्रतिबन्धकत्वेऽपि न क्षतिः, 'प्रमायां' प्रमासामान्ये, तेन व्यभिचारिणि नातिव्याप्तिः, समानाधिकरणधर्म्मावच्छिन्नाभावत्वेन व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववत्त्वज्ञानस्य साध्यवत्त्वज्ञानविरोधित्वात् सद्धेतावपि लक्षणगमनासम्भव इत्यतो ज्ञानसामान्यमुपेक्ष्य प्रमासामान्यनिवेशनं, प्रमापदञ्च भ्रमसामान्यभिन्नज्ञानपरम् (३) अत उक्तभ्रमात्मकज्ञानस्याभावत्वांशे प्रमात्वेऽपि न क्षतिः। साध्यवत्ताज्ञानपदमपि तत्सामान्यपरं अतो व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववत्ताज्ञानस्य तद्धर्म्मवत्त्वेन साध्यवत्तावगाहिज्ञानविरोधित्वेऽपि न क्षतिः, एवञ्च साध्यपदं साध्यतावच्छेदकविशिष्टपरं, ज्ञानञ्च स्वसमानधर्म्मितावच्छेदककत्वेन

(१) अव्याप्यवृत्तीत्यादिः अवृत्तेरित्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति।

(२) वह्निमान् धूमादित्यादावव्याप्तिवारणमेव प्रयोजनम्।

(३) यावद्भ्रमभिन्नपरमिति पा०।

स्वविषयीभूताभावप्रतियोगितावच्छेदकसंसर्गकत्वेन च विशेषणीयं तेन धूमत्वाद्यवच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाद्य-भाववत्ताज्ञानस्य साध्यवत्ताज्ञानसामान्यान्तर्गतद्रव्यत्वादिना धूमा-दिप्रकारकं भिन्नधर्म्मावच्छिन्नविशेष्यकधूमत्वाद्यवच्छिन्नप्रकारकं समवायादिसम्बन्धेन धूमत्वाद्यवच्छिन्नप्रकारकञ्च ज्ञानं प्रत्यप्रति-बन्धकत्वात् कामिनीजिज्ञासादेरेव च तादृशज्ञानसामान्यविरोधि-त्वात् अतिव्याप्तेर्नावकाशः। 'साध्याभावपदवैयर्थ्यादिति, अत्र च साध्यतावच्छेदकविशिष्टसामानाधिकरण्यावच्छेदकत्वं स्वव्यापक-तादृशसामानाधिकरण्यकत्वं तथाच साध्यतावच्छेदकविशिष्ट-साध्यसामानाधिकरण्यत्वं यत्समानाधिकरणसाध्याभावत्वव्यापक-तावच्छेदकं तत्त्वं व्याप्तिरित्येतादृशार्थकत्वे प्रथमलक्षणे न साध्या-भावपदवैयर्थ्यं, यत्समानाधिकरणनिष्ठाभावप्रतियोगितावच्छेदक-त्वाभावरूपयत्सामानाधिकरण्यव्यापकतावच्छेदकत्वात् यत्समा-नाधिकरणसाध्याभावनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावरूपस्य यत्समानाधिकरणसाध्याभावत्वव्यापकतावच्छेदकत्वस्यातिरिक्ततया तद्घटितलक्षणे यत्सामानाधिकरण्यव्यापकतावच्छेदकत्वस्यानिवे-शात् तद्घटितलक्षणसम्भवेऽपि प्रकृतलक्षणे वैयर्थ्यानवकाशात्। एवं यत्समानाधिकरणसाध्याभावप्रमात्वव्यापकः साध्यवत्ताज्ञान-प्रतिबन्धकत्वाभावस्तत्त्वमित्येतादृशार्थकत्वे द्वितीयलक्षणेऽपि न तद्वैयर्थ्यं, यत्समानाधिकरणप्रमात्वव्यापकताघटकाभावात् यत्समा-नाधिकरणसाध्याभावप्रमात्वव्यापकतायामभावान्तरस्यैव निवेशा-दित्यवधेयम्। इति प्रगल्भलक्षणद्वयव्याख्या समाप्ता।

तत्त्वचिन्तामणि-दीधितिः ।

यत्तु साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्वं नास्ति तत्त्वं व्याप्तिरिति, तन्न, अनुमित्यविरोधित्वज्ञानस्यानुमितिजनकत्वे साध्याभाववद्वृत्तित्वज्ञानस्यानुमित्यविरोधितया व्यभिचारिण्यतिप्रसङ्गात् ।

---

गादाधरी विवृतिः ।

'साध्याभाववतीति यन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावस्तत्त्वमित्यर्थः, वह्निमान् धूमादित्यादौ हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपिता विषयिता व्यधिकरण-धर्म्मावच्छिन्नाभाववद्वृत्तित्वत्वविशिष्टविषयितैव सा च न वह्न्यनुमितिप्रतिबन्धकतावच्छेदिका तच्छालिज्ञानस्यानुमित्यप्रतिबन्धकत्वात्, व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वविषयितापि तादृशी तद्वतो ज्ञानस्य च व्यभिचारज्ञानविधयानुमितिप्रतिबन्धकत्वात् तादृशविषयितायाः अनुमितिप्रतिबन्धकतावच्छेदकत्वान्नातिव्याप्तिः । यन्निष्ठत्वस्यानुपादाने धूमाद्यंशे वह्नित्वावच्छिन्नवह्न्यभाववद्वृत्तित्वावगाहिभ्रमनिष्ठवह्न्यभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिताया अनुमितिप्रतिबन्धकतावच्छेदकत्वात् वह्निमान् धूमादित्यादावव्याप्तिः (१) अतस्तदुपादानं, तथाच

---

(१) केवलान्वयिनि साध्याभाववद्वृत्तितात्वविशिष्टनिरूपिततादृशभ्रमविषयतायाः अप्रसिद्धत्वेन व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरू-

भ्रमविषयवह्न्यभाववद्वृत्तित्वस्य हेतुनिष्ठत्वाभावान्नदोषः। यन्निष्ठ-पदार्थनिरूपितविषयितासामान्ये यन्निष्ठसाध्याभाववद्वृत्तित्वविषयितासामान्ये इति वा यद्युच्यते तदा व्यधिकरणधर्म्मावच्छिन्न-साध्याभाववद्वृत्तित्वमेव यत्र समानाधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तितात्वेन भातं तादृशज्ञानीयहेतुनिष्ठतथाविधसाध्याभाववद्वृत्तित्वनिरूपितविषयिताया अप्यनुमितिप्रतिबन्धकतावच्छेदकत्वादसम्भवोऽव्याप्तिर्व्वेति (१) साध्याभाववद्वृत्तित्वत्वविशिष्ट-निरूपितत्वं विषयितायाविशेषणं तादृशभ्रमविषयिता च न साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपिता तादृशविषयितानिरूपकस्य व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य विशेषणीभूतं यत्समानाधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वं तद्विशिष्टत्वाभावात्। न च तद्विशिष्टनिरूपितत्वं यदि तदवच्छिन्ननिरूपकताकत्वं तदा समानाधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तितात्वस्य तद्भ्रमविषयवृत्तावसत्त्वेऽपि तन्निष्ठविषयितानिरूपकत्वे व्यधिकरणीभूयावच्छेदकत्वाद्भ्रमविषयितायास्तद्विशिष्टनिरूपितत्वमक्षतमेव। यदि च वस्तुगत्या यत्र तद्वैशिष्ट्यं तन्निरूपितत्वमेव तद्विशिष्टनिरूपितत्वं तदा व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वविशिष्ट-निरूपितत्वमेवोक्तभ्रमविषयिताया अक्षतमिति कथं तद्व्यावर्त्तनमिति वाच्यम्। विशेषणीभूतधर्म्मान्तरविशिष्टेन व्यावर्त्यमानस्य

---

पितविषयितायाश्च प्रतिबन्धकतावच्छेदकत्वाभाववत्त्वात् लक्षणगमनान्नासम्भवोऽभिहितः।

(१) सर्व्वत्र तादृशभ्रमे मानाभावादाह, अव्याप्तिर्व्वेति।

विशेष्यस्य भाने विशेषणांशे प्रकारीभवन्त्यां (१) व्यक्तौ विशेष्य-सम्बन्धितावच्छेदकताया विशिष्टवैशिष्ट्यबोधे भानात् साध्याभाववद्वृत्तित्वत्वरूपविशेषणविशिष्टविषयेण निरूपकीभूय विषयिता-व्यावर्त्तने व्यावर्त्तकविषयस्याश्रयतया व्यावर्त्तकं यत् साध्याभाववद्वृत्तितात्वं तस्यापि निरूपकतावच्छेदकीभूय विषयिताव्यावर्त्त-कत्वादुक्तभ्रमविषयिताव्यावृत्तेः (२) तद्व्यावर्त्तकविषयव्यावर्त्तकस्य तन्निष्ठसाध्याभाववद्वृत्तितात्वस्य तादृशविषयितानिरूपकतानवच्छे-दकत्वात् इति तादृशविषयिताया लक्षणाघटकत्वादेवच भ्रमविष-यिताव्यावर्त्तकतयैव साध्याभाववत्पदसार्थक्यं, तादृशविषयिताया-उक्तक्रमेण हेतुनिष्ठसाध्याभाववद्वृत्तितात्वविशिष्टानिरूपितत्वेऽपि हेतुनिष्ठाधेयतात्वविशिष्टनिरूपितत्वानपायात् साध्याभावमनुपादा-याभावाधिकरणवृत्तित्वत्वविशिष्टविषयितानिवेशे वृत्तौ समानाधि-करणधर्म्मावच्छिन्नाधिकरणीयत्वभ्रमविषयितावारणेऽपि वृत्ति-विशेषणे तन्निरूपकेऽधिकरणे यत्र समानाधिकरणधर्म्मावच्छिन्ना-भावभ्रमस्तद्विषयितावारणासम्भवेन साध्याभावांशनिवेशस्यावश्य-कत्वात्। न च साध्याभावपर्य्यन्तनिवेशेऽपि (३) वह्नित्वावच्छिन्न-वह्न्यभावत्वेन व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकवह्न्यभावमव-गाह्य तादृशाभाववद्वृत्तित्वावगाहि यज्ज्ञानं तदीयतादृशाभाव-वद्वृत्तित्वविषयितापि साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितैव

(१) आश्रयतयेत्यादिः।

(२) तथाच उक्तव्युत्पत्त्या साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिता-पदेन तदवच्छिन्नतदाश्रयनिष्ठनिरूपकताकविषयितालाभात् न तादृशविषयिताया-लक्षणघटकत्वमिति भावः।

(३) तावत्पर्य्यन्तनिवेशेऽपीति पा०।

व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताको यः साध्याभावस्तद्वृत्तित्व-त्वस्यैव तत्र विशेषणतया भानात्तद्विशिष्टत्वस्य च तादृशज्ञान-निष्ठविषयितानिरूपकसाध्याभाववद्वृत्तित्वे सत्त्वादिति तद्दोषता-दवस्थ्यमिति वाच्यम्। अभावांशे साध्यतावच्छेदकावच्छिन्नप्रति-योगिताकत्वसम्बन्धेन साध्यप्रकारकं व्यभिचारज्ञानमेवानुमिति-विरोधि, यत्र च व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यं प्रकार-स्तादृशज्ञानविषयघटकस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगि-ताकत्वसम्बन्धेन साध्यविशिष्टस्य व्यधिकरणधर्म्मावच्छिन्नाभाव-स्याप्रसिद्धेस्तादृशज्ञानविषयितायाः विशिष्टनिरूपितत्वासम्भवात्। न चैवमपि समानाधिकरणधर्म्मावच्छिन्नसाध्याभाव-व्यधिक-रणधर्म्मावच्छिन्नसाध्याभावद्वयविशेषिताधिकरणवृत्तित्वावगाहिनः समानाधिकरणधर्म्मावच्छिन्नाभावांशे भ्रमरूपज्ञानस्य विषयि-तायाः व्यधिकरणधर्म्मावच्छिन्नाभाववद्वृत्तितात्वविशिष्टनिरूपित-त्वात् समानाधिकरणधर्म्मावच्छिन्नसाध्याभावविषयितानिरूपिता-धिकरणविषयितानिरूपिताधेयत्वविषयितात्वेन च प्रतिबन्धक-तावच्छेदकत्वादव्याप्तिरिति वाच्यम्। हेतुसामानाधिकरण्यविशिष्ट-साध्याभावत्वविशिष्टविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावस्य विवक्षितत्वात् उक्तभ्रमे च समानाधिकरणधर्म्मावच्छिन्नाभाव-विषयितायास्तादृशविशिष्टनिरूपितत्वाभावेन तस्या एव च प्रति-बन्धकतावच्छेदकत्वेनाव्याप्त्यनवकाशात्। अथ यत्र ज्ञाने हेतुसमा-नाधिकरणतया भासमाने व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताक-

त्व-साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन साध्यस्यैका प्रकारता तादृशज्ञानीयव्यधिकरणधर्म्मावच्छिन्नाभावविषयितायां साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य विषयीभवदभावे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वासम्भवेऽपि व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धविषयितानिरूपकविषयिताविनानुमितिप्रतिबन्धकतावच्छेदकत्वस्य चाक्षतत्वादव्याप्तिर्दुर्वारैव इति चेन्न, तादृशभ्रमस्याप्रामाणिकत्वात् प्रामाणिकत्वे च संसर्गीयविषयिताद्वयानिरूपकत्वेनाभावविषयिताया विशेषणीयतया सामञ्जस्यात्। अथ साध्यरूपविशेषणविशिष्टस्याभावस्य विषयितानिरूपकतया लक्षणघटकत्वे साध्याभावयोः सम्बन्धस्य सम्बन्धविधया लक्षणघटकत्वमावश्यकं स च सम्बन्धः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपः व्यधिकरणघटत्वावच्छिन्नप्रतियोगिताकत्वरूपस्याननुगत इति प्रथमस्य निवेशे केवलान्वयिनि साध्यविशेषिताभावस्यैवाप्रसिद्धिः व्यतिरेकिसाध्यकसद्धेतौ च तादृशहेतुसमानाधिकरणाभावाप्रसिद्धिरित्यसम्भवश्चरमस्य निवेशे च सर्व्वत्र व्यभिचारिण्यतिव्याप्तिः प्रतियोगितावच्छेदकधर्म्माणाञ्च उपलक्षणीभूतेन केनचिद्रूपेणानुगमय्य तेन रूपेण तेषां निवेशो न सम्भवति प्रतियोगितावच्छेदकोपलक्षणस्य सम्बन्धघटकतया भानासम्भवात्। न चावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिताया एव सम्बन्धतया निवेशान्नाननुगमनिबन्धनोक्त दोष इति

वाच्यम् । अवच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिताविषयकाभाव-ज्ञानस्य प्रतियोगिमत्त्वज्ञानाविरोधितया तज्ज्ञानाविरोधिनः प्रतियोगिविशेषिताभावज्ञानस्य चानुभवविरुद्धतया अवच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितायाः संसर्गतया अभानात् । न च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशेषित एवाभावो निवेश्यः, न तु साध्यविशेषितः, वह्नित्वादिना घटाद्यभाव एव वह्न्यादिसाध्यक-धूमादिहेतुकस्थले लक्षणघटक इति वाच्यम् । प्रमेयत्वाद्यवच्छिन्नसाध्यके तादृशाभावाप्रसिद्धेः एवं स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्वादिविशेषिते वह्नित्वादिना घटादेरभावे भासमाने यत्र सम्बन्धघटकप्रतियोगितायां बाधितवह्न्यादिनिष्ठत्वस्य भानं तादृशज्ञानीयाभावविषयितायाः उक्तसम्बन्धेन साध्यतावच्छेदकविशिष्टाभावनिरूपिततया अनुमितिविरोधितया चानुपपत्तेर्दुर्वारत्वात् स्वावच्छिन्नसाध्यवृत्तित्वविशिष्टप्रतियोगितानिवेशे च सर्व्वत्र सद्धेतावप्रसिद्धेः, एवं प्रतियोगिविशेष्यतापन्न एवाभावे प्रतियोगिपारतन्त्र्येण समानाधिकरणधर्म्मस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रकारत्वं प्रामाणिकं न तु प्रतियोगिविशेष्यतानापन्ने वह्निर्नास्ति वह्नित्वेन घटो नास्तीत्येव प्रतीतेः न तु वह्नित्वेन नास्तीति तथाच विशिष्य प्रतियोग्यविशेषितस्य उक्तसम्बन्धेन साध्यतावच्छेदकविशेषितस्याभावस्य विषयित्वनिरूपकतया निवेशो न सम्भवत्येवेति । मैवं, प्रतियोग्यादिविशेषिताभावीयत्वेन विशिष्टनिरूपितविषयिता लक्षणे न निवेश्यते, अपि तु स्वनिरूपकहेतुसमानाधिकरणाभावनिष्ठो यः सम्ब-

न्धस्तत्प्रतियोगिसाध्यनिष्ठतत्सम्बन्धावच्छिन्ननिरूपकतावच्छेदकता-वच्छेदकतात्वेन, यत्र हेतुसमानाधिकरणघटत्वाद्यवच्छिन्नवह्न्य-भावे वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्न्यादेः साध्यस्य प्रकारता तादृशज्ञानविषयितानिरूपकाभावनिष्ठो न निरुक्ततन्निरू-पकतावच्छेदकसम्बन्ध इति तद्विषयिताव्युदासः, यत्र वह्नित्वाव-च्छिन्नघटाभावे तन्निष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नेः सम्बन्धतया भासते तत्र तत्सम्बन्धप्रतियोगी न वह्निरपि तु घट-एवेति साध्ये वास्तवतत्सम्बन्धप्रतियोगित्वनिवेशात्तादृशज्ञानीया-भावविषयिताव्युदासः, साध्यनिवेशाद्यत्र वह्नित्वेन घट एव वह्नि-त्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तत्सम्बन्धानुयोगिनि वह्नि-त्वावच्छिन्नघटाभावे प्रकारस्तादृशज्ञानीयाभावविषयितायास्तत्स-म्बन्धप्रतियोग्यवच्छिन्ननिरूपकताकत्वेऽप्यनुमितिविरोधित्वेऽपि च न दोषः, यत्र घटत्वावच्छिन्नवह्न्यभावे घटत्वावच्छिन्नप्रतियोगिता-कत्वमेव वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वेन वह्नेः संसर्गतया भास-ते तादृशज्ञानस्य प्रामाणिकत्वे साध्यप्रतियोगिको हेतुसमानाधिक-रणाभावानुयोगिको यद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्ब-न्धस्तद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्बन्धावच्छिन्नसाध्य--निष्ठनिरूपकतावच्छेदकत्वं विवक्षणीयमिति(१)। साध्याभाववद्वृत्ति-त्वरूपविषयस्य प्रतिबन्धकतावच्छेदककोट्यप्रवेशादतिव्याप्तिरतो-विषयितापर्य्यन्तनिवेशनम्। हेतुनिष्ठसाध्याभाववद्वृत्तितात्वविशिष्टे प्रतिबन्धकतावच्छेदकविषयितापर्य्याप्त्यभावविवक्षणे साध्यप्रति-

(१) नचैवमित्यादि विवक्षणीयमित्यन्तं क्रोड़पत्रम्।

योगिकाभावमात्रनिवेशे व्यभिचारिण्यतिव्याप्तिः प्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वावगाहिन एव ज्ञानस्य प्रतिबन्धकतया तदघटितविषये प्रतिबन्धकज्ञानविषयितायाः अपर्य्याप्तेः, साध्यतावच्छेदकावच्छिन्नसाध्याभावनिवेशश्च न सम्भवतीति(१) तदुपेक्षितं, व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावात् अतिव्याप्तिरतः सामान्य इत्युक्तम्। प्रकृतानुमितिपदं प्रकृतानुमितिसामान्यपरमन्यथा व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभावविषयकसमूहालम्बनात्मकप्रकृतानुमिति–प्रतिबन्धकतावच्छेदकत्वस्य हेतुनिष्ठतादृशसाध्याभाववद्वृत्तित्वविषयितायाः अपि सत्त्वात् सद्धेतावपि लक्षणगमनासम्भवात्। एवं प्रकृतेत्यनुपादाने कामिनीजिज्ञासादौ प्रसिद्धा या अनुमितिसामान्यप्रतिबन्धकता तदवच्छेदकत्वाभावो धूमाभाववद्वृत्तित्वादिविषयितायामक्षत एव तद्विषयकज्ञानस्य अन्यसाध्यकान्यलिङ्गकान्यसंसर्गकानुमित्यप्रतिबन्धकत्वादतः 'प्रकृतेति तत्साध्यक तद्धेतुकतत्संसर्गकपरं, सद्धेतुनिष्ठव्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वविषयितायाः अनुमितिप्रतिबन्धकस्वरूपासिद्ध्यादि-(२) ज्ञानवृत्तित्वादसम्भवः स्यादतो यन्निष्ठसाध्याभाववद्वृत्तित्वविषयकज्ञानसामान्यस्य(३)

---

(१) हेतुनिष्ठसाध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वासम्भवेनासम्भवापत्तेरिति शेषः।

(२) अनुमितिजनकज्ञानविरोधित्वं लक्षणघटकमित्याभिप्रायेण स्वरूपासिद्ध्याद्युत्कीर्त्तनम्।

(३) यन्निष्ठसाध्याभाववद्वृत्तित्वत्त्वविशिष्टनिरूपितविषयिताशालिज्ञानसामान्यस्येत्यर्थः।

अनुमित्यप्रतिबन्धकत्वमुपेत्य निरुक्तविषयितासामान्येऽनुमितिप्रतिबन्धकतावच्छेदकत्वाभावपर्य्यन्तानुधावनम् । अवच्छेदकत्वञ्च स्वरूपसम्बन्धविशेषः । न च धूमाभाववद्वृत्तितात्वेन घटादिविषयकज्ञानस्यानुमितिप्रतिबन्धकतया धूमाभाववद्वृत्तित्वत्वविशिष्टविषयिताशालिज्ञानत्वेन प्रतिबन्धकताकल्पनस्यासम्भवात् तादृशविषयितायां प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वासत्त्वेनातिव्याप्तिरिति वाच्यम् । धूमाभाववद्वृत्तित्वत्वप्रकारितानिरूपितविषयिताशालिज्ञानत्वेन भ्रमसाधारणप्रतिबन्धकताकल्पनसम्भवात् तादृशविषयितात्वेन वास्तवधूमाभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिताया अपि प्रतिबन्धकतावच्छेदकत्वस्याक्षतत्वात् । न चैवं समानाधिकरणधर्म्मावच्छिन्नसाध्याभाव--व्यधिकरणधर्म्मावच्छिन्नसाध्याभावद्वयविशेषिताधिकरणवृत्तित्वावगाहिनः समानाधिकरणधर्म्मावच्छिन्नाभावांशे भ्रमरूपज्ञानस्य (१) विषयिताया व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तितात्वविशिष्टनिरूपितत्वात् समानाधिकरणधर्म्मावच्छिन्नसाध्याभावविषयितानिरूपिताधिकरणविषयितानिरूपितविषयितात्वेन च प्रतिबन्धकतावच्छेदकत्वादव्याप्तिरिति वाच्यम् । हेतुसामानाधिकरण्यविशिष्टसाध्याभावत्वविशिष्टनिरूपितविषयितायां प्रतिबन्धकतावच्छेदकत्वाभावस्य विवक्षणीयत्वात् उक्तभ्रमे च समानाधिकरणधर्म्मावच्छिन्नाभावनिरूपितविष-

---

(१) समानाधिकरणधर्म्मावच्छिन्नाभावांशे प्रमारूपत्वे तादृशज्ञानविषयिताया हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टानिरूपितत्वेन लक्षणाघटकत्वान्न दोष इति भ्रमत्वोत्कीर्त्तनम् ।

यितायास्तादृशविशिष्टनिरूपितत्वाभावेन तस्या एव च प्रतिबन्ध-
कतावच्छेदकत्वेनाव्याप्त्यनवकाशात्। न चैवं हेतुसमानाधिकरण-
व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव यत्र हेतुसमानाधिकरणसा-
ध्याभावत्व-समानाधिकरणधर्म्मावच्छिन्नसाध्याभावत्वाभ्यां भानं ता-
दृशभ्रमविषयितायाः हेतुसमानाधिकरणसाध्याभावत्वविशिष्टनिरू-
पितत्वात् समानाधिकरणधर्म्मावच्छिन्नाभावत्वावच्छिन्नविषयता-
त्वेन प्रतिबन्धकतावच्छेदकत्वाच्चाव्याप्तिरिति वाच्यम्। अनुयोगि-
तादृयावच्छिन्नानिरूपितत्वेन तादृशविषयितायाः निवेशनीयत्वात्।
अथ यत्र ज्ञाने हेतुसमानाधिकरणतया भासमाने व्यधिकरण-
धर्म्मावच्छिन्नप्रतियोगिताकाभावे व्यधिकरणधर्म्मावच्छिन्नप्रतियो-
गिताकत्व-साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन
साध्यस्यैका प्रकारता तादृशज्ञानीयव्यधिकरणधर्म्मावच्छिन्नाभाव-
विषयितायां साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन
साध्यविशिष्टाभावनिरूपितत्वस्य विषयीभवदभावे साध्यतावच्छे-
दकावच्छिन्नप्रतियोगिताकत्वासत्त्वेनासम्भवेऽपि व्यधिकरणधर्म्मा-
वच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य
साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धविषयितानिरूप-
कविषयितात्वेनानुमितिप्रतिबन्धकतावच्छेदकत्वस्य चाक्षतत्वादव्या-
प्तिर्दुर्व्वारैवेति चेन्न, तादृशतादृशभ्रमस्याप्रामाणिकत्वात् प्रामाणि-
कत्वे च संसर्गीयविषयितादृयानिरूपकत्वेनाभावविषयितायाः विशे-
षणीयतया सामञ्जस्यात्। अथ साध्यरूपविशेषणविशिष्टस्याभावस्य
विषयितानिरूपकतया लक्षणघटकत्वे साध्याभावयोः सम्बन्ध-

स्यापि सम्बन्धविधया लक्षणघटकत्वमावश्यकं स च सम्बन्धः साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रतियोगिताकत्वरूपः, व्यधिकरणघटत्वाद्यवच्छिन्नप्रतियोगिताकत्वरूपश्चाननुगत इति प्रथमस्य निवेशे केवलान्वयिनि साध्यविशेषिताभावस्यैवाप्रसिद्धिः व्यतिरेकिसाध्यकसद्धेतौ च तादृशहेतुसमानाधिकरणाभावाप्रसिद्धिरित्यसम्भवः चरमस्य निवेशे च सर्व्वत्र व्यभिचारिण्यतिव्याप्तिः, प्रतियोगितावच्छेदकधर्म्माणाञ्चोपलक्षणीभूतेन केनचिद्धर्म्मेणानुगमय्य निवेशो न सम्भवति प्रतियोगितावच्छेदकोपलक्षणस्य सम्बन्धघटकतया अभानात् । न चावच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितायाः एव सम्बन्धविधया निवेशान्नाननुगमनिबन्धनो दोष इति वाच्यम् । अवच्छेदकावच्छिन्नत्वानिवेशेषितप्रतियोगिताविषयकाभावज्ञानस्य प्रतियोगिसत्ताज्ञानाविरोधितया तज्ज्ञानाविरोधिनः प्रतियोगिविशेषिताभावज्ञानस्य चानुभवविरुद्धतया अवच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितायाः संसर्गतया अभानात्। न च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशेषित एवाभावो निवेश्यो न तु साध्यविशेषितः, वह्नित्वादिना घटाद्यभाव एव वह्न्यादिसाध्यकधूमादिहेतुकस्थले लक्षणघटक इति वाच्यम् । प्रमेयत्वाद्यवच्छिन्नसाध्यके तादृशाभावाप्रसिद्धेः (१) एवं स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्वादिविशेषिते वह्नित्वादिना घटादेरभावे भासमाने यत्र सम्बन्धघटकप्रतियोगितायां बाधितस्य वह्न्यानिष्ठत्वस्य भानं तादृशज्ञानीयाभावविषयि-

(१) सामान्यरूपेण विशेषाभावानभ्युपगमात् अभ्युपगमे त्वाह, एवमिति ।

ताया उक्तसम्बन्धेन साध्यतावच्छेदकविशिष्टाभावनिरूपिततया अनुमितिविरोधितया चानुपपत्तेर्दुर्व्वारत्वात् स्वावच्छिन्नसाध्य-वृत्तित्वविशिष्टप्रतियोगितानिवेशे च सर्व्वत्र सद्धेतावप्रसिद्धेः, एवं प्रतियोगिविशेष्यतापन्न एवाभावे प्रतियोगिपारतन्त्र्येण समाना-धिकरणधर्म्मस्य स्वातन्त्र्येण व्यधिकरणधर्म्मस्य स्वावच्छिन्नप्रति-योगिताकत्वसम्बन्धेन प्रकारत्वं प्रामाणिकं न तु प्रतियोगिविशेष्य-तानापन्ने वह्निर्नास्ति वह्नित्वेन घटो नास्तीत्येव प्रतीतेर्न तु वह्नित्वेन नास्तीति, तथाच विशिष्य प्रतियोग्यविशेषितस्योक्त-सम्बन्धेन साध्यतावच्छेदकविशेषितस्याभावस्य विषयत्वनिरूप-तया निवेशो न सम्भवत्येवेति। मैवम्। प्रतियोग्यादिविशेषिता-भावीयत्वेन विशिष्टनिरूपितविषयिता लक्षणे न निवेश्यते अपि तु स्वनिरूपकहेतुसमानाधिकरणाभावनिष्ठो यः सम्बन्धस्तत्प्रति-योगिसाध्यनिष्ठतत्सम्बन्धावच्छिन्ननिरूपकतावच्छेदकताकत्वेन, यत्र हेतुसमानाधिकरणघटत्वाद्यवच्छिन्नवह्न्याद्यभावे वह्नित्वाद्यवच्छि-न्नप्रतियोगिताकत्वसम्बन्धेन वह्न्यादेः साध्यस्य प्रकारता तादृश-ज्ञानविषयितानिरूपकाभावनिष्ठो न निरुक्ततन्निरूपकतावच्छे-दकसम्बन्ध इति तद्विषयताव्युदासः, यत्र वह्नित्वावच्छिन्नघटा-द्यभावे तन्निष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नेः सम्बन्ध-तया भासते तत्र तत्सम्बन्धप्रतियोगी न वह्निरपि तु घट एवेति साध्ये वास्तवतत्सम्बन्धप्रतियोगित्वनिवेशात्तादृशज्ञानीयाभावविष-यिताव्युदासः। साध्यनिवेशाद्यत्र वह्नित्वेन घट एव वह्नित्वावच्छि-न्नप्रतियोगिताकत्वसम्बन्धेन तत्सम्बन्धानुयोगिनि वह्नित्वावच्छि-

त्वघटाभावे प्रकारस्तादृशज्ञानीयाभावविषयितायास्तत्सम्बन्धप्रतियोग्यवच्छिन्ननिरूपकताकत्वेऽप्यनुमितिविरोधित्वेऽपि च न दोषः । यत्र घटत्वावच्छिन्नवह्न्यभावे घटत्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वेन वह्नेः संसर्गतया भासते तादृशज्ञानस्य प्रामाणिकत्वे साध्यप्रतियोगिको हेतुसमानाधिकरणाभावानुयोगिको यद्धर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धः तद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्बन्धावच्छिन्नसाध्यनिष्ठनिरूपकतावच्छेदकताकत्वं विवक्षणीयमिति दिक् (१) । न च व्यभिचारज्ञानस्यानुमितिकारणव्याप्तिज्ञानं प्रत्येव प्रतिबन्धकत्वादनुमित्यप्रतिबन्धकत्वमिति व्यभिचारिण्यतिव्याप्तिरिति वाच्यम् । तज्जनकज्ञानप्रतिबन्धकतावच्छेदकत्वाभावस्यैव विवक्षितत्वात् । ‘अनुमित्यविरोधित्वज्ञानस्य’ अनुमितिप्रतिबन्धकतावच्छेदकत्वाभावप्रकारकज्ञानस्यैव, ‘अनुमितिहेतुत्व इति, एतन्मते निरुक्तविषयितासामान्येऽनुमितिप्रतिबन्धकतावच्छेदकत्वाभावस्यैव ( २ ) अनुमितिकारणीभूतज्ञानविषयत्वादिति भावः । ‘अनुमित्यविरोधितया’ अनुमितिजनकज्ञानाप्रतिबन्धकतया, साध्याभाववद्वृत्तित्वज्ञानस्यानुमितिजनकत्वाभावादिति भावः । ‘अतिप्रसङ्गादिति, हेतुनिष्ठसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वविषयितासामान्येऽनुमितिजनकज्ञानप्रतिबन्धकतावच्छेदक-

---

(१) अथ यत्र ज्ञान इत्यादिः इति दिगित्यन्तः पाठः कस्मिंश्चिदादर्शपुस्तके नास्ति ।

(२) निरुक्तविषयितानिष्ठप्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावघटितस्यैवेति पा० ।

त्वाभावस्याक्षतत्वादिति भावः। न च हेतुनिष्ठसाध्याभाववद्वृत्तित्व-विषयिता अनुमितिजनकज्ञानप्रतिबन्धकतावच्छेदिका इत्या-कारकज्ञानीयहेतुनिष्ठसाध्याभाववद्वृत्तित्वविषयितायां अपि तादृ-शविषयितासामान्यान्तर्गततया तत्र च प्रकृतव्याप्तिज्ञानप्रतिबन्ध-कतावच्छेदकत्वस्य सत्त्वेन नातिव्याप्तिरिति वाच्यम्। ईदृशरीत्या सद्धेतौ हेतुनिष्ठव्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वविषयि-तायामनुमितिजनकज्ञानविरोधित्वभ्रमरूपज्ञानीयहेतुनिष्ठसाध्या-भाववद्वृत्तित्वविषयितामादायासम्भवः स्यादिति तद्वारणाय इतर-विशेषणतापन्नतादृशसाध्याभाववद्वृत्तित्वनिरूपितविषयितायाः एव लक्षणे निवेशनीयतया विषयिताविशेषणतापन्नसाध्याभाववद्-वृत्तित्वविषयितामादायातिव्याप्तिवारणासम्भवादिति।

---

## साजात्यघटितलक्षणम्।

### तत्त्वचिन्तामणि-दीधितिः।

केचित्तु यावन्तः साध्याभावाः प्रत्येकं तत्तत्स-जातीया ये तत्तदधिकरणवृत्तित्वाभावास्तद्वत्त्वं तत्त्वं, साजात्यञ्च समानासमानाधिकरणधर्म्मावच्छिन्नप्रति-योगिताकत्वान्यतररूपेण, साध्याभावस्य पूर्व्वोक्तद्वितीय-रीत्या प्रत्येतव्यो व्याप्यवृत्तिश्च प्रतियोगितावच्छेदका-वच्छिन्नप्रतियोगिव्यधिकरणो वा तेन तत्तत्साध्यव्यक्तेर-व्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्तावपि हेतोर्नाव्याप्तिः।

तद्वृत्तित्वाभावश्च तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकव्या-सज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताको बोध्यः, तेन सा-ध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमा-दाय नातिप्रसङ्गः । अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यं तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न दोषः, इत्यञ्च साध्याभावोऽपि हेतु-तावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानोग्राह्यः, तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः ।

---

गादाधरी विवृतिः ।

मिश्ररीत्या साजात्यघटनेन साध्याभाववदवृत्तित्वरूपव्याप्तिं परिष्कृत्योपन्यस्यति,(१) 'यावन्त इति, धूमवान् वह्नेरित्यादौ व्यधि-करणधर्म्मावच्छिन्नाभावसजातीयस्य घटत्वादिना तदधिकरण-वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरतः 'यावन्त इति, तथाच यावदन्तर्गतसमानाधिकरणधर्म्मावच्छिन्नाभावसजातीयस्य तदधि-करणवृत्तित्वाभावस्य हेतावसत्त्वान्नातिव्याप्तिः तत्रैव समानाधि-करणधधर्म्मावच्छिन्नसाध्याभावाधिकरणवृत्तित्वस्य व्यधिकरण-

---

(१) साध्याभाववद्वृत्तित्वाभावरूपां व्याप्तिमेव परिष्करोतीति पा० ।

धर्म्मावच्छिन्नाभावमादायातिव्याप्तेर्वारणाय 'प्रत्येकं तत्तत्सजातीया- इति, तथाच वक्ष्यमाणरूपेण व्यधिकरणधर्म्मावच्छिन्नसाध्याभाव- वद्वृत्तित्वाभावस्य समानाधिकरणधर्म्मावच्छिन्नसाध्याभावसजातीय- त्वाभावान्न दोषः। यावत्साध्याभावत्वेन साध्याभावानां निरूपक- तया साजात्येऽन्वये व्यतिरेकिसाध्यके वह्निमान् धूमादित्यादौ याव साध्याभावनिरूपितत्वस्य क्वचिदपि साजात्येऽसत्त्वाद्यावत्साध्या- भावसाजात्याप्रसिद्धाऽव्याप्तिरतस्तत्तद्व्यक्तित्वेन तेषां साजात्ये- ऽन्वयलाभाय 'तत्तदिति। 'तत्तत्सजातीया इत्यनेनोपस्थितानां व्यधिकरणधर्म्मावच्छिन्नाभावसजातीयानां समानाधिकरण-व्यधि- करणधर्म्मावच्छिन्नाभावसजातीयानाम् एकस्मिन्नधिकरणवृत्ति- त्वाभावे एकत्र द्वयमितिरीत्याऽन्वये पुनर्व्यतिरेकिसाध्यकेऽव्याप्तिः एकत्रोभयसाजात्याभावात् अत एकैकाभावे पृथक् पृथगेकैकाभाव- सजातीयाभेदान्वय उपगन्तव्यः, एतदर्थतात्पर्य्यग्राहकं 'प्रत्येक- मिति, बहुवचनान्तं तत्तदधिकरणवृत्तित्वाभावा इत्यस्य विशेषणं, यावत्साध्याभावत्वेन साध्याभावानामधिकरणेऽन्वये वह्निमान् धूमा- दित्यादौ तत्तद्रूदावृत्तित्वावच्छिन्नप्रतियोगिताकसाध्याभावघटित- समुदायाधिकरणतायाः क्वचिदप्यसत्त्वेनाव्याप्तिः स्यादतस्तत्तद्- व्यक्तित्वेन साध्याभावानामधिकरणेऽन्वयलाभाय चरमं 'तत्तदिति, 'तत्त्वमिति अव्यभिचरितत्वमित्यर्थः। ननु तत्तत्सजातीयत्वं तत्त- द्वृत्तिधर्म्मवत्त्वं तथाच समानाधिकरणधर्म्मावच्छिन्नाभाववृत्त्यभाव- त्वादिधर्म्मवत्त्वं व्यधिकरणधर्म्मावच्छिन्नाभावेऽपि वर्त्तत इति तस्यापि तत्सजातीयत्वाद्व्यभिचारिण्यतिव्याप्तिरत आह, 'साजात्य-

श्चेति, 'समानासमानाधिकरणेति समानाधिकरणधर्म्मावच्छिन्न-प्रतियोगिताकत्व–व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वान्यतर-रूपेणेत्यर्थः, तृतीयार्थश्चाभेदः, तस्य च साजात्येऽन्वयः, विवक्षणीय-मिति शेषः। तथाच 'तत्तत्सजातीया इत्यस्य तत्तदभाववृत्ति-तादृशान्यतररूपवन्त इत्यर्थः (१)। यद्यपि वह्नित्वावच्छिन्नाभाव-निष्ठसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वं स्वसमानाधि-करणवह्नित्वाद्यवच्छिन्ना या प्रतियोगिता तन्निरूपकताकत्वरूपं तच्च तदधिकरणवृत्तित्वाभावेऽसम्भावितमेव, तथापि स्वासमाना-धिकरणधर्म्मावच्छिन्ना या या प्रतियोगिता तदनिरूपकत्वं समाना-धिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वं, स्वसमानाधिकरणधर्म्मा-वच्छिन्ना या या प्रतियोगिता तदनिरूपकत्वमेव व्यधिकरण-धर्म्मावच्छिन्नप्रतियोगिताकत्वमिह विवक्षितं तच्च साध्याभाव-तदवृत्तित्वाभावोभयसाधारणमेव। समनियताभावैक्यमते च स्वाधिकरणावृत्तिधर्म्मावच्छिन्ना या प्रतियोगिता तन्निरूपकत्व-रूपो व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वेत्यस्य यथाश्रुतार्थ-एवादरणीयः, तन्मते व्यधिकरणधर्म्मावच्छिन्नसाध्याभाव-तथा-विधतदवृत्तित्वाभावयोरैक्यात्तादृशसाध्याभावस्य यादृशप्रतियोगि-तानिरूपकत्वं तादृशप्रतियोगितानिरूपकत्वस्य तथाविधतदवृत्ति-त्वाभावेऽपि सत्त्वात्। एतेन समनियताभावैक्यमते व्यधिकरण-धर्म्मावच्छिन्नप्रतियोगिताकाभावस्य समवायादिसम्बन्धावच्छिन्न-गगनत्वाद्यवच्छिन्नगगनाद्यभावाभिन्नतया तस्य समानाधिकरण-

(१) इत्यन्वयबोध इति पा०।

धर्म्मावच्छिन्नगगनादिनिष्ठप्रतियोगितानिरूपकत्वाद्व्यधिकरणध-र्म्मावच्छिन्नाभावस्य निरुक्तरूपसत्त्वानुपपत्त्या समानाधिकरण-धर्म्मावच्छिन्न-समानाधिकरणसम्बन्धावच्छिन्नप्रतियोगित्वानिरूप-कत्वपर्य्यन्तनिवेशनायासो नोपादेयः, समनियताभावैक्यमते गगना-भावत्व-गगनाभावभिन्नत्वान्यतररूपेणापि साजात्यविवक्षणं सम्भव-तीति ध्येयम्। ननु यावत्साध्याभावान्तर्गतानां तत्तत्साध्यव्यक्त्य-भावादीनामधिकरणे हेतोर्वृत्त्या वह्निमान् धूमादित्यादावव्याप्ति-रत आह, 'साध्याभावश्चेति, 'पूर्व्वोक्तद्वितीयरीत्येति 'यत्समानाधि-करणानामित्यादिद्वितीयलक्षणरीत्येत्यर्थः, साध्यतावच्छेदकावच्छि-न्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाव एव साध्या-भावपदेन विवक्षित इति भावः। साध्यतावच्छेदकावच्छिन्नव्याप-कतावच्छेदकप्रतियोगिताकाभावविवक्षणे तथाविधवह्नि-घटोभया-भावमादाय तद्दोषतादवस्थ्यमतः प्रथमरीत्येति नोक्तं, साध्यता-वच्छेदकावच्छिन्नप्रतियोगिताकाभावविवक्षणे वाच्यत्वत्वादिना-घटाद्यभावमादाय लक्षणसमन्वयसम्भवेऽपि स्वरूपसम्बन्धेन प्रमेय-मात्रसाध्यकस्थले तथाविधाभावाप्रसिद्ध्या अव्याप्तिरतो व्यापकता-वच्छेदकपर्य्यन्तानुधावनं, तथाच ज्ञेयत्वत्वादिना वाच्यत्वाभाव एव-तथेति न दोषः। साध्यतावच्छेदकसमनियतप्रतियोगिताकाभाव-निवेशे च वह्न्यादिसाध्यकस्थले तार्णतार्णेदहनोभयाभावमादाय दोषस्य व्यासज्यवृत्तिधर्म्मानवच्छिन्नत्वं प्रतियोगितायान्निवेश्य वार-णेऽपि सत्तादिसाध्यकस्थले विशिष्टसत्ताद्यभावमादाय दोष इति तादृशाभावो न निवेशितः। व्यापकतावच्छेदकावच्छिन्नप्रति-

योगिता च न्यूनवृत्तिधर्म्मावच्छिन्ना अतिरिक्तवृत्तिधर्म्मावच्छिन्ना वा या या प्रतियोगिता तदन्यत्वेन विशेषणीया, तेन वह्न्यादिसाध्यकस्थले वह्नित्वादिना महानसीयवह्नि-घटान्यतराभावमादाय न दोषः । न्यूनवृत्तित्वमतिरिक्तवृत्तित्वञ्च विरुद्धव्यावृत्तं निर्वाच्यं (१) नातो व्यधिकरणधर्म्मावच्छिन्नाभावासंग्रहः । व्यापकता च साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या तेन संयोगादिना वह्न्यादिसाध्यकस्थले समवायादिना वह्न्याद्यभावमादायासम्भववारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगितायाः विशेषणीयतया समवायादिना द्रव्यत्वादिसाध्यके विषयतादिसम्बन्धेन साध्यव्यापकस्य ज्ञानादेः समवायादिनाभावमादाय दोषानवकाशः । तादात्म्यसम्बन्धेन प्रमेयसाध्यकस्थले समवायित्वादिरूपव्यधिकरणधर्म्मावच्छिन्नप्रतियोगितावच्छेदकताकभेद एव लक्षणघटकः, समनियताभावैक्यमते तादृशभेदस्य व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकात्यन्ताभावाभिन्नतया व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वेन तत्साजात्यस्य सम्भवात् ।

यत्तु संयोगेन प्रमेयत्ववानिति प्रतीतिसाक्षिकः संयोगावच्छिन्नप्रमेयत्वनिष्ठप्रतियोगितावच्छेदकताकभेद एव लक्षणघटकः अत्यन्ताभावस्येव तेन सम्बन्धेन तदवृत्तिर्यो धर्म्मस्तत्सम्बन्धेन तदवच्छिन्नप्रतियोगितावच्छेदकताकभेदस्याप्युक्तप्रतीतिबलात् सि-

(१) विरुद्धव्यावृत्तं न्यूनवृत्तित्वमतिरिक्तवृत्तित्वञ्च स्वसमानाधिकरणाभावप्रतियोगित्वे सति स्वसामानाधिकरण्यं न्यूनवृत्तित्वं, स्वाभाववद्वृत्तित्वे सति स्वसामानाधिकरण्यम् अतिरिक्तवृत्तित्वम् ।

द्विरिति, तन्न, वह्निमान् धूमात् गुणवान् द्रव्यत्वादित्यादौ विषयितादिसम्बन्धेन वह्नित्व-गुणत्वादिमतः साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावव्यावर्त्तनाय व्यापकतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वेन प्रतियोगितावच्छेदकताया अवश्यनिवेशनीयतया तादृशाभावस्य प्रामाणिकत्वेऽपि लक्षणघटकत्वासम्भवात् ।

ननु कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगत्वावच्छिन्नकपिसंयोगाद्यभावस्यापि लक्षणघटकतया तदधिकरणे च हेतोर्वृत्तेरव्याप्तिः । न च साध्यतावच्छेदकावच्छिन्नव्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशस्य निष्फलतया कपिसंयोगत्वादेः साध्यव्यापकतावच्छेदकत्वाभावान्न तादृशाभावानां लक्षणघटकतेति वाच्यम् । संयोगेन वह्न्यादिसाध्यकस्थले वह्नित्वादीनां संयोगरूपसाध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकत्वसम्पत्त्यर्थं व्यापकताशरीरे प्रतियोगिवैयधिकरण्यस्यावश्यकत्वात् अन्यथा साध्यवत्युत्पत्तिकालावच्छेदेन वह्नित्व-द्रव्यत्वाद्यवच्छिन्नस्य संयोगसम्बन्धेनाभावसत्त्वात् साध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकस्यैवाप्रसिद्धिप्रसङ्गात् तथाच तत्तदधिकरणपदेन तत्तदभावीयव्याप्यवृत्तितानिरूपकाधिकरणमेव विवक्षणीयं व्याप्यवृत्तितानिरूपकत्वञ्च निरवच्छिन्नाधेयतानिरूपकत्वम्, एवञ्च संयोगाभावस्य तथाविधाधिकरणं गुणादिरेवेति न दोषः । इत्थञ्च कपिसंयोगाभाववान् कपिसंयोगाधिकरणत्वाभाववान् वा मेयत्वादित्यादौ कपिसंयोग-तदधिकरणत्वादिरूपाणां यावत्साध्याभावान्तःपातिनां तथाविधाधिकरणाप्रसिद्ध्या अव्याप्तिरतः साध्याभावं व्याप्यवृत्तित्वेन

विशिनष्टि, 'व्याप्यवृत्तिश्चेति, तथाच तादृशाभावस्य तथाविधयावद्-भावानन्तर्गततया तथाविधाधिकरणाप्रसिद्धावपि न क्षतिः । व्याप्य-वृत्तित्वञ्च निरवच्छिन्नवृत्तिकत्वं न त्ववच्छिन्नवृत्तिकान्यत्वं, तथा-सति संयोगेन धूमादिसाध्यके व्यभिचारिणि संयोगेन धूमत्वाद्य-वच्छिन्नधूमाद्यभावस्यावच्छिन्नवृत्तिकतया अयोगोलकान्यत्वाद्य-भावस्य च साध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकरूपा-वच्छिन्नप्रतियोगिताकत्वविरहेण व्यधिकरणधर्म्मावच्छिन्नप्रतियोगि-ताकाभावस्यैव लक्षणघटकतया अतिव्याप्तिः, एवञ्च वक्ष्यमाण-संयोगाद्यभावस्यापि क्वचिन्निरवच्छिन्नवृत्तिकत्वेन लक्षणघटकतया तदीयव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वाभावमादाय दोष-वारणायाधिकरणपदस्य व्याप्यवृत्तितानिरूपकाधिकरणपरत्व-मावश्यकमित्यवधेयम् । कालिकसम्बन्धावच्छिन्नप्रतियोगिताके आकाशाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिः व्याप्य-वृत्तेः साध्याभावस्याकाशाभावस्य व्याप्यवृत्तितानिरूपकाधिकरणे आत्मादौ हेतोर्वृत्तेरतस्तत्तदभावीयप्रतियोगितावच्छेदकावच्छिन्न-वैयधिकरण्यनिरूपकाधिकरणमेव तत्तदधिकरणपदेन विवक्षणीयं, प्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशनादेतद्रूपान्यत्वविशिष्टगुण-त्ववान् गुणत्वादित्यादौ समवायरूपसाध्यतावच्छेदकसम्बन्ध-घटितविशिष्टसाध्यव्यापकतावच्छेदकविशिष्टगुणत्वत्वाद्यवच्छिन्ना-भावस्य प्रतियोगिवैयधिकरण्यनिरूपकतायाः हेतुमत्यसत्त्वेऽपि नातिव्याप्तिः, तथाच कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाश-त्वाभावाभावादिसाध्यकात्मत्वादिहेतावव्याप्तिः तत्र व्याप्यवृत्ति-

यावत्साध्याभावान्तःपातिन आकाशत्वाभावादेः प्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणाप्रसिद्धेः कालेऽप्याकाशावच्छेदेन तादृशसाध्यरूपतदभावीयप्रतियोगिसत्त्वात् सर्व्वत्रैव तादृशाभावस्य प्रतियोगिसमानाधिकरणत्वादतो व्याप्य-वृत्तित्वमुपेक्ष्याभावे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधि-करण्यमेव विशेषणमाह, 'प्रतियोगितावच्छेदकावच्छिन्नेति, अत्र च समनियताभावैक्यमते विशेषामेव व्यधिकरणधर्म्मावच्छिन्नाभाव-प्रतियोगितया तत्प्रतियोग्यनधिकरणाप्रसिद्धा तदसंग्रहः विशिष्ट-साध्यव्यापकतावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोगिताश्रयवैयधिक-रण्यनिवेशे च वाच्यत्वत्वादिना घटाद्यभावस्य घटादिवैयधिकरण्येन लक्षणघटकतानिर्व्वाहेऽपि प्रतियोगिभेदेन प्रतियोगिताभेदमते जन्यज्ञानविषयत्वादिसाध्यके किञ्चित्कालावच्छेदेन परमाण्वादौ प्रसिद्धस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य यत्किञ्चित्प्रति-योग्यनधिकरणवृत्तेः प्रतियोगिवैयधिकरण्यनिरूपकाधिकरणा-प्रसिद्धा अव्याप्तिः तत्रापि यत्किञ्चित्प्रतियोगितान्तर्भावेन तादृशा-धिकरणप्रसिद्धिसम्पादने यत्किञ्चित्प्रतियोगिताश्रयप्रतियोगिवैय-धिकरण्यनिरूपकाधिकरणे तत्र हेतोर्वृत्त्या अव्याप्तितादवस्थ्यम्। एवं वह्निमान् धूमादित्यादौ द्रव्यत्वाद्यवच्छिन्नस्य संयोगेन योऽभावस्तस्य द्रव्येऽप्युत्पत्तिकालावच्छेदेन वर्त्तमानस्य गुणादौ प्रतियोगिव्यधिकरणस्य प्रतियोगिवैयधिकरण्यनिरूपकाधिकरण-गुणादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धा अव्याप्तेर्वारणाय हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे प्रतियोगिवैयधिकरण्य-

मभावे विशेषणं देयम् एवञ्च एतद्रूपान्यत्वविशिष्टसत्तावान् जातेरि-त्यादौ समवायघटितसाध्यव्यापकतावच्छेदकविशिष्टसत्तात्वाद्यव-च्छिन्नाभावस्य हेत्वधिकरणे सत्तादिरूपप्रतियोगिसमानाधिकरण-तया व्यधिकरणधर्म्मावच्छिन्नाभावस्यैव लक्षणघटकता स्यादित्यति-व्याप्तिरतः प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानम्। अथ केवला-न्वयिस्थले लक्षणघटकानां वाच्यत्वत्वाद्यवच्छिन्नघटाद्यभावानां सर्व्वे-षामेव प्रतियोगितावच्छेदकवाच्यत्वत्वावच्छिन्नानधिकरणाप्रसिद्धिः। न च यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्व-मेव निवेशनीयं तथाच समनियताभावानामैक्योपगमेन व्यति-रेकितावच्छेदकधर्म्मस्याप्युक्ताभावप्रतियोगितावच्छेदकतया प्रति-योगितावच्छेदकावच्छिन्नानधिकरणत्वस्य प्रसिद्ध्या तेषां लक्षण-घटकतेति वाच्यम्। तथा सति संयोगाभावसाध्यकस्थले संयोगा-द्यात्मकाभावस्य यत्किञ्चित्प्रतियोगितावच्छेदकसमवेतसामान्या-भावत्वावच्छिन्नानधिकरणवृत्तित्वात्तद्व्यावर्त्तनासम्भवात् विशिष्ट-साध्यव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदकविशेषणे उक्त-स्थले तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणाप्रसिद्धिर्दुर्व्वा-रत्वात्, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्व-निवेशे च व्यधिकरणधर्म्मावच्छिन्नाभावस्य प्रतियोगितावच्छेद-कावच्छिन्नप्रतियोग्यप्रसिद्ध्या प्रतियोगिवैयधिकरण्यं दुर्घटम्। अत्र केचित्, प्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिसमानाधि-करणा ये ये तदन्यत्वं व्यधिकरणान्तार्थः, न तु प्रतियोगिताव-च्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वं, व्यधिकरणधर्म्मावच्छि-

न्नाभावस्य विशिष्टप्रतियोग्यप्रसिद्ध्या असंग्रहात्। न चैवं सति धूमवान् वह्नेरित्यादौ संयोगसम्बन्धघटितव्यापकतावच्छेदकधूमत्वाद्यवच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकानां धूमाभावानामुत्पत्तिकालावच्छेदेन धूमादिमति वृत्तेर्व्यधिकरणधर्म्मावच्छिन्नाभावस्यैव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणतया अतिव्याप्तिरिति वाच्यम्। साध्यतावच्छेदकसम्बन्धेन व्यापकतामनिवेश्य येन सम्बन्धेन व्यापकता तत्सम्बन्धावच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभावं निवेश्य विषयतासम्बन्धेन साध्यव्यापकस्य ज्ञानस्य समवायसम्बन्धावच्छिन्नाभावमादायोक्तदोषस्य वारणीयतया (१) अयोगोलकभेदादेरभावमादायैवातिव्याप्तिवारणसम्भवात् यादृशप्रतियोगितावच्छेदको यो धर्म्मस्तद्विशिष्टतादृशप्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयं तेन समनियताभावैक्यमते वाच्यत्वादिना घटाद्यभावस्यापि घटत्वादिना वाच्यत्वाद्यभावाभिन्नतया वाच्यत्वादिप्रतियोगिकत्वेन प्रतियोगितावच्छेदकवाच्यत्वत्वादिविशिष्टवाच्यत्वादिरूपप्रतियोगिसामानाधिकरण्येऽपि न क्षतिः। न चैवमपि वाच्यत्वादिसाध्यकस्थले सर्व्वेषामेवाभावानां पूर्व्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धिरिति वाच्यम्। स्वावच्छेदकविशिष्ट(२)स्वाश्रयाधिकरणवृत्त्यभावीयप्रतियोगिताभिन्नत्वेन व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता विशेषणीयेत्यत्रैव प्रतियोगिता-

(१) द्रव्यत्वसाध्यकस्थले दोषस्य वारणीयतयेति पा०।

(२) उभयत्र स्वपदं प्रतियोगितापरम्।

वच्छेदकेत्यादेस्तात्पर्य्यात् । वाच्यत्वत्वाद्यवच्छिन्नघटादिनिष्ठप्रतियोगितायाः स्वावच्छेदकविशिष्टस्वाश्रयाप्रसिद्धग्रा निरुक्तप्रतियोगिताभिन्नत्वेन तन्निरूपकाभावमादाय वाच्यत्वादिसाध्यकस्थले लक्षणसमन्वयसम्भवात् । न च तथापि एतदभावभिन्नं मेयत्वादित्यादौ साध्यव्यापकतावच्छेदकसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावस्य एतदभावमात्रवृत्तेरभावमात्राधिकरणकतया अधिकरणस्वरूपत्वादेतदभावभेदादिरूपप्रतियोगिसमानाधिकरणतया निरुक्तप्रतियोगिताभिन्नव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकोऽभावो व्यधिकरणधर्म्मावच्छिन्नाभाव एवेत्यतिव्याप्तिरिति वाच्यम् । स्वावच्छेदकविशिष्टस्वाश्रयाधिकरणे स्वनिरूपकाभावत्वेन वर्त्तते योऽभावस्तदीयप्रतियोगिताभिन्नत्वेन च व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताया विशेषणीयतया एतदभावाधिकरणे च एतदभावभिन्ने एतदभावरूपैतदभावभेदाभावस्य वृत्तावपि तादृशाधिकरणे एतदभावभेदो नास्तीत्यप्रतीत्या एतदभावभेदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तस्यावृत्तित्वादेतदभावभेदत्वावच्छिन्नप्रतियोगितायां निरुक्तप्रतियोगिताभेदस्याक्षतत्वादित्याहुः । तच्चिन्त्यं, व्यापकताघटकसम्बन्धावच्छिन्नाभावनिवेशे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यस्याभावाविशेषणत्वेऽपि संयोगादिना धूमादिसाध्यकव्यभिचारिण्ययोगोलकान्यत्वाभावमादायातिव्याप्तिवारणसम्भवात् तत्र तन्निवेशप्रयोजनाभावेन (१) अव्याप्यवृत्तिसाध्याभावमादायाव्याप्त्यनवकाशात् अभावे व्याप्यवृत्तित्वादि-

(१) तत्र व्यापकतायां प्रतियोगिवैयधिकरण्यनिवेशप्रयोजनाभावेन ।

विशेषणव्यावृत्त्यसङ्गतेः, अस्तु वा साध्यव्यापकतावच्छेदकस्यापि साध्यवन्निष्ठव्यधिकरणधर्म्मावच्छिन्नाभावप्रतियोगितानवच्छेदकतया तदभावव्यावर्त्तनाय व्यापकताशरीरे प्रतियोगिवैयधिकरण्यप्रवेशस्तथाप्येतादृशप्रतियोग्यसामानाधिकरण्यविवक्षणे तस्य(१) अव्याप्तिवारणप्रयोजनकत्वाभिधानासङ्गतेः, अभावे तदनिवेशे व्याप्यवृत्तिसाध्यकेऽपि यावत्साध्यवद्विषयकजन्यज्ञानव्यक्तिविशेषस्य प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकताश्रयत्वात् कालविशेषावच्छेदेन हेतुमति तदभाववृत्तेरसम्भवस्यैव प्रसङ्गात्। अत्र वदन्ति(२), प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणे वृत्तित्वमेव तदर्थः(३) अथ (४) व्यधिकरणधर्म्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसिद्धया केवलान्वयिसाध्यके प्रतियोगिव्यधिकरणतादृशाभावाप्रसिद्धेः (५) अव्याप्तिरिति चेन्न (६) प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणत्वं हि स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकभेदवत्त्वं (७) ज्ञेयत्वत्वादिना वाच्यत्वाद्यभावस्य तादृशभेदसामानाधिकरण्य-

---

(१) व्याप्यवृत्तित्वादिविशेषणस्य।

(२) अत्र वदन्तीत्यत्र परे त्विति पा०।

(३) प्रतियोगितावच्छेदकेत्यादेरर्थः इति पा०।

(४) अथेत्यत्र न चेति पा०।

(५) प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्धेरिति पा०।

(६) इति चेन्नेत्यत्र इति वाच्यमिति पा०।

(७) स्वप्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकभेदवद्वृत्तित्वमिति पा०।

रूपं (१) प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यं सुघटमेव, व्यधिकरणधर्म्मावच्छिन्नप्रतियोगितावच्छेदकताकस्य (२) ज्ञेयत्वत्वेन वाच्यत्ववद्भेदस्यैव तथात्वात्, कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगादिरूपसाध्याभावस्यापि ज्ञेयत्वत्वादिना कपिसंयोगाभावादिमद्भेदसामानाधिकरण्यसत्त्वात् तस्य च स्वप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणाप्रसिद्धा अव्याप्तिरतः स्वप्रतियोगितावच्छेदकावच्छिन्नत्वं भेदप्रतियोगितावच्छेदकतायां विशेषणं, तत्रैव कपिसंयोगात्मकाभावीयप्रतियोगितावच्छेदकीभूतसमवेतसामान्याभावत्वावच्छिन्नसमवेतसामान्याभाववद्भेदस्यापि निरुक्तप्रतियोगितावच्छेदकतानिरूपकत्वात् तत्सामानाधिकरण्यमादाय कपिसंयोगाद्यात्मकाभावानां प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यवारणाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदकं विशेषणीयं, समवेतसामान्याभावत्वादेश्च कपिसंयोगाभावादिव्यापकतानवच्छेदकतया न दोषः। न चात्र साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदके विशेषिते तत्तत्साध्यव्यक्त्यभावादीनामीदृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यं न घटते साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूत-स्वप्रतियोगिताव-

(१) तादृशभेदसमानाधिकरणतयेति पा० ।

(२) व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकभेदस्येति पा० ।

च्छेदकाप्रसिद्धेः तथाच 'साध्याभावस्येत्यादिना साध्याभावपदेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावविवक्षणासङ्गतिरिति वाच्यम्। 'साध्याभावस्येत्यादिग्रन्थस्य व्याप्यवृत्तित्वनिवेशकल्पे अभावे साध्यतावच्छेदकावच्छिन्नेत्यादिविशेषणदानपरत्वात्, द्वितीयकल्पे च प्रतियोगितावच्छेदकावच्छिन्नेत्यत्र प्रतियोगितावच्छेदकस्य तादृशव्यापकतावच्छेदकत्वेन विशेषणात्तादृशरूपावच्छिन्नप्रतियोगिताक एवाभावो लक्षणघटक इत्यर्थकत्वात्। एतत्कल्पे अभावांशे तादृशप्रतियोगिताकत्वविशेषणविरहेऽपि क्षतिविरहात् तत्रैव कपिसंयोगाभावत्वादिना घटादिमद्भेदसामानाधिकरण्यमादाय तद्दोषवारणाय स्वप्रतियोगिवृत्तित्वं भेदप्रतियोगितावच्छेदकतायां विशेषणं, संयोगसामान्याभावादेरपि कपिसंयोगाद्यात्मकाभावप्रतियोगितया कपिसंयोगाद्यात्मकाभावस्य प्रतियोगितावच्छेदककपिसंयोगाभावत्वादिना संयोगसामान्याभाववद्भेदसामानाधिकरण्यमादाय तद्दोषतादवस्थ्यवारणाय यादृशप्रतियोगितावच्छेदको यो धर्म्मस्तदवच्छिन्नतादृशप्रतियोगिताश्रयवृत्तित्वमेव भेदप्रतियोगितावच्छेदकतायां निवेशनीयं, कपिसंयोगाभावत्वञ्च कपिसंयोगाभावनिष्ठप्रतियोगितायामेवावच्छेदकं संयोगसामान्याभावश्च न तादृशप्रतियोगिताश्रय इति न तादृशभेदमादाय दोषः। भेदप्रतियोगितावच्छेदकतायां स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वमपि निवेशनीयं तेन कपिसंयोगाद्यात्मकाभावस्य कपिसंयोगाभावत्वाद्यवच्छिन्नकपिसंयोगाभावादिनिष्ठविषयितादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदसामानाधि--

करणेऽपि न तद्दोषतादवस्थ्यम्। एवं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिरूपकत्वं स्वनिष्ठं यत्स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिनिष्ठप्रतियोगितावच्छेदकताकभेदसामानाधिकरण्यं तन्निरूपकत्वम् अतो व्यधिकरणधर्म्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसिद्धावपि न तादृशाधिकरणाप्रसिद्धिः(१)कपिसंयोगी एतद्वृक्षत्वादित्यादौ हेत्वधिकरणेऽपि द्रव्यत्वादिना कपिसंयोगादिमतः कपिसंयोगत्वादिना च द्रव्यत्वादिमतोभेदसत्त्वात्तस्यापि तादृशाधिकरणत्वापत्तिरतोऽवच्छिन्नान्तनिष्ठान्तयोरुपादानं, पूर्व्वक्षणादिवृत्तित्वविशिष्टस्वाभावत्वादिरूपप्रतियोगितावच्छेदकरूपेण कपिसंयोगादिमद्भेदमादाय तद्दोषतादवस्थ्यमतस्तत्प्रतियोगिताश्रयनिष्ठप्रतियोगितावच्छेदकतायां तदवच्छेदकावच्छिन्नत्वं विशेषणीयम्। एवं विशिष्टसाध्यव्यापकतावच्छेदकत्वेनापि प्रतियोगितावच्छेदकं विशेषणीयं, तेन संयोगी द्रव्यत्वादित्यादौ संयोगाभावस्य द्रव्यवृत्तित्वात्तत्प्रतियोगितावच्छेदकद्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावत्वावच्छिन्नद्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वस्य द्रव्ये सत्त्वात्तस्य न प्रतियोगिवैयधिकरण्यनिरूपकत्वापत्तिः। एवं सम्बन्धविशेषनिवेशनमपि (२) पूर्व्ववद्बोध्यमिति। तथाच स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदक—

---

(१) प्रतियोगिवैयकरण्यनिरूपकाधिकरणाप्रसिद्धिः।

(२) स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वं भेदप्रतियोगितावच्छेदकतायां निवेश्यं तेन कपिसंयोगो एतद्वृक्षत्वादित्यादौ नाव्याप्तिरिति।

रूपावच्छिन्ना यावत्यः प्रतियोगितास्तत्तदवच्छेदकावच्छिन्नतत्तदा-श्रयनिष्ठप्रतियोगितावच्छेदकताकभेदवदधिकरणवृत्तित्वत्वव्यापक-तत्तत्सजातीयप्रतियोगितानिरूपकाभाववत्त्वमेवेति निष्कर्षः (१) साजात्यञ्च पूर्व्वोक्तरूपेणेति (२) संक्षेपः। अभावे यथाश्रुतसाध्यप्रति-योगिकत्वं परित्यज्य प्रतियोगितावच्छेदके साध्यतावच्छेदकावच्छि-न्नव्यापकतावच्छेदकत्वविशेषणस्य व्याप्यवृत्तित्वादिविशेषणस्य च व्यावृत्तिमाह(३) 'तेनेति, 'तत्तत्साध्यव्यक्तेरभाववति हेतोर्वृत्तावपि नाव्याप्तिरिति योजना, एतद्रूपवान् एतद्रसादित्यादौ प्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभाववति हेतोरवृत्ते-र्लक्षणगमनान्नासम्भवः (४)। अथ साध्यवति एतद्रूप-तद्रूपोभयत्वा-वच्छिन्नाभावसत्त्वेन तत्रापि लक्षणगमनासम्भवः। न च नासौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः प्रतियोगिता-वच्छेदकीभूतोभयत्वेन रूपेण उभयवद्भेदस्य उभयवतोऽप्रसिद्ध-त्वेनाप्रसिद्धेरिति वाच्यम्। उभयत्वेनान्यतरवद्भेदस्य तादृशाभाव-प्रतियोगितावच्छेदकावच्छिन्नतत्प्रतियोगिवृत्तिप्रतियोगितावच्छेद--

---

(१) इति निष्कर्ष इत्यनन्तरं 'एवं सम्बन्धविशेषनिवेशनमपि पूर्व्ववद्बोध्यमिति प्राहुः' इति पाठः कस्मिंश्चिदादर्शपुस्तके वर्त्तते।

(२) साजात्यञ्च समानाधिकरणधर्म्मावच्छिन्नत्व-व्यधिकरणधर्म्मावच्छिन्नत्वा-न्यतररूपेणेतीति पा०।

(३) प्रयोजनमाहेति पा०।

(४) प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभाववह्निःसाध्य-मेव तत्र हेतोरवृत्तेर्लक्षणगमनान्नासम्भव इति पा०।

कताकस्य उभयत्वेनान्यतराभाववति सत्त्वात् (१) तस्यापि (२) तादृशभेदमादाय तत्त्वात् (३) इति चेन्न, व्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकस्य स्वव्यापकसाध्यतावच्छेदकप्रतियोगिताकस्य वा अभावस्य निवेशे तादृशोभयाभावादिवारणं सम्भवति इत्यभिप्रायेणाव्याप्तिलिखनात् । 'अव्याप्यवृत्तेर्वेति । यद्यप्येतद्ग्रन्थस्य स्वयमुक्तस्याभावे व्याप्यवृत्तित्वादिविशेषणस्य प्रयोजनदर्शनपरत्वे साध्यपदं कपिसंयोगाभावादिपरमेव वाच्यं न तु कपिसंयोगादिपरं, कपिसंयोगादिसाध्यकस्थले कपिसंयोगाद्यभावस्य लक्षणघटकत्वेऽपि अधिकरणपदस्य व्याप्यवृत्तित्वादिनिरूपकाधिकरणपरताया अभावे व्याप्यवृत्तित्वादिनिवेशेऽपि आवश्यकत्वात्तदीयव्याप्यवृत्तितानिरूपकाधिकरणे गुणादौ हेतोरवृत्तेरव्याप्त्यनवकाशात्, कपिसंयोगाभावादेर्गुणादौ निरच्छिन्नवृत्तिकत्वादिरूपव्याप्यवृत्तित्वादिसत्त्वेन तादृशविशेषणेन व्यावर्त्तनासम्भवाच्च, तथाच कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावस्य लक्षणघटकत्वेऽपि तदीयव्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिरेवाव्याप्तिप्रयोजिका न तु तादृशाभावीयाव्याप्यवृत्तितानिरूपकाधिकरणे हेतोर्वृत्तिरिति 'वृत्तावपि हेतोरिति न सङ्गच्छते, तथाप्यभावे व्याप्यवृत्तितानिवेशानुपादाने यावदन्तर्गतकपिसंयोगादीनां व्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिः स्यादिति

---

(१) उभयत्वेनान्यतराभाववति साध्यवति सत्त्वादिति पा० ।

(२) उभयत्वेनान्यतराभावस्यापीति ।

(३) प्रतियोगिव्यधिकरणत्वात् ।

तादृशाधिकरणपर्यन्तं न विवक्षणीयं तथा सति अव्याप्यवृत्ति-साध्यकस्थले हेतोः साध्याभाववद्वृत्तित्वनिबन्धनाव्याप्तिः सा च व्याप्यवृत्तित्वाद्युपादानान्न भवतीत्यभिप्रायः। अथवा कपिसंयोगादिसाध्यकस्थले हेतोः साध्याभावीयाव्याप्यवृत्तितानिरूपाधिकरण-वृत्तित्वं तत्स्थलीयाव्याप्तिवारकव्याप्यवृत्तितानिरूपकाधिकरण-वृत्तित्वनिवेशनौपयिकम् अतस्तदधीना या कपिसंयोगाभावादि-साध्यकस्थले कपिसंयोगाद्यात्मकाभावीयतादृशाधिकरणाप्रसिद्धि-निबन्धनाव्याप्तिस्तत्सम्पादकमपीति न तादृशग्रन्थासङ्गतिः। एतेन व्याप्यवृत्तितानिरूपकाधिकरणानिवेशे व्याप्यवृत्तिसाध्यकस्थलेऽपि क्षणविशेषवृत्तित्वविशिष्टसाध्याभावस्य प्रतियोगिवैयधिकरण्य-घटितसाध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकस्याव्याप्यवृत्ते-रधिकरणे हेतोर्वृत्त्या लक्षणगमनासम्भवात् असम्भव एव सम्भवती-त्यव्याप्तिरिति लिखनं न युज्यते इत्यपि निरस्तम्। ननु तत्तत्सा-ध्याभावाधिकरणवृत्तित्वस्य हेतुवृत्तितानवच्छेदकविशेषधर्म्म-व्यास-ज्यवृत्तिधर्म्मावच्छिन्नाभावमादाय व्यभिचारिण्यतिव्याप्तिस्तत्तत्सा-ध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावं निवेश्य तद्वार्य्यते चेत्, तदा व्यधिकरणधर्म्मावच्छिन्नसाध्याभावसजातीयस्य तादृशस्य तद्वृत्ति-त्वत्वेन घटाद्यभावस्य प्रसिद्धिर्गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वा-ङ्गीकार एव सम्भवति, अन्यथा तादृशाभाववद्वृत्तित्वत्वरूपलघुधर्म्म-समनियततया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावा-प्रसिद्धेः, अन्यूनानतिरिक्तवृत्तित्वरूपावच्छिन्नत्वनिवेशे ह्रदवृत्तित्व-ह्रदान्यनिर्धूमवृत्तित्वोभयाभावादेर्निर्धूमवृत्तित्वत्वादिसमनियतप्र-

तियोगिताकतया तद्वति धूमादिसाध्यकवह्न्यादिहेतावतिव्याप्तेः, तत्तत्साध्याभाववद्वृत्तित्वत्वविशिष्टव्यापकतावच्छेदकरूपावच्छिन्ना-भावादिनिवेशे च निर्धूमवृत्तित्वत्वादिना ह्रदवृत्तित्व-घटाद्यन्यतरा-भावमादाय (१) तद्दोषतादवस्थ्यमित्यन्याद्दशमभावं तत्तदधिकरण-वृत्तित्वाभावपदेन विवक्षति, 'तद्वदिति, व्यापकान्तमनवच्छिन्ना-न्तञ्च प्रतियोगिताविशेषणं,प्रथमविशेषणप्रयोजनमाह,'साध्याभाव-वद्व्यक्तिविशेषेति यत्र व्यक्तौ हेतुरपि न वर्त्तते ताद्दशह्रदादि-व्यक्तीत्यर्थः, व्यभिचारनिरूपकहेत्वधिकरणमात्रवृत्तिर्योऽयोगोल-कादिव्यक्तिविशेषावृत्तित्वादिरूपसाध्यतावच्छेदकावच्छिन्नव्यापक-तावच्छेदकरूपावच्छिन्नाभावः (२) तद्वद्व्यक्तिविशेषवृत्तित्वाभावस्य हेतावसम्भवात् किञ्चिद्विशिष्टस्य ताद्दशाभाववद्वृत्तित्वस्याभावमा-दायातिप्रसङ्गं दर्शयति, 'पार्थिवत्वादिविशेषितस्येति, अग्रिमेण 'साध्याभाववद्वृत्तित्वस्येत्यनेनान्वितं, वह्न्यादौ पार्थिवत्वादिविशे-षणाभावात्तद्विशिष्टनिर्धूमवृत्तित्वाभावस्यापि तत्र सत्त्वात्तमादा-येत्यर्थः, द्वितीयविशेषणप्रयोजनं दर्शयति, 'द्वित्वाद्यवच्छिन्न-स्येति घट-निर्धूमवृत्तित्वोभयत्वाद्यवच्छिन्नस्येत्यर्थः, 'नातिप्रसङ्ग-इति, ह्रदादिवृत्तित्वत्व-पार्थिवत्वादिविशिष्टनिर्धूमवृत्तित्वत्वावच्छि-न्नाभावप्रतियोगिताया वह्न्यादिवृत्तिनिर्धूमवृत्तित्वाद्यवृत्तितया तत्तत्साध्याभाववद्वृत्तित्वत्वाद्यव्यापकत्वात्, द्वित्वाद्यवच्छिन्नाभाव-

(१) ह्रदवृत्तित्व-घटवृत्तित्वान्यतराभावमादायेति पा० ।

(२) अयोगोलादिव्यक्तिविशेषावृत्तित्वादिरूपस्य साध्यतावच्छेदकावच्छिन्नव्याप-कतावच्छेदकरूपे अभेदेनान्वयः ।

प्रतियोगिताया द्वित्वादिवद्व्यासज्यवृत्तित्वविरहेण निर्धूमवृत्ति-त्वादिनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपनिर्धूमवृत्तित्वत्वादिव्या-पकत्वसत्त्वेऽपि व्यासज्यवृत्तिधर्म्मावच्छिन्नत्वात्तादृशाभावानां लक्ष-णाघटकत्वादिति भावः। व्यासज्यवृत्तिधर्म्मस्य तत्तत्साध्याभाववद्वृ-त्तित्वनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वविरहात् तत्त-त्साध्याभाववद्वृत्तित्वत्वव्यापकधर्म्मावच्छिन्नाभावनिवेशे द्वित्वाद्यव-च्छिन्नाभावमादायातिप्रसङ्गस्य वारणसम्भवेऽपि प्रतियोगितायां व्यापकत्वविशेषणाप्रवेशे निर्धूमवृत्तित्वत्वादिना ह्रदादिवृत्तित्व-घटान्यतराभावमादाय (१) अतिप्रसङ्गो न शक्यते वारयितुमिति तत्र तद्विशेषणप्रवेशस्यावश्यकत्वे तत्तदभाववद्वृत्तित्वत्वव्यापक-धर्म्मावच्छिन्नायाः तत्तदभाववद्वृत्तित्वत्वव्यापकप्रतियोगितायाः समानाधिकरणधर्म्मावच्छिन्नत्वनियतत्वेन व्यधिकरणधर्म्मावच्छि-न्नतदभावासंग्रहः, तत्तदभाववद्वृत्तितात्वव्यापकत्वेन विशेषितायां प्रतियोगितायां तत्तदभाववद्वृत्तितात्वव्यापकतावच्छेदकावच्छि-न्नत्वं निवेश्य वाच्यत्वत्वादिना साध्याभाववद्वृत्तित्वाभावसंग्रह-सम्भवेऽपि गौरवमिति व्यासज्यवृत्तिधर्म्मावच्छिन्नाभाववारणाय तादृशधर्म्मानवच्छिन्नत्वमेव लाघवान्निवेशयितुमुचितमिति (२) तदेव निवेशितं, व्यासज्यवृत्तित्वञ्च स्वसमानाधिकरणभेदप्रति-योगितावच्छेदकत्वम्। 'साध्याभाववद्वृत्तित्वमिति साध्याभाववत्-

(१) ह्रदादिवृत्तित्व-घटवृत्तित्वान्यतराभावमादायेति पा०।

(२) तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकधर्म्मावच्छिन्नत्वापेक्षया लाघवान्निवेश-यितुमुचितमितीति पा०।

सम्बद्धत्वमित्यर्थः, तेन तादात्म्यादिसम्बन्धेन वृत्तेरप्रसिद्धावपि न तत्सम्बन्धावच्छिन्नहेतुकस्थलेऽव्याप्तिः, सम्बन्धप्रतियोगित्वरूप-सम्बद्धत्वैकदेशे सम्बन्धे 'हेतुतावच्छेदकसम्बन्धेनेति तृतीयार्थाभेदा-न्वयः, 'वृत्तावपीति सम्बद्धत्वेऽपीत्यर्थः, 'न दोष इति, हेतुतावच्छे-दकसम्बन्धानिवेशे वह्निमान् धूमादित्यत्र वह्न्यभाववत्संयुक्त-त्वत्वावच्छिन्नाभावप्रतियोगितया वह्न्यभाववत्समवेतत्वाद्यवृत्ति-तया सामान्यतो वह्न्यभाववद्वृत्तित्वत्वं प्रत्यव्यापकत्वेन तादृशा-भावस्य लक्षणघटकत्वानुपपत्तेः, वह्न्यभाववद्वृत्तित्वत्वव्यापकप्रति-योगिताकस्य तद्वृत्तित्वसामान्याभावस्य वह्न्यभाववत्समवेतत्व-वति धूमेऽसत्त्वादव्याप्तिः प्रसज्यते, हेतुतावच्छेदकसम्बन्धनिवेशे च निर्वह्निसंयुक्तत्वत्वावच्छिन्नाभावस्यापि तादृशसम्बन्धावच्छिन्नसाध्या-भाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकतया तमा-दाय लक्षणसमन्वय इति भावः। 'इत्यच' हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वविवक्षणे च, सतीति शेषः, एतदविवक्षणे च वक्ष्यमाणाप्रसिद्धिविरहादुपष्टम्भासङ्गतिः, 'हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमान इति अनुयोगितासम्बन्धेन हेतुताव-च्छेदकसम्बन्धवद्वृत्तिरित्यर्थः, अथवा हेतुतावच्छेदकसम्बन्धेन धर्मि-वद्वृत्तिरित्येवार्थः, विशिष्य हेतुतावच्छेदकपुरस्कारेण हेतुमत्त्व-निवेशनसम्भवेऽपि बहुपदार्थघटितहेतुतावच्छेदकस्थले धर्मित्वेन निवेशापेक्षया तेन रूपेण निवेशे गौरवमिति सामान्यतो निवेशलाभाय 'कस्यचिदित्यभिहितम्। अथ द्रव्यं गुण-कर्मान्यत्वे सति सत्त्वादित्यादौ समानाधिकरणधर्मावच्छिन्नप्रतियोगिता-

कस्यापि साध्याभावस्य सत्तादिरूपहेतुसामानाधिकरण्यसम्भवेऽपि हेतुतावच्छेदकविशिष्टहेतुसमानाधिकरणनिरुक्तसाध्याभावानां व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वनियमात्तादृशहेतुसमानाधिकरणत्वेनाभावविशेषणे केवलव्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वरूपेणैव साजात्यविवक्षणं सम्भवतीति तन्निवेशनमेवोचितमिति चेन्न, तथा सति तादृशयावत्साध्याभावसजातीयवत्त्वस्यैव लक्षणत्वं सम्भवतीति व्यभिचारिणि समानाधिकरणधर्म्मावच्छिन्नाभावस्यापि विशिष्टहेतुसमानाधिकरणत्वेन लक्षणघटकतया तद्घटितयावदभावसजातीयाप्रसिद्धैरवातिव्याप्तिविरहात्, सद्धेतौ तादृशयावदभावसजातीयव्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावमादायैव लक्षणसमन्वयसम्भवादिति साध्याभाववद्वृत्तित्वाभाववत्त्वविशेषणवैयर्थ्यापत्तेः। 'हेतुतावच्छेदकसम्बन्धेनेति समवायादिसम्बन्धेनेत्यर्थः, 'साध्याभाववद्वृत्तित्वस्य' समानाधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य, 'न क्षतिरिति, तादृशसाध्याभावस्य समवायादिसम्बन्धानुयोग्यवृत्तितया व्यधिकरणधर्म्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात्तद्वति च तादृशसम्बन्धेनापि वृत्तेः प्रसिद्धेरिति भावः। अत्र च द्रव्यं गुणकर्म्मान्यत्वे सति सत्त्वादित्यादावव्याप्तिर्विशेष्य-विशेषणसम्बन्धस्य परम्परया हेतुत्वमभ्युपेत्य वारणीयेत्यभिप्रेत्य हेतुतावच्छेदकसम्बन्धेन किञ्चिद्वात्त्यधिकरणवृत्तित्वमभावे विवक्षितम्। यदि च सत्तादेरेव विशिष्टसत्तात्वादिना व्याप्यत्वं हेतुतावच्छेदकविशिष्टनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये तत्तत्साध्याभाव-

सजातीयतत्तदधिकरणानुयोगिकत्वाभावं तत्तत्साध्याभाववद्वृत्ति-तासामान्ये तत्तत्साध्याभावसजातीयहेतुतावच्छेदकसम्बन्धावच्छि-न्नत्वविशिष्टहेतुतावच्छेदकावच्छेद्यत्वाभावं वा निवेश्य निर्वाह्यति तदा जातिमान् सत्त्वादित्यादावुपदर्शिताप्रसिद्धिनिबन्धनाव्याप्ते-रुक्तविवक्षामन्तरेणैव (१) वारणं सम्भवतीत्यवधेयम् ।

इति मिश्रस्य साजात्यघटितप्रथमलक्षणव्याख्या ।

---

तत्त्वचिन्तामणि-दीधितिः ।

## मिश्रोक्तसाजात्यघटितद्वितीयलक्षणम् ।

**यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य प्रतियो-गितावच्छेदकेन धर्म्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वम-वच्छिद्यते तद्रूपवत्त्वं तत्त्वं साधनस्य तादृशाभावप्रतियो-गित्वं तदवच्छेदकत्वं वा साधनतावच्छेदकस्येति तु न वक्तव्यम् द्रव्यं सत्त्वादित्यादौ सत्त्वादेर्गुण-कर्म्मान्यत्ववि-शिष्टसत्तात्वाद्यवच्छिन्नप्रतियोगिताकतादृशाभावप्रति-योगित्वादतिव्याप्तेः क्वचियं प्रमेयादित्यादौ प्रमेयत्वादेस्ता-दृशप्रतियोगितानवच्छेदकत्वादव्याप्तेश्च प्रमेयत्वव्यधि-करणप्रतियोगित्वस्याप्रसिद्धेः ।**

---

(१) हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्त्तमानसाध्याभावविवक्षा-मन्तरेणैवेत्यर्थः ।

गादाधरी विवृतिः ।

मिश्रास्तु साध्याभाववद्वृत्तित्वाभावरूपव्याप्तेर्जातिमान् सत्त्वात् द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिमालोच्य सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वरूपामेव व्याप्तिं साजात्यादिघटनया परिष्कृतवन्तः तत्परिष्कृते च यथाश्रुते वक्ष्यमाणदोषमुद्धर्त्तुमभावप्रतियोगित्वस्थले स्वावच्छिन्नव्यापकतावच्छेदकतत्प्रतियोगितावच्छेदकत्वरूपपारिभाषिकतत्प्रतियोगितावच्छेदकत्वाश्रयहेतुतावच्छेदकवत्त्वं निवेशयंस्तादृशलक्षणमाह, 'यद्वेति, 'तादृशाः' व्याप्यवृत्तयः, 'साध्याभावाः' साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावाः, 'प्रत्येकन्तेषां सजातीयस्य व्यापकीभूतस्य' एकैकं तदभावसजातीयस्य तत्तदभावव्यापकीभूतस्य, 'व्याप्यवृत्तेरभावस्य', 'प्रतियोगितावच्छेदकेन धर्म्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते' प्रतियोगितावच्छेदकं यद्धेतुतावच्छेदकावच्छिन्ननिरूपितव्यापकतावच्छेदकं, 'तद्रूपवत्त्वं', 'तत्त्वं' तेन रूपेण व्याप्यत्वं, वह्निमान् धूमादित्यादौ वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावसजातीयस्तद्व्यापकीभूतो धूमत्वाद्यवच्छिन्नधूमाद्यभावः, वह्नित्वाद्यवच्छिन्नघटाद्यभावसजातीयस्तद्व्यापकीभूतो धूमत्वाद्यवच्छिन्नघटाद्यभावस्तत्प्रतियोगितावच्छेदकं धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकमिति लक्षणसमन्वयः । व्यभिचारिणि धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकधूमत्वाद्यवच्छिन्नघटाद्यभाव-तादृशवह्नित्वाद्यवच्छिन्नवह्न्याद्यभावसजातीयतत्तदभावव्यापकवह्नित्वाद्यवच्छिन्नघटाद्यभाव-वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावप्रतियोगितावच्छेद-

कवह्नित्वादेर्वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वेऽपि तादृशयाव-त्साध्याभावान्तर्गतधूमत्वाद्यवच्छिन्नधूमाद्यभावसजातीयतद्व्यापका-भावप्रतियोगितावच्छेदकस्य कस्यापि वह्नित्वाद्यवच्छिन्नव्यापक-तावच्छेदकत्वाभावान्नातिव्याप्तिः। प्रथमाभावे व्याप्यवृत्तित्वविशेष-णात् कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगत्वाद्यवच्छिन्न-कपिसंयोगाभावस्य केवलान्वयिनः सजातीयस्य व्यापकीभूत-व्याप्यवृत्त्यभावस्याप्रसिद्धावपि न क्षतिः व्याप्यवृत्तित्वविशिष्टतद-भावं प्रत्येतद्वृक्षत्वाद्यभावस्य व्यापकत्वात्, साध्यतावच्छेदकसम्ब-न्धेन साध्यव्यापकतायाः विवक्षणीयतया संयोगेन द्रव्यस्या-व्याप्यवृत्तितामते संयोगेन तत्साध्यके तादृशसम्बन्धेन व्यापकता-प्रसिद्ध्यर्थं व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयतया साध्यवन्निष्ठप्रतियोगिसमानाधिकरणाभावप्रति-योगितावच्छेदकस्यापि संयोगत्वादेः साध्यव्यापकतावच्छेदकत्व-मक्षतमिति ध्येयम्। नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभावस्य नानाधिकरणकैकव्यक्तिसाध्यके यत्किञ्चिदधिकरणवृत्तित्वविशिष्ट-साध्याभावस्य व्यापकीभूतोऽभावो न हेतुतावच्छेदकावच्छिन्न-व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताक इति तादृशसाध्या-भावव्यावर्त्तनाय साध्यतावच्छेदकावच्छिन्नव्यापकतापकतावच्छे-दकरूपावच्छिन्नप्रतियोगिताकत्वनिवेशनं, व्यापकता च साध्य-तावच्छेदकसम्बन्धघटिता ग्राह्या तेन समवायेन द्रव्यत्वादिसाध्यक-गुणादिहेतौ विषयतया साध्यव्यापकस्य ज्ञानादेः साध्यता-वच्छेदकसम्बन्धावच्छिन्नाभावं प्रति हेतुतावच्छेदकसम्बन्धावच्छिन्न-

हेत्वभावस्याव्यापकत्वेऽपि (१) न क्षतिः। साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः, तेन संयोगादिना वह्न्यादिसाध्यक-धूमादिहेतौ समवायादिसम्बन्धावच्छिन्नवह्न्याद्यभावं प्रति संयोगादिना धूमादेरभावस्याव्यापकत्वेऽपि न क्षतिः। व्यभिचारिणि समानाधिकरणधर्म्मावच्छिन्नाभावव्यापकव्यधिकरणहेतुतावच्छेदकाद्यवच्छिन्नप्रतियोगिताकाभावमादायातिप्रसङ्गवारणाय सजातीयत्वोपादानम्। व्यतिरेकिसाध्यकस्थले यावत्साध्याभावसजातीयाप्रसिद्ध्या एकैकतत्सजातीयत्वनिवेशनं, साजात्यघटकसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वादिकमनुगतं पूर्व्वनिरुक्तभेदकूटरूपमेव ग्राह्यं अन्यथा यत्र भिन्न-भिन्नसम्बन्धेन साध्यहेतुभावस्तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य यादृशप्रतियोगितानिरूपकत्वं तस्यैव तद्वत्तया सजातीयत्वेन तत्सजातीयाभावनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेः (२) सजातीयस्यापि साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावस्य निवेशे हेतुव्यापकताया अपि तत्सम्बन्धघटिताया विवक्षणे उक्ताप्रसिद्धिनिबन्धनदोषासम्भवेऽपि सजातीयव्यापकीभूताभावस्येत्यादिवैयर्थ्यस्य दुर्व्वारत्वात्, (३) तत्परित्यागे च चरमलक्षण एव पर्य्यवसानात्। अथ सजातीया-

---

(१) हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुव्यापकाभावस्याव्यापकत्वेऽपीति पा०।

(२) सजातीयत्वेन तत्सजातीयहेतुतावच्छेदकसम्बन्धावच्छिन्नाभावाप्रसिद्धेरिति पा०।

(३) व्यापकीभूतस्येत्यादेर्वैयर्थ्यस्य दुर्व्वारत्वादिति पा०।

भावे हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यानिवेशे-
ऽपि स्वमात्रनिष्ठयथाश्रुतसाजात्यनिवेशपक्षे नातिप्रसङ्गः आत्मत्वा-
दिसाध्यके विषयतासम्बन्धेन हेतौ ज्ञानादौ समवायादिसम्बन्धा-
वच्छिन्नज्ञानाद्यभावस्य साध्याभावव्यापकत्वेऽपि यथाश्रुतसाजा-
त्याभावेनातिव्याप्त्यप्रसक्तेः, संयोगादिना वह्न्यादौ साध्ये समवाया-
दिना हेतुं रूपविशेषं प्रति हेतुतावच्छेदकसमवायेन वह्न्याद्य-
भावप्रतियोगिनोऽव्यापकत्वेऽपि च न दोषः साध्यतावच्छेदक-
सम्बन्धेनैव हेतुव्यापकताया विवक्षणीयत्वात् इति चेत्तर्हि,
सजातीयाभावे साध्याभावव्यापकत्वविशेषणस्य वैयर्थ्यमापद्येत
स्वाव्यापकाभावस्य स्वसाजात्यविरहेणैव व्यावर्त्तनात्, व्यभिचा-
रिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावसजातीयहेतुतावच्छे-
दकाद्यवच्छिन्नहेत्वाद्यभावमादायातिप्रसङ्गस्य वारणाय व्यापकी-
भूतस्येति, व्यभिचारिणोऽभावस्य च व्यभिचारनिरूपकाधिकरण-
साधारणसाध्याभावाव्यापकत्वान्न दोषः। व्यापकत्वञ्च न तत्समाना-
धिकरणाभावाप्रतियोगित्वं, सर्व्वस्यैव तादृशहेत्वाद्यवच्छिन्नाभाव-
प्रतियोगितया असम्भवात् । न च तदधिकरणवृत्तित्वं हेतुतावच्छे-
दकसम्बन्धेनावश्यं वाच्यं तथाच वह्न्याद्यभाववति धूमाद्यभावस्य
धूमाद्यनात्मकहेत्वाद्यवच्छिन्नाभावस्य संयोगादिरूपहेतुतावच्छे-
दकसमसम्बन्धेनावृत्त्या न तमादाय दोषावसर इति वाच्यम् ।
एवमपि यत्र स्वरूपसम्बन्धेन हेतुता तत्र तादृशाभावप्रतियोगि-
तया हेत्वभावस्य व्यापकत्वानुपपत्तेर्दुर्व्वारत्वात् । नापि तादृशा-
भावप्रतियोगितानवच्छेदकरूपवत्त्वम् तत्, अभावत्वाद्यात्मकता-

दृशरूपमादायाभावमात्रस्यैव व्यापकतया व्यापकत्वस्याव्यावर्त्तक-तापत्तेः एवं वह्न्याद्यभाववति धूमावयवादौ समवायादिना वर्त्त-मानं धूमादिरूपमभावमादाय तदभावस्य व्यापकताभङ्गभिया हेतु-तावच्छेदकसम्बन्धेन सामानाधिकरण्यस्य निवेशनीयतया सत्तावान् जातेरित्यादौ सत्ताद्यभाववति सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिश्चेति, तद्वन्निष्ठान्योन्याभावप्रतियोगिता-नवच्छेदकत्वमेव साध्याभावव्यापकत्वं निर्धूमो वह्निशून्यत्वादि-त्यादौ हेत्वभावस्य वह्न्यादेश्च प्रत्येकं धूमादिमन्निष्ठभेदप्रतियोगि-ताच्छेदकत्वेऽपि अखण्डस्य निर्व्वह्नित्वप्रकारकप्रमाविषयत्वाद्यभा-वस्य तादृशव्यापकतासम्भवात् तत्प्रतियोगितावच्छेदकावच्छिन्नस्य हेतुव्यापकतयैव लक्षणसमन्वयः। तद्वन्निष्ठत्वं दैशिकविशेषणतया ग्राह्यं, अतो वह्न्याद्यभाववति धूमाद्यभाववद्भेदस्य कालिक-सम्बन्धेन वृत्तावपि न क्षतिः। अभावाभावस्य प्रतियोगिरूपत्वे-ऽपि अभाववद्भेदोऽतिरिक्त एवातो धूमाद्यभाववत्ययोगोलकादौ दैशिकविशेषणतयावह्न्याद्यभाववद्भेदस्य वृत्तिरव्याहतैवेति न वह्न्याद्यभावस्य धूमाद्यभावव्यापकतापत्तिः। अथवा यदीयदैशि-कविशेषणतासम्बन्धसामान्ये तत्तत्साध्याभाववद्यत्किञ्चिद्व्यक्त्यनु-योगिकत्वाभावस्तदन्यत्वमेव तत्तदभावव्यापकत्वम्। 'अभावस्येति भावभिन्नस्येत्यर्थः, तेन धूमवान् जलत्वाभावादित्यादौ (१) जल-त्वादिनिरूपितदैशिकविशेषणताया अप्रसिद्ध्या तत्र निरुक्तभेद-कूटात्मकव्यापकतासत्त्वेऽपि नातिव्याप्तिः। अभावरूपसद्धेतौ हे-

(१) ह्रदत्वाभावादित्यादावित्ति पा०।

तुमत्त्वप्रकारकप्रमाविषयत्वाद्यभावप्रतियोगितावच्छेदकावच्छिन्न-व्यापकतामादायैव लक्षणसमन्वयः । धूमवान् वह्नेरित्यादावयोगोलकादावप्युत्पत्तिकालावच्छेदेन वर्त्तमानस्य वह्न्याद्यभावस्य निरुक्तव्यापकतासत्त्वादतिव्याप्तिरतः 'व्याप्यवृत्तेरिति । यद्यपि तादृशाभावा अपि ह्रदादौ व्याप्यवृत्तयस्तथापि व्याप्यवृत्तित्वविशिष्टस्य व्यापकत्वं विवक्षणीयं, अनवच्छिन्नविशेषणतासम्बन्धेन व्यापकतानिवेशलाभायैव वा तदुक्तम् । अवच्छिन्नवृत्तिकान्यत्वरूपं व्याप्यवृत्तित्वन्तु न शक्यते निवेशयितुं संयोगेन सद्धेतौ हेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वभावस्यातथात्वात् 'प्रतियोगितावच्छेदकेत्यत्र प्रतियोगिता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकहेत्वभावस्य साध्याभावव्यापकस्य समनियताभावैक्यमते व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभावरूपतया समानाधिकरणधर्म्मावच्छिन्नसाध्याभावासजातीयत्वेन तमादायातिव्याप्तिविरहेऽपि आत्मत्वादिसाध्यके विषयतया हेतौ ज्ञानादौ साध्याभावव्यापकसमवायसम्बन्धावच्छिन्नज्ञानाद्यभावमादायातिव्याप्तिः (१) अभावे हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वविशेषणं प्रवेश्य च नातिप्रसङ्गवारणसम्भवः, समनियताभावैक्ये समवायसम्बन्धावच्छिन्नज्ञानाद्यभावस्यापि स्वसमवायिविषयकत्वसम्बन्धेन ज्ञानादिविशिष्टज्ञानादेर्विषयतासम्बन्धावच्छिन्नाभावसमनियतत्वेन तादृशसम्बन्धावच्छिन्नप्रतियोगिताकत्वात्, धूमाद्यभावव्यापकमहानसीयवह्न्यभावप्रतियोगिनो वह्नि-

(१) अतिप्रसङ्गादिति पा० ।

त्वादिना वह्नित्वाद्यवच्छिन्नव्यापकत्वादतिप्रसङ्ग इति प्रतियोगिनो व्यापकतामुपेक्ष्य प्रतियोगितावच्छेदकस्य तदवच्छेदकत्वपर्य्यन्तानुधावनम्। इत्थं विशिष्टसत्त्वादित्यादौ साध्याभावव्यापकाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वादेर्हेतुतावच्छेदकोपलक्षितहेतुव्यापकतावच्छेदकत्वासम्भवात् यं प्रतीत्यनुक्त्वा यद्रूपावच्छिन्नं प्रतीत्युक्तं, व्यापकता च हेतुतावच्छेदकसम्बन्धेन ग्राह्या अतो महाकालभिन्नं कालत्वादित्यादौ साध्याभावव्यापकाभावप्रतियोगितावच्छेदकस्य साध्यतावच्छेदकादेः कालिकादिसम्बन्धेन हेतुव्यापकतायामवच्छेदकत्वेऽपि नातिव्याप्तिप्रसङ्गः। व्यापकतावच्छेदकताघटकसम्बन्धभेदनिवेशनादिकं स्वयमूह्यम् (१)। न च धूमवान् वह्निमत्त्वप्रकारकप्रमाविषयत्वादित्यादावतिव्याप्तिर्धूमाद्यभावव्यापकधूमाद्यभावस्य प्रतियोगितावच्छेदकजलादिवृत्तित्वविशिष्टधूमाभावाभावत्वादेर्हेतुतावच्छेदकस्वरूपसम्बन्धघटितहेतुव्यापकतायामवच्छेदकत्वादिति वाच्यम्। भाववृत्तिप्रतियोगितावच्छेदकस्य व्यापकतावच्छेदकताया विवक्षणीयत्वात्।

यथाश्रुतमिश्रलक्षणमुपन्यस्य दूषयति, 'साधनस्येति, 'तादृशेति ये ये साध्याभावाः प्रसिद्धास्तत्तत्सजातीय-तत्तद्व्यापकेत्यर्थः। तत्प्रतियोगिताद्वये सम्बन्धविशेषावच्छिन्नत्वमनिवेश्य साध्यतावच्छेदकसम्बन्धघटितसाध्य-हेतुव्यापकत्वयोर्निवेशस्तु न सम्यक् तथा सति तादृशसाध्याभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्न-

(१) व्यापकताघटकसम्बन्धभेदनिवेशनादिकं स्वयमूह्यमिति पा०।

व्यापकतावच्छेदकं इत्येतावतैव सामञ्जस्ये सजातीयव्यापकाभावांशस्यानतिप्रयोजकत्वापत्तेः, उक्तरीत्यनुसरणे च संयोगेन वह्न्यादौ साध्ये रूपविशेषादेः समवायेन हेतुतायां संयोगेन साध्यव्यापकस्य वह्नेर्हेतुतावच्छेदकसमवायेन हेत्वव्यापकत्वेनाव्याप्तेर्वारणाय द्वितीयाभावनिवेशस्यावश्यकत्वात् (१)। 'तदवच्छेदकत्वं' तादृशप्रतियोगितावच्छेदकत्वं, आद्ये 'द्रव्यं सत्त्वादित्यादाविति, द्वितीये 'ज्ञेयं प्रमेयादित्यादाविति। ननु प्रमेयत्वादेः केवलान्वयितावच्छेदकत्वेऽपि वाच्यत्वत्वादेरिव साध्याभावव्यापकव्यधिकरणधर्म्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमक्षतमेवेत्याशङ्कां निरस्यति, 'प्रमेयत्वव्यधिकरणेति, प्रमेयत्वस्य केवलान्वयित्वादिति भावः। धूमाद्यभावं प्रति विषयितादिसम्बन्धेन वह्नित्वाद्यवच्छिन्नस्य योऽभावस्तस्य व्यापकत्वात्तमादाय आत्मत्वे साध्ये समवायेन द्रव्यत्वे हेतौ आत्मत्वाभावं प्रति विषयितासम्बन्धेन द्रव्यत्ववज्ज्ञानस्य यः समवायसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावस्तस्य व्यापकत्वात्तमादाय चातिप्रसङ्गस्य वारणाय प्रतियोगितावच्छेदकतायां हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यावश्यन्निवेशनीयतया व्यधिकरणसमवायादिसम्बन्धेन प्रमेयत्वस्याभावप्रतियोगितायामसमानाधिकरणतयावच्छेदकत्वसम्भवेऽपि न निस्तार इत्यवधेयम्। अन्योन्याभाव एव व्यधिकरणधर्म्मावच्छिन्नावच्छेदकताकोन त्वत्यन्ताभाव इत्याशयेनेदं, अन्यथा घटत्वावच्छिन्नप्रमेयत्वा-

---

(१) तत्प्रतियोगिताद्वय इत्यादिः आवश्यकत्वादित्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति।

वच्छिन्नप्रतियोगिताकात्यन्ताभावमादाय लक्षणगमनसम्भवात्(१)। इदमुपलक्षणं गुरुधर्म्मस्य प्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नहेतुकाव्याप्तिरपि द्रष्टव्या। एतेन व्यापकीभूताभावप्रतियोगितायां हेतुतावच्छेदकानवच्छिन्नत्व-व्यधिकरणधर्म्मानवच्छिन्नत्वोभयाभावविवक्षणे प्रमेयहेतुकस्थले वाच्यत्वत्वादिना घटाद्यभावप्रतियोगितायां तादृशोभयाभावसत्त्वेन लक्षणसमन्वयेऽपि न निस्तारः। उक्तस्थले हेतुतावच्छेदकावच्छिन्नत्वाप्रसिद्ध्या अप्रतीकारात्।

इति साजात्यघटितद्वितीयलक्षणव्याख्या।

---

तत्त्वचिन्तामणि-दीधितिः।

## मिश्रोक्तलघुलक्षणम्।

**यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रयोगितावच्छेदकेन धर्म्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं वा तत्त्वमित्याहुः।**

---

गादाधरी विवृतिः।

उक्तलक्षणे सजातीयादिपदपरित्यागेन लघुलक्षणमाह, 'यद्वे-

---

(१) लक्षणगमनसम्भवादित्यनन्तरं 'साध्याभावव्यापकतत्सजातीयाभावप्रतियोगितायां यद्रूपानवच्छिन्नत्व-समानाधिकरणधर्म्मावच्छिन्नत्वोभयाभावस्तद्रूपवत्त्वं व्याप्तिरिति विवक्षणेनैव तद्दोषोद्धारेऽपि गुरुधर्म्मस्य प्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नहेतुकाव्याप्तिस्तदवच्छिन्नत्वाप्रसिद्धेरुक्तस्थले हेतुतावच्छेदकावच्छिन्नत्वाप्रसिद्धिरपि द्रष्टव्या' इति कस्यचिदादर्शपुस्तकस्य पाठः।

ति, व्यभिचारिणि व्यधिकरणधर्म्मावच्छिन्नाभावादिकमादायातिव्याप्तेर्व्वारणाय 'यावन्त इति, वह्निमान् धूमादित्यादौ महानसीयवह्नित्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकस्य धूमत्वाद्यवच्छिन्नव्यापकतानवच्छेदकतया अव्याप्तिरिति 'तादृशा इति साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका इत्यर्थः। अत्र व्याप्यवृत्तित्वविशेषणं प्रयोजनाभावादनुपादेयं(१)। साध्याभावसजातीयत्वादिविशेषणावच्छिन्नस्याप्यभावान्तरस्य प्रक्रान्तत्वात्तादृशपदे तत्परत्वभ्रमस्य झटितिनिरासाय (२) अभावा इत्येतन्मात्रमनभिधाय साध्याभावा इत्युक्तं, यावत्साध्याभावनिरूपिता न काचिदपि प्रतियोगितेति 'प्रत्येकपदं, अत्र च व्यभिचारिणं प्रत्यपि क्वचित् (३) किञ्चित्सम्बन्धेन साध्यतावच्छेदकावच्छिन्नस्य व्यापकतया अतिप्रसङ्गवारणाय प्रतियोगितावच्छेदकसम्बन्धेनैव व्यापकता निवेशनीया, इत्यञ्च समवायसम्बन्धावच्छिन्नवह्न्याद्यभावप्रतियोगितावच्छेदकसमवायादिसम्बन्धेन वह्नित्वाद्यवच्छिन्नस्य धूमाद्यव्यापकत्वादसम्भव इति प्रतियोगितावच्छेदकसम्बन्धेनैव साध्यव्यापकता विवक्षणीया तथाच केवलान्वयिसाध्यकस्थले व्यधिकरणसम्बन्धावच्छिन्नसाध्याभाव-

---

(१) तथाच साध्यव्यापकत्वं प्रतियोगिवैयधिकरण्याघटितमेव, तन्निवेशे प्रयोजनाभावादितिभावः।

(२) ननु तत्परत्वभ्रमे का क्षतिरिति चेत्, न, वाच्यं ज्ञेयत्वादित्यादौ साध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावसजातीययावदभावान्तर्गतघटत्वेन पटाभावादीनां प्रतियोगितावच्छेदकस्य हेतोर्व्यापकतानवच्छेदकतया अव्याप्तेरिति।

(३) जन्यमात्राधिकरणकहेतुकस्थले।

मादाय निर्व्वाहो न भवतीति व्यधिकरणधर्म्मावच्छिन्नाभाव-स्योपयोगिता बोध्या धूमवान् वह्नेरित्यादौ धूमाद्यभावप्रतियोगि-तावच्छेदकजलादिवृत्तित्वविशिष्टधूमाद्यभावाभावत्वेन वह्न्यादि-व्यापकत्वेऽपि नातिव्याप्तिः साध्यतावच्छेदकावच्छिन्ननिरूपितस्वा-वच्छेदकसम्बन्धघटितव्यापकतावच्छेदकावच्छिन्ना यावत्यः प्रति-योगिताः प्रत्येकं तदवच्छेदकरूपेण तदवच्छेदकसम्बन्धेन यद्रूपा-वच्छिन्नं प्रति व्यापकत्वमित्येतादृशार्थस्यैव विवक्षणीयत्वात्। साध्य-व्यापकतावच्छेदकं यद्यद्रूपं तेन व्यापकत्वविवक्षणे व्यधिकरण-धर्म्मावच्छिन्नाभावोपयोगिता न घटते इति साध्यव्यापकताव-च्छेदकावच्छिन्नप्रतियोगितावच्छेदकत्वेन व्यापकतावच्छेदकनि-वेशः, यथासन्निवेशि (१) न वैयर्थ्यं, प्रतियोगितायाः स्वरूपसम्बन्ध-रूपत्वे वह्नित्वाद्यवच्छिन्नप्रतियोगिताया वह्न्यादिव्यक्तिभेदेन भिन्नाया धूमत्वाद्यच्छिन्नव्यापकतावच्छेदकत्वं न सम्भवतीति व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताया व्यापकतावच्छेदकत्वं न निवेशितम्।

इति मिश्रोक्तसाजात्याघटितलघुलक्षणव्याख्या।

---

तत्त्वचिन्तामणि-दीधितिः।

## कूटाघटितलक्षणम्।

परे तु वृत्तिमद्वृत्तयो यावन्तः साध्याभाववद्वृत्ति-

---

(१) ननु व्यधिकरणधर्म्मावच्छिन्नाभावसंग्राहकविशेषणस्य व्यर्थत्वात् कथमेव-मित्यत आह, यथासन्निवेश इति।

त्वाभावास्तद्रूपवत्त्वं व्याप्तिः येन सम्बन्धेन हेतुता तेनैव वृत्तिमत्त्वमपि बोध्यं तेन व्यधिकरणधर्म्मावच्छिन्नवह्न्यभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्त्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः। साध्याभावश्च पूर्ब्ववद्बोध्यः, तद्वद्वृत्तित्वाभावोपि स्वव्यापक-तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकः तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तेन समानाधिकरणेन साध्याभाववद्वृत्तित्ववृत्तिना वा धर्म्मेणानवच्छिन्नप्रतियोगिताकोबोध्यः तेनालोकाद्यवृत्तित्वेन रूपेण योवह्निसामान्याभाववद्वृत्तित्वस्य यश्चेन्धनत्वाद्यवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेरभावस्तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्वविरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन्नसत्त्वेऽपि न क्षतिरित्याहुः।

---

गादाधरी विवृतिः।

कूटघटितलक्षणे व्यभिचारिणि साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताको न निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावः, अपि तु जगद्वृत्तित्वसामान्याभाव एव, स च व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताक एव वृत्तिमद्वृत्तिरित्यतिव्याप्तिवारणाय कूटपदमुपात्तं तादृशातिव्याप्तिश्च समानाधिकरणधर्म्मावच्छिन्नाभावसाधारणरूपेण साध्याभावस्य व्याप्यतावच्छेदककोटौ प्रवेशन-

एव प्रसज्यते न तु विशिष्टसाध्याभावनिवेशे, तथा सति निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्यापि लक्षणघटकतानिर्व्वाहादिति कूटपदमनुपादाय विशिष्य साध्याभावं निवेश्यैव लक्षणमुचितं तदुपादाने बहूनां दोषाणां वक्ष्यमाणत्वादिति कूटघटितलक्षणवादिनां मतमाक्षेप्तुं कूटाघटितं तल्लक्षणं दर्शयति, 'परे त्वित्यादिना, साध्याभाववद्वृत्तित्वस्य व्यधिकरणधर्म्मावच्छिन्नाभावमादाय व्यभिचारिमात्रेऽतिव्याप्तिरतो 'यावन्त इति, तथा सति समानाधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य समानाधिकरणधर्म्मावच्छिन्नाभावस्य यावत्तादृशाभावान्तर्गतस्य व्यभिचारिण्यसत्त्वान्नातिव्याप्तिः। वृत्तिमद्वृत्तित्वानुपादाने समानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्य व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववत्संयुक्तत्वाद्यभावस्यासंयुक्तादौ प्रसिद्धस्य हेतावसत्त्वात् संयोगादिसम्बन्धेन हेतावव्याप्तिः न त्वसम्भवः यादृशसम्बन्धस्य प्रतियोगित्वं वस्तुमात्र एव तादात्म्य-विषयतादिरूपतादृशसम्बन्धेन हेताविव परं लक्षणसमन्वयो भवति तादृशसम्बन्धेन जगत्सम्बद्धत्वस्य समानाधिकरणधर्म्मावच्छिन्नाभावाप्रसिद्धेरिति तदुपादानम्। ननु वृत्तिमद्वृत्तित्वोपादानेऽपि जगत्संयुक्तत्वत्वाद्यवच्छिन्नाभावस्य जात्यादिरूपवृत्तिमति वर्त्तमानस्य वारणासम्भवाद्वह्निमान् धूमादित्यादावव्याप्तिर्दुर्व्वारैव निर्धूमसंयुक्तत्वाद्यभावस्य निर्धूमवृत्तित्वत्वाव्यापकप्रतियोगिताकतया वृत्तिमन्मात्रस्यैव निर्धूमकालादिवृत्तित्वेन च निर्धूमवृत्तित्वसामान्याभावस्य व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वेन धूमवान् वह्ने-

रित्यादावतिव्याप्तेर्वारणाय हेतुतावच्छेदकसम्बन्धेन साध्याभाव-वद्वृत्तित्वस्यैव निवेशनीयतया (१) यत्र संयोगादिना हेतुत्वं तत्र जगत्संयुक्तत्वत्वाद्यवच्छिन्नाभावस्यापि हेतुतावच्छेदकसम्बन्धावच्छिन्न-साध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकत्वात् वृत्तिमत्पदस्य यथाश्रुतार्थकत्वे कालिकसम्बन्धेन गगनादेरवृत्तित्व-मते तेन सम्बन्धेन यत्र हेतुता तत्रैव परमव्याप्तिवारकता तेन सम्ब-न्धेन जगद्वृत्तित्वाभावस्यावृत्तिमात्रे प्रसिद्धत्वादित्यत आह, 'हेतु-तावच्छेदकसम्बन्धेनेति, 'न क्षतिरिति नाव्याप्तिरित्यर्थः, न तु ना-सम्भवः तादात्म्य-कालिकादिसम्बन्धेन हेतौ लक्षणसमन्वयसम्भ-वात् (२) । ननु नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभाववद्वृत्तित्वा-भावस्य हेतावसत्त्वादव्याप्तिः कूटघटितलक्षण इवात्रापि साध्यताव-च्छेदकसमनियतप्रतियोगिताकाभावनिवेशेऽपि तार्णतार्णदहनो-भयत्वावच्छिन्नाभावमादाय वह्न्यादिसाध्यके गुणादिवृत्तित्ववि-शिष्टसत्ताद्यभावमादाय सत्तादिसाध्यकेऽव्याप्तिर्दुर्वारैव एवम-व्याप्यवृत्तिकपिसंयोगादिसाध्यके हेत्वधिकरणस्यैव जगत एव कपि-संयोगत्वाद्यवच्छिन्नाभाववत्तया तद्वृत्तित्वत्वव्यापकप्रतियोगि-ताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेनाव्याप्ति-विरहेऽपि तादृशकपिसंयोगाभावादिसाध्यक-द्रव्यत्वादिहेतौ कपि-संयोगादिरूपसाध्याभाववद्वृत्तित्वाभावासत्त्वादव्याप्तिरित्यत आह,

---

(१) विवक्षणीयतयेति पा० ।

(२) तादात्म्यादिसम्बन्धेन च हेतौ लक्षणगमनसम्भवेनासम्भवाप्रसक्ते-रिति पा० ।

'साध्याभावस्येति, 'पूर्व्ववदिति मिश्रलक्षणे यथा साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिरभावो निवेश्यते तथात्रापि निवेशनीय इत्यर्थः, तत्तद्वह्निलकथितोभयत्वाद्यवच्छिन्नाभावानां प्रथमविशेषणेन कपिसंयोगादिरूपाभावानाञ्च द्वितीयविशेषणेन व्यावृत्तिः। ननु साध्याभाववद्वृत्तित्वप्रतियोगिताकाभावमात्रनिवेशे प्रकृतहेतुसाधारणस्य व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वविशेषस्य समानाधिकरणधर्म्मावच्छिन्नाभावोऽपि वृत्तिमद्वृत्तिः सम्भवतीति यावत्तादृशाभावान्तर्गततद्वत्त्वस्य हेतावभावादसम्भवः, एवं समानाधिकरणधर्म्मावच्छिन्नाभाववद्वृत्तित्वस्य प्रकृतहेतुवृत्तितावच्छेदकीभूतकिञ्चिद्धर्म्मावच्छिन्नस्याभावोऽपि यावत्तादृशाभावान्तर्गत इति तद्वत्त्वविरहादपि व्यतिरेकिसाध्यक-हेतूनामव्यभिचारित्वानुपपत्तिः तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितुमशक्यः केवलान्वयिनि साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्य तादृशगुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वमते प्रसिद्धावपि तस्यातथात्वमते व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य स्वघटककेवलवृत्तित्वत्वसमनियततया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेर्दुर्व्वारत्वात्, तत्तदभाववद्वृत्तित्वत्वघटकधर्म्मावच्छिन्नाभावनिवेशे च वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावव्यक्तेस्तत्तदभावत्वावच्छिन्नाभावस्यापि तादृशतया तस्य च धूमादावसत्त्वादव्याप्तिः साध्याभाववद्वृत्तित्ववृत्तितादृशधर्म्मावच्छिन्नाभावनिवेशनेऽपि घटवृत्तित्वत्वाद्यवच्छिन्नसाध्यके-

तादात्म्येन घटत्वव्यापकादिहेतौ तादृशसाध्याभाववद्घटादिवृत्तित्वनिष्ठतादृशसाध्याभाववत्त्वरूपतथाविधधर्मावच्छिन्नाभावस्य (१) घटादिमात्रवृत्तेर्हेतौ (२) असत्त्वादव्याप्तिर्दुर्व्वारैव (३)। साध्याभावादिव्यावृत्तघटकतानिवेशने च प्रयासगौरवमिति तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावं विवक्षति, 'तद्वदिति, 'स्वं' प्रतियोगिता, अत्र साध्याभावस्य साध्याभावत्वेन सामान्यतो निवेशे व्यभिचारिणि निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्साध्याधिकरणवृत्तित्वसाधारणसाध्याभाववद्वृत्तित्वत्वाव्यापकत्वेन तादृशाभावस्य लक्षणाघटकतया वृत्तित्वसामान्याभावस्य तथाविधप्रतियोगिताकस्य च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तितया अतिव्याप्तिरिति तत्तद्व्यक्तित्वेनाभावस्य व्याप्यतावच्छेदककोटिनिवेशलाभाय 'तत्तदिति। यद्यपि यत्किञ्चित्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकवृत्तिमद्वृत्तियावदभाववत्त्वं व्यभिचारिसाधारणं, यावन्तः साध्याभावाः प्रत्येकं तत्तदधिकरणवृत्तित्वत्वसमनियतैकप्रतियोगितायाश्च नानाविपक्षकसाध्यकेऽप्रसिद्धिस्तत्तद्विपक्षावृत्तित्वावच्छिन्नाभाववत्तत्तद्विपक्षवृत्तित्वत्व--

(१) तत्तदभाववद्वृत्तित्वत्वघटकधर्म्मेत्यर्थः।

(२) घटातिरिक्ते तादृशसाध्याभावावच्छिन्नघटभेदादेः सत्त्वादितिभावः।

(३) अत्र 'द्रव्यसमवेतं गुणत्वादित्यादौ द्रव्यसमवेतत्वाभाववत्समवेतत्वघटकीभूतेन द्रव्यसमवेतत्वाभाववत्समवेतत्ववृत्तिना द्रव्यसमवेतत्वाभावेनावच्छिन्नप्रतियोगिताकाभावस्य द्रव्ये प्रसिद्धस्य हेतावसत्त्वादव्याप्तिर्दुर्व्वारैवेत्यधिकः पाठः कस्मिंश्चिदादर्शपुस्तके वर्त्तते।

'साध्याभावश्चेति, 'पूर्व्ववदिति मिश्रलक्षणे यथा साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिरभावो निवेश्यते तथात्रापि निवेशनीय इत्यर्थः, तत्तद्वह्नित्वकथितोभयत्वाद्यवच्छिन्नाभावानां प्रथमविशेषणेन कपिसंयोगादिरूपाभावानाञ्च द्वितीयविशेषणेन व्यावृत्तिः। ननु साध्याभाववद्वृत्तित्वप्रतियोगिताकाभावमात्रनिवेशे प्रकृतहेतुसाधारणस्य व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वविशेषस्य समानाधिकरणधर्म्मावच्छिन्नाभावोऽपि वृत्तिमद्वृत्तिः सम्भवतीति यावत्तादृशाभावान्तर्गततद्वत्त्वस्य हेतावभावादसम्भवः, एवं समानाधिकरणधर्म्मावच्छिन्नाभाववद्वृत्तित्वस्य प्रकृतहेतुवृत्तितावच्छेदकीभूतकिञ्चिद्धर्म्मावच्छिन्नस्याभावोऽपि यावत्तादृशाभावान्तर्गत इति तद्वत्त्वविरहादपि व्यतिरेकिसाध्यक–हेतूनामव्यभिचारित्वानुपपत्तिः तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितुमशक्यः केवलान्वयिनि साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्य तादृशगुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वमते प्रसिद्धावपि तस्यातथात्वमते व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य स्वघटककेवलवृत्तित्वत्वसमनियततया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नप्रतियोगिताकाभावाप्रसिद्धेर्दुर्व्वारत्वात्, तत्तदभाववद्वृत्तित्वत्वघटकधर्म्मावच्छिन्नाभावनिवेशे च वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावव्यक्तेस्तत्तदभावत्वावच्छिन्नाभावस्यापि तादृशतया तस्य च धूमादावसत्त्वादव्याप्तिः साध्याभाववद्वृत्तित्ववृत्तितादृशधर्म्मावच्छिन्नाभावनिवेशनेऽपि घटवृत्तित्वत्वाद्यवच्छिन्नसाध्यके-

तादात्म्येन घटत्वव्यापकादिहेतौ तादृशसाध्याभाववद्घटादिवृत्तित्वनिष्ठतादृशसाध्याभाववत्त्वरूपतथाविधधर्म्मावच्छिन्नाभावस्य (१) घटादिमात्रवृत्तेर्हेतौ (२) असत्त्वादव्याप्तिर्दुर्व्वारैव (३)। साध्याभावादिव्यावृत्तघटकतानिवेशने च प्रयासगौरवमिति तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावं विवक्षति, 'तद्वदिति, 'स्वं' प्रतियोगिता, अत्र साध्याभावस्य साध्याभावत्वेन सामान्यतो निवेशे व्यभिचारिणि निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगितायाः व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववत्साध्याधिकरणवृत्तित्वसाधारणसाध्याभाववद्वृत्तित्वत्वाव्यापकत्वेन तादृशाभावस्य लक्षणाघटकतया वृत्तित्वसामान्याभावस्य तथाविधप्रतियोगिताकस्य च व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तितया अतिव्याप्तिरिति तत्तद्व्यक्तित्वेनाभावस्य व्याप्यतावच्छेदककोटिनिवेशलाभाय 'तत्तदिति। यद्यपि यत्किञ्चित्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकवृत्तिमद्वृत्तियावदभाववत्त्वं व्यभिचारिसाधारणं, यावन्तः साध्याभावाः प्रत्येकं तत्तदधिकरणवृत्तित्वत्वसमनियतैकप्रतियोगितायाश्च नानाविपक्षकसाध्यकेऽप्रसिद्धिस्तत्तद्विपक्षावृत्तित्वावच्छिन्नाभाववत्तत्तद्विपक्षवृत्तित्वत्व--

---

(१) तत्तदभाववद्वृत्तित्वत्वघटकधर्म्मेत्यर्थः।

(२) घटातिरिक्ते तादृशसाध्याभावावच्छिन्नघटभेदादेः सत्त्वादितिभावः।

(३) अत्र 'द्रव्यसमवेतं गुणत्वादित्यादौ द्रव्यसमवेतत्वाभाववत्समवेतत्वघटकीभूतेन द्रव्यसमवेतत्वाभाववत्समवेतत्ववृत्तिना द्रव्यसमवेतत्वाभावेनावच्छिन्नप्रतियोगिताकाभावस्य द्रव्ये प्रसिद्धस्य हेतावसत्त्वादव्याप्तिर्दुर्व्वारैवेत्यधिकः पाठः कस्मिंश्चिदादर्शपुस्तके वर्त्तते।

व्याप्यप्रतियोगित्वाप्रसिद्धेः, तथापि यावतामभावानां प्रत्येकाधिकरणवृत्तित्वत्वसमनैयत्यस्य प्रत्येकप्रतियोगितान्वयेन एतदभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताको यो योऽभावस्तदभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकस्य यो योऽभावस्तद्वत्त्वमित्येवं रीत्या निवेशान्नानुपपत्तिः। एतल्लक्षणे साध्याभावसमुदायो न समुदायत्वेन प्रविष्टः अपि तु प्रातिस्विकरूपेणेति कूटघटितात् विशेषः। अथात्र स्वपदं न तत्तदभावीयप्रतियोगितात्वरूपेण प्रतियोगितापरं साध्याभाववद्वृत्तित्वातिरिक्तेऽपि तत्तदभावीयप्रतियोगित्वान्तरसत्त्वादिति(१) तत्तत्प्रतियोगिताव्यक्तिपरं तद्वाच्यं, तथाच यत्किञ्चित्प्रतियोगितानिरूपकाशेषाभावस्यातिव्यापकतया (२) यावत्यस्ताहशप्रतियोगिताः (३) प्रत्येकं तन्निरूपकाभाववत्त्वं निवेशनीयं, तथाच समानाधिकरणधर्म्मावच्छिन्नजगद्वृत्तित्वसामान्याभावप्रतियोगितानिरूपकवृत्तिमद्वृत्त्यभावाप्रसिद्ध्या अव्याप्तिरिति वृत्तिमद्वृत्त्यभावीयत्वेन यावत्प्रतियोगिता निवेशनीया तथाच तन्निरूपकाभावे वृत्तिमद्वृत्तित्वनिवेशनं व्यर्थं यावत्त्वविशेषणमपि तथेति चेन्नोपादीयन्त एव तत्र तत्तद्विशेषणं, वृत्तिमद्वृत्त्यभावीययावत्प्रतियोगिताविशेष्यीभूताभावे वृत्तिमद्वृत्तित्व-यावत्त्वाभिधानात्। अत्र च गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वे स्वव्यापकतत्तदभाववद्वृत्तित्वत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्याव्यावर्त्तकव्याप-

---

(१) किञ्चिद्विशिष्टस्याभावादिनिष्ठप्रतियोगित्वान्तरसत्त्वादित्यर्थः।

(२) अतिव्याप्तिवारकतया।

(३) साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिता इत्यर्थः।

कतान्तघटितत्वेनाभावप्रतियोगितानवच्छेदकतया तदवच्छिन्ना-न्योन्याभावरूपव्यापकत्वपुरस्कारेण न प्रतियोगितानिवेशः सम्भवतीति तादृशावच्छेदकभेदकूटात्मकव्यापकत्वपुरस्कारेणैव तन्निवेशः। न च स्वव्यापकतत्तदभाववद्वृत्तित्वत्वकत्व-तत्तदभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वावच्छिन्नैकभेदोभयरूपेण प्रतियोगितानिवेशसम्भवादवच्छेदकभेदकूटनिवेशनमफलमिति वाच्यम्। घटभेदादिसाध्यकस्थले तदभावव्यक्तित्वेन घटत्वादिघटितस्य तदभाववद्वृत्तित्वत्ववन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्य स्वरूपतो घटत्वादिघटितं घटवृत्तित्वत्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वमपेक्ष्य गुरुशरीरतया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नैकभेदनिवेशासम्भवात्। अत्र कल्पे व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकस्य पर्व्वतवृत्तित्व-पर्व्वतान्यवृत्तित्वोभयत्वाद्यवच्छिन्नाभावस्य पर्व्वताद्यवृत्तिवृत्तिमद्वृत्तेर्धूमादावभावादेकमात्रवृत्तिहेतावपि तादृशप्रतियोगिताकस्य एतत्क्षणावच्छिन्नवृत्तित्वैतदन्यक्षणावच्छिन्नवृत्तित्वोभयत्वावच्छिन्नाभावस्य एतत्क्षणावच्छिन्नावृत्तौ वृत्तिमति वर्त्तमानस्याभावादसम्भवः तादृशाभावव्यावर्त्तनाय व्यासज्यवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकत्वनिवेशे च गौरवं पर्व्वतवृत्तित्वत्वादिना जगद्वृत्तित्वसामान्याभावस्य व्यावृत्त्यसम्भवश्चेत्यतः कल्पान्तरमनुसरति, 'तत्तत्साध्याभावेति, अतिरिक्तान्तानिवेशे व्यधिकरणधर्म्मावच्छिन्नाभावमात्रस्य संग्रहाद्व्यभिचारिमात्रेऽतिव्याप्तिरिति तन्निवेशनम्। यद्यपि यथाश्रुते-

नानेन महानसवृत्तित्वत्वादिना व्यधिकरणधर्म्मावच्छिन्नाभाव-वद्वृत्तित्वाभाववारणं न सम्भवति महानसादिनिरूपितत्व-विशिष्टवृत्तित्वत्वस्य साध्याभाववन्निरूपितत्वविशिष्टवृत्तित्वत्वरूप-साध्याभाववद्वृत्तित्वत्वान्यत्वविरहात्, तथापि साध्याभाववद्वृत्ति-त्वत्वानिरूपितसमानाधिकरणधर्म्मनिरूपितावच्छेद्यत्वशून्यत्वस्यान-वच्छिन्नात्वेन विवक्षणान्न दोषः महानसवृत्तित्वत्वादिनिरूपिताव-च्छेद्यत्वस्य साध्याभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानिरूपितत्वात्। न चैवमपि साध्याभाववन्महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारण-मशक्यं तादृशनिरूपितावच्छेदयतायां तद्घटकसाध्याभाववद्वृत्ति-त्वत्वनिरूपितत्वस्याधिकन्त्वित्यादिन्यायेनाव्याहतत्वादिति वाच्यम्। गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकतया महानसादिवृत्तित्व-त्वसमनियतोपदर्शितगुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वात्। अथ गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वे साध्याभावप-दस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नभाव-परतया धूमवान् वह्नेरित्यादावतिव्याप्तिः धूमत्वाद्यवच्छिन्न-व्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वत्वस्य स्वसमनियत-धूमत्वाद्यवच्छिन्नाभाववद्वृत्त्वत्वापेक्षया गुरुत्वेनाभावप्रतियोगिता-वच्छेदकत्वविरहेण तदवच्छिन्नाभावाप्रसिद्धेः धूमत्वाद्यवच्छिन्ना-भाववद्वृत्तित्वत्वाद्यवच्छिन्नप्रतियोगिताया धूमत्वाद्यवच्छिन्नव्याप-कतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्न-तया तन्निरूपकाभावस्य निरुक्ताभावविशेषणानाक्रान्तत्वेन व्यधि-करणधर्म्मावच्छिन्नप्रतियोगिताकस्य साध्याभाववद्वृत्तित्वाभावस्यैव

लक्षणघटकत्वात्। यदि च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्य तेन रूपेण न निवेशः अपि तु तत्तदभावत्वेनैव एतदेव सूचयितुं तत्तत्पदमुपात्तम् एवञ्च तत्तद्व्यक्तित्वेन धूमाद्यभावघटिततत्तदभाववद्वृत्तित्वत्वावच्छिन्नाभावस्य लक्षणघटकतया न धूमादिसाध्यकेऽतिव्याप्तिरित्युच्यते तथापि एतद्व्यक्तिभिन्नं घटभिन्नं वा प्रमेयत्वादित्यादावतिव्याप्तिस्तत्तद्व्यक्तित्वरूपेण घटभेदाभावघटिततद्व्यक्तिमद्वृत्तित्वत्वापेक्षया लघोस्तत्समनियतस्य किञ्चिद्विशेषणानवच्छिन्नघटत्वघटितस्य घटवृत्तित्वत्वस्यैवाभावप्रतियोगितावच्छेदकतया तद्व्यक्तिमद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः घटवृत्तित्वत्वावच्छिन्नप्रतियोगितायाश्च साध्याभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्नतया तन्निरूपकाभावस्य लक्षणघटकत्वासम्भवाद्व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावस्यैव तथात्वात्। यदि चाभावधर्मौ विशेषणविधया न निवेश्यते अपि तु अभावप्रभृतिरेव, अभावे तु साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमुपलक्षणविधया निवेश्यते एतल्लाभायैव तत्तत्पदोपादानमपि न तु तत्तद्व्यक्तित्वेनाभावविशेषलाभार्थं, उपलक्षणीभूतप्रतियोगिताविशेषेणैवाभावान्तरव्यावृत्तिसम्भवे तत्तद्व्यक्तित्वस्योपलक्षणविधया निवेशे प्रयोजनविरहात्, एवञ्च घटवृत्तित्वत्वावच्छिन्नाभावोऽप्युक्तस्थले लक्षणघटकः घटभेदाभावस्य घटत्वस्य तत्प्रतियोगितावच्छेदकघटकत्वात्प्रतियोगिताविशेषोपलक्षिताभाववद्वृत्तित्वत्वपर्य्याप्तनिरूपकताकान्यत्वपर्य्यन्तानिवेशात्

धूमादिसाध्यकस्थले निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावस्य प्रतियोगितावच्छेदकशरीरे अभावविशेषणस्याधिकस्य निवेशनेऽपि न क्षतिः। न चाभावप्रतियोगिकोटौ उपलक्षणतया भानस्यानुभवविरुद्धत्वात् विशिष्टनिरूपितत्वाभावरूपस्य निरूपितत्वसम्बन्धावच्छिन्नविशिष्टाभावरूपस्य वा विशिष्टानिरूपितत्वस्य प्रतियोगिकोटौ प्रतियोगिताविशेषस्य कथमुपलक्षणविधया निवेश इति वाच्यम्। अभावप्रतियोगिप्रकारशरीरे प्रतियोगितावच्छेदककोट्यप्रविष्टस्य न भानमित्येव हि अभावप्रतियोगिनि तदवच्छेदके वा उपलक्षणविधया न भानमित्यस्यार्थः, प्रकृते निरुक्तप्रतियोगिताकत्वस्य निरूप्यत्वप्रतियोगिविशिष्टाघटकत्वादेव निरूप्यत्वप्रतियोगिन्युपलक्षणत्वं (१) न तु निरूप्यत्वाभावप्रतियोगितावच्छेदकघटकतया अप्रवेशात् तदभावप्रतियोगितावच्छेदकप्रविष्टाभावस्याभावान्तरव्यावृत्तये तादृशप्रतियोगिताकत्वस्य प्रतियोगितावच्छेदकघटकतयैव निवेशात् यथा द्रव्यत्वस्य द्रव्यत्वोपलक्षितनिरूपितविषयित्वाभावप्रतियोगिनि नोपलक्षणत्वं किन्तु विषयितानिरूपकांश एवेति (२) निर्धूमवृत्तित्वत्वस्य धूमव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तितात्वसमनियतत्वेऽपि व्यापकतावच्छेदकधर्म्मान्तरावच्छिन्नाभावघटितविशिष्टनिरूप्यत्वे धूम-

---

(१) प्रकृते निरुक्तप्रतियोगिताकत्वस्यावच्छेद्यत्वनिरूपकतावच्छेदकतया अप्रवेशादेव उपलक्षणत्वमिति पा०।

(२) तादृशप्रतियोगिताकत्वस्य उपलक्षणतयैव प्रतियोगितावच्छेदकघटकतया निवेशादिति पा०।

त्वावच्छिन्नधूमाभावघटितविशिष्टनिरूपितत्वरूपताविरहात् तत्त-
द्विशिष्टनिरूपितत्वयोर्न समनैयत्यम् इति न व्यापकतावच्छेद-
करूपावच्छिन्नप्रतियोगिताकत्वघटितधर्म्मावच्छिन्नप्रतियोगिताक-
निरूप्यत्वाभावाप्रसिद्धिः प्रतियोगितासंसर्गकज्ञान एव तादृश-
भानस्य तथात्वात् जात्यवच्छिन्नप्रतियोगिताकोऽभाव इत्या-
कारस्य स्वरूपतो घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावभानस्य
सर्व्वसम्मतत्वात् प्रकृते च साध्यतावच्छेदकावच्छिन्नव्यापकताव-
च्छेदकरूपावच्छिन्नप्रतियोगिताको योऽभावस्तद्वद्वृत्तित्वत्वनिरू-
पितत्वप्रतियोगिताकाभाववतः समानाधिकरणधर्म्मावच्छेद्यत्वस्य
योऽभावस्तद्वत्प्रतियोगिताका यावन्तोऽभावास्तद्वान् हेतुरित्या-
कारकव्याप्तिग्रहे प्रतियोगितायाः विशेषणत्वेनानुपपत्त्यभावात्
अतएव च व्यापकतावच्छेदकादेरुपलक्षणविधया भानोपपत्तिः ।
न च तादृशनिरूपितत्वप्रतियोगिकस्य तत्त्वावच्छिन्नप्रतियोगिता-
काभावस्य वा अभावस्य निवेशे निर्धूमवृत्तित्वत्वावच्छिन्नाभावे
प्रतियोगितानिष्ठावच्छेद्यतायामपि किञ्चिद्विशिष्टतादृशनिरू-
पितत्वत्वावच्छिन्नाभावसत्त्वात्तादृशाभावासंग्रह इति वाच्यम् ।
तत्तदभाववद्वृत्तित्वत्वनिरूपितत्वत्वपर्य्याप्तप्रतियोगितावच्छेदकता-
काभावस्यैव निवेशनीयत्वात् एवञ्च तत्तद्व्यक्तित्वेनाभावनिवेश-
ध्रौव्येन तत्तत्पदोपादानमपि साधु सङ्गच्छते इत्युच्यते (१) तदापि
घटत्व-भेदादिसाध्यके व्यभिचारिण्यतिव्याप्तिवारणमशक्यं निर्विशे-

(१) प्रतियोगितावच्छेदकघटकतयैव निवेशादित्यनन्तरं निर्धूमवृत्तित्वत्वस्ये-
त्यादिः साधु सङ्गच्छते इत्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति ।

षणकघटत्वादिवृत्तित्वस्यैव तत्र घटत्वादिवृत्तित्वाभावप्रतियोगितावच्छेदकतया घटत्वत्वादिरूपसाध्याभावस्य प्रतियोगितावच्छेदकशरीरे अनिवेशेन व्यधिकरणधर्म्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात्। न च जातिः समवायेन स्वरूपतोऽवच्छेदकत्वं न तु सम्बन्धान्तरेण अतएव गोत्वादिजातिनिष्ठव्याप्तौ पदविशेषप्रवृत्तिनिमित्तगवेतरासमवेतत्वादेरवच्छेदकत्वं स्वीकुर्व्वन्ति न तु तादात्म्यसम्बन्धेन लघोरपि गोत्वादिजातेरिति निर्विशेषणकघटत्वादिघटितस्याभावप्रतियोगितावच्छेदकत्वं न सम्भवतीति वाच्यम्। तादृशनियमे मानाभावात्। यदि चाभावांशस्याप्युपलक्षणत्वं स्वीक्रियते तदा महानसवृत्तित्वत्वावच्छिन्नाभाववारणमशक्यमेव। यदि च साध्याभावातिरिक्तविशेषणाविशेषिताधिकरणवृत्तित्वत्वाद्यवच्छेद्यताभिन्नसमानाधिकरणधर्म्मावच्छेद्यत्वाभावं निवेश्याविशेषितघटत्वादिवृत्तित्वाभावः संगृह्यते तदा तादृशाभावमादाय जातिसाधारणसद्धेतावव्याप्तिर्व्वज्रलेपायते। एवं साध्याभाववद्वृत्तित्वत्वशरीरेऽभावादेर्विशेषणविधया प्रवेशे वृत्तिमद्वृत्तिपदमनर्थकम् आपद्येत, व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य यः समानाधिकरणधर्म्मावच्छिन्नाभावस्तत्प्रतियोगिताया लाघवेन वृत्तित्वत्वेनैवावच्छिन्नतया तन्निष्ठावच्छेद्यताया अभावघटितविशिष्टपदार्थानिरूपितत्वात्। अत्र वदन्ति, गुरुधर्म्मस्याभावप्रतियोगितावच्छेदकत्वमतेनेदमभिहितं, व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववन्महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणाय च साध्याभाववद्वृत्तित्वत्वपर्य्याप्तावच्छेदकताभिन्नसमानाधिकरणधर्म्मनिष्ठावच्छेदकत्वानिरूपकत्वमेव प्रतियोगि-

त्तायां विशेषणं देयम् । न चैवं घटत्वादिना साध्याभाववद्वृत्तित्वाभावसंग्रहफलकं समानाधिकरणपदोपादानं निषेधद्वयनिवेशनञ्च विफलं तादृशाभावस्यासंग्रहेऽपि केवलान्वयिसाध्यके साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावमादाय लक्षणसमन्वयसम्भवादिति वाच्यम् । विषयतादिसम्बन्धेन यत्र हेतुता तत्र हेतुतावच्छेदकसम्बन्धेन साध्याभाववति वृत्तेः साध्याभाववद्विषयतादिरूपायाः विषयादिस्वरूपत्वेन साध्याभाववद्विषयतात्वादिरूपसाध्याभाववद्वृत्तित्वत्वस्य केवलान्वयितया तदवच्छिन्नाभावाप्रसिद्धेस्तादृशाभावघटितलक्षणानुपपत्तेः । न च साध्याभाववद्विषयतात्वादिकं येन सम्बन्धेनावृत्ति तेन सम्बन्धेन तदवच्छिन्नाभावमादाय लक्षणसमन्वयः सम्भवतीति वाच्यम् । कालिकसम्बन्धेन साध्याभाववद्वृत्तित्वत्वावच्छिन्नस्य योऽभावस्तस्य ध्वंसाद्यधिकरणहेत्वव्यापकतया स्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्यावश्यनिवेशनीयतया व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगितावच्छेदताकाभावस्य लक्षणघटकत्वासम्भवात् विषयताया जात्यादिरूपत्वेऽपि विषयतात्वविशिष्टस्य न समवायादिना वृत्तिः तादृशस्य स्वस्मिन्नेव वृत्तेर्जात्यादौ च समवायाभावात् किन्तु स्वरूपसम्बन्धेनैव एवञ्च समवायादिसम्बन्धावच्छिन्नप्रतियोगिताक एव विषयतात्वाद्यवच्छिन्नाभावो लक्षणघटको भविष्यतीत्यपि न, काल-ज्ञानादिरूपहेतौ कालिक-विषयितादिसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावस्यासत्त्वेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव निवेशनीयत्वात् । न चैवं साध्याभाव-

वृत्तित्वत्वातिरिक्तसमानाधिकरणधर्म्मानवच्छिन्नाभावस्यापि तत्रा-प्रसिद्धिर्घटत्वादेः साध्याभाववद्विषयतादिनिष्ठप्रतियोगितावैय-धिकरण्यासम्भवादिति वाच्यम्। घटत्वादिना पटाद्यभावस्यैव तथात्वात्। अथैवमपि सामानाधिकरण्यमुपेत्य साध्याभाव-वद्वृत्तित्वनिष्ठत्वेन धर्म्मविशेषणकल्पे घटत्वादेर्घटादिस्वरूपसाध्या-भाववद्विषयतानिष्ठत्वेन गगनादेरपि स्वनिष्ठविषयतात्मकत्वेन साध्याभाववद्विषयतानिष्ठतया साध्याभाववद्वृत्तित्वत्वातिरिक्तताहृ-शधर्म्मानवच्छिन्नाभावाप्रसिद्ध्या उक्तस्थलेऽव्याप्तिर्दुर्व्वारैव येन रूपेण यत् साध्याभाववद्वृत्तित्ववृत्ति तद्रूपविशिष्टतदनवच्छिन्नप्रति-योगिताकाभावविवक्षणेन गगनत्वविशिष्टगगनाद्यवच्छिन्नाभावस्य लक्षणघटकतानिर्व्वाहेऽपि हेतुनिष्ठव्यधिकरणधर्म्मावच्छिन्नसाध्या-भाववद्वृत्तित्वव्यक्तेः किञ्चिद्विशेषिततत्तद्व्यक्तित्वावच्छिन्नप्रति-योगिताकाभावस्य तथाविधस्य हेतावसत्त्वादसम्भवप्रसङ्ग इति चेन्न, येन सम्बन्धेन यद् वर्त्तते तेन सम्बन्धेन तदनवच्छिन्नत्वस्य विवक्षणीयतया संयोगादिसम्बन्धेन घटत्वाद्यवच्छेदकताकाभाव-मादाय उक्तस्थले लक्षणसमन्वयसम्भवात्, उक्तार्थलाभायैव च साध्याभाववद्वृत्तित्ववृत्तित्वोपादानं न तु तदपि लक्षणघटकं प्रयोजनाभावात्सर्व्वत्र दर्शिताभावमादायैव लक्षणसमन्वयसम्भवेन समवायादिसम्बन्धेन घटत्वाद्यवच्छिन्नसाध्याभाववत्संयुक्तत्वाद्य-भावस्य लक्षणाघटकत्वेऽपि क्षतिविरहात्। एतेन धूमत्वत्वाद्यव-च्छिन्नधूमत्वाद्यभावस्य धूमत्वप्रकारकप्रमाविषयत्वाद्यभावस्य च साध्याभाववद्वृत्तित्ववृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकस्य वारणाय

साध्याभाववद्वृत्तित्वनिष्ठप्रतियोगिताकत्वविशेषणमप्यनादेयम्। अतएव च स्वसमानाधिकरणत्वस्य प्रतियोगितावच्छेदकविशेषणत्वकल्पापेक्षया लाघवमेवैतत्कल्पानुसरणबीजभूतं निष्कृत्युक्तमिति। यदि च गुरुधर्म्मोनाभावप्रतियोगितावच्छेदकस्तदा महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणाय साध्याभाववद्वृत्तित्वत्वातिरिक्तेत्यनेन साध्याभाववद्वृत्तित्वत्वाघटकत्वमेव विवक्षणीयं तदर्थश्च स्वाविषयकप्रतीतिवृत्तिसाध्याभाववद्वृत्तितात्वरूपविशिष्टनिरूपितविषयिताकत्वम्, एवञ्च शुद्धवृत्तित्वत्वावच्छिन्नवृत्तेरभावोऽपि लक्षणघटक इति वृत्तिमद्वृत्तिपदसार्थक्यम्। स्वाविषयकत्वञ्च इतरविशेषणतानापन्नविषयिताशून्यत्वं, अतो विशेषणविधया साध्याभाववद्वृत्तित्वत्वघटकसाध्याभावत्वादेरपि तदघटकत्वनिर्व्वाहइति पूर्व्वोक्तदोषानवकाशः। चरमापि विषयिता इतरविशेषणतानापन्ननिरूपितैव ग्राह्या, तेन वृत्तित्वादिविशेषणकज्ञाने साध्याभाववद्वृत्तित्वत्वादेर्विशेषणतया विषयत्वेऽपि वृत्तित्वादेर्न साध्याभाववद्वृत्तित्वत्वाघटकत्वम्। न च साध्याभाववद्वृत्तित्वत्वघटकधर्म्मपर्य्याप्तप्रतियोगितावच्छेदकताकोऽभावो निवेश्यतां, घटकान्तार्थश्च स्वाविषयकप्रतीत्यवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयिताकत्वं, न तु स्वाविषयकप्रतीत्यविषयताहशविशिष्टकत्वं, तत्तदभाववद्वृत्तितात्वविषयकप्रतीतौ केवलाधेयत्वतात्वस्य विषयतया तदभाववन्निरूपितत्वविशिष्टाधेयतात्वे तदविषयकप्रतीत्यविषयत्वस्य दुर्घटतया तदभाववद्वृत्तित्वत्वादेस्तदघटकत्वानिर्व्वाहात् केवलाधेयतात्वस्यैव तद्घटकतया वृत्तिमद्वृत्तिं तेन रूपेण

घटाद्यभावमादायातिव्याप्त्यापत्तेरिति वाच्यम्। तथासत्युक्तरीत्या विषयतासम्बन्धेन यत्र हेतुता तत्र तादृशाभावाप्रसिद्ध्या घट-भिन्नं मेयत्वादित्यादौ निर्विशेषणकघटत्वादिवृत्तितात्वस्य यथा समानाधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तितात्वघटकत्वं तथा वाच्यम् ज्ञेयत्वादित्यादावपि तादृशस्य स्वाविषयकप्रतीत्यविषय-व्यधिकरणधर्म्मावच्छिन्नसाध्याभावविशेषितघटत्वादिघटिततदभाव-वद्वृत्तित्वत्वरूपविशिष्टनिरूपितविषयताकतया तदभाववद्वृत्तित्व-त्वघटकतया वृत्तिमद्वृत्तितदवच्छिन्नाभावस्य हेतावसत्त्वेनाव्या-प्त्यापत्तेः तत्तदभाववद्वृत्तित्वत्वाघटकधर्म्मावच्छिन्नाभावनिवेशेनैव वारणसम्भवात्। तादृशधर्म्मे निरुक्तसाध्याभाववद्वृत्तित्वत्वघट-कत्वसत्त्वेऽपि स्वाविषयकप्रतीतिवृत्तिसाध्याभाववद्धर्म्मान्तरवृत्ति-त्वविषयिताकत्वेन साध्याभाववद्वृत्तित्वाघटकत्वस्यापि सत्त्वेन तदवच्छिन्नाभावस्य यथानिरुक्ताभावानात्मकत्वात्। न च स्वावि-षयकप्रतीत्यवृत्तितदभाववद्वृत्तित्वत्वनिरूपितविषयितासामान्यक-स्वरूपतत्तदभाववद्वृत्तित्वत्वघटकतया निवेशे निर्विशेषणक-घटत्वादिवृत्तित्वत्वस्य साध्याभाववद्वृत्तित्वत्वघटकत्वाप्रसक्त्या तदघटकधर्म्मावच्छिन्नाभावनिवेशोऽपि सम्भवतीति वाच्यम्। तथा सति व्यापकताघटितसामान्यपदार्थनिवेशेन तदघटकधर्म्मानव-च्छिन्नाभावनिवेशापेक्षया अतिगौरवात्। समानाधिकरणपद-सार्थक्यन्तु उक्तरीत्यैवेति ध्येयम् (१)।

केचित्तु व्यधिकरणधर्म्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन पर्व्वत-

(१) यदि चेत्यादिः ध्येयमित्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति।

वृत्तित्व-घटान्यतराद्यभाववारणाय एतन्मतेऽपि स्वव्यापकतत्त्वा-ध्याभाववद्वृत्तित्वत्वकत्वं प्रतियोगिताविशेषणमावश्यकम् । तथाच साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्य लक्षणघटकता न सम्भवतीति(१) निषेधद्वयनिवेशन-समानाधिकरणपदोपादानयोः सार्थकतेत्याहुः ।

वस्तुतस्तु साध्याभाववद्वृत्तित्वातिरिक्तत्वं साध्याभाववद्वृत्तित्वत्वा-घटकत्वत्वं तच्च स्वं यादृशविशिष्टं तादृशविशिष्टाविषयकप्रतीति-विषयसाध्याभाववद्वृत्तित्वत्वकत्वम् एवञ्च महानसवृत्तित्वस्य महा-नसत्वविशेषितमहानसवृत्तित्वत्वाविषयकप्रतीतिविषयसाध्याभाव-वद्वृत्तित्वत्वकत्वात् साध्याभाववद्वृत्तित्वत्वाघटकत्वेन न तद्धर्मा-वच्छिन्नाभावमादाय दोषप्रसक्तिः, एवञ्च गुरुधर्मस्याभावप्रति-योगितानवच्छेदकत्वेऽपि घटभिन्नं मेयत्वादित्यादौ घटत्वविशेषि-तघटवृत्तित्वत्वस्य न स्वाविषयकप्रतीतिविषयसाध्याभाववद्वृत्ति-त्वत्वकत्वं साध्याभावत्वेन घटत्वविषयकसाध्याभाववद्वृत्तित्वप्रतीतौ घटत्वविशेषितघटवृत्तित्वत्वाविषयकत्वासम्भवात् । एवं घटत्वभिन्नं प्रमेयत्वादित्यादौ घटत्वत्वविशेषितघटत्ववृत्तित्वत्वस्य न स्वाविष-यकप्रतीतिविषयसाध्याभाववद्वृत्तित्वत्वकत्वं साध्याभावत्वेन घटत्व-त्वविषयकसाध्याभाववद्वृत्तित्वत्वविषयकप्रतीतौ घटत्वत्वविशेषित-घटत्ववृत्तित्वत्वविषयकत्वासम्भवादिति न तदुभयत्रातिव्याप्तिः । न वा वृत्तिमद्वृत्तिपदवैयर्थ्यं वृत्तित्वत्वस्य व्यधिकरणधर्मावच्छिन्न-साध्याभाववद्वृत्तित्वत्वाघटकत्वविरहेण तद्धर्मावच्छिन्नाभाववार-

(१) साध्याभाववद्वृत्तित्वत्वस्य घटनिष्ठप्रतियोगिताव्यापकत्वविरहादिति शेषः ।

णार्थं तदुपादानात् साध्याभाववद्वृत्तित्वत्वावच्छेदेन च स्वाविषयक-प्रतीतिविषयत्वं विवक्षणीयम्। तथाच स्वाविषयकप्रतीतिनिरू-पितसाध्याभाववद्वृत्तित्वत्वावच्छिन्नविषयताकत्वं पर्य्यवसितम्। अन्यथा साध्याभाववद्विशेषितवृत्तित्वत्वस्य विशेष्यीभूतकेवलवृत्ति-त्वत्वानतिरेकितया विशेष्यीभूतवृत्तित्वत्वस्य साध्याभाववद्वृत्ति-त्वत्वाविषयककेवलाधेयतात्वविषयकप्रतीतिविषयत्वे साध्याभाववद्-वृत्तित्वस्य तथात्वावश्यकतया तदघटकत्वप्रसङ्गेन केवलवृत्ति-त्वत्वावच्छिन्नाभावमादाय व्यभिचारिण्यतिप्रसङ्गापातात्। न च महानसवृत्तित्वत्वावच्छिन्नाभाववारणार्थं साध्याभाववद्वृत्तित्वत्व-घटकधर्म्मावच्छिन्नाभाव एव निवेश्यतां तद्घटकत्वञ्च स्वाविषय-कप्रतीत्यविषयसाध्याभाववद्वृत्तित्वत्वकत्वं किं निषेधद्वय-समाना-धिकरणपदयोरुपादानेनेति वाच्यम्। एवं सति विशिष्टानुयोगि-काभावानभ्युपगमे साध्याभाववद्वृत्तित्वत्वेऽपि साध्याभाववद्-वृत्तित्वत्वरूपविशिष्टाविषयककेवलाधेयतात्वविषयकप्रतीतिविषय-त्वाभावासत्त्वेन तस्य घटकत्वानिर्व्वाहेण केवलवृत्तित्वत्वस्यैव तद्-घटकतया तदवच्छिन्नसमानाधिकरणधर्म्मावच्छिन्नाभावस्य च वृत्तिमदवृत्तितया व्यभिचारिण्यतिप्रसङ्गापातात्। न च स्वा-विषयकप्रतीत्यवृत्तिसाध्याभाववद्वृत्तित्वत्वरूपविशिष्टनिरूपितवि-षयताकत्वरूपघटकत्वमेव निवेश्यतां तथा सति नोक्तदोष इति वाच्यम्। तथा सति विषयतासम्बन्धेन यत्र हेतुता तत्र तादृशाभा-वाप्रसिद्ध्यापत्तेः। एवं घटत्वभिन्नं मेयत्वादित्यादौ निर्व्विशेषणघट-त्वादिवृत्तित्वत्वस्य यथा समानाधिकरणधर्म्मावच्छिन्नसाध्याभाव-

वद्वृत्तित्वत्वघटकत्वं तथा वाच्यं ज्ञेयत्वादित्यादावपि तादृशस्य स्वाविषयकप्रतीत्यवृत्तिव्यधिकरणधर्म्मावच्छिन्नसाध्याभावविशेषि-तघटत्वादिघटिततदभाववद्वृत्तित्वत्वविषयताकत्वेन तदभाववद्-वृत्तित्वत्वघटकतया वृत्तिमद्वृत्तितदवच्छिन्नाभावस्य हेतावसत्त्वे-नाव्याप्तेस्तदभाववद्वृत्तित्वत्वाघटकधर्म्मानवच्छिन्नाभावनिवेशे च न दोषः तादृशधर्म्मे निरुक्तसाध्याभाववद्वृत्तित्वत्वघटकत्वसत्त्वेऽपि स्वाविषयकप्रतीति-निरूपितसाध्याभाववद्धर्म्मान्तरवृत्तित्वत्वविषय-ताकत्वेन साध्याभाववद्वृत्तित्वत्वाघटकत्वस्यापि सत्त्वेन तदव-च्छिन्नाभावस्य यथानिरुक्ताभावानात्मकत्वात्। न च स्वाविषय-कप्रतीत्यवृत्तिसाध्याभाववद्वृत्तित्वत्वनिरूपितविषयितासामान्यक-त्वरूपतत्तदभाववद्वृत्तित्वत्वघटकतानिवेशे निर्विशेषणकघटत्वा-दिवृत्तित्वत्वस्य साध्याभाववद्वृत्तित्वत्वघटकत्वाप्रसक्त्या तद-घटकधर्म्मावच्छिन्नाभावनिवेशोऽपि सम्भवतीति वाच्यम्। तथा सति व्यापकताघटितसामान्यपदार्थनिवेशेन घटकधर्म्मानवच्छि-न्नाभावनिवेशापेक्षयातिगौरवात्। अत्र विषयत्वं मुख्यविशेष्यत्वं, तेन घटवृत्तित्वत्वावच्छिन्नसाध्यके तादात्म्येन घटत्वव्यापकादि-हेतौ घटवृत्तित्वत्वस्य साध्याभाववद्वृत्तित्वत्वाघटकत्वविरहेण तद-वच्छिन्नाभावमादाय नाव्याप्तिः। न च तथापि सास्नाभाववान् द्रव्यत्वादित्यादावतिव्याप्तिः तत्र सास्नावद्वृत्तित्वत्वस्य गुरुतया गोत्ववद्वृत्तित्वत्वस्य च तदघटकत्वेन व्यधिकरणधर्म्मावच्छिन्ना-भावस्यैव संग्रहादिति वाच्यम्। गोत्वाद्यभावादेरपि सास्नाद्यभाव-रूपसाध्यव्यापकतया गोत्वादिरूपतदभावस्यापि लक्षणघटकत्वात्

तद्वद्वृत्तित्वत्वस्य च तद्वद्वृत्तित्वत्वाघटकत्वविरहेण दोषाभावात्। एवं जातिभिन्नं घटत्वत्वादित्यादौ जातित्वादिविशेषितपटत्वादिवृत्तित्वत्वस्य तद्विशेषितघटत्वादिवृत्तित्वत्वाविषयकप्रतीतिविषयत्वेन प्रत्येकं जातित्वविशेषितसकलजातिवृत्तित्वत्वस्य जातिभेदाद्यभाववद्वृत्तित्वत्वाघटकत्वेऽपि घटत्वादिवृत्तित्वत्वस्य घटत्वत्वावच्छिन्नघटत्वभेदरूप-साध्यव्यापकाभाववद्वृत्तित्वाघटकत्वविरहेण तदवच्छिन्नाभावमादायैवातिव्याप्तिवारणसम्भवात्। न च साध्याभाववद्वृत्तित्वत्वघटकधर्म्मानवच्छिन्नाभाव एव निवेश्यतां किं समानाधिकरणपदोपादानेन केवलान्वयिसाध्यकस्थले वृत्तित्वेन घटाभावमादायैव लक्षणसमन्वयसम्भवादिति वाच्यम्। वृत्तित्वत्वन पर्य्याप्तवृत्तित्व-घटान्यतराभावमादायाव्याप्तिवारणाय एतन्मतेऽपि साध्याभाववद्वृत्तित्वत्वव्याप्यत्वस्य प्रतियोगितायां निवेशस्यावश्यकतया घटत्वेन साध्याभाववद्वृत्तित्वाभावसंग्रहाय समानाधिधिकरणपदोपादानस्यावश्यकत्वादिति दिक् (१)। प्रतियोगितायां साध्याभाववद्वृत्तित्वत्वव्याप्यत्वनिवेशप्रयोजनमाह, 'आलोकाद्यवृत्तित्वेनेति वह्निसामान्याभाववद्वृत्तित्वस्य योऽभावस्तस्य धूमादावसत्त्वेपीत्यन्वयः। वह्निसामान्याभावो वह्नित्वावच्छिन्नो वह्न्यभावः। साध्याभाववद्वृत्तित्वत्वव्यापकतानिवेशनप्रयोजनमाह, 'यद्वेति, 'इन्धनत्वाद्यवच्छिन्नेति, साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेद-

---

(१) वस्तुतस्त्वित्यादिः इति दिगित्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति।

करूपावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया घटत्वाद्यवच्छिन्नाभावोपेक्षणं, 'महानसवृत्तित्वादेरभाव इत्यत्र महानसवृत्तित्वत्वादिनेति बोध्यं, तादृशाभावाधिकरणमहानसवृत्तित्वत्वाद्यवच्छिन्नस्येति वा षष्ठ्यन्तार्थः। न च गुरुधर्म्मस्याभावप्रतियोगितावच्छेदकत्वेऽपि तादृशाभावाविशेषितमहानसवृत्तित्वत्वावच्छिन्नाभावमादायैव दोषप्रसक्तेस्तद्विशेषितमहानसवृत्तित्वत्वावच्छिन्नाभावपर्य्यन्तानुसरणे सन्दर्भविरोध इति वाच्यम्। अधिकरणत्वान्तस्योपलक्षणतया शेषांशस्य विशेषणतया विवक्षणेनानुपपत्त्यभावात्। अधिकरणविशेषानुपरक्तवृत्तेरभावमादायापि दोषं दर्शयति, 'स्वनिष्ठेति धूमादिनिष्ठसाध्याभाववद्वृत्तित्वव्यक्तेस्तद्व्यक्तित्वावच्छिन्नाभावस्येत्यर्थः, 'हेत्वन्तरवृत्तेः' आलोकादिवृत्तेः, एतेन वृत्तिमद्वृत्तित्वमस्तीति सूचितं, 'स्वस्मिन्' धूमादौ, अत्र च लक्षणे सत्ताभाववान् द्रव्यत्वादित्यादौ सत्तावत्समवेतत्वाभावस्य व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैव समवेतवृत्तित्वेऽपि द्रव्यावृत्तित्वाद्यवच्छिन्नाभावस्यापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया समानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यापि तद्वत्समवेतत्वाभावस्य समवेतगुणत्वादिवृत्तितया द्रव्यत्वादेस्तद्वत्त्वाभावान्नातिव्याप्तिः। एवमवृत्तिसाध्यकस्थलेऽपि साध्यतावच्छेदकावच्छिन्नव्यापकत्वाप्रसिद्ध्या नातिव्याप्तिः। कूटघटितलक्षणे च तत्र तत्रातिव्याप्तिवारणाय साध्यसमानाधिकरणत्वे सतीति विशेषणं देयं, एतल्लक्षणे चावृत्तिहेतुकातिव्याप्तिवारणाय वृत्तिमत्त्वमात्रमुपादेयं, कूटघटितलक्षणवद-

त्रापि महाकालान्योघटादित्यादावतिव्याप्तिर्द्रष्टव्या, किन्तु तदन्य-दोषानामेवात्रानवकाश इत्यवधेयम् ।

इति कूटाघटितलक्षणव्याख्या ।

---

तत्त्वचिन्तामणि-दीधितिः ।

## कूटघटितलक्षणम् ।

अन्ये तु वृत्तिमद्वृत्तयो यावन्तः साध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वं, तादृशवृत्तित्वाभावस्य स्वव्यापकतादृशवृत्तित्वत्वव्यापकप्रतियोगिताको बोध्यः, प्रयोजनञ्चोक्तप्रायम् । साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्म्मावच्छिन्नस्यैवाभावस्य वृत्तिमद्वृत्तित्वाद्व्यभिचारिण्यतिव्याप्तिरतः समुदायेति । साध्याभावस्य साध्यतावच्छेदकसम्बन्धेन बोध्यः तेन समवायेन वह्नेः साध्यत्वे धूमे संयोगेन च तथात्वे वह्न्यवयवत्वे पर्व्वत-वह्न्यवयवसंयोगे च पर्व्वतस्य वह्न्यवयवस्य च सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेऽपि नातिव्याप्तिः ।

---

गादाधरी विवृतिः ।

'अन्ये त्विति, घटत्वादिना निर्धूमवृत्तित्वाद्यभावमादाय

व्यभिचारिण्यतिव्याप्तिवारणाय 'यावत्त्वोपादानं, एवञ्च (१) केवला-
न्वयिनः साध्यस्य व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैवा-
भावस्य प्रसिद्ध्या तत्समुदायाधिकरणजगद्वृत्तित्वस्यावृत्तौ प्रसिद्धः
समानाधिकरणधर्म्मावच्छिन्नाभावोपि यावदन्तर्गत इति तद्वत्त्व-
विरहात्तादृशसाध्यके विषयिताद्यतिरिक्तसम्बन्धेन (२) हेताव-
व्याप्तिः। साधनसमानाधिकरणत्वेन साध्याभावविशेषणपक्षे च
व्यतिरेकिसाध्यस्य व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैवा-
भावस्य सद्धेतौ लक्षणघटकतया जगत एव तत्कूटाधिकरणत्वा-
द्व्यतिरेकिसाध्यकेऽपि विषयितातिरिक्तसम्बन्धेन हेतावव्याप्तिरिति
वृत्तिमद्वृत्तित्वमभावविशेषणं, 'तादृशवृत्तित्वेति साध्याभावसमुदा-
याधिकरणवृत्तित्वेत्यर्थः, 'प्रयोजनञ्चेति पूर्व्वदलप्रयोजनं, आलो-
काद्यवृत्तित्वेन निर्वह्निवृत्तित्वाभावमादाय वह्निमान् धूमादित्यत्रा-
व्याप्तिवारणं पूर्व्वलक्षणे उक्तमेव, चरमदलप्रयोजनन्तु साधनसमा-
नाधिकरणत्वस्य साध्याभावाविशेषणत्वे केवलान्वयिसाध्यके ज्ञेय-
त्वादिहेतौ घटादिवृत्तित्वाभावमादायाव्याप्तिवारणमेव, न तु वह्नि-
मान् धूमादित्यादौ महानसवृत्तित्वाद्यभावव्यावर्त्तनं तत्र महा-
नसादेर्वह्नित्वाद्यवच्छिन्नवह्न्यभावानधिकरणत्वेन साध्याभावकूटा-

---

(१) वृत्तित्वाभावे यावत्त्वोपादाने चेत्यर्थः, अन्यथा घटत्वादिना जगद्वृत्तित्वा-
भावमादायैव लक्षणसमन्वयाद्वृत्तिमद्वृत्तित्वविशेषणस्य प्रथमतोऽव्यावर्त्तकत्वा-
पत्तिरिति भावः।

(२) विषयितासम्बन्धेन हेतौ जगद्वृत्तित्वस्य समानाधिकरणधर्म्मावच्छिन्ना-
भावोऽप्रसिद्ध एव अवृत्तेरपि विषयितासम्बन्धेन ज्ञानादौ सम्बद्धत्वात् इत्यत उक्तं
विषयिताद्यतिरिक्तेति, आदिपदात् तादात्म्यपरिग्रहः।

नधिकरणत्वात्, एतस्य च (१) प्रागनुक्तत्वात् 'उक्तप्रायमित्युक्तम्। समुदायपदप्रयोजनमाह, 'साध्याभावाधिकरणेति, 'व्यधिकरणधर्म्मावच्छिन्नाभावस्यैवेति, निर्धूमवृत्तित्वत्वाद्यवच्छिन्ननिर्धूमवृत्तित्वाद्यभावस्य प्रतियोगितायाः व्यधिकरणधर्म्मावच्छिन्नसाध्याभावाधिकरणमहानसादिवृत्तित्वावृत्तितया साध्याभावाधिकरणवृत्तित्वत्वाव्यापकतया जगद्वृत्तित्वसामान्याभावस्यैव तद्व्यापकप्रतियोगिताकतया तस्य च समानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यावृत्तावेव प्रसिद्धत्वादिति भावः। 'व्यभिचारिण्यतिव्याप्तिरिति, तादृशस्य जगद्वृत्तित्वाभावस्य सर्व्वत्रैव सत्त्वादिति भावः। अत्र च स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वकत्वे सति साध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकत्वं प्रतियोगिताविशेषणं, तत्र शेषदले समुदायानिवेशे निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावस्य लक्षणाघटकत्वेऽपि नातिव्याप्तिः सम्भवति व्यतिरेकिसाध्यके तादृशप्रतियोगिताया एवाप्रसिद्धेर्जगद्वृत्तित्वसामान्याभावप्रतियोगितायाः साध्याभावाधिकरणवृत्तित्वत्वव्यापकत्वेऽपि स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वकत्वरूपपूर्व्वदलविरहात्। धूमाद्यभावसमुदायाधिकरणवृत्तित्वत्वशून्ये महानसादिवृत्तित्वेऽपि तादृशप्रतियोगितायाः सत्त्वादिति पूर्व्वपक्षयित्वा शेषदले समुदायाप्रवेशे पूर्व्वदलमेव नोपादेयं तदनुपादानेऽपि वह्निमानधूमादित्यादौ आलोकाद्यवृत्तित्वाद्यवच्छिन्नाभावप्रतियोगित्वस्यालोकादिनिष्ठपर्व्वतादिवृत्तित्वसाधारणसाध्या-

---

(१) केवलान्वयिसाध्यकाव्याप्तिवारणस्य।

भावाधिकरणवृत्तित्वत्वाव्यापकतया तादृशाभावमादाय दोषाप्रसक्तेः, तदुपादाने व्यतिरेकिसाध्यकमात्र एवोक्तरीत्या तादृशप्रतियोगित्वाप्रसिद्ध्या अव्याप्तिप्रसङ्गाच्च, तथाच धूमवान् वह्नेरित्यादौ घटत्वेन जगद्वृत्तित्वाभावमादायातिव्याप्तिरित्याशयेन दीधितिकृतेदमभिहितं, अतिव्याप्तिवारणाय शेषदले समुदायप्रवेशने च निर्वह्निवृत्तित्वत्वव्यापकप्रतियोगिताकस्यालोकावृत्तित्वावच्छिन्नाभावस्य वह्निमान् धूमादित्यत्र शेषदलाक्रान्ततया पूर्व्वदलोपादानमावश्यकं, तत्र च समुदायाप्रवेशे व्यधिकरणधर्म्मावच्छिन्नसाध्याभावाधिकरणवृत्तित्वत्वव्याप्यप्रतियोगिताकस्यालोकावृत्ति–वृत्त्यभावस्य धूमेऽसत्त्वादव्याप्तिरिति तत्रापि तत्प्रवेशनमिति केचित् समादधति ।

परे तु प्रतियोगित्वव्यापकत्वविशेष्यतापन्नमेव साध्याभावसमुदायाधिकरणवृत्तित्वत्वं व्यापकत्वविशेषणविधया निवेश्यते न तु तद्दलस्योक्तरीत्या द्विधा निवेशः, एवञ्च पूर्व्वपक्ष एवायं नावतरति । न च गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वे प्रतियोगित्वव्यापकत्वविशेषितसाध्याभावसमुदायाधिकरणवृत्तित्व–त्वाधिकरणनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वं नाभावप्रतियोगितावच्छेदकमिति तादृशावच्छेदकत्वत्वावच्छिन्नाभावरूपव्यापकतानिवेशासम्भवात् तद्दलस्य द्विधा निवेशनमावश्यकमिति वाच्यम् । व्यापकान्तस्योपलक्षणविधया साध्याभावसमुदायाधिकरणवृत्तित्वत्वरूपव्याप्यांशे निवेशसम्भवात् व्यापकतावच्छेदकावच्छिन्नाभाववानित्यादिस्थाने व्यापकतावच्छेदकत्वांश-

स्येव उक्तावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकत्वेनाभावबुद्धौ व्यापकताया उपलक्षणतया भानेऽविरोधात्। वस्तुतस्तु गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वे साध्याभावसमुदायाधिकरणवृत्तित्वत्वाधिकरणनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वमपि नाभावप्रतियोगितावच्छेदकं वह्नित्वावच्छिन्नवह्न्यभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वादिरूपसमनियतधर्म्मापेक्षया व्यधिकरणधर्म्मावच्छिन्नसाध्याभावेनाधिकेन घटितस्य तस्य (१) गुरुत्वादिति तादृशधर्म्मावच्छिन्नाभावो निवेशयितुं न शक्यः, किन्तु तादृशान्योन्याभावप्रतियोगितावच्छेदकं यद्यत्तद्भेदकूटमेव निवेशनीयम्, एवञ्च प्रतियोगिताव्यापकत्वघटितोक्तधर्म्मस्य प्रतियोगितानवच्छेदकत्वमकिञ्चित्करमेवेत्याहुः।

'तेनेति, समवायेन वह्नेः साध्यत्वे पर्व्वतस्य सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयानधिकरणत्वेऽपि धूमे नातिव्याप्तिः, संयोगेन वह्नेस्तथात्वे वह्न्यवयवस्य तादृशाभावद्वयानधिकरणत्वेऽपि वह्न्यवयवत्वे नातिव्याप्तिः, समवायेन वह्नेः साध्यत्वे संयोगेन तस्य तथात्वे च पर्व्वतस्य वह्न्यवयवस्य च तादृशाभावद्वयानधिकरणत्वेऽपि पर्व्वत-वह्न्यवयवसंयोगे नातिव्याप्तिरिति योजना, 'सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयं' संयोगसम्बन्धावच्छिन्नवह्न्यभाव-समवायसम्बन्धावच्छिन्नवह्न्यभावद्वयं, साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वानिवेशने तादृशाभावद्वयानधिकरणस्य पर्व्वतादेः साध्या-

(१) साध्याभावसमुदायाधिकरणवृत्तित्वत्वाधिकरणनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वस्य।

भावकूटानधिकरणतया तत्कूटाधिकरणवृत्तित्वाभावा यावन्तः तद्वत्त्वं धूमादावव्याहतमेवेत्यतिव्याप्तिः स्यादिति भावः । न च साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावनिवेशनेऽपि समवायेन वह्नौ साध्ये संयोगेन हेतौ धूमे नातिव्याप्तिर्व्वारयितुं शक्यते समवायसम्बन्धावच्छिन्नवह्न्यभावकूटाधिकरणसंयुक्तत्वस्य व्यधिकरणधर्म्मावच्छिन्नभावस्यैव संयुक्तवृत्तित्वात् संयुक्तमात्रस्यैव तादृशाभावकूटाधिकरणगगनादिसंयुक्तत्वादिति कथमत्र व्यावृत्तिप्रदर्शनं समवायेन धूमहेतुकस्थलपरता च न युज्यते समवायेन धूमवतः साध्याभावकूटाधिकरणत्वानिराकरणादिति वाच्यम् । संयुक्तमात्रस्य गगनादिसंयुक्तत्वेऽपि तादृशसंयोगस्य वृत्त्यनियामकतया संयोगेन वह्न्यवयवान्यवृत्तित्वाभावस्य संयोगेन वृत्तिमद्वृत्तेः सुलभतया (१) वृत्तिपदस्य यथाश्रुतपरतामते तादृशव्यावृत्तिदानसङ्गतेः, वृत्त्यनियामकतादात्म्यादिसम्बन्धेन व्याप्तिस्वीकारे वृत्तिपदस्य सम्बन्ध्यर्थकत्वमावश्यकमित्यभिप्रायेण तदुपेक्ष्य द्वितीयस्थलानुसरणं, साधनसमानाधिकरणत्वस्य साध्याभावविशेषणत्वपक्षे समवायसम्बन्धावच्छिन्नवह्न्यभावस्य वह्न्यवयवत्वादिरूपसाधनसमानाधिकरणत्वाभावेन न तत्रातिव्याप्तिसम्भवः, एवं सत्ताभाववान् द्रव्यत्वादित्यादावतिव्याप्तिवारणाय साध्यसामानाधिकरण्ये सतीति विशेषणप्रवेशस्यावश्यकतया संयोगादिना वह्निमत्यवर्त्तमान-

---

(१) संयुक्तमात्रस्य गगनादिसंयुक्तत्वेऽपि तादृशसंयोगस्य वृत्त्यनियामकस्य तथा यस्य द्रव्यस्य वह्न्यवयव एवाधिकरणत्वप्रत्ययः प्रामाणिको न त्वन्यत्र संयोगेन वह्न्यवयवान्यवृत्तित्वाभावस्य संयोगेन वृत्तिमत्तादृशद्रव्यवृत्तेः सुलभतयेति पा० ।

वह्न्यवयवत्वादौ तेनाप्यतिव्याप्तिर्व्वारयितुं शक्यत इत्यतः 'पर्व्वत-वह्न्यवयवसंयोगहेतुकानुसरणं, संयोगेन द्रव्यस्याव्याप्यवृत्तितापक्षे पर्व्वतस्य सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयाधिकरणत्वेऽपि न तस्य व्याप्यवृत्तित्वविशिष्टसाध्याभावकूटाधिकरणत्वं विवक्षणीयञ्चावश्यं तादृशसाध्याभावकूटवत्त्वम्, अन्यथा अव्याप्यवृत्तिसंयोगादिसाध्यके व्यभिचारिणि जगत एव साध्याभावकूटाधिकरणत्वेनातिव्याप्ति-रिति दर्शितहेतोः पर्व्वतवृत्तित्वेऽपि तादृशाभावकूटाधिकरणवृ-त्तित्वाभावोऽक्षत एवेत्यतिव्याप्तिप्रसक्तिः ।

तत्त्वचिन्तामणि-दीधितिः ।

तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रति-योगिताकोऽपि बोध्यः तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षावृत्तित्वाद्यवच्छिन्नप्रतियोगिताका-भावकूटाधिकरणमप्रसिद्धं तत्र सद्धेतौ पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाववति सामान्यादाववर्त्त-माने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिरति-व्याप्तिर्वा, नाप्यभावत्वादिना अभावादौ साध्ये तत्त-त्साध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरित्याहुः ।

गादाधरी विवृतिः ।

पूर्व्ववदत्र साध्याभावपदेन साध्यतावच्छेदकविशिष्टव्यापकता-वच्छेदकरूपावच्छिन्नाभावविवक्षणे नानाविपक्षके तथाविधतत्त-

द्विपक्षाद्यवृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्धा अव्याप्तिः सा-ध्यतावच्छेदकविशिष्टसमव्यापकतावच्छेदकावच्छिन्नाभावनिवेशने च गौरवमिति साध्यतावच्छेदकसमव्याप्तप्रतियोगिताकाभाव एव विवक्षितुमुचितः तार्णतार्णदहनवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकानां तथाविधसाध्याभावानामधिकरणे धूमादेर्वृत्तावपि वह्नित्वाद्यवच्छिन्नवह्न्यभावघटिततादृशाभावकूटवत्यवृत्तेरव्याप्त्यनवकाशात् इत्याशयेन तथाविधमेवाभावं निवेशयति, 'तथेति, 'स्वं' प्रतियोगिता, समनियताभावैक्यमते साध्याभावप्रतियोगितायाः साध्याभावसमनियताभावप्रतियोगिपदार्थान्तरवृत्तित्वेऽपि (१) साध्यतावच्छेदकेन व्यधिकरणेन वा धर्मेणावच्छिन्नायाः साध्यमात्रवृत्तिप्रतियोगितायाः साध्यतावच्छेदकसमनैयत्यमक्षतमेव । अथ घटत्वाद्यवच्छिन्ना या वाच्यत्वनिष्ठप्रतियोगिता सा घटादिभिन्नयावद्वस्तुवृत्तिरेव स्वीक्रियते न तु वाच्यत्वादिमात्रवृत्तिस्तथा सति घटत्वेन प्रमेयत्वं नास्तीत्यादिप्रतीतिविषयप्रतियोगितान्तरकल्पने गौरवादिति तादृशप्रतियोगितायां न वाच्यत्वत्वादिरूपसाध्यतावच्छेदकसमनैयत्यमिति चेत्, का क्षतिः, वाच्यत्वभिन्नत्वेन वाच्यत्वं नास्तीत्यादिप्रतीतिविषयमभावमादायैव तल्लक्षणसमन्वयसम्भवात् स्वव्यधिकरणवाच्यत्वभिन्नत्वावच्छिन्नायाः प्रतियोगिताया वाच्यत्वभिन्नवृत्तित्वस्यासम्भावितत्वात् । वस्तुतस्तु घटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावप्रतियोगितायां व्यधिकरणघटत्वादेरिव समानाधिकर-

(१) साध्यसमनियतपदार्थान्तरवृत्तित्वेऽपीति पा० ।

णवाच्यत्वत्वादेरप्यवच्छेदकत्वमावश्यकं घटत्वेन वाच्यत्वं नास्ती-त्यादिप्रतीत्या वाच्यत्वत्वादेः प्रतियोगितावच्छेदकत्वानवगाहनात् तादृशप्रतीतेर्वाच्यत्वत्वादिविशिष्टवैशिष्ट्यानवगाहित्वेन तत्र वाच्यत्व-त्वादिप्रकारकज्ञानानपेक्षापत्तेः, एवञ्च घटत्वेन प्रमेयं नास्तीत्यादि-प्रतीतिविषयप्रतियोगितानामतिरिक्तत्वमावश्यकम् अवच्छेदकभे-दादिति घटत्वेन वाच्यत्वं नास्तीत्यादिप्रतीतिविषयप्रतियोगिता वाच्यत्वादावेव वर्त्तते न त्वन्यत्रापि मानाभावादिति घटत्वादिना वाच्यत्वाद्यभावोऽपि लक्षणघटकः। अथैवं साध्यतावच्छेदका-वच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावघटितलक्षणे वह्नित्वा-द्यवच्छिन्नसाध्यकस्थले वह्नित्वादिना घटाद्यभावो लक्षणघटको न स्यात् व्यापकतावच्छेदकवह्नित्वादिपर्य्याप्तप्रतियोगितावच्छेदक-ताकत्वविरहान्महानसीयवह्नित्वाद्यवच्छिन्नाभाववारणायावच्छेद-कतापर्य्याप्तिविवक्षणस्यावश्यकत्वादिति चेन्न, व्यापकतावच्छेदक-पर्य्याप्तत्वं हि व्यापकतानवच्छेदकावृत्तित्वं तच्चेन्धनत्वाद्यवच्छिन्न-वह्न्यभावप्रतियोगितावच्छेदकतायामक्षतमिति तादृशाभावमादा-यैव तत्तल्लक्षणसमन्वयसम्भव इति। एवञ्च सार्व्वभौमानामेतल्ल-क्षणाभिप्रायकतया 'समवायितया वाच्यत्वाभावो घट एव प्रसिद्ध' इति मूलग्रन्थोपवर्णनमपि सङ्गच्छते। अथ पर्य्याप्तिसम्बन्धेन यत्रो-भयत्वादिकं साध्यतावच्छेदकं तत्र प्रतियोगिताया अव्यासज्यवृत्ति-त्वेन तत्पर्य्याप्त्यधिकरणे प्रत्येकव्यक्तौ पर्य्याप्तिसम्बन्धेनोभयत्वादिव्य-क्तेरत्यन्ताभावस्य तदवच्छिन्नभेदस्य च सत्त्वात्तस्य प्रतियोगिता-व्यापकत्वं न सम्भवति। न चाव्याप्यवृत्तिसंयोगादेर्यत्र साध्यताव-

च्छेदकता तत्र तस्य प्रतियोगिताव्यापकत्वनिर्व्वाहाय प्रतियोग्य-सामानाधिकरण्यं व्यापकताघटकाभावे निवेशनीयं तावता उभ-यत्वस्यापि व्यापकत्वं निर्व्वहति पर्य्याप्तिसम्बन्धेनोभयत्वपर्य्याप्त्य-धिकरणस्य प्रत्येकानतिरिक्ततया प्रत्येकवृत्तेरुभयत्वाभावस्यापि प्रतियोगिसमानाधिकरणत्वादिति वाच्यम्। पृथिवीत्व-घटत्वो-भयत्वादिना यत्र साध्यता तत्र जातित्वाद्यवच्छिन्नाभावप्रतियो-गित्वसमानाधिकरणस्य तादृशसाध्यतावच्छेदकाभावस्य प्रतियो-ग्यधिकरणावृत्तित्वविरहेण तादृशसाध्यतावच्छेदकस्य तादृशप्रति-योगिताव्यापकत्वापत्त्या तादृशाभावमादाय द्रव्यत्वप्रकारकप्रमा-विषयत्वादिहेतावतिव्याप्त्यापत्तेः प्रतियोग्यनधिकरणवृत्तित्वस्यैवा-भावे निवेशनीयतया उभयत्वाभावव्यावर्त्तनासम्भवात् तदभाव-वतः प्रत्येकं तदनधिकरणत्वात् तस्यैव तदधिकरणताया अपि व्यासज्यवृत्तित्वादिति चेन्न, सामानाधिकरण्यस्याव्याप्यवृत्तितापत्ते प्रतियोगिसामानाधिकरण्याभावविशिष्टाभाववत्ताघटितव्यापक-ताया एव निवेशसम्भवात् पृथिवीत्वादौ उक्तोभयत्ववति पृथिवीत्व-त्वावच्छेदेन तदभावस्य प्रतियोगिसमानाधिकरणत्वेऽपि जलत्वा-देस्तत्सामानाधिकरण्याभावविशिष्टतदभाववत्त्वेनातिप्रसङ्गाभावात् उभयत्वाद्यभावस्य तदभाववत्येकैकस्मिन्नपि तत्सामानाधिकरण्या-भावानभ्युपगमात्। तत्सामानाधिकरण्यावच्छेदकस्य प्रत्येका-नतिरिक्तत्वात्। अथवा यन्निरूपितसाध्यतावच्छेदकताघटक-सम्बन्धसामान्ये प्रतियोगित्वाधिकरणयत्किञ्चिद्व्यक्त्यनुयोगिकत्वा-भावस्तदन्यत्वमेव प्रतियोगिताव्यापकत्वम् उभयत्वनिरूपितप-

व्याप्तौ च न प्रत्येकानुयोगिकत्वाभावः उभयस्य प्रत्येकानतिरिक्त-त्वादिति ।

यत्तु प्राचीनमते रूपसामान्याभावस्य रूप-तद्ध्वंस-तत्प्रागभाव-त्रितयप्रतियोगिकतया रूपध्वंसादिसाध्यके रूपादिहेतावतिव्याप्तिः रूपसामान्याभावीयरूपध्वंसत्वाद्यवच्छिन्नप्रतियोगितायाः साध्य-तावच्छेदकसमनियततया तद्घटिताभावकूटाधिकरणे रूपादेर-वृत्तेः । न च रूपस्यापि रूपध्वंसाभावरूपतया तद्घटितस्य रूप-सामान्याभावाद्यघटितकूटस्यापि यावतामभावानामेकाधिकरण्य-मिति विवक्षया लक्षणघटकत्वात् तद्वति हेतोर्वृत्त्या नोक्ताति-व्याप्तिरिति वाच्यम् । रूपादीनां प्रत्येकं स्वस्वध्वंसाभावरूपत्वेऽपि स्वान्यरूपादिध्वंसाद्यभावानात्मकतया साध्यतावच्छेदकसमनियत-प्रतियोगिताकत्वविरहेण लक्षणाघटकत्वादिति, तन्न, जलपरमा-ण्वादौ रूपध्वंसत्वाद्यवच्छिन्नाभावबुद्धिनिर्व्वाहाय जन्यरूपत्वाद्यव-च्छिन्नाभावे रूपध्वंसत्वावच्छिन्नप्रतियोगिताकत्वकल्पनस्यावश्यक-तया तत एव रूपादिसामान्याभाववत्यपि तत्प्रतीतिनिर्व्वाहात् रूपादिसामान्याभावस्य रूपध्वंसादिप्रतियोगिताकत्वानभ्युपग-मात्, साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापक्षे तेना-प्युक्तस्थले रूपादिसामान्याभावव्यावर्त्तनात्, स्वनिरूपकाभाववत्त्व-सम्बन्धेन साध्यतावच्छेदकसमनियतप्रतियोगिताकूटाधिकरणत्व-मेव निवेश्य लक्षणस्य परिष्करणीयतया रूपादिसामान्याभावान-धिकरणस्यापि जलपरमाण्वादेरुक्तस्थले तत्कूटाधिकरणत्वेनाति-व्याप्त्यनवकाशाच्च । प्रतियोगितायाः प्रतियोगिस्वरूपत्वमते ना-

नाव्यक्तिसाध्यकस्थले साध्यतावच्छेदकसमनैयत्यस्य प्रत्येकप्रतियोगितायामसत्त्वेऽपि स्वावच्छेदकावच्छिन्नतदभावीयप्रतियोगितात्वेन (१) समनैयत्यविवक्षणान्न दोषः तत्तद्वह्नि-तत्तद्धूमादिस्वरूपप्रतियोगितानामपि स्वावच्छेदकवह्नित्व-धूमत्वाद्यवच्छिन्नतदभावप्रतियोगितात्वेन वह्नित्व-धूमत्वादिसमनैयत्यात् वह्नित्व-धूमत्वाद्यवच्छिन्नवह्न्यादिस्वरूपप्रतियोगितानां द्रव्यत्वाद्यवच्छिन्नाभावीयवह्न्यादिस्वरूपप्रतियोगितात्मकतया तदवच्छेदकद्रव्यत्वाद्यवच्छिन्नप्रतियोगितायाश्च घटादावपि सत्त्वात् न तत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितात्वेन वह्नित्वादिसमनैयत्यमिति तदभावीयत्वं विशेषणं, तथा सति वह्नित्वाद्यवच्छिन्नाभावीयप्रतियोगिताया घटादावसत्त्वात् नानुपपत्तिः। यद्यप्येवमपि वाच्यत्वत्वादिसमनियतप्रतियोगित्वाप्रसिद्धिर्दुर्वारैव व्यधिकरणधर्मावच्छिन्नाभावानामभिन्नतया वाच्यत्वादिनिष्ठं तत्स्वरूपवाच्यत्वभिन्नत्वाद्यवच्छिन्नवाच्यत्वाभावीयप्रतियोगिताया घटत्वाद्यवच्छिन्नवाच्यत्वादिनिष्ठतत्स्वरूपप्रतियोगित्वाद्भिन्नत्वेन तदवच्छेदकघटत्वाद्यवच्छिन्नप्रतियोगितानां घटादावपि सत्त्वात् (२) यत्किञ्चिदेकधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेन समनैयत्यघटकव्याप्यत्व-

---

(१) तदभावीयप्रतियोगितात्वेन समनैयत्यविवक्षणे साध्यतावच्छेदकसमनियततदभावीयप्रतियोगिताकाभावस्याप्रसिद्ध्या वह्निमान् धूमादित्यादावव्याप्तिरतः स्वावच्छेदकावच्छिन्नेति।

(२) व्यधिकरणधर्मावच्छिन्नाभावानामभिन्नतया वाच्यत्वादिस्वरूपवाच्यत्वभिन्नत्वाद्यवच्छिन्नाभावीयप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नप्रतियोगितानां घटादावपि सत्त्वादिति पा०।

विवक्षणे च पृथिवीत्वाद्यभावादिसाध्यकस्थले घटावृत्तित्वाद्यवच्छिन्नाभाववारणमशक्यं तदभावीयपृथिवीत्वाभावादिरूपप्रतियोगितानां पृथिवीत्वाभावत्वाद्यवच्छिन्नाभावीयप्रतियोगितात्मकतया पृथिवीत्वाभावत्वादिरूपतदवच्छेदकावच्छिन्नप्रतियोगितात्वेन पृथिवीत्वाभावत्वादिसमनैयत्यसत्त्वात्, तथापि यद्धर्मावच्छिन्नप्रतियोगितात्वेन यदभावनिरूपितत्वं तादृशधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेनैव व्याप्यत्वनिवेशान्न दोषः पृथिवीत्वाभावत्वावच्छिन्नप्रतियोगितात्वेन पृथिवीत्वादिरूपाभावमात्रनिरूपितत्वं न तु घटावृत्तित्वावच्छिन्नाभावनिरूपितत्वमिति। यद्यपि पूर्व्वदलाप्रवेशे वह्न्यादिसाध्यके धूमादिहेतौ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकव्यापकप्रतियोगिताकतत्तद्‌द्रावृत्तित्वावच्छिन्नाभावकूटाधिकरणत्वस्य गुणादौ प्रसिद्धत्वेऽपि तत्र हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धया अव्याप्तिसम्भवः तथापि साध्याभावकूटवति तादृशवृत्तेरप्रसिद्धया अव्याप्तिस्तदनिवेशेऽपि सत्तावान् जातेरित्यादौ वक्ष्यते इति स्थलान्तरे कूटाधिकरणाप्रसिद्धया अव्याप्तिवारणरूपतत्प्रयोजनमाह, 'यत्र पृथिवीत्वाभावादाविति, 'तत्तद्विपक्षेति घट-पटादिरूपेत्यर्थः, 'तत्र सद्धेताविति तत्र साध्ये यः सद्धेतुर्जलत्वादिस्तत्रेत्यर्थः, 'नाव्याप्तिरित्यनेनान्वयः, यावतामेकाधिकरण्यं सम्भवति तावदभावसमुदायाधिकरणविवक्षायास्तद्दोषासम्भवेन स्थलान्तरे अव्याप्तिमाह, 'पृथिवीत्वादाविति, द्रव्यत्वादेः समवायेन हेतुत्वे जातित्वाद्यवच्छिन्नाभावघटितकूटाधिकरणे समवायेन वृत्तेरप्रसिद्धया अतिव्याप्त्यनवकाशात् स्वरूपसम्ब-

न्येन हेतुत्वानुसरणम्। साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापत्ते जातित्वाद्यवच्छिन्नाभावस्य साधनासमानाधिकरणतया वारणसम्भवेऽपि प्रत्येकं साधनसमानाधिकरणजलावृत्तित्व-तेजोऽवृत्तित्वाद्यवच्छिन्नसमवायसम्बन्धावच्छिन्नाभावकूटाधिकरणतायाः सामान्यादावेव सत्त्वादतिव्याप्तिर्दुर्व्वारैवेति ध्येयम्। द्वितीयदलप्रवेशप्रयोजनमाह, 'नापीति, घटत्वाभावत्वादिना साध्यतायां घटादावेव साध्याभावकूटाधिकरणत्वप्रसिद्धिरत उक्तम् 'अभावत्वादिनेति, आदिपदान्मेयत्वादिपरिग्रहः, 'तत्तत्साध्येति घटत्वाभाव-पटत्वाभावादिरूपसाध्यस्य यः साध्यतावच्छेदकव्याप्यप्रतियोगिताको घटत्व-पटत्वादिरूपोऽभावस्तत्समुदायाधिकरणाप्रसिद्धेरित्यर्थः, यावतामैकाधिकरण्यं सम्भवतीति विवक्षायामपि तादृशाभावसमुदायवति घटादौ हेतोर्वृत्तेरव्याप्तिरेव। न च यावतामभावानामैकाधिकरण्यसम्भवस्तादृशाभावकूटाधिकरणं यद्यत् तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकोऽभावो विवक्षणीयः घटवृत्तित्वत्वाद्यवच्छिन्नाभावस्योपदर्शितस्थले न तथा जगत एव तावदन्यतमान्तर्गतत्वात्, अपि तु घटत्वादिना जगद्वृत्तित्वसामान्याभाव एव वृत्तिमद्वृत्तिस्तथाविधोऽभावः, तावदधिकरणान्यतमत्वञ्च तत्तदधिकरणावृत्तिशून्यत्वं न तु तत्तदधिकरणान्यान्यत्वमतो नाप्रसिद्धिरिति वाच्यम्। एवमपि जातिप्रतियोगिकाभाववान् मेयत्वादित्यादौ जातिमतामेव घटत्व-पटत्वघटिततादृशकूटाधिकरणतया जातिमद्वृत्तित्वत्वावच्छिन्नाभावस्यापि तादृशतया अव्याप्तेर्दुर्व्वारत्वादिति। अत्र साध्याभाववत्तायां सम्बन्धविशेषानिवेशे

कालपरिमाणवान् मेयत्वादित्यादावतिव्याप्तिः कालस्यापि कालिकसम्बन्धेन कालपरिमाणाभावाधिकरणतया जगत एव साध्याभावकूटवत्त्वात् दैशिकविशेषणतासम्बन्धनिवेशे च घटत्वाभाववान् पटत्वादित्यादावव्याप्तिर्घटत्वादेस्तेन सम्बन्धेनावृत्तेस्तेन सम्बन्धेन तद्‌घटितकूटाधिकरणाप्रसिद्धेः, तेन सम्बन्धेन वृत्तिमत्त्वस्याभावविशेषणत्वे तु घटत्वाभावादिसाध्यके व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः कालिकसम्बन्धावच्छिन्नप्रतियोगिताके घटत्वाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिश्च घटातिरिक्तवस्तुमात्रस्यैव दैशिकविशेषणतया साध्याभावकूटवत्त्वात् साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिवेशेऽप्ययमेव दोषः, किञ्चिद्विशिष्टताद्दशसाध्यस्य योऽभावस्तस्य दैशिकविशेषणतासम्बन्धावच्छिन्नाभावस्तद्रूप इति दैशिकविशेषणताया अपि निरुक्तसाध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वात् । स्वनिष्ठताद्दश(१)प्रतियोगितावच्छेदकसम्बन्धेन स्वाधिकरणत्वनिवेशे च व्यधिकरणधर्मावच्छिन्नाभावस्य साध्याप्रतियोगिकतया तदसंग्रहप्रसङ्ग इति साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताज्ञानं प्रति यत्सम्बन्धावगाहि यदभावज्ञानं प्रतिबन्धकं तेन सम्बन्धेन तदभावाधिकरणत्वं विवक्षणीयं व्यधिकरणधर्मावच्छिन्नाभाववत्ताबुद्धिरपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिप्रकारकबुद्धिं प्रतिबध्नातीति ताद्दशाभावस्य लक्षणघटकतानिर्व्वाहः । यदि चाभाववत्ताज्ञानं प्रति दैशिकविशेषणतासंसर्गकमपि तदभावाभावत्वावच्छिन्न-

(१) साध्यनिरूपितेत्यर्थः ।

प्रकारकज्ञानं प्रतिबन्धकम् अभावाभावस्यातिरिक्ततामते तादृश-ज्ञानप्रतिबन्धकताया आवश्यकत्वात्, तस्य प्रतियोगिस्वरूपत्वमतेऽपि फलसाम्यानुरोधेन तदावश्यकत्वात् अभावाभावस्यातिरिक्तत्व-ग्रहदशायां तत्प्रतिबन्धकताया दुरपह्नवत्वाच्च, एवञ्च कालिकसम्बन्धावच्छिन्नप्रतियोगिताके घटत्वाद्यभाव-जातित्वादेरभावे साध्ये आत्मत्व-जातित्वादावव्याप्तिर्दुर्वारैव दैशिकविशेषणतासम्बन्धस्यापि निरुक्तरूपाक्रान्तत्वात् । न चैवं तादृशसाध्यवत्यपि पक्षे तादृश-साध्याभावत्वावच्छिन्नप्रकारकप्रमारूपप्रतिबन्धकज्ञानसम्भवात्तद्वि-षयस्य हेत्वाभासतापत्तिरिति वाच्यम् । तत्र पक्षे साध्यं नास्तीति-ज्ञानस्य भ्रमत्वं निर्व्विवादमिति तदुपपादनाय तादृशसाध्यप्रति-योगिनस्तादृशसाध्याभावत्वेन दैशिकविशेषणतया वृत्त्यनभ्युपगमा-दित्युच्यते, तदा निरुक्तसम्बन्धेन तादृशसाध्याभावत्वावच्छिन्नाधि-करणताकूटवत्त्वं विवक्षणीयं हेतुमति च तादृशाधिकरणताविर-हान्नोक्ताव्याप्तिः ।

परे तु घटत्वादेरपि दैशिकविशेषणतास्वीकार आवश्यकः अन्यथा घटे न घटत्वाभाव इत्यादिनञन्वयिप्रतीति-व्यवहारयो-रनुपपत्तिः काले न द्रव्यत्वमित्यादिप्रयोगविरहेण समस्य-र्थदैशिकविशेषणतासंसर्गावच्छिन्नाधेयत्वान्वितस्वार्थबोधजनकत्व--स्यैव (१) नञ्पदे व्युत्पन्नत्वात् । न च भावरूपप्रतियोगिवा-चकपदसमभिव्याहृतनञा दैशिकविशेषणतासम्बन्धावच्छिन्नाधेय-तया अभावरूपप्रतियोगिवाचकपदसमभिव्याहृतनञा च प्रति-

(१) दैशिकविशेषणतासंसर्गावगाहिबोधजनकत्वस्यैवेति पा० ।

योगितावच्छेदकसम्बन्धावच्छिन्नाधेयतया अभावः प्रत्याय्यते (१) इति व्युत्पत्तिरिति वाच्यम्। प्रतियोगितावच्छेदकसम्बन्धत्वेन सम्बन्धबोधोपगमे सर्व्वेषां मेयाभावानां दैशिकविशेषणतासम्बन्धावच्छिन्नप्रतियोगिताकः किञ्चिद्विशिष्टस्याभावस्य योऽभावस्तद्रूपतया तादृशसम्बन्धस्य प्रतियोगितावच्छेदक इत्यतिप्रसङ्गात् (२) विशिष्य समवाय-कालिकादिभानस्यैवोगन्तव्यतया प्रतियोगिन्यभावे सम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वाबोधकादयमभावो नास्तीत्यादितः सम्बन्धविशेषावच्छिन्नाधेयताप्रतीतौ (३) नियमकाभावात् समभिव्याहारविशेषनिरपेक्षस्य तात्पर्य्यस्य नियामकत्वे कालिकादिसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वाद्यभावादेरात्मत्वरूपो योऽभावस्तस्य समवायादिसंसर्गतात्पर्य्येणात्मन्ययमभावो नास्तीति प्रयोगप्रसङ्गात्। वास्तवतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपप्रतियोगिवाचकपदसमभिव्याहारस्य तत्सम्बन्धावच्छिन्नाधेयताभाननियामकत्वे (४) वस्तुतः कालिकादिसम्बन्धावच्छिन्नप्रतियोगिताकेऽस्मिन्नभावे कालिकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसंशयदशायाम् अयमभावो नास्तीति वाक्यादधिकरणे एतदभावाभाववत्त्वप्रतीतावपि अधिकरणे कालिक-

---

(१) दैशिकविशेषणताऽभावरूपप्रतियोगिवाचकपदसमभिव्याहृतनञा च प्रतियोगिभूताभावप्रतियोगितावच्छेदकसम्बन्धः प्रत्याय्यत इति पा०।

(२) आत्मनि कालिकसम्बन्धावच्छिन्नप्रतियोगिताको घटत्वाभावाभावो नेत्यादिप्रतीत्यापत्तिरूपोऽतिप्रसङ्गः।

(३) सम्बन्धविशेषप्रतीताविति पा०।

(४) तत्सम्बन्धभाननियामकत्व इति पा०।

सम्बन्धेनाभाववत्त्वादिसंशयस्य (१) सर्व्वानुभवसिद्धस्योच्छेदापत्तेः । अथैवं कालादावपि कालिकसम्बन्धावच्छिन्नघटत्वाभावो नास्तीति प्रतीत्यनुरोधेन घटत्वादेर्दैशिकविशेषणतास्वीकारस्यावश्यकतया तत्र समवायसम्बन्धावच्छिन्नघटत्वाभावो नास्तीति व्यवहारापत्तिरिति चेन्न, प्रतियोगिमति तदभावत्वेन वृत्तेरनभ्युपगमात् इत्थञ्च दैशिकविशेषणतासम्बन्धेन साध्याभावत्वावच्छिन्नवत्त्वं लक्षणे निवेशनीयं कालिकसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाभावाभाववान् आत्मत्वादित्यादौ घटत्वाभावस्य तादृशसाध्याभावत्वेनात्मन्यवृत्तेर्नाव्याप्तिः । एतेन यादृशसाध्यकस्थले साध्याधिकरणे साध्याभावस्य तदधिकरणे च साध्यस्य न भ्रमः प्रसिद्धः तत्र प्रतिबध्य-प्रतिबन्धकभावकल्पनासम्भवेन प्रतिबन्धकताघटितलक्षणस्याव्याप्तिरिति निरस्तमिति वदन्ति ।

---

तत्त्वचिन्तामणि-दीधितिः ।

तन्न द्रव्यत्व-पृथिवीत्वोभयवान् द्रव्यत्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति द्रव्यत्वादेरवृत्तेरतिव्याप्तिः । अपि चेदंपृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ द्रव्यत्वत्वावच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तिः द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगितायाः पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्त-

---

(१) अयमभावो नास्तीति वाक्यादधिकरणवृत्तित्वस्य एतदभावाभावे प्रतीतावपि अधिकरणनिरूपितकालिकसम्बन्धावच्छिन्नाधेयत्वाभाववत्त्वादिसंशयस्येति पा० ।

त्वात्। किञ्च रूपाभावसाध्यके सद्धेतौ साध्याभाव-समुदायनिविष्टसकलरूपव्यक्त्यधिकरणाप्रसिद्धेः। याव-तामभावानामैकाधिकरण्यं तावतां समुदाये विवक्षि-तेऽपीदंपृथिवीवृत्तिगुणशून्यं सत्तान्यपृथिवीसमवेतशून्यं वा वायुत्वाद्रूपवदन्यत्वाद्वेत्यादावतिव्याप्तिः तत्र तादृश-साध्याभावस्तोमस्य नियमतो रूपादिघटितत्वेन तद्वति तद्धेतोरवृत्तेः, वस्तुतो निखिलानामेव रूपाणां तादृ-शाभावसहस्रसमानाधिकरणत्वात्समानाधिकरणयावद-भावाधिकरणाप्रसिद्धिर्दुर्व्वारैव।

---

गादाधरी विवृतिः।

'तदुभयेति, द्रव्यत्व-पृथिवीत्वान्यतरत्वावच्छिन्नप्रतियोगिताया-अपि तदुभयत्वसमनियततया तादृशाभाववतो गुणादेरेव निरुक्त-साध्याभावकूटाधिकरणत्वादिति भावः। प्रतियोगिवैयधिकरण्या-घटितव्यापकत्वस्य साध्यतावच्छेदकविशेषणत्वमुपगम्य उभयत्व-वति प्रत्येकमुभयत्वाभावसत्त्वेन तस्य प्रतियोगिताव्यापकत्ववारणे तु तद्रूपावच्छिन्नसाध्यकसद्धेतावव्याप्तिर्द्रष्टव्या, व्यासज्यवृत्तित्वा-व्यासज्यवृत्तित्वान्यतररूपेण साध्यतावच्छेदकसजातीयो यो धर्म्म-स्तदवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वोपगमे(१) नैतादृशाति-व्याप्त्यवकाश इत्यतः स्थानान्तरेऽतिव्याप्तिमाह, 'अपि चेति, 'द्रव्य-

---

(१) तथाचान्यतरत्वावच्छिन्नप्रतियोगित्वस्य साध्यतावच्छेदकसजातीयधर्म्मा-वच्छिन्नत्वाभावादेव तादृशप्रतियोगितावारणात्।

त्वाद्यवच्छिन्नेति शुद्धद्रव्यत्वत्वाद्यवच्छिन्नेत्यर्थः, 'पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वादिति, विशेषणावच्छिन्नस्य शुद्धविशिष्यानतिरिक्तत्वादिति भावः। विशिष्टस्यातिरिक्तत्वे विशिष्टद्रव्यत्वादिसाध्यकस्थले शुद्धद्रव्यत्वाद्यभावस्य वारणसम्भवात् दूषणान्तरमाह, 'किञ्चेति, 'रूपाभावेति रूपत्वाद्यवच्छिन्नाभावेत्यर्थः, 'सद्धेतावित्यव्याप्तिसूचनाय, 'सकलरूपव्यक्त्यधिकरणाप्रसिद्धेरिति, तथाच तद्घटितसाध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरिति भावः। 'यावतामिति, तथाच प्रकृते सकलरूपघटितसमुदायस्य न लक्षणघटकता सकलरूपाणामैकाधिकरण्यविरहात् किन्तु एकैकरूपव्यधिकरणधर्मावच्छिन्नाभावघटितकूटानामेव प्रत्येकं तदधिकरणता च रूपवत्स्वेव प्रसिद्धेति नाव्याप्त्यवकाश इति भावः। 'इदमिति, वायौ पृथिवीवृत्तिद्वित्व-संयोगादिसत्त्वाद्वायुत्वादेरुक्तसाध्यव्यभिचारिता, गुणसामान्याभावस्य साध्यत्वे वायवीयस्पर्शादिरपि साध्याभावः तद्घटितनिरुक्ताभावकूटवृत्तित्वाभावस्य यावदन्तर्गतस्य वायुत्वादावभावान्नातिव्याप्तिसम्भवः इति 'पृथिवीवृत्तीति, घट-तद्वायुद्वित्व-पट-तद्वायुद्वित्वादिरूपपृथिवीवृत्तिगुणाभावाभावानां यावतां वायावैकाधिकरण्यसम्भवेन तद्घटितकूटस्यापि लक्षणघटकतया तद्वति वायौ हेतोर्वृत्त्या नातिव्याप्तिसम्भवः। न च द्वित्वादिरूपसाध्याभावस्य उत्पत्तिकालेऽसत्त्वेन कालिकाव्याप्यवृत्तितया व्याप्यवृत्तित्वविशेषणेन तद्व्यावृत्तिः पार्थिवपरमाण्वेकत्वादिरेव लक्षणघटक इत्यतिव्याप्तिर्दुर्व्वारैवेति वाच्यम्। प्राचीनमते द्वित्वादिमति तत्प्रागभावादिकालावच्छेदेन

तदत्यन्ताभावासत्त्वात् द्वित्वादेरपि व्याप्यवृत्तित्वादिति पृथिवी-पदम्, इदम्पद-पृथिवीपदयोः कर्म्मधारयो वाभिमतः। न च स्वस-मानाधिकरणाभावाप्रतियोगित्वम् अनवच्छिन्नवृत्तिकत्वं वा व्याप्य-वृत्तित्वं न तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं, तच्च न द्वित्वादिसाधारणमिति पृथिवीपदस्य पृथिवीसामान्यपरत्वेऽपि न क्षतिरिति वाच्यम्। एतदतिव्याप्तिवारणानुरोधेनात्यन्ताभाव-घटितव्याप्यवृत्तित्वस्यैव निवेशयितुमुचितत्वात् एतद्रूपात्यन्ताभाव-वान् मेयत्वादित्यादावेतद्रूपात्मकाभावस्य लक्षणाघटकत्वेऽति-व्याप्त्यापत्तेः प्राचीनमतेऽत्यन्ताभावघटितव्याप्यवृत्तित्वनिवेशस्याव-श्यकत्वाच्च। अतएव चाग्रेतनं 'रूपादिघटितत्वेनेत्यपि साधु सङ्गच्छते, पार्थिवरूपमात्रस्यैवानित्यतया अत्यन्ताभावघटितव्याप्यवृत्तित्वा-निवेशे तस्य व्याप्यवृत्तित्वाभावेन तदसङ्गत्यापत्तेः, वृत्तिस्तु सम-वायेन बोध्या, तेन वायवीयस्पर्शादेः कालिकसम्बन्धेन पृथिवीवृत्ति-त्वेऽपि न क्षतिः पृथिवीसमवेतत्वावच्छिन्नाभावो गुरुधर्म्मस्य प्रति-योगितानवच्छेदकत्वेऽप्रसिद्धः पृथिवीसमवेतत्वावच्छिन्नत्वेनाभिम-तायां प्रतियोगितायां केवलसमवेतत्वस्यैवावच्छेदकत्वसम्भवेन पृथिवीसमवेतत्वस्याभावप्रतियोगितानवच्छेदकत्वात्। न च पृथिवी-समवेतत्वावच्छिन्नाया जलत्वादिव्यावृत्तप्रतियोगिताया अतिप्रसक्त-समवेतत्वस्य नावच्छेदकत्वसम्भव इति वाच्यम्। समवेतत्वावच्छि-न्नप्रतियोगितातः अतिरिक्ताया जलत्वादिव्यावृत्तप्रतियोगिताया-एवासिद्धेर्गुरुधर्म्मस्याभावप्रतियोगितावच्छेदकत्वेऽपि पृथिवीसम-वेतत्वावच्छिन्नाभावसाध्यके नातिव्याप्तिसम्भवः तादृशाभावस्य सम-

वेतत्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन समवेतमात्रस्यैव तदभावतया (१) वायुत्वादेरपि तथात्वात्(२) । न च पृथिवीसमवेतत्वविशिष्टाभाववति जलादौ समवेतत्वावच्छिन्नाभावविरहान्न तयो: समनैयत्यं एवञ्च गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्वमतेऽपि पृथिवीसमवेतत्वस्य तादृशविशिष्टाभावप्रतियोगितावच्छेदकत्वमावश्यकं समवेतत्वविशिष्टवति जलादौ तत्सत्त्वेन तन्मात्रस्य तत्प्रतियोगितावच्छेदकत्वासम्भवात् इति वाच्यम् । विशिष्टाभावस्य साध्यत्वे तस्य वायुसाधारणतया सद्धेतुत्वप्रसङ्गेन पृथिवीसमवेतत्वोपलक्षिताभावस्यैवात्र साध्यतयोपगन्तव्यत्वादिति गुणपदोपादानं, पृथिवीसमवेतगुणत्वावच्छिन्नाभावस्य गुणादिसाधारणतया न समवेतत्वावच्छिन्नाभावसमनियत इति नोक्तदोषावसर: । ध्वंस-प्रागभावावच्छिन्ने सामान्याभावमभ्युपगच्छतां वाय्वादेरप्युत्पत्तिकालाद्यवच्छेदेन पृथिवीवृत्तिगुणसामान्याभाववत्त्वात् तत्साध्यको वायुत्वादि: सद्धेतुरेवेति नातिव्याप्तिसम्भव इत्यत: साध्यान्तरमाह, 'सत्तान्येति, सत्तान्यत्वनिवेशप्रयोजनं पूर्व्ववत्, वायुत्वादेरपि सत्तान्यसमवेताभावाभावत्वात् 'पृथिवीति, अत्र पृथिवीपदं पृथिवीसामान्यपरमेव, घट-पट-वायुद्वित्वादे: स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन व्याप्यवृत्तित्वविशेषणव्यावृत्तत्वात्, 'रूपादिघटितत्वेनेत्यत्र रूपपदोपादानं प्राचीनमताभिप्रायेणोपन्यस्तम् । पूर्व्वसाध्यमभिप्रेत्य साध्यसामानाधिकरण्यविशेषणेन

(१) पृथिवीसमवेतत्वावच्छिन्नाभावाभावतयेत्यर्थ: ।

(२) साध्याभावत्वादित्यर्थ: ।

वायुत्वेऽतिव्याप्तिवारणसम्भवादाह, 'रूपवदन्यत्वादेति। ननु समनियताभावैक्यमते सत्तान्यपृथिवीसमवेतत्वावच्छिन्नाभावस्य सत्तान्यद्रव्यसमवेतत्वावच्छिन्नाभावाभिन्नतया विश्वसमवेतपृथिवीसमवेतत्वावच्छिन्नाभावस्य विश्वसमवेतस्पर्शवत्समवेतसामान्याभावाभिन्नतया वायुत्वादिरपि तदभाव इति न तादृशाभावसाध्यकेऽतिव्याप्तिः सम्भवतीति पूर्व्वोक्तायाः रूपाभाववान् वायुत्वादित्यत्राव्याप्तेरेवोक्तविवक्षायां दुर्व्वारतामाह, 'वस्तुत इति, अत्रायमाशयः यावतामेकाधिकरणं तावत्समुदायाधिकरणत्वमित्यस्य यत्किञ्चिदधिकरणवृत्तिसकलसाध्याभावाधिकरणत्वं यत्किञ्चिदधिकरणवृत्तिसाध्याभावत्वव्यापकाधेयताकत्वपर्य्यवसितमर्थः, साध्याभावाधिकरणाधिकरणकसकलसाध्याभावाधिकरणत्वं साध्याभावसमानाधिकरणसाध्याभावत्वव्यापकाधेयताकत्वपर्य्यवसितं वा, आद्ये व्यभिचारिमात्रे अतिव्याप्तिः जगत एव साध्यवद्यत्किञ्चिदधिकरणव्यक्तिवृत्तिसाध्याभाववत्त्वादिति समुदायपदोपादानस्याकिञ्चित्करतया तद्विवक्षणासम्भवः, द्वितीये च साध्याभावसमानाधिकरणसाध्याभावत्वमुक्तस्थले निखिलरूपानामेवाक्षतमिति तादृशसाध्याभावत्वव्यापिका न केनाप्यधिकरणेन निरूपिताधेयतेति तादृशाधिकरणाप्रसिद्धिस्तदवस्थैवेति।

---

तत्त्वचिन्तामणि-दीधितिः।

किञ्च हेतुतावच्छेदकसम्बन्धेन या साध्याभाववति वृत्तिस्तदभावो वक्तव्यः, अन्यथा धूमादावव्याप्तिः,

साध्यतावच्छेदकसम्बन्धेन साध्याभाववति कालादौ वृत्तिमन्मात्रस्यैव वृत्तेर्व्यभिचारिण्यतिप्रसङ्गो वा, तथाच सत्तादिसाध्यके संयोगेन समवायेन वा हेतावव्याप्तिः साध्याभाववति तेन सम्बन्धेन वृत्तेरप्रसिद्धेः, साधनसमानाधिकरणत्वेन साध्याभावा विशेषणीया इति चेद्विशेष्यन्तां तथापि भूतत्व-मूर्त्तत्वाद्योरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वादावतिव्याप्तिः तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः । किञ्च महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकविशेषणताविशेषेण हेतावतिव्याप्तिः तादृशसाध्याभावसमुदायवति महाकाले तेन सम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः।

---

गादाधरी विवृतिः ।

ननु स्ववृत्तिसाध्याभावत्वव्यापकं यद्यदधिकरणवृत्तित्वं तत्तदधिकरणवृत्तिसाध्याभावत्वव्यापकस्ववृत्तिताकाधिकरणमेवाधिकरणान्तार्थः, धूमवान् वह्नेरित्यादौ महानसादिकं न तथा अयोगोलकवृत्तितायास्तद्वृत्तिसाध्याभावत्वव्यापकत्वात् अयोगोलकादिवृत्तिसाध्याभावत्वस्य च समानाधिकरणधर्म्मावच्छिन्नसाध्याभावसाधारणतया तद्वृत्तित्वाव्याप्यत्वात् इत्ययोगोलकाद्येव तादृशं स्वम् इति नातिव्याप्तिः, तादृशयत्किञ्चिदधिकरणह्रदादिवृत्तित्वाभावस्य वह्न्यादौ सत्त्वेऽपि न क्षतिः तादृशं यद्यत् स्वं ताव-

दन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशात्, अन्यतमत्वञ्च तत्तदवृत्तिशून्यत्वं न तु तत्तदन्यान्यत्वम् अतो न केवलान्वयिसाध्यकेऽप्रसिद्धिः, तादृशं स्वं यद्यत्तत्तदधिकरणवृत्तित्वाभावकूटवत्त्वनिवेशेऽपि केवलान्वयिसाध्यकेऽव्याप्तिर्हेतुमतोऽपि तथात्वादिति (१) तदुपेक्षितम्। रूपसामान्याभाववान् वायुत्वादित्यादौ च सकलरूपवतामेव तथात्वं स्ववृत्तितया एव तत्तद्घटादिवृत्तिसाध्याभावत्वव्यापकत्वादतोनाव्याप्तिः। अथवा स्ववृत्तिसकलसाध्याभावसमानाधिकरणसाध्याभावत्वावच्छेदेन यदधिकरणवृत्तित्वं तादृशाधिकरणमेवाधिकरणान्तार्थः, धूमवान् वह्नेरित्यादौ च तादृशाधिकरणं न साध्यवत् तद्वृत्तिसकलसाध्याभावसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य तदवृत्तित्वात् किन्तु अयोगोलकाद्येवेति जगतोऽतथात्वात् नातिव्याप्तिः, रूपाभाववान् वायुत्वादित्यादौ च तादृशाधिकरणं तत्तद्घटादिरेव व्यधिकरणधर्म्मावच्छिन्नसाध्याभावस्यैव तद्वृत्तिसकलसाध्याभावसमानाधिकरणत्वात् तादृशस्य च तद्वृत्तित्वनियमात्, तदवृत्तिसाध्याभाववत्त्वञ्च तत्रैव प्रसिद्धमिति नाव्याप्त्यवसरः, शेषं पूर्व्ववत् (२)। अथवा व्यासज्यवृत्तिसाध्याभावमात्रवृत्तिधर्म्मावच्छिन्नाधिकरणत्वमेव साध्याभावकूटाधिकरणत्वं जगत एव साध्याभावत्वावच्छिन्नाधिकरणतया व्यभिचारिण्यतिव्याप्तिः

(१) तादृशस्वस्याक्रान्तत्वात् तद्वृत्तित्वाभावस्य हेतावसत्त्वादिति भावः।

(२) तादृशाधिकरणं यद्यत् तावदन्यतमवृत्तित्वत्वसमनियतप्रतियोगिता, अन्यतमत्वस्य पूर्व्ववदित्यर्थः।

धारणाय व्यासज्यवृत्तित्वं धर्म्मविशेषणं, तथासत्यपि जगतएव व्यधिकरणधर्म्मावच्छिन्नसाध्याभावमात्रवृत्तितथाविधधर्म्मावच्छिन्नाधिकरणत्वात् स एव दोष (१) इति आधेयतावच्छेदकतादृशधर्म्मन्यूनवृत्ति सद्व्याप्यं यद्यत्तदन्यत्वेनापि धर्म्मोविशेषणीयः, न्यूनवृत्तित्वञ्च स्वसमानाधिकरणाभावप्रतियोगित्वमात्रम्, उक्तस्थले तद्रूपव्यधिकरणधर्म्मावच्छिन्नसाध्याभावोभयत्वादिरेव तादृशो धर्म्मः तस्य रूपान्तरसाधारणत्रित्वादिन्यूनवृत्तित्वेऽपि तादृशत्रित्वावच्छिन्नस्य क्वचिदप्यवृत्तेः तस्याधेयतानवच्छेदकतया आधेयतावच्छेदकीभूततादृशधर्म्मन्यूनवृत्तिताविरहात्। न च समनियताभावैक्ये व्यधिकरणधर्म्मावच्छिन्नाभावमात्रवृत्तिव्यासज्यवृत्तिधर्म्माप्रसिद्ध्या केवलान्वयिसाध्यकेऽव्याप्तिरिति वाच्यम्। तथा सति व्यासज्यवृत्तित्वस्थले अव्यासज्यवृत्त्यनेकवृत्तिधर्म्मभिन्नत्वस्य विशेषणीयत्वात् केवलान्वयिसाध्यकस्थले साध्याभावत्वस्यैव तथात्वात्। न च तथापि तत्र तादृशाभावत्वन्यूनवृत्तिव्याप्यधर्म्माप्रसिद्ध्या तद्दोषतादवस्थ्यमिति वाच्यम्। न्यूनवृत्तिव्याप्यत्वस्थानेऽन्यूनवृत्तित्वव्याप्यत्वोभयाभाववत्त्वस्य निवेशनीयत्वादित्यतो दोषान्तरदानाय वृत्तौ हेतुतावच्छेदकसम्बन्धं निवेशयति, 'किञ्चेति, 'धूमादावव्याप्तिरिति, वह्निमन्मात्रसमवेतघटादिव्यक्तौ वर्त्तमानस्य निर्वह्निसमवेतत्वाभावस्य तत्रासत्त्वादिति भावः। एतञ्च यत्किञ्चित्सम्बन्धावच्छिन्नतादृशवृत्तितात्वसमनियतप्रतियोगिताकाभावनिवेशाभिप्राये-

(१) व्यधिकरणधर्म्मावच्छिन्नसाध्याभावकूटत्वरूपव्यासज्यवृत्तिधर्म्मः तदवच्छिन्नाधिकरणत्वं जगत इति।

ण, अन्यथा निर्वह्निसंयुक्तत्वादिसाधारणतादृशवृत्तित्वत्वं प्रति तथाविधाभावप्रतियोगिताया अव्यापकत्वात्तस्य लक्षणाघटकतया वृत्तिमन्मात्रस्यैव साध्याभावाधिकरणकालादौ वृत्तेर्निर्वह्निवृत्तित्वसामान्याभावस्य व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वादव्याप्त्यसङ्गतेः। अतएव सम्बन्धमनिवेश्य तादृशाधिकरणवृत्तितात्वसमनियतप्रतियोगिताकाभावनिवेशपक्षे दूषणान्तरमाह, 'साध्यतावच्छेदकसम्बन्धेनेति, एतच्च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य कालादावसत्त्वेऽपि तस्य यथाविवक्षितसाध्याभावसमुदायवत्त्वमक्षतमेवेति सूचनाय। 'कालादावित्यादिपदाद्विषयितासम्बन्धेन वस्तुमात्रसम्बन्धिन ईश्वरज्ञानादेः परिग्रहः; 'व्यभिचारिणीति यत्साध्यके वृत्तिमन्मात्राधिकरणस्य कालादेर्विवक्षितसाध्याभावकूटवत्त्वं तादृशव्यभिचारिहेताविल्यर्थः, द्रव्यत्वसाधनके द्रव्यत्व–पृथिवीत्वान्यतराभाव–शुद्धद्रव्यत्वाभावयोर्वायुत्वादिहेतुके रूपाद्यात्मकसाध्याभावस्य सत्तादिसाध्यके संयोगेन समवायेन वा यत्र हेतुता तत्र सत्तात्वावच्छिन्नाभावस्य च साधनवदवृत्तित्वात् साधनसमानाधिकरणत्वेनाभावे विशेषिते न तानभावानादाय (१) उक्तस्थलेषु अव्याप्त्यतिव्याप्तिप्रसञ्जनसम्भव इत्याशङ्कते, 'साधनसमानेति, सद्धेतौ व्यधिकरणधर्म्मावच्छिन्नसाध्याभावानामेव साधनसमानाधिकरणतया तादृशाभावकूटाधिकरणं जगदेव, व्यभिचारिणि च साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि तथात्वात् तादृशाभावकूटाधिकरणं

(१) न तादृशाभावमादायेति पा०।

निःसाध्यमेव, साधनसामानाधिकरण्योपलक्षिताभावाधिकरण-त्वमेव निवेश्यं न तु तत्तद्विशिष्टाधिकरणत्वं तेन व्यतिरेकिणि हेतौ तद्विशिष्टाधिकरणवृत्तित्वाभावस्य वृत्तिमद्वृत्तित्वसम्भवेऽपि नाव्याप्तिः, साधनसमानाधिकरणत्वं साधनतावच्छेदकसम्बन्धेन साधनतावच्छेदकविशिष्टवद्वृत्तित्वं तेन द्रव्यत्वादेः कालिकसम्ब-न्धेनाधिकरणे स्पन्दादौ सत्ताधिकरणे गुणादौ च द्रव्यत्व-पृथिवीत्वान्यतरत्वाद्यवच्छिन्नाभावस्य सत्त्वेऽपि द्रव्यत्व–पृथिवी-त्वोभयादिसाध्यके द्रव्यवृत्तित्वविशिष्टसत्तादौ नातिव्याप्तिः। न च सत्तायां साध्याभावकूटवद्गुणादिवृत्तित्वसत्त्वाद्विशिष्टसत्त्वे तदभावस्य दुर्लभतया नोपदर्शितसाध्यकविशिष्टसत्त्वे अतिव्याप्ति-प्रसक्तिरिति वाच्यम्। साधनतावच्छेदकावच्छिन्नवत्त्वानिवेशे द्रव्यत्वादिसाध्यकविशिष्टसत्त्वेऽव्याप्तिवारणाय साधनतावच्छेदके साध्याभावकूटवद्वृत्तितावच्छेदकत्वाभावपर्यन्तनिवेशस्यावश्यक-तया उक्तस्थलेऽतिव्याप्तिप्रसक्तेः, संयोगेन साध्ये संयोगेन घटादिहेतौ संयोगत्वावच्छिन्नसंयोगाभावस्य उत्पत्तिकालावच्छेदेन साधनवति वृत्तेर्व्याप्यवृत्तित्वविशिष्टसाध्याभावाधिकरणे गुणादौ संयोगेन वृत्तेरप्रसिद्ध्या अव्याप्तिः संयोगि सत्त्वादित्यादौ जगत एव संयोगाभाववत्त्वेनातिव्याप्तेर्वारणाय व्याप्यवृत्तित्वविशिष्टाभाव-वत्त्वनिवेशस्यावश्यकत्वादित्यतोऽनवच्छिन्नैव वृत्तिरत्र प्रवेश्या। न च साधनसमानाधिकरणत्वेन साध्याभावविशेषणेऽपि सत्तान्य-पृथिवीसमवेतशून्यं वायुत्वादित्यादौ साधनसमानाधिकरणघटत-द्वायुद्वित्व–घट-एतद्वायुद्वित्वादिरूपसाध्याभावकूटाधिकरणपृथिवी-

वृत्तित्वाभावप्रयुक्तातिव्याप्तेरनवतारितत्वात् दूषणान्तरदानमनु-चितमिति वाच्यम् । यतो हेत्वादिरूपाभावस्य नवीननये हेत्व-धिकरणे अनवच्छिन्नवृत्तिकत्वविरहः अतएव 'पृथिवीवृत्तिगुणे-त्यादेः सद्धेतुत्वमाशङ्क्य 'सत्तान्येति स्थलान्तरमनुसृतम्, इत्थञ्च नव्यनये तत्र दोषो न भवतीति भूतत्व-मूर्त्तत्वेत्याद्यनुसरणम्(१) । अथ साधनसमानाधिकरणत्वेन साध्याभावे विशेषितेऽपि सत्तावान् जातेरित्यादावव्याप्तिवारणमशक्यमेव प्रत्येकं साधनसमानाधि-करणाभ्यां द्रव्यत्वविशिष्टसत्ताभाव-द्रव्यान्यत्वविशिष्टसत्ताभावाभ्यां घटितस्याभावसमुदायस्य सामान्यादावेव सत्त्वात्तत्र च हेतुताव-च्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेः ।

यत्तु द्रव्यत्वादिविशिष्टसत्ताभावप्रतियोगितावच्छेदककोटौ सत्तात्वं न निवेश्यते द्रव्यत्वादिवैशिष्ट्यमात्रस्यैव तत्प्रतियोगिताव-च्छेदकत्वसम्भवात् (२) इति द्रव्यत्वादिवैशिष्ट्यावच्छिन्नतत्प्रति-योगितायाः सत्तात्वसमनैयत्यविरहात् न तादृशाभावस्य लक्षण-घटकतेति समाधानं, तदतितुच्छं, द्रव्यत्वविशिष्टसत्तावान् जाते-रित्यादावपीदृशयुक्त्या साध्यतावच्छेदकतादृशविशिष्टसत्तात्वस्या-भावप्रतियोगितानवच्छेदकत्वात् द्रव्यत्ववैशिष्ट्यावच्छिन्नाभावस्य च साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावाद्वाधिकरणधर्म्मा-वच्छिन्नाभावमादायातिव्याप्तेर्दुर्व्वारतया एतल्लक्षणवादिना गुरु-धर्म्मस्याभावप्रतियोगितावच्छेदकत्वमतस्यावलम्बनीयत्वात् द्रव्यत्व-

---

(१) न चेत्यादिरनुसरणमित्यन्तः पाठो वङ्गभ्यादर्शपुस्तकेषु नास्ति ।

(२) लघुधर्म्मस्यावच्छेदकत्वसम्भवे गुरुधर्म्मस्यानवच्छेदकत्वादिति भावः ।

विशिष्टसत्त्वादेः प्रतियोगितानवच्छेदकत्वेऽपि समवेतवान् जाते-रित्यादौ समवायेन एतद्रूपान्यत्वविशिष्टाभाव-तद्रूपान्यत्वविषिष्टा-भावादीनां समवेतत्वसमनियतप्रतियोगिताकतया प्रत्येकं साधन-समानाधिकरणतया च तद्घटितकूटाधिकरणे सामान्यादौ हेतु-तावच्छेदकसमवायसम्बन्धेन वृत्तेरप्रसिद्धा अव्याप्तिवारणासम्भ-वात्, एवं विशिष्टस्यातिरिक्तत्तामतावलम्बनाद्दर्शितविशिष्टाभा-वानां साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहोपपादनेन समाधानमपि हेयम् उक्तस्थल एव (१) द्रव्यत्व–तदन्यसमवेतो-भय–गुणत्व -तदन्यसमवेतोभय-कर्म्मत्व-तदन्यसमवेतोभयाभावानां साध्यतावच्छेदकसमनियतप्रतियोगिताकानां प्रत्येकं साधनसमा-नाधिकरणानां समुदायवति सामान्यादौ समवायेन वृत्तेरप्रसि-द्धा अव्याप्तेस्तावतापि वारणासम्भवात्। न च यादृशसाध्याभा-वस्तोमाधिकरणं साधनाधिकरणं तादृशस्तोमाधिकरणवृत्तित्वा-भावस्य विवक्षितत्वात् उक्ताभावसमुदायाधिकरणतायाः साधन-वत्यसम्भवात् न तत्समुदायस्य लक्षणघटकतेति नाप्रसिद्धिरिति वाच्यम्। एवं सत्यपि तादृशविशिष्टाभावाद्येकतर-व्यधिकरण-धर्म्मावच्छिन्नाभावस्तोमस्य तादृशस्याधिकरणे केषाञ्चिद्वृत्तिमताम-वृत्तेरव्याप्तितादवस्थ्यात्, एतादृशविवक्षानुसरणे भूतत्व-मूर्त्त-त्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यत्र भूतत्व-मूर्त्तत्वोभयघटि-तसाध्याभावकूटवति हेतोरवृत्तितया वक्ष्यमाणातिव्याप्तेरसङ्गति-प्रसङ्गाच्च साधनवतो निस्पर्शस्य कस्यचिदपि तादृशोभयघटित-

(१) समवेतवान् जातेरित्यादावेव।

स्तोमाधिकरणत्वविरहेण तादृशस्तोमस्य लक्षणाघटकत्वात्, प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणवैयर्थ्यापत्तेश्च पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलावृत्तित्व-तेजोऽवृत्तित्वाद्यवच्छिन्नाभावघटितकूटवत्त्वस्य क्वचिदपि साधनवत्यसत्त्वेन तादृशकूटस्य लक्षणाघटकत्वात्, यादृशकूटवत्त्वं साधनवतस्तद्वृत्तित्वाभावस्य च साधनेऽसम्भावितत्वादित्यतिव्याप्त्यनवकाशात्। अत्राहुः, साध्यतावच्छेदकावच्छिन्नसाध्यवद्वृत्तिसमानाधिकरणधर्म्मावच्छिन्नाभावभिन्नत्वेन साध्याभावविशेषणादुपदर्शितविशिष्टाभावादिनिरासः, गुण-कर्म्मान्यत्वविशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नसत्ताद्यभावसंग्रहायावच्छिन्नान्तं, वृत्तिनिरवच्छिन्ना ग्राह्या अन्यथा संयोगि सत्त्वादित्यादौ संयोगत्वावच्छिन्नसंयोगाद्यभावस्य साध्यवद्वृत्तितया व्यधिकरणधर्म्मावच्छिन्नाभावस्यैव लक्षणघटकत्वेनातिव्याप्त्यापत्तेः, सद्धेतौ साधनसमानाधिकरणस्य साध्यवद्वृत्त्यन्यस्याप्रसिद्धेः समानाधिकरणधर्म्मावच्छिन्नेति, तथाच व्यधिकरणधर्म्मावच्छिन्नसाध्याभाव एव विशिष्टभेदप्रसिद्धिः। न चैवं साधनतावच्छेदकव्यापकत्वं प्रतियोगिताविशेषणं व्यर्थम् अभाववान्मेयत्वादित्यादौ घटत्वादिरूपाभावस्योक्तविशेषणेनैव व्यावर्त्तनादिति वाच्यम्। प्रमेयसाध्यकस्थले घटत्व-पटत्वोभयाद्यवच्छिन्नप्रमेयसामान्याभावस्य गगनत्वाद्यवच्छिन्नगगनाद्यभावाभिन्नस्य संग्रहाय साध्यतावच्छेदकव्यापकत्वेन समानाधिकरणधर्म्मस्यैव विशेषणीयतया घटत्वादिरूपाभावप्रतियोगितावच्छेदकघटत्वाभावत्वादेश्चाभावत्वाव्यापकत्वेन घटत्वादौ विशिष्टभेद-

वत्वस्याक्षतत्वात् एतद्विशेषणेन तद्व्यावृत्तेः। न च वाच्यत्वादि-साध्यकस्थले घटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावस्य संयोगादिव्यधि-करणसम्बन्धावच्छिन्नवाच्यत्वाद्यभावाभिन्नतया साध्यतावच्छेद-कव्यापकसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकत्वमक्षतमिति तत्संग्रहाय समानाधिकरणसम्बन्धावच्छिन्नत्वस्यापि समानाधि-करणधर्म्मावच्छिन्नप्रतियोगित्वविशेषणताया आवश्यकत्वात् प्रमेय-साध्यकस्थलीयोक्ताभावस्य व्यधिकरणसम्बन्धावच्छिन्नगगनाद्य-भावाभिन्नत्वेऽपि प्रतियोगितावच्छेदकधर्म्मे साध्यतावच्छेदकव्याप-कत्वविशेषणमन्तरेणैव विशिष्टभिन्नत्वमव्याहतमेवेति वाच्यम्। एवमपि गगनत्वादिना प्रमेयसामान्याभावस्य समानाधिकरण-धर्म्म-तादृशसम्बन्धावच्छिन्नप्रतियोगिताकतया उक्ताभावस्य तद-भिन्नत्वेन तत्र विशिष्टभेदनिर्व्वाहाय तादृशविशेषणस्यावश्यक-त्वात्, समानाधिकरणसम्बन्धावच्छिन्नत्वविशेषणं परित्यज्य साध्य-तावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां निवेश्य तत्कार्य्यस्य(१) साध्यतावच्छेदकव्यापकत्वरूपप्रतियोगितावच्छेदकविशेषणसार्थक-त्वस्य चोपपादनसम्भवाच्च साध्यवद्वृत्तितादृशाभावस्योभयत्वा-दिना साध्याभाव एव प्रसिद्ध इति न काचिदनुपपत्तिः। एतेन (२) नीलरूप-घटत्वोभयाभाववान् नीलघटान्यत्वादित्यादौ साध-नसमानाधिकरणं नीलरूपं न घट इति(३) तादृशनीलरूप-घटत्वा-

(१) वाच्यं ज्ञेयत्वादित्यादौ घटत्वादिना वाच्यत्वाद्यभावसंग्रहस्य।

(२) साध्याभावे उक्तविशेषणदानेन।

(३) घटीयनीलरूपस्यैव तथात्वादिति भावः।

त्वकसाध्याभावघटितकूटाधिकरणाप्रसिद्धा अव्याप्तिरित्यपि निर-स्तम् । तादृशाभावे उक्तभेदासत्त्वेन व्यधिकरणधर्म्मावच्छिन्नाभाव-स्यैव लक्षणघटकत्वात्, एवं घटवृत्तित्वविशिष्टाकाशाभावादेरभावे साध्ये मेयत्वादिहेतौ साध्याभावस्य विशिष्टाकाशाभावादेराकाशा-भावाद्यनतिरिक्ततया जगत एव साध्याभावकूटाधिकरणतापत्त्या अतिव्याप्तिरिति साध्याभावत्वविशिष्टाधिकरणत्वमेव विवक्षणीयं, तथाच पटे घटवृत्तित्वविशिष्टाकाशाभावो नास्तीत्यादिप्रत्यया-भावात् पटादेर्न तादृशविशिष्टाभावाधिकरणत्वमिति न दोषः । एवञ्च साधनाधिकरणेऽपि साध्याभावत्वेन वृत्तिर्विवक्षणीया अन्यथा जातिमदन्यत्वविशिष्टाकाशाभावस्याभावे साध्ये समवायेन हेतौ सा-धनसमानाधिकरणाकाशाभावस्य साध्याभावत्वविशिष्टस्याधिकरणे सामान्यादौ समवायेन वृत्तेरप्रसिद्धा अव्याप्त्यापत्तेस्तादृशविवक्ष-याप्युक्तोभयाभावसाध्यकस्थले(१) अव्याप्तिवारणं सम्भवति प्रत्येका-धिकरणे उभयाभावाभावत्वेनावृत्तेः । यदि च घटवृत्तित्वविशिष्टा-काशाभावाद्यभावो घटत्वाद्यभावसमनियततया तदभिन्न इति घट-त्वादेरपि तदभावस्तद्घटितकूटाधिकरणता न जगत इति दर्शि-तातिव्याप्त्यनवकाशात् साध्याभावत्वविशिष्टाधिकरणत्वविवक्षणमफ-लमित्युच्यते तदापि साध्याभावत्वेन साधनवद्वृत्तित्वन्तु साध्याभाव-त्वविशिष्टाधिकरणत्वाविवक्षणेऽपि घटान्यत्वविशिष्टद्रव्यत्वाभाववान् घटत्वादित्यत्र साध्याभावस्य द्रव्यत्वस्य द्रव्यत्वत्वादिना साधन-समानाधिकरणतया द्रव्यस्यैव तद्घटितकूटाधिकरणत्वेनाव्याप्ते-

(१) नीलरूप-घटत्वोभयाभाववान् नीलघटान्यत्वादित्यादावित्यर्थः ।

वारणाय निवेश्यमेव । न चैवमपि पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादि-त्यादौ साध्यतावच्छेदकविशिष्टवद्वृत्त्योः प्रत्येकं साधनसमाना-धिकरणयोर्घटान्यत्वविशिष्टद्रव्यत्वाभाव-घटेतरपृथिव्यन्यत्वविशिष्ट-द्रव्यत्वाभावाद्योः (१) अधिकरणं गुणाद्येवेत्यतिव्याप्तिर्दुर्वारैवेति वाच्यम् । विशिष्टस्यातिरिक्ततापक्षमवलम्ब्यैव तादृशातिप्रसङ्गस्य समाधास्यमानत्वादिति । 'भूतत्व-मूर्त्तत्वाद्योरिति, उभयत्वावच्छि-न्नाभावस्य साध्यत्वे हेतौ व्यभिचारित्वाभावादन्यतरत्वावच्छिन्ना-भावस्य साध्यत्वानुसरणं, 'पृथिव्यादाविति आकाशे भूतत्वस्य मनसि च मूर्त्तत्वस्य साधनसमानाधिकरणतया अकाशस्य मनसश्च प्रत्येकं तदुभयनधिकरणत्वेन साध्याभावसमुदायानधिकरणत्वा-दिति भावः । आदिशब्दाद्भूतभेद-मूर्त्तभेदान्यतराभाववान् भूत-मू-र्त्तान्यतरत्वादित्यादौ भूतभेद-मूर्त्तभेदात्मकसाध्याभावघटितसमु-दायवति काल-दिगादौ हेतोरवृत्त्या अतिव्याप्तेः परिग्रहः । ननु साधनाधिकरणे येषां परस्परमैकाधिकरण्यं तत्समुदायस्य विवक्षि-तत्वान्नायं दोषः भूतत्व-मूर्त्तत्वाद्योः प्रत्येकं साधनसमानाधिकरण-त्वेऽपि साधनवति परस्परमैकाधिकरण्याभावेन तदुभयघटितकूट-स्य लक्षणाघटकत्वात् तदेकतरघटितकूटस्यैव तथात्वात् तद्वति च हेतोर्वृत्तेः प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणं त्याज्य-मेव एवञ्च विशिष्टस्यानतिरिक्तत्वेऽपि पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वा-

---

(१) घटवृत्तित्वविशिष्टद्रव्यत्वाभावस्य साध्यवद्वृत्तित्वात् घटेतरेति, तथापि तद्दोषात् पृथिवीति ।

दित्यादौ नोक्तरीत्या अतिव्याप्तिसम्भवः उक्तविशिष्टाभावानां साधनवति द्रव्यादावैकाधिकरण्याभावात्(२)। एवं तादृशकूटाटिकरणपृथिव्यादिवृत्तित्वस्य द्रव्यवृत्तित्वत्वादिना योऽभावस्तस्यापि तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकयावदभावान्तर्गततया तद्वत्त्वविरहादप्युक्तहेतौ नातिव्याप्तिसम्भवः। न च द्रव्यवृत्तितात्वावच्छिन्नाभावप्रतियोगितया आकाशादिवृत्तित्वसाधारणतया तादृशवृत्तित्वत्वाव्याप्यत्वान्न तादृशाभावो लक्षणघटक इति वाच्यम्। साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापत्ते प्रतियोगितायान्तादृशवृत्तित्वत्वव्याप्यत्वविशेषणव्यावृत्त्यभावेन तादृशविशेषणस्य परित्याज्यत्वात् वह्निमान् धूमादित्यत्रालोकान्यवृत्तित्वरूपेण निर्वह्निवृत्तित्वाभावस्य प्रतियोगितया आलोकादिनिष्ठपर्व्वतादिवृत्तित्वसाधारणसाधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्वं प्रत्यव्यापकतयैव तादृशाभावव्यावर्त्तनात्। व्यासज्यवृत्तिधर्म्मानवच्छिन्नत्वेन प्रतियोगिताविशेषणात् पर्व्वतसंयुक्तत्व-पर्व्वतान्यसंयुक्तत्वोभयत्वाद्यवच्छिन्नाभावस्य पर्व्वतासंयुक्तघटादौ वर्त्तमानस्य धूमादावसत्त्वेऽपि न क्षतिः। प्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणेऽपि तादृशाभावमादायाव्याप्तेरावश्यकतया एतद्विशेषणस्य तद्विशेषणसत्त्वेऽपि आवश्यकत्वात् चरमाभावप्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणपरित्यागे यत्किञ्चित्साधनाधिकरणवृत्तिसाध्या-

(२) किन्तु तदेकतरघटितकूटस्यैव तथात्वात् तद्वति हेतोर्वृत्तेरिति भावः।

भावसमुदायविवक्षणेऽपि प्रथमाभावप्रतियोगितायां साध्यतावच्छे-दकव्याप्यत्वविशेषणं परित्याज्यमेव पृथिवी द्रव्यत्वप्रकारकप्रमावि-षयत्वादित्यादौ जलाद्यसमवेतत्वावच्छिन्नाभावकूटवत्त्वस्य साधन-वत्यसत्त्वेऽपि तादृशाभावकूटवत्सामान्यादिवृत्तित्वव्यापकप्रतियो-गिताकयावदभावान्तर्गतानां पृथिव्यन्यवृत्तित्वत्वाद्यवच्छिन्नाभावा-नामेव वृत्तिमद्वृत्तीनां हेतावसत्त्वेनातिव्याप्त्यनवकाशात् एवं सत्ता-वान् जातिरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावघटितकूटाधिक-रणसमवेतत्वाप्रसिद्धिनिबन्धनाव्याप्तिवारणायोपात्तस्याभावे साध्य-वद्वृत्तिसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्म्मावच्छिन्नाभाव--भिन्नत्वरूपसाध्याभावविशेषणस्य स्थले साध्याभावप्रतियोगितायां साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताभिन्नत्वं निवेश्य व्यधिकरणधर्म्मावच्छिन्नाभावीयगगनादि-किञ्चिद्विशिष्ट-तदभावनिष्ठप्रतियोगिताभिन्नव्यधिकरणधर्म्मावच्छिन्नप्रतियोगिता--मादायैव (१) व्यधिकरणधर्म्मावच्छिन्नाभावसंग्रहे समानाधिकरण-धर्म्मे साध्यतावच्छेदकव्यापकत्वस्यानिवेशनीयतया अभावसाध्यक-स्थले साध्यतावच्छेदकन्यूनवृत्तिघटत्वाभावत्वाद्यवच्छिन्नप्रतियोगि-तासु साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिता-भिन्नत्वाभावेन घटत्वाद्यात्मकाभावव्यावर्त्तनात् साध्याभावप्रति-योगितायां साध्यतावच्छेदकव्यापकत्वविशेषणमपि परित्यजनीयम्, उक्तरीत्यापि पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ घटाद्यन्यत्व-

(१) घटत्वादिविशिष्टव्यधिकरणधर्म्मावच्छिन्नाभावाभावस्य प्रथमाभाव-स्वरूपत्वेऽपि प्रतियोगिताया अतिरिक्तत्वादिति भावः ।

विशिष्टद्रव्यत्वाद्यभावकूटस्य हेतुमत्यसत्त्वेऽपि घटान्यवृत्तित्वत्वादिना गुणादिवृत्तित्वाभावमादायातिव्याप्तिर्वारणीया इत्यतो दोषान्तरमाह, 'किञ्चेति ।

केचित्तु ननु स्ववृत्तिसाधनसमानाधिकरणसाध्याभावसमुदायाधिकरणं यद्यत् साधनाधिकरणं तद्वृत्तिसाध्याभावसमुदायाधिकरणं यद्यत् स्वं तदेव साध्याभावसमुदायाधिकरणेत्यनेन विवक्षितं सद्धेतौ तादृशं स्वं जगदेव, वह्न्यधिकरणमहानसादिनिष्ठानां निर्वह्निह्रदादिनिष्ठानाञ्च धूमादिसमानाधिकरणसाध्याभावानां व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकानां समुदायवद्यद्यत्साधनाधिकरणं तद्वृत्तितादृशसमुदायवत्त्वस्य महानसादौ साध्यवति साध्यशून्ये च ह्रदादौ सत्त्वादतो लक्षणसमन्वयः। भूतत्व-मूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ पृथिव्यादिचतुष्कमिव तादृशं स्वं गगनं मनश्च गगनवृत्तिभूतत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य गगनरूपसाधनाधिकरण एव मनोवृत्तिमूर्त्तत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य च मनस्येव सत्त्वेन निरुक्तसाधनाधिकरणवृत्तिसाध्याभावसमुदायाधिकरणत्वस्य तत्र सत्त्वात्। स्ववृत्तिसाध्याभावे साधनसमानाधिकरणत्वविशेषणानुपादाने वह्न्यादिशून्यह्रदादिनिष्ठसमानाधिकरणधर्म्मावच्छिन्नसाध्याभावघटितसाध्याभावसमुदायाधिकरणत्वस्य साधनाधिकरणेऽसत्त्वात् साध्यवदेव तादृशं स्वं तद्वृत्तित्वाभावस्य वृत्तिमद्वृत्तेर्हेतावसत्त्वेनाव्याप्तिः(१) अतस्तत्र तद्विशेषणप्रवेशः, प्रथमसमुदायानुपादाने भूत-

(१) न पुनरसम्भवः केवलान्वयिनि लक्षणसमन्वयात् ॥

त्व-मूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनं मनश्च न तादृशं स्वं तद्वृत्तिव्यधिकरणधर्म्मावच्छिन्नसाध्याभावाधिकरण-मनोगगननिष्ठभूतत्व-मूर्त्तत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य गगन-मनसोः प्रत्येकमसत्त्वात् किन्तु पृथिव्यादिचतुष्कमेव तथाविधं स्वं तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिरतस्तदुपादानं, धूमवान् वह्नेरित्यादावपि पर्व्वतादेः स्ववृत्तिसाध्याभावकूटाधिकरणमहानसादिरूपसाधनाधिकरणवृत्तिसाध्याभावसमुदायाधिकरणत्वात् जगदेव तादृशं स्वं स्यादतो यद्यदिति, तथाच पर्व्वतादिवृत्तिसाध्याभावकूटाधिकरणं यद्यत्साधनवदयोगोलकादेरपि तदन्तर्गततया तद्वृत्तिसमानाधिकरणधर्म्मावच्छिन्नाभावघटितसाध्याभावकूटस्य पर्व्वतादावसत्त्वात्तादृशं स्वं धूमादिशून्यमेवेति नातिव्याप्तिः। यद्यत्साधनाधिकरणमित्यनुक्त्वा यद्यदधिकरणमित्येतावदुक्तौ भूतत्व-मूर्त्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनादिवृत्तिसाध्याभावकूटाधिकरणं यद्यत् पृथिव्यादेरपि तदन्तर्गततया तद्वृत्तिमूर्त्तत्वादिघटितकूटस्य च गगनादावसत्त्वात् तादृशं स्वं न गगनादिकं भवेदपि तु पृथिव्यादिकमेवेत्यतिव्याप्तिरतः साधनाधिकरणत्वनिवेशः पृथिव्यादेस्तत्र साधनानधिकरणत्वान्न दोषः। धूमवान् वह्नेरित्यादावयोगोलकादिनिष्ठव्यधिकरणधर्म्मावच्छिन्नाभावाधिकरणत्वस्य पर्व्वतादौ सत्त्वाज्जगदेव तादृशं स्वं स्यादिति चरमसमुदायपदोपादानं, पूर्व्ववत् तादृशं यद्यत् स्वं तावदन्यतमवृत्तित्वव्यापकप्रतियोगिताकोऽभावो विवक्षणीयः अतो नाति-

व्याप्तिरसम्भवो वा (१) इत्यतो दोषान्तरमाह, 'किञ्चेति, इत्याहुः ।

'महाकालेति, कालान्यत्वसाध्यके कालिकविशेषणताविशेषेण हेतौ साध्यसामानाधिकरण्यविशेषणेनातिव्याप्तिवारणसम्भवान्महाकालभेदसाध्यकानुसरणम् । यद्यपि महाकालत्वसाध्यकेऽप्यतिव्याप्तिः सम्भवति वृत्तिमन्मात्र एव महाकालातिरिक्तकालवृत्तित्वस्यापि सत्त्वात्, तथापि तत्र साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावघटितवक्ष्यमाणलक्षणे प्रत्येकं तत्तत्कालमात्रवृत्तितत्तत्कालावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्ध्या नातिव्याप्तिः, साधनाधिकरणे सम्भवदैकाधिकरण्यकसाध्याभावसमुदायाधिकरणत्वस्य प्रयोजनान्तरानुरोधेन निवेशे तादृशाप्रसिद्धिविरहेऽपि साधनाधिकरणीभूतखण्डकालव्यक्तिविशेषावृत्तित्वावच्छिन्नाभावघटित-तादृशकूटाधिकरणतत्कालवृत्तित्वाभावस्य तत्कालावृत्तौ वृत्तिमति वर्त्तमानस्य साधनेऽभावान्नातिव्याप्तिरित्यग्रिमस्य 'एतेनेत्यादेरसङ्गतिरिति एकमात्रविपक्षकानुसरणम्, आदिपदान्महाकालत्वाभावादिपरिग्रहः, अवृत्तिहेतौ साध्यसामानाधिकरण्यविशेषणेनातिव्याप्तिवारणसम्भवात् 'व्यभिचारिणीति, वृत्तिमत्त्वमात्रमत्र विवक्षितं तन्मात्रस्यैव व्यावर्त्तकत्वात् (२) समवायादिना द्रव्यत्वादिहेतुके तादृशसम्बन्धेन महाकालवृत्तित्वत्वाव-

---

(१) तादृशं स्वं यत्किञ्चित् तद्वृत्तित्वाभावनिवेशेऽतिव्याप्तिः, यथाश्रुतान्यतमत्वप्रवेशे ऽसम्भवः स्यादतः पूर्व्वेदिति ।

(२) अवृत्तिहेतुव्यावर्त्तकत्वात् ।

च्छिन्नाभावस्यैव वृत्तिमति घटत्वादौ वृत्तेर्हेतावहत्तेर्नातिव्याप्ति-सम्भव इति कालिकसम्बन्धावच्छिन्नहेतुकानुसरणम् । इदमुपलक्षणम्, ईश्वरज्ञानान्यत्वादिसाध्यके (१) विषयितासम्बन्धेन हेतुमात्रे साध्याभावसमुदायवति ईश्वरज्ञानादौ (२) तेन सम्बन्धेन वस्तुमात्रस्यैव वृत्तेरतिव्याप्तिर्द्रष्टव्या । एतेन वृत्तिमद्वृत्तित्वविशेषणस्थले वृत्तिमदवृत्तित्व-तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकत्वोभयाभावस्य (३) वृत्तिमदवृत्तित्व-साध्यवद्वृत्तित्वप्रतियोगिकत्वोभयाभावस्य वा निवेशे महाकालवृत्तित्वस्य समानाधिकरणधर्मावच्छिन्नाभावे चरमदलाभावेन उभयाभावसत्त्वेऽपि न निस्तारः । एवं यथाश्रुते (४) घटत्वादिसाध्यके व्यभिचारिणि संयोगेन हेतौ साध्याभाववति (५) संयुक्तमात्रस्यैव संयुक्तत्वात् एतद्रूपत्वादिसाध्यके व्यभिचारिणि समवायेन हेतौ समवेतमात्रस्यैव एतद्रूपाद्यतिरिक्तासमवेतत्वात् (६) इत्यव्याप्तिरित्यपि द्रष्टव्यम् । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावकूटाधिकरणस्य नानाविपक्षकस्थलेऽप्रसिद्धावपि साधनसमानाधिकरणतादृशाभावकूटाधिकरणस्य नाप्रसिद्धिरिति साधनसमानाधिकरणत्वविशेषणप्रक्षेपे

---

(१) ज्ञानान्यत्वादिसाध्यके इति पा० ।

(२) ज्ञानादाविति पा० ।

(३) वृत्तिमदवृत्तित्व--साध्यवद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वोभयाभावस्येति पा० ।

(४) वृत्तिमद्वृत्त्य इत्यस्य यथाश्रुतार्थे ।

(५) गगनादाविति शेषः ।

(६) एतद्रूपमात्रसमवेतस्याप्रसिद्धत्वादिति भावः ।

तादृशाभावकूटाधिकरणतागर्भमेव लक्षणं सम्यक् साध्यतावच्छेदक-व्यापकतापेक्षया साध्यतावच्छेदकावच्छिन्नव्यापकत्वस्य गुरुत्वेऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावघटितलक्षणे सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावादिवारकोक्तविशेषणप्रवेशेन (१) म-हागौरवात्(२) विशिष्टस्यानतिरिक्तत्वे पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वा-दित्यादौ घटान्यत्वविशिष्टद्रव्यत्वभावादेरपि साध्यतावच्छेदकावच्छि-न्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतयोक्तादिशातिव्या-प्तिवारणाय एतादृशाभावघटितलक्षणेऽपि साधनवति सम्भवदैका-धिकरण्यकतादृशाभावसमुदायस्य विवक्षणीयतया पृथिवी द्रव्यत्वप्र-कारकप्रमाविषयत्वादित्यादौ समवायसम्बन्धावच्छिन्नजलासमवे-तत्वाद्यवच्छिन्नाभावघटितकूटाधिकरणसामान्यादिवृत्तित्वाभाव-वत्त्वेऽप्यतिव्याप्तेरनवकाशात् साधनवति सम्भवदैकाधिकरण्यकत्व-विवक्षामन्तरेणैव पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ घटान्यवृत्ति-त्वावच्छिन्नाभावमादायातिव्याप्तिवारणे तु उक्तस्थलेऽपि तादृशाभाव-मादायातिव्याप्तिवारणसम्भवात् प्रतियोगितायां साध्यतावच्छेदक-व्यापकत्वविशेषणं नोपादेयम् ।

---

तत्त्वचिन्तामणि-दीधितिः ।

## एतेन साध्यतावच्छेदकाच्छिन्नव्यापकतावच्छेदकरू-

---

(१) साध्यवद्वृत्तिसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्म्मावच्छिन्नाभाव-भिन्नत्वरूपसाध्याभावविशेषणप्रवेशेनेत्यर्थः ।

(२) एतत्कल्पे विशिष्टसत्ताभावावच्छिन्नाभावस्य व्यापकतावच्छेदकरूपावच्छिन्न-प्रतियोगिताकत्वाभावादेव वारणादिति भावः ।

पावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरण-याबदभावाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तय-स्तद्वत्त्वं व्याप्तिः केवलान्वयिनः संयोगाद्यभावस्याभावाः संयोगादयो न व्याप्यवृत्तयः एवं साध्यस्य गुणसामान्य-स्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्त्त-मानोऽपि न व्याप्यवृत्तिः उक्तरूपावच्छिन्नप्रतियोगि-ताकाः क्वचिदप्रसिद्ध्यादिसम्पादकाः पुनरभावा न हेतुसमानाधिकरणाः उक्तसमुदायाधिकरणवृत्तित्व-तदभाव-वृत्तिमत्त्वानि पूर्व्वोक्तरीत्या प्रत्येतव्यानीत्या-दिकमपास्तम्।

---

गादाधरी विवृतिः।

यद्यपि साधनवति सम्भवदेकाधिकरणककूटनिवेशे द्रव्यत्व-विशिष्टसत्ताभाव-द्रव्यान्यत्वविशिष्टसत्ताभावघटितकूटस्य सत्तावान् जातेरित्यादौ लक्षणघटकताप्रसक्तिस्तथापि साध्यतावच्छेदक-व्यापकप्रतियोगिताकाभावनिवेशे तादृशाभावैकतरव्यधिकरणध-र्म्मावच्छिन्नाभावघटितकूटस्य तथात्वादव्याप्तिरिति तदुपेक्ष्य उक्त-रीत्या सार्व्वभौमलक्षणपरिष्कारमपि हेतुतावच्छेदकसम्बन्धेन वृ-त्तिमद्यावदधिकरणमहाकालादिवृत्तिमात्रविपक्षकव्यभिचारिण्य-तिव्याप्त्यापत्त्या निराकुरुते, 'एतेनेति, प्रतियोगितायामवच्छिन्नान्त-विशेषणव्यावृत्तिरभाववान् मेयत्वादित्यत्रैव वह्निमान् धूमादित्या-

तादृशाभावकूटाधिकरणतागर्भमेव लक्षणं सम्यक् साध्यतावच्छेदक-व्यापकतापेक्षया साध्यतावच्छेदकावच्छिन्नव्यापकत्वस्य गुरुत्वेऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावघटितलक्षणे सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावादिवारकोक्तविशेषणप्रवेशेन (१) म-हागौरवात्(२) विशिष्टस्यानतिरिक्तत्वे पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वा-दित्यादौ घटान्यत्वविशिष्टद्रत्वभावादेरपि साध्यतावच्छेदकावच्छि-न्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतयोक्तदिशातिव्या-प्तिवारणाय एतादृशाभावघटितलक्षणेऽपि साधनवति सम्भवदेका-धिकरण्यकतादृशाभावसमुदायस्य विवक्षीयतया पृथिवी द्रव्यत्वप्र-कारकप्रमाविषयत्वादित्यादौ समवायसम्बन्धावच्छिन्नजलासमवे-तत्वाद्यवच्छिन्नाभावघटितकूटाधिकरणसामान्यादिवृत्तित्वाभाव-वत्त्वेऽप्यतिव्याप्तेरनवकाशात् साधनवति सम्भवदेकाधिकरण्यकत्व-विवक्षामन्तरेणैव पृथिव्यन्यद्रव्यत्ववत् द्रव्यत्वादित्यादौ घटान्यवृत्ति-त्वावच्छिन्नाभावमादायातिव्याप्तिवारणे तु उक्तस्थलेऽपि तादृशाभाव-मादायातिव्याप्तिवारणसम्भवात् प्रतियोगितायां साध्यतावच्छेदक-व्यापकत्वविशेषणं नोपादेयम् ।

---

तत्त्वचिन्तामणि-दीधितिः ।

**एतेन साध्यतावच्छेदकाच्छिन्नव्यापकतावच्छेदकरू-**

---

(१) साध्यवद्वृत्तिसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्म्मावच्छिन्नाभाव-भिन्नत्वरूपसाध्याभावविशेषणप्रवेशेनेत्यर्थः ।

(२) एतत्कल्पे तिशिष्टसत्तात्त्वावच्छिन्नाभावस्य व्यापकतावच्छेदकरूपावच्छिन्न-प्रतियोगिताकत्वाभावादेव वारणादिति भावः ।

पावच्छिन्नप्रतियोगिताकव्याप्यवृत्तिस्वसमानाधिकरण-यावदभावाधिकरणवृत्तित्वाभावा यावन्तो वृत्तिमद्वृत्तय-स्तद्वत्त्वं व्याप्तिः केवलान्वयिनः संयोगाद्यभावस्याभावाः संयोगादयो न व्याप्यवृत्तयः एवं साध्यस्य गुणसामान्य-स्याभावो द्रव्यत्वाधिकरणे उत्पत्तिकालावच्छेदेन वर्त्त-मानोऽपि न व्याप्यवृत्तिः उक्तरूपावच्छिन्नप्रतियोगि-ताकाः क्वचिदप्रसिद्ध्यादिसम्पादकाः पुनरभावा न हेतुसमानाधिकरणाः उक्तसमुदायाधिकरणवृत्तित्व-तदभाव-वृत्तिमत्त्वानि पुर्व्वोक्तरीत्या प्रत्येतव्यानीत्या-दिकमपास्तम्।

---

गादाधरी विवृतिः।

यद्यपि साधनवति सम्भवदैकाधिकरण्यककूटनिवेशे द्रव्यत्व-विशिष्टसत्ताभाव-द्रव्यान्यत्वविशिष्टसत्ताभावघटितकूटस्य सत्तावान् जातेरित्यादौ लक्षणघटकताप्रसक्तिस्तथापि साध्यतावच्छेदक-व्यापकप्रतियोगिताकाभावनिवेशे तादृशाभावैकतरव्यधिकरणध-र्मावच्छिन्नाभावघटितकूटस्य तथात्वादव्याप्तिरिति तदुपेक्ष्य उक्त-रीत्या सार्व्वभौमलक्षणपरिष्कारमपि हेतुतावच्छेदकसम्बन्धेन वृ-त्तिमद्यावदधिकरणमहाकालादिवृत्तिमात्रविपक्षकव्यभिचारिण्य-तिव्याप्त्यापत्त्या निराकुरुते, 'एतेनेति, प्रतियोगितायामवच्छिन्नान्त-विशेषणव्यावृत्तिरभाववान् मेयत्वादित्यत्रैव वह्निमान् धूमादित्या-

द्वावपि बोध्या, यादृशसाध्याभावकूटाधिकरणं साधनवत् तार्णाता-र्णदहनोभयाभावादिघटितकूटस्यापि तादृशकूटतया तथाविधोभयादिमद्वृत्तिपदार्थे वर्त्तमानस्य तादृशकूटाधिकरणवृत्तित्वाभावस्य हेतावसत्त्वात्। अत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनापि प्रतियोगिता विशेषणीया अन्यथा वह्निमान् पर्व्वत-वह्न्यवयवसंयोगादित्यत्र संयोगसम्बन्धावच्छिन्नवह्न्यभाव-समवायावच्छिन्न-तदभावयोः साधनाधिकरणे सामानाधिकरण्याभावेन तदुभय-घटितकूटस्य लक्षणाघटकत्वात् अतिव्याप्तिविरहेऽपि वह्निमान् धूमादित्यादौ साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नाभा-वकूटस्य उक्तक्रमेण लक्षणघटकतया तद्वति वह्न्यवयवाद्यतिरिक्ते हेतौवृत्तेरसम्भवापत्तेः। व्यापकतापि साध्यतावच्छेदकसम्बन्धेन बोध्या अन्यथा समवायेन वह्निसंयोगि साध्ये संयोगेन साध्यव्यापकस्य वह्नेः समवायसम्बन्धावच्छिन्नाभावघटितकूटाधिकरणे वह्न्यवय-वातिरिक्ते हेतौर्वृत्त्या सद्धेतावव्याप्त्यापत्तेः, इत्यञ्च संयोगेन साध्य-तायां तेन सम्बन्धेन व्यापकताप्रसिद्ध्यर्थं व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया व्याप्यवृत्तिपदोपा-दानसार्थक्यमिति केचित्। वस्तुतस्तु येन सम्बन्धेन व्यापकता तेनैवाभावो ग्राह्यः। साध्यतावच्छेदकसम्बन्धस्य विशिष्य निवेशे-ऽवच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वनिवेशे संयोगेन धूमादि-साध्यके तत्सम्बन्धावच्छिन्नधूमत्वाद्यवच्छिन्नाभावस्य धूमवत्यवच्छि-न्नवृत्तिकतया व्यधिकरणधर्म्मावच्छिन्नाभावमात्रस्य व्याप्यवृत्तित्वेना-तिव्याप्त्यापत्त्या अनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वस्यैव निवेश-

नीयतया 'एवमित्यादिपङ्क्त्यसङ्गतेर्वक्ष्यमाणत्वात् । अन्योन्याभाव-घटितव्यापकतानिवेशाच्च व्याप्यवृत्तिपदसार्थक्यं, संयोगाभावसाध्य-कस्थले संयोगघटितकूटाधिकरणताया द्रव्यमात्रे सत्त्वात् तद्वृत्ति-हेतावव्याप्तिवारणरूपं तत्पदप्रयोजनमाह, 'केवलान्वयिन इति । एतेन तत्साध्यके द्रव्यवृत्तेः सद्धेतुत्वमक्षतमिति सूचितं, गुण-वान् द्रव्यत्वादित्यादौ गुणादावनवच्छिन्नवृत्तिकगुणाद्यभाववति नित्यद्रव्यातिरिक्ते हेतोर्वृत्त्या अव्याप्तिवारणरूपमनवच्छिन्नवृत्ति-कत्वरूपव्याप्यवृत्तित्वविशिष्टाभावनिरूपिताधिकरणतानिवेशनप्र--योजनमाह, 'एवमिति । साध्याभावे उत्पत्तिकालावच्छेदेन द्रव्यवृत्तित्वकथनं द्रव्यत्वे तद्वृत्तित्वाभावासत्त्वेनाव्याप्तिप्रसङ्ग-सूचनाय, 'न व्याप्यवृत्तिरित्यत्र द्रव्यत्वाधिकरणे इत्यनुषज्यते इति व्याख्यानमसत् अनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वनिवेशे संयोगी घटादित्यत्रोक्तरीत्या अव्याप्तिवारणाय साधनवति व्याप्य-वृत्तित्वस्यावश्यं निवेशनीयतया तत्राव्याप्त्यप्रसक्तेः, साधनवति व्याप्य-वृत्तित्वपर्य्यन्तनिवेशनप्रयोजनप्रदर्शनपरतया एतत्पङ्क्तिव्याख्यापि न साधीयसी,व्याप्यवृत्तित्वविशिष्टाधिकरणत्वाप्रवेशे संयोगि सत्त्वा-दित्यत्र गुणादौ(१) व्याप्यवृत्तेः संयोगाभावस्यैव द्रव्यत्वाद्यभावस्यापि लक्षणघटकतया जगतः साध्याभावकूटानधिकरणतया अति-व्याप्त्यनवकाशेऽपि धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकसंयोगा-दिसम्बन्धावच्छिन्नप्रतियोगिताकव्यापकतावच्छेदकावच्छिन्नाभाव-कूटाधिकरणताया विश्वस्मिन् सत्त्वादतिव्याप्तेर्दुर्व्वारतया तत्प्रवे-

(१) संयोगसाध्यकसत्त्वादिव्यभिचारिहेतौ हेत्वधिकरणे गुणादाविति पा० ।

शनस्यावश्यकतया तावताप्युक्ताव्याप्तिवारणसम्भवात्, तस्माद्व्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वमत्राभिमतम्, अतोऽपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावोपेक्षा, तन्निवेशे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यैव निवेशनीयतया संयोगेन साध्यतायां व्यभिचारिणि व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्यैव संयोगेन द्रव्याभावस्यावच्छिन्नवृत्तिकान्यतया अतिव्याप्तिः, तद्विशेषणस्यैव दैशिक-कालिकाव्याप्यवृत्तिसाध्यकभेदेन स्थलद्वये व्यावृत्तिरभिहितेति सारम्।

स्वसमानाधिकरणत्वनिवेशनप्रयोजनमाह, 'उक्तरूपेति साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपेत्यर्थः, 'अप्रसिद्ध्यादीति सत्तावान् जातेरित्यादौ सत्तात्वाद्यवच्छिन्नाभावकूटाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्धिसम्पादकाः रूपाभावादिसाध्यके रूपाद्यात्मकाभावकूटाधिकरणाप्रसिद्धिसम्पादकाः सम्भवदैकाधिकरण्यापन्नसाध्याभावस्तोमाधिकरणत्वविवक्षणे सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ आदिपदग्राह्याया अतिव्याप्तेः सम्पादका बोध्याः, 'पूर्व्वोक्तरीत्येति समुदायाधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन, 'तदभावः' तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकः, हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्त्वं लक्षणघटकं बोध्यमित्यर्थः। 'अपास्तमिति, न च सार्व्वभौममते सामानाधिकरण्यस्याव्याप्यवृत्तितया साध्याभावकूटवन्महाकालवृत्तित्वस्य समानाधिकरणधर्म्मावच्छिन्नाभावोऽपि खण्डकालाद्यवच्छेदेन घटादिरूपवृत्तिमति वर्त्तत एवेति महाकालान्यत्वसाध्यके नातिव्याप्तिसम्भव इति

वाच्यम्। तथा सति वह्न्यादावपि स्वावयवाद्यवच्छेदेन निर्धूम-संयुक्तत्वाद्यभावसत्त्वेन धूमवान् वह्नेरित्यादावप्यतिव्याप्तेरुक्तस्थलेऽतिव्याप्तिवारणस्य सुदूरपराहतत्वात्।

यत्तु हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणसामान्यावच्छेदेन (१) तद्वत्त्वस्य विवक्षितत्वान्नातिव्याप्तिः व्यभिचारनिरूपकाधिकरणावच्छेदेन हेतौ तद्वत्त्वविरहादिति, तन्न, एवं सति स्वावयवाद्यवच्छेदेन घटादिवृत्तेः समानाधिकरणधर्म्मावच्छिन्नजगत्संयुक्तत्वाद्यभावस्य पर्व्वताद्यवच्छेदेन धूमादावसत्त्वादसम्भवापत्तेः वृत्तिमद्वृत्तिपदेन हेतुतावच्छेदकसम्बन्धेन यस्य यदधिकरणं तदवच्छेदेन तद्वृत्तित्वविवक्षायामपि व्याप्यवृत्तेरवच्छेदकानभ्युपगमे व्यधिकरणधर्म्मावच्छिन्नप्रतियोगिताकस्य साध्याभावकूटाधिकरणवृत्तित्वाभावस्याधिकरणानवच्छिन्नतया असम्भवस्य दुर्व्वारत्वात्। यदि च वृत्तिमत्यनवच्छिन्नवृत्तयो यावन्तस्तादृशकूटाधिकरणवृत्तित्वाभावा अनवच्छिन्नतद्वत्त्वं व्याप्तिरित्युच्यते तदा सामानाधिकरण्यस्याव्याप्यवृत्तितापत्तेऽपि न दर्शितदोषनिरासः सम्भवति समानाधिकरणधर्म्मावच्छिन्नमहाकालवृत्तित्वाभावस्य वृत्तिमत्यनवच्छिन्नवृत्तित्वविरहेण लक्षणाघटकत्वात् हेतुतावच्छेदकसम्बन्धेन यस्य यदधिकरणं तदवच्छेदेन तदवृत्तित्व-किञ्चिदवच्छिन्नत्वोभयाभाववन्तो यावन्तस्तादृशाभावकूटवद्वृत्तित्वाभावा अनवच्छिन्नतद्वत्त्वं व्याप्तिरित्युक्तौ च

---

(१) सामान्यपदप्रयोजनं तादृशातिव्याप्तिवारणम्।

न कश्चिद्दोषः, समानाधिकरणधर्म्मावच्छिन्नमहाकालवृत्तित्वाभावे किञ्चिदवच्छिन्नत्वसत्त्वेऽपि कालिकसम्बन्धेन घटाद्यधिकरणखण्डकालाद्यवच्छेदेन घटाद्यवृत्तित्वासत्त्वेनोभयाभाववत्ताया अक्षततया महाकालान्यत्वसाध्यके व्यभिचारिणि तादृशाभावस्य लक्षणघटकत्वेनातिव्याप्तिविरहात् समानाधिकरणधर्म्मावच्छिन्नजगत्संयुक्तत्वाद्यभावस्य घटादौ कपालाद्यवच्छेदेन वृत्तेः संयोगादिना यद्घटाद्यधिकरणं तदवच्छेदेन घटादावव‍ृत्तेश्च निरुक्तोभयाभाववत्त्वविरहाद्वह्निमान् धूमादित्यादौ न लक्षणघटकता अपि त्ववच्छिन्नत्वविरहेणोभयाभाववतो व्यधिकरणधर्म्मावच्छिन्नतदभावस्यैवेत्यव्याप्त्यनवकाशादिति ध्येयम्। सामानाधिकरण्यस्याव्याप्यवृत्तित्वे हेतुतावच्छेदकसम्बन्धेन किञ्चित्पदार्थाधिकरणवृत्तयो यावन्तस्तादृशाभावकूटाधिकरणवृत्तित्वनिरूपकत्वाभावाः यदधिकरणावच्छेदेन वर्त्तन्ते तत्त्वमिति वक्तव्यं महाकालवृत्तित्वनिरूपकत्वस्य समानाधिकरणधर्म्मावच्छिन्नाभावः खण्डकालवृत्तिः साधनाधिकरणमहाकाले नास्तीति नातिव्याप्त्यवकाशः सद्धेतौ तादृशाभावकूटाधिकरणजगद्वृत्तित्वनिरूपकत्वस्य व्यधिकरणधर्म्मावच्छिन्नाभाव एव हेतुतावच्छेदकसम्बन्धेन किञ्चिदधिकरणवृत्तिः स च हेत्वधिकरणसामान्य एव वर्त्तत इति लक्षणसमन्वयः। अथवा वृत्तिमद्वृत्तयो यावन्तस्तादृशसाध्याभावसमुदायाधिकरणवृत्तित्वाभावास्तद्वत्त्वाधिकरणतासामान्यकधर्म्मवत्त्वमेव विवक्षणीयं वृत्तिमत्त्वादिकञ्च दैशिकविशेषणतासम्बन्धेनैव ग्राह्यम् इत्यञ्च कालिकसम्बन्धावच्छिन्नघटत्वावच्छिन्नाधिकर-

णतायां सम्बन्धान्तरावच्छिन्नाधिकरणतावद्वृत्तेर्दैशिकसम्बन्धावच्छिन्नमहाकालवृत्तित्वाभावस्यासत्त्वादिति कृतं पल्लवितेन ।

---

तत्त्वचिन्तामणिः ।

प्रतियोग्यवृत्तिश्च धर्म्मो न प्रतियोगितावच्छेदकः तद्विशिष्टज्ञानस्याभावधीहेतुत्वात् अन्यथा निर्व्विकल्पकादपि घटो नास्तीति प्रतीत्यापत्तेः, गवि शशशृङ्गं नास्तीतिप्रतीतेरप्रसिद्धेः शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थः ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते अनुमानचिन्तामणौ व्यधिकरणधर्म्मावच्छिन्नाभावघटितलक्षणं सम्पूर्णम् ।

---

तत्त्वचिन्तामणि–दीधितिः ।

'तद्विशिष्टेति, विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वात् अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेस्तदवच्छेदकत्वमवगाहते न तु स्वातन्त्र्येण घटो नास्तीत्येव प्रतीतेः तदिहाभावप्रत्ययो यदि व्यधिकरणधर्म्मेण अवच्छिन्नं प्रतियोगिनं नाव-

गाहते नावगाहत एव तदा तस्यापि प्रतियोगितावच्छे-दकत्वम्, अथावगाहते तर्हि भ्रमएव, नच ततोऽर्थसि-द्धिरिति भावः। यदि पूनरानुभविको लोकानां स्वर-वाही घटत्वेन पटो नास्तीत्यादिप्रत्ययो न तदा तादृशाभावनिवारणं गीर्वाणगुरूणामपि शक्यमिति मन्तव्यम्।

इति श्रीमन्महामहोपाध्याय-रघुनाथशिरोमणिभट्टा-चार्य्य-विरचितायामनुमानचिन्तामणिदीधितौ व्यधिकरणधर्म्मावच्छिन्नाभावघटित-व्याप्तिलक्षणं सम्पूर्णम्।

---

गादाधरी विवृतिः।

मूले 'प्रतियोग्यवृत्तिश्च धर्म्मो न प्रतियोगितावच्छेदक इति व्यधिकरणधर्म्मावच्छिन्नाभावनिराकर्त्तुर्वादिनः प्रतिज्ञावाक्यं, धर्म्म-त्वमनुपादेयम् अवृत्तेरपि प्रतियोगितावच्छेदकताया निराकर्त्तव्य-त्वात् तत्त्वे साधकाभावादिति हेतुरूह्यः, पक्षतावच्छेदकप्रति-योग्यवृत्तित्वशरीरे च सामान्यतः प्रतियोगित्वेन प्रतियोगिनां न निवेशः सर्व्वेषामेव किञ्चिदभावप्रतियोगिनि सम्बद्धतया विशिष्ट-पक्षाप्रसिद्धेः किन्तु विशिष्य वाच्यत्वत्वादिना, तथाच वाच्यत्वाद्य-वृत्तित्वावच्छिन्ने वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साध-

नीयं समूहालम्बनानुमितिरुद्देश्या, तत्तदभावीयप्रतियोग्यवृत्तित्वावच्छिन्ने तत्तदभावप्रतियोगितानवच्छेदकत्वसाधनं न सम्यक्- समनियताभावैक्यमते समवायित्वादिना वाच्यत्वाभावस्य घटत्वावच्छिन्नपटाद्यभावाभिन्नतया समवायिपटादीनामपि तथाविधवाच्यत्वाद्यभावप्रतियोगितया तद्वृत्तिसमवायित्वादेर्वाच्यत्वाद्यभावीयप्रतियोग्यवृत्तितायाः दुर्घटत्वात् प्रतियोगितां विशिष्योपादाय तत्तत्प्रतियोगितावदवृत्तित्वावच्छिन्ने तत्तत्प्रतियोगितानवच्छेदकत्वसाधनमपि हेयं वाच्यत्वादिनिष्ठायाः प्रसिद्धसमानाधिकरणवृत्तित्वाद्यवच्छिन्नप्रतियोगितायाः उपादानेऽपि सिद्धसाधनात् सोन्दड़ोपाध्यायैरपि व्यधिकरणसमवायित्वादिधर्म्मस्य समानाधिकरणधर्म्मावच्छिन्नप्रतियोगितावच्छेदकत्वानङ्गीकारात् व्यधिकरणधर्म्मावच्छिन्नायाश्च प्रतियोगितायाः उभयवाद्यसिद्धतया विशिष्योपादानासम्भवात् ।

परे तु विशिष्य समवायित्वादिकं पक्षतावच्छेदकीकृत्य वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साधनीयं तादृशप्रतियोगितावदवृत्तित्वमेव हेतुः, यो यदवृत्तिः स तन्निष्ठप्रतियोगितानवच्छेदक इति सामान्यतोव्याप्तिप्रदर्शकः 'प्रतियोग्यवृत्तिश्चेति ग्रन्थः, वीप्साद्यभावेऽपि प्राथम्येन व्याप्तिलाभसम्भवात् वाच्यत्वाद्यवृत्तिधर्म्ममात्रस्यैव व्यधिकरणतया वाच्यत्वादिनिष्ठप्रतियोगितायां तन्मतेऽवच्छेदकतया यद्यप्यत्रान्वयदृष्टान्तदुर्भिक्षं तथापि व्यतिरेकेण वाच्यत्वादिनिष्ठमुभयत्वादिकमेव दृष्टान्तः सम्भवतीत्यदोषः । अथवा यो यदवृत्तिः स न तदवच्छेदकः

इति सामान्यव्याप्तौ कारणत्वादिव्यधिकरणकारणत्वाद्यनवच्छेदकधर्म्म एवान्वयदृष्टान्तः, प्रतियोगितावच्छेदकत्व-विषयतावच्छेदकत्वसाधारणावच्छेदकतात्वस्यैक्ये भ्रमविषयताव्यधिकरणतदवच्छेदकरजतत्वादावुक्तसामान्यव्याप्तिभङ्गवारणाय विषयतान्यत्वेन यत्पदार्थो विशेषणीय इत्याहुः ।

अथ कालिकादिसम्बन्धेन घटादिवृत्तिपटत्वादेः समवायादिना घटादिनिष्ठप्रतियोगितावच्छेदकत्वखण्डनाय तत्तत्सम्बन्धेन प्रतियोग्यवृत्तित्वं तत्तत्सम्बन्धेन प्रतियोगितावच्छेदकत्वाभावसाधने पक्षतावच्छेदकतया हेतुतया वा विवक्षणीयं, तथाच समवायादिसम्बन्धेन वाच्यत्वादिवृत्तित्वाप्रसिद्ध्योक्तरीत्या समवायादिसम्बन्धेन घटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावखण्डनानुपपत्तिः । न च प्रतियोग्यवृत्तित्वमित्यनेन प्रतियोगिनिष्ठावच्छेदकताघटकसम्बन्धावच्छिन्नाभावप्रतियोगित्वं विवक्षणीयं,तथाच घटत्वादेर्वाच्यत्वादिनिष्ठसमवायादिसम्बन्धावच्छिन्नभावप्रतियोगितया नाप्रसिद्धिरिति वाच्यम् । अव्याप्यवृत्तेः संयोगवदभावप्रतियोगितावच्छेदकस्य प्रतियोगिनिष्ठाभावप्रतियोगितया उक्तधर्म्मस्य पक्षतावच्छेदकत्वे बाधस्य हेतुत्वे च व्यभिचारस्य दुर्व्वारत्वात् प्रतियोगिनिष्ठभेदप्रतियोगितायामवच्छेदकताघटकसम्बन्धेनावच्छेदकत्वस्य विवक्षणे व्यधिकरणसंयोगादिसम्बन्धेन घटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावनिराकरणानुपपत्तिः तेन सम्बन्धेन घटत्वादेर्भेदप्रतियोगितायाम् अवच्छेदकत्वस्य वादिनोऽप्यननुमतत्वात् । एवं घटत्वादौ समवायादिसम्बन्धेन वाच्यत्वादिनिष्ठप्रतियोगितायामवच्छेदकत्वाभावः

प्रतियोग्यप्रसिद्धग्रा साधयितुमशक्यः । नैवम् । स्वप्रतियोगिकत्व-यदनुयोगिकत्वोभयाभाववद्याद्दशसम्बन्धसामान्यको यः स स्वनिष्ठत्व—तत्सम्बन्धावच्छिन्नत्वोभयाभाववत्तन्निष्ठप्रतियोगितावच्छेदकतासामान्यक इत्यर्थविवक्षया सर्व्वसामञ्जस्यात् संयोगादिसम्बन्धसामान्ये घटत्वादिप्रतियोगिकत्व-वाच्यत्वाद्यनुयोगिकत्वोभयाभाववसत्त्वात् प्रथमस्वपदेन घटत्वाद्युपादानस्य मतद्वय एव सम्भवात् तत्र स्वनिष्ठत्व-संयोगादिसम्बन्धावच्छिन्नत्वोभयाभाववद्वाच्यत्वादिवृत्तिप्रतियोगितावच्छेदकतासामान्यकत्वसाधने नोद्देश्यासिद्धिरिति (१) ।

'प्रतियोग्यवृत्तिश्च धर्म्मो न प्रतियोगितावच्छेदक इति मूलग्रन्थस्य तथात्वे मानाभावादिति शेषः । ननु समवायितया वाच्यत्वं नास्तीत्याद्याकारकः समवायित्वादेर्वाच्यत्वादिनिष्ठप्रतियोगितावच्छेदकत्वावगाही प्रत्यय एव मानमित्युक्तहेतोरसिद्धग्राशङ्कयामाह, 'तद्विशिष्टज्ञानस्येति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावलौकिकप्रत्यक्षत्वावच्छिन्नहेतुत्वादित्यर्थः । यद्यपि अन्यथा घटनिर्व्विकल्पकानन्तरं घटाभावप्रत्ययापत्तेरिति मूलप्रदर्शितयुक्त्या वाच्यत्वं न समवायीति विशेषदर्शनप्रतिबध्यवाच्यत्वत्वावच्छिन्नधर्म्मिकसमवायित्वप्रकारकज्ञानपर्य्यन्तापेक्षा समवायित्वावच्छिन्नवाच्यत्वाभावप्रत्यक्षे नायाति, तथापि स्वतन्त्रमहानसीयत्व-वह्नित्वादिप्रकारकज्ञानान्महानसीयवह्निर्नास्तीति बुद्धा-

(१) मूले प्रतियोग्यवृत्तिश्चेत्यादिः नोद्देश्यासिद्धिरितीत्यन्तः पाठो बहुषु आदर्शपुस्तकेषु नास्ति ।

नुदयात् महानसीयवह्निर्नास्तीत्याद्यभावबुद्धौ महानसीयवह्नि-त्वाद्यवच्छिन्नत्वेन वह्न्यादिनिष्ठप्रतियोगितावगाहिन्यां यथा महानसीयत्वादिप्रकारेण वह्नित्वाद्यवच्छिन्नविषयकज्ञानं हेतु-स्तथा समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेर्वाच्यत्वादिनिष्ठ-प्रतियोगितायां समवायित्वाद्यवच्छिन्नत्वावगाहित्वे समवायित्वा-दिना वाच्यत्वत्वाद्यवच्छिन्नधर्म्मिकज्ञानं अपेक्षितं तथाच वाच्यत्वं न समवायीति विशेषदर्शनदशायामप्यनुभूयमाना तथाकारा प्र-तीतिः कथमुपपद्यतां तत्र तस्या वाच्यत्वाद्यनुयोगिकसमवायित्वा-द्यभावावलम्बनत्वोपगमे सर्व्वत्रैव तथात्वमुपेयतामिति गतं व्यधिकरणधर्म्मस्य प्रतियोगितावच्छेदकत्वेनेत्यभिप्राय इति मि-श्राद्यनुसारिव्याख्यानं, तत्रेयमनुपपत्तिरवतरति, तद्धर्म्मावच्छिन्न-तन्निष्ठप्रतियोगिताकाभावबुद्धौ तद्धर्म्मप्रकारकतज्ज्ञानत्वेन न हेतुत्वसम्भवः घटत्वेन यत्किञ्चिद्घटज्ञानादपि यावद्घटप्रतियो-गिकसामान्याभावबुद्ध्युत्पत्त्या व्यभिचारात् सम्भवेऽपि वा दर्शित-विशेषदर्शनकाले निर्द्धर्म्मितावच्छेदककवाच्यत्वादिधर्म्मिकसमवायि-त्वादिभ्रमसम्भवेन व्यधिकरणधर्म्मावच्छिन्नाभावप्रतीतिनिर्व्वाहा-त्तादृशकारणताया अकिञ्चित्करत्वात्। न च वह्नित्वधर्म्मितावच्छेद-कक-महानसीयत्वप्रकारकबुद्धिं विना विशृङ्खलमहानसीयत्व-वह्नि-त्वप्रकारकज्ञानसत्त्वेऽपि महानसीयवह्नित्वाद्यवच्छिन्नाभावप्रत्ययाना-नुत्पत्त्या तद्धर्म्मसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकाभाव-बुद्धौ तद्धर्म्मावच्छिन्नधर्म्मिकतद्धर्म्मप्रकारकज्ञानत्वेन हेतुता वाच्ये-ति वाच्यत्वत्वावच्छिन्नधर्म्मिकसमवायित्वप्रकारकज्ञानं विना न

समवायित्वावच्छिन्नवाच्यत्वत्वसमानाधिकरणप्रतियोगिताकाभाव-भानसम्भव इति वाच्यम्। महानसीयवह्नित्वाद्यवच्छिन्नप्रति-योगितायां द्रव्यत्वादेरपि सामानाधिकरण्यादुक्तकार्य्य-कारणभावो-पगमे द्रव्यत्वाद्यवच्छिन्नधर्म्मिकमहानसीयत्वादिप्रकारकज्ञानस्याऽ-पि तादृशप्रतियोगिताकाभावबुद्धावपेक्षणीयतापत्तेः। अथ तद्धर्म्म-वद्वृत्तित्वेन भासमानप्रतियोगित्वे तद्धर्म्मावच्छिन्नत्वावगाहिन्यामभावबुद्धौ तद्धर्म्मावच्छिन्नधर्म्मिकतद्धर्म्मप्रकारकज्ञानत्वेन हेतुता महानसीयवह्निर्नास्तीत्यत्र च (१) वह्नित्वावच्छिन्ननिष्ठत्वेन संसर्ग-घटकतया भासमानप्रतियोगित्वे महानसीयत्वावच्छिन्नत्वं भासते स्वावच्छिन्नवह्निवृत्तिप्रतियोगिताकत्वस्याभावांशे प्रतियोगिविशे-षणतापन्नमहानसीयत्वसम्बन्धत्वादिति तत्र वह्नित्वावच्छिन्न-धर्म्मिकमहानसीयत्वप्रकारकज्ञानस्यापेक्षा न तु धर्म्मान्तराव-च्छिन्नधर्म्मिकस्य धर्म्मान्तरविशेषितवह्निवृत्तित्वेन तत्र प्रतियोगि-ताया अभानात् इति चेत् तर्हि प्रतियोगितावच्छेदकप्रकार-कज्ञानमन्तरेणाप्यभावप्रत्यक्षसामान्यापत्तिः प्रत्यक्षविशेष एव तद्धेतुतायाः स्वीकृतत्वात्. एवमप्यनतिप्रसङ्गे प्रतियोगिविशेषिता-भावबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया प्रतियोगिताव-च्छेदकप्रकारकज्ञानस्य हेतुत्वादेव निर्व्वाहेण स्वतन्त्रतद्धेतुताया-निर्वीजत्वापाताच्च। अस्तु वैतादृशरीत्यैव हेतु-हेतुमद्भावस्तथापि सम-वायितया वाच्यत्वन्नास्तीत्यत्र वाच्यत्वत्वसामानाधिकरण्यविशेषि-तत्वावच्छिन्नप्रतियोगिताया एव समवायित्वसंसर्गघटकतया भा-

(१) महानसीयवह्निर्नास्तीत्याकारकबुद्धाविति पा०।

नोपगमसम्भवेन वाच्यत्वत्वावच्छिन्नधर्म्मिकसमवायित्वप्रकारक-ज्ञानस्य तत्रानपेक्षणीयत्वमुपपद्यत इति। अत्रेदं समाधानमव-धेयम्,तदुभयधर्म्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तदुभयैकतर-धर्म्मावच्छिन्नधर्म्मिकतदन्यतरप्रकारकज्ञानत्वेन हेतुता समवायि-तया वाच्यत्वाभावस्य च व्यधिकरण-समानाधिकरणयोः समवायि-त्व-वाच्यत्वत्वयोर्द्वयोरेव प्रतियोगितावच्छेदकत्वपर्य्याप्तिरवश्यमङ्गी-कार्य्या समवायित्वमात्रस्य प्रतियोगितावच्छेदकत्वे वाच्यत्वत्वप्रका-रकज्ञानमन्तरेणापि तादृशाभावप्रतीत्यापत्तेः। तत्र समवायितया वाच्यत्वं नास्तीति प्रतीत्या समवायित्व-वाच्यत्वत्वोभयपर्य्याप्तप्रति-योगितावच्छेदकत्वानवगाहने तस्याः समवायिवाच्यत्ववदिदमिति भ्रमविरोधित्वानुपपत्तिश्च तं प्रति समवायितया प्रमेयत्व-वाच्यत्वोभयत्वनास्तीत्यादिनिश्चयव्यावृत्तेन तदुभयांशे प्रतियोगि-तावच्छेदकत्वपर्य्याप्त्यवगाहिनिश्चयत्वेनैव प्रतिबन्धकत्वात्। न च विलक्षणवाच्यत्वप्रकारतानिवेशनादेव दर्शितनिश्चयव्यावृत्तिस-म्भवे तदुभयांशेऽवच्छेदकतापर्य्याप्त्यवगाहित्वमप्रयोजकमिति वा-च्यम्। यतस्तद्धर्म्मेऽभावप्रतियोगितावच्छेदकत्वपर्य्याप्तिस्तदवच्छि-न्नस्याभावविरोधित्वप्रयोजिका तदवगाहित्वमेवाभावबुद्धेस्तदव-च्छिन्नविशिष्टज्ञानप्रतिबन्धकतायां तन्त्रं समवायितया वाच्यत्व-प्रमेयत्वोभयं नास्तीतिबुद्धेः समवायित्व-वाच्यत्वत्वोभयविशिष्टवत्ता-बुद्ध्यप्रतिबन्धकत्वे समवायित्व-वाच्यत्वत्वोभयांशे प्रतियोगिताव-च्छेदकत्वपर्य्याप्त्यनवगाहित्वमेव वीजं तस्य च समवायितया वाच्यत्वं नास्तीति धीसाधारण्ये तस्यास्तादृशधीप्रतिबन्धकत्वं नो-

त्वोभयाभावबुद्धेरिति विशेष एव नोपपद्येत। यदि च एकस्याः प्रतीतेः प्रतिबन्धकत्वं नान्यस्य इत्यत्र विषयतावैचित्र्यमात्रं वीजमास्थीयते तदा समानाधिकरणधर्म्मावच्छिन्नाभावविषयिन्या घटो नास्तीत्यादिबुद्धेरपि प्रतियोगितावच्छेदकत्वावगाहित्वं विलीयतां न हि तत्र घटत्वादिविशिष्टधीप्रतिबन्धकत्वानुरोधमन्तरेण युक्त्यन्तरं स्फुरति, स च भवतामकिञ्चित्कर एव, कपालसमवेतद्रव्यं नास्ति नीलघटोनास्तीत्यादिप्रतीतिव्यावृत्तप्रकारताविशेषस्यैव तादृशधीप्रतिबन्धकतावीजत्वसम्भवात् तथाच तत्रैव समवायितया वाच्यत्वं नास्तीत्यादिव्यधिकरणधर्म्मावच्छिन्नाभावबुद्धावपि वाच्यत्वत्वांशे प्रतियोगितावच्छेदकत्वावगाहनमशक्यापह्नवमेवेति वाच्यत्वत्वाद्यवच्छिन्नधर्म्मिकसमवायित्वादिप्रकारकज्ञानमन्तरेण न तत्सम्भवः। अथ यत्त्व-तत्त्वाननुगमेन प्रतियोगितावच्छेदकभेदेन तत्प्रकारकज्ञानहेतुताभेदस्यावश्यकतया महानसीयत्व-वह्नित्वादिरूपसमानाधिकरणधर्म्मावच्छिन्नाभावप्रत्यक्षं प्रति एकधर्म्मावच्छिन्नविशेष्यकापरधर्म्मप्रकारकज्ञानत्वेन हेतुता वाच्या न तु व्यधिकरणसमायित्व-समानाकरणवाच्यत्वत्वाद्युभयधर्म्मावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षे, समवायित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रत्यक्षत्वावच्छिन्नं प्रति समवायित्वादिप्रकारकज्ञानत्वेन क्लृप्तकारणतयैव समवायितया वाच्यत्वं नास्तीति प्रतीतिनिर्व्वाहान्न तत्र वाच्यत्वत्वावच्छिन्नधर्म्मिकसमवायित्वप्रकारकज्ञानापेक्षेति चेन्न, प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमभावप्रतीत्यावगाह्यते न तु स्वातन्त्र्येणेति नियमेन सम-

वायितया वाच्यत्वन्नास्तीत्याद्याकारिकाया एव व्यधिकरणधर्म्मावच्छिन्नाभावप्रतीतेरुपगन्तव्यतया समवायित्वविशिष्टवाच्यत्वत्वावच्छिन्नवैशिष्ट्यावगाहिन्यां तादृशबुद्धौ तु वाच्यत्वं समवायीति विशेषणतावच्छेदकविशिष्टविशेषणज्ञानस्यापेक्षितत्वेन विषकलितसमवायित्वादिप्रकारकज्ञानदशायां तादृशाभावप्रत्यक्षस्यानुत्पत्त्या तदानीं तदापत्तिवारणाय तादृशाभावप्रत्यक्षेऽपि वाच्यत्वत्वाद्यवच्छिन्नधर्म्मिकसमवायित्वादिप्रकारकज्ञानस्य हेतुताया आवश्यकत्वादिति। अत्र च विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकधीहेतुत्वमनङ्गीकुर्व्वतां यथा घटत्वादिनिर्व्विकल्पकाद्घटाद्यभावविषयकस्य घटो नास्तीत्यादिप्रत्ययस्य उपगमः तथा निर्धर्म्मितावच्छेदककसमवायित्वादिप्रकारकज्ञानादपि समवायित्वाद्यवच्छिन्नवाच्यत्वाद्यभावविषयकस्य समवायिवाच्यत्वन्नास्तीत्यादिप्रत्ययस्योपगमसम्भवाद्घटत्वादिप्रकारकज्ञानत्वेन वाच्यत्वत्वाद्यवच्छिन्नधर्म्मिकसमवायित्वादिप्रकारकज्ञानत्वेन च प्रतियोगिज्ञानस्याभावप्रत्यक्षहेतुता न सिध्यतीति विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकप्रकारकज्ञानहेतुतामतमाश्रित्यैव उक्तरीत्या अभावलौकिकत्वावच्छिन्नं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणतया तादृशकारणबाधेन व्यधिकरणधर्म्मावच्छिन्नाभावाप्रत्ययादिति मूलं व्याख्येयं, तच्चानुचितं, उक्तविशेषकारणताकल्पनोपजीव्यविशिष्टवैशिष्ट्यबोधसामान्यहेतुताश्रयविशेषणतावच्छेदकविशिष्टविशेषणज्ञानाभावस्यैव दर्शयितुमुचितत्वात्, अतो मूले 'हेतुत्वादित्यस्यापेक्षणीयत्वादित्यर्थः, इत्याः

शयेन प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्याभावधिया अपेक्षणी विशिष्टवैशिष्ट्यबोधे विशेषणतावच्छेदकविशिष्टविशेषण-ज्ञानकारणत्वमेव हेतुत्वेनाभिप्रेतमित्याह, तथाच जन्यतायाम-भावविषयकत्वावच्छिन्नत्वमविवच्यमिति विशेषणतावच्छेदकवि-शिष्टविशेषणज्ञानस्य विशिष्टवैशिष्ट्यबोधत्वावच्छिन्नाभावधीनिष्ठ-जन्यताप्रतियोगीभूतस्याभावेन समवायितया वाच्यत्वं नास्तीति प्रतीतिर्व्यधिकरणधर्म्मावच्छिन्नाभावावगाहित्वासम्भव इत्यर्थपरतया-व्याख्यानमेवोचितं न तु विशिष्टवैशिष्ट्यबोधहेतुतायामुपजीव्य-कल्पाहेतुत्वान्तरपरतयेत्याशयेनाह, दीधितौ 'विशेषणतावच्छेद-केति। अयम्भावः वाच्यत्वं समवायीति ज्ञानमन्तरेण समवा-यिवाच्यत्ववानयमिति विशिष्टवैशिष्ट्यबोधानुत्पत्त्या वाच्यत्वत्वा-वच्छिन्ननिरूपितत्वेन भासमानवैशिष्ट्ये समवायित्वावच्छिन्ननिरू-पितत्वावगाहिनि ज्ञाने वाच्यत्वत्वावच्छिन्नधर्म्मिकसमवायित्वादि-प्रकारकज्ञानत्वेन हेतुताकल्पनमावश्यकं समवायितया वाच्यत्वं नास्तीति व्यधिकरणधर्म्मावच्छिन्नाभावबुद्धेरपि वाच्यत्वत्वाव-च्छिन्नीयत्वेन भासमाने अनुयोगितारूपवैशिष्ट्ये समवायित्वाव-च्छिन्नीयत्वावगाहितया तत्र तादृशज्ञानमवश्यापेक्षणीयमिति। ननु वैशिष्ट्यांशे वाच्यत्वत्वनिष्ठधर्म्मितावच्छेदकतानिरूपकविशे-षणतापन्नसमवायित्वावच्छिन्नप्रतियोगिताकत्वावगाहिबुद्धावेव तद-वच्छिन्नधर्म्मिकसमवायित्वप्रकारकज्ञानं हेतुः व्यधिकरणधर्म्माव-च्छिन्नाभावबुद्धौ च वाच्यत्वत्वावच्छिन्ने समवायित्वस्य विशेषणत्वं नोपेयते अपि तु तद्विशेषणतानापन्नस्यैव तस्य स्वावच्छिन्नप्रति-

योगिताकत्वसम्बन्धेनाभावांशे विशेषणत्वमुपेयते वाच्यत्वसंसर्गतावच्छेदकतयैव वा तथाविधतदवच्छिन्नत्वस्य प्रतियोगितांशे भानमुपेयते तथाच तत्र नोपदर्शितज्ञानापेक्षेत्याशङ्कां परिजिहीर्षुर्भावं व्याचष्टे, 'अभावप्रत्ययो हीति, 'विशेषणस्य' विशेषणप्रतियोगिघटादिनिरूपितविशेषणतापन्नस्य घटत्वादेः, 'प्रतियोगितावच्छेदकत्वमवगाहते,(१) प्रतियोगितया भासमानघटादिनिरूपितविशेषणतावच्छिन्ना या स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नघटत्वादिनिष्ठप्रकारता तच्छालीभवतीति यावत्। 'न तु स्वातन्त्र्येण' न प्रतियोग्यविशेषणत्वेन, घटत्वादेः प्रतियोगितावच्छेदकत्वमवगाहते इत्यनुषङ्गेनान्वयः, तादृशसम्बन्धावच्छिन्नघटत्वादिप्रकारता प्रतियोगिनिरूपितप्रकारतानवच्छिन्ना न भवतीत्यर्थः। 'घटो नास्तीत्येवेति अभावांशे स्वातन्त्र्येण घटत्वादिवैशिष्ट्योल्लेखरहितायाएव इत्यर्थः। 'प्रतीतेः,' अनुभवादिति शेषः, एतावता किमायातमित्यत आह, 'तदिहेति,'अवच्छिन्नं' विशेषितं,'तस्यापि प्रतियोगितावच्छेदकत्वं' तस्य प्रतियोगितावच्छेदकत्वमपि, तथाच मानाभावेन व्यधिकरणधर्म्मस्य प्रतियोगितावच्छेदकत्वासिद्धिरिति भावः। अथ व्यधिकरणधर्म्मस्य प्रतियोगिविशेषणतयैव व्यधिकरणधर्म्मावच्छिन्नाभावबुद्धौ भानमुपेयते। न चैवं सति तादृशबुद्धेः समवायित्वादिरूपविशेषणतावच्छेदकप्रकारकवाच्यत्वादिज्ञानजन्यतावच्छेदकाक्रान्ततया तादृशज्ञानं विना व्यधिकरणधर्म्मावच्छिन्नाभाव-

(१) एतेन 'तदवच्छेदकत्वमवगाहते' इत्यत्र 'प्रतियोगितावच्छेदकत्वमवगाहते' इति पाठः क्वचिदादर्शपुस्तके वर्त्तत इत्यनुमीयते।

बुद्ध्यानुपपत्तिरिति वाच्यम् । भ्रमात्मकताद्दशज्ञानदशायामेव तद्बुद्ध्युपगमात् विशेषदर्शनदशायामपि आहार्य्यतत्प्रकारज्ञान-सम्भवात् अनाहार्य्यस्यैव विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वे विशेषदर्शनकालीनायाः समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेरगत्या वाच्यत्वाद्यधिकरणकसमवायित्वाद्य-भावावगाहित्वमुपेयते, वाच्यत्वं समवायि इत्यादिभ्रमानन्तरं समवायिवाच्यत्वं नास्तीत्याकारकप्रत्यय एव व्यधिकरणधर्म्मस्य प्रति-योगितावच्छेदकत्वे मानमास्तां तत्र तदवगाहितायाः सर्व्वानुभव-सिद्धत्वेनापह्नोतुमशक्यत्वात्, ताद्दशप्रतीतेर्व्वाच्यत्वे समवायित्वाभावा-वगाहित्वोपगमे तत्पूर्व्वं वाच्यत्वं समवायीति भ्रमापेक्षानुपपत्तेरि-त्याशयेनाशङ्कते, 'अथावगाहत इति, समाधत्ते, 'तर्हि भ्रम एवेति व्यधिकरणधर्म्मस्य प्रतियोगितावच्छेदकत्वांशेऽपि भ्रम एव इत्यर्थः, वैशिष्ट्यभान एवावच्छेदकताया भानादवच्छेदकताया वैशिष्ट्य-नियततया तद्बाधे तस्या अपि बाधादिति भावः । न चैवं 'गवि शशशृङ्गं नास्तीति प्रतीतेरसिद्धेरिति मूलासङ्गतिस्ताद्दश-प्रतीतेः शृङ्गांशे शशीयत्वावगाहितानभ्युपगमे शशीयत्वे शृङ्ग-निष्ठप्रतियोगितावच्छेदकत्वावगाहनासम्भवात् तदवगाहित्वे भ्रम-त्वात् उभयथापि व्यधिकरणधर्म्मावच्छिन्नाभावासाधकत्वात्ताद्दश-प्रतीतिनिराकरणस्यानुपयुक्तत्वादिति वाच्यम् । अभ्रान्तानामपि गवि शशशृङ्गं नास्तीति व्यवहारमूलकप्रतीतिसत्त्वेनोक्तनियमस्यैवा-सिद्ध्या व्यधिकरणधर्म्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव ताद्दशप्रतीते-र्गोशृङ्गाधिकरणकशशीयत्वाभावावगाहित्वोपगमे तस्या गवाधिक-

रणकाभावावगाहितायामनुभवविरोध इत्याशङ्कामुत्थाप्याभ्रान्त-पुरुषीयगवाधिकरणकाभावावगाहिताद्दशप्रतीतिनिराकरणपरतया तदुग्रन्थस्यावतारणीयत्वात्। नन्वभ्रान्तानां गवि शशशृङ्गं नास्तीति-प्रतीतिर्म्मा भूत् शशशृङ्गं नास्तीतिप्रतीतिस्तु नापह्नोतुं शक्यते सर्व्वे-षामेव तथाविधव्यवहारदर्शनादित्याशङ्कायां 'शशशृङ्गं नास्तीत्या-दिमूलावतारो बोध्यः। यद्यपि शशशृङ्गं नास्तीतिशब्देन शशे शृङ्गा-भाव इत्याकारकः शाब्दबोधो न शक्यते जनयितुम् अनुयोगिवाच-कपदोत्तरसप्तमीविरहेण निराकाङ्क्षत्वात्। तथापि पदार्थोपस्थित्या-दिमूलकताद्दशमानसबोधजननेच्छया व्युत्पन्नानां तथा प्रयोग-इत्याशयः। ननु घटत्वेन घटो नास्तीत्याकारकस्याभावप्रत्ययस्या-नुभविकतया प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्व-मभावप्रत्यययोऽवगाहत इति न नियमः ताद्दशप्रतीत्या स्वातन्त्र्येण भासमानघटत्वादौ प्रतियोगितावच्छेदकत्वावगाहनात्, अन्यथा घटत्वेन इत्याकारकतानुपपत्तेः, तथाच घटत्वेन पटो नास्ति इत्यादावपि घटत्वादौ पटादिनिष्ठप्रतियोगितावच्छेदकत्वावगाहनं निर्विरोधमेवेति व्यधिकरणधर्म्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव। न च व्यधिकरणधर्म्मावच्छेदकत्वावगाहनसम्भवेऽपि अतिरिक्ता-भावादिकल्पनभयेन ताद्दशप्रतीतिः पटाद्यधिकरणकघटत्वाद्य-भावावगाहित्वमेव स्वीक्रियते इति वाच्यम्। असति बाधके तच्छब्दोल्लेखिप्रतीतेः तच्छब्दप्रतिपाद्यार्थविषयकत्वापरित्यागात्, घटाद्यधिकरणकघटत्वाद्यभावस्य च घटत्वेन घटो नास्तीत्यादि-शब्दात् कथमप्यप्रतीतेः, प्रतीतिबलात् पदार्थान्तरसिद्धौ पदार्थ-

कल्पनागौरवस्य फलमुखत्वेनाबाधकत्वात् । न च प्रतियोगिता-वच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणबाधेन तादृशप्रतीतिः व्यधिकरणधर्म्मावच्छिन्नाभावावगाहिता न सम्भवतीति युक्तम् । पटत्वाद्यवच्छिन्नधर्म्मिकघटत्वादिप्रकारकज्ञानत्वेन प्रतियोगिज्ञानहेतुतायां मानाभावात्तादृशज्ञानं विनैव घटत्वेन पटो नास्तीत्याद्याकारकस्य घटत्वादिविशिष्टपटादिवैशिष्ट्यानवगाहिनोऽभावप्रत्यक्षस्य स्वीकारात् । वस्तुतस्तु कुत्राप्यभावबुद्धौ स्वातन्त्र्येण प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य हेतुता नास्ति । न च तदकल्पने प्रतियोगिज्ञानशून्यकाले नास्तीत्याकारकप्रतियोग्यविषयकाभावप्रत्यक्षस्य घटत्वादिनिर्विकल्पकानन्तरं विशेष्ये विशेषणमिति रीत्या घटाभावप्रत्यक्षस्य चापत्तिरिति वाच्यम् । प्रतियोगिज्ञानहेतुतामतेऽपि अभावे प्रतियोगितया घटादिरूपप्रतियोगिज्ञानविरोधिबाधादिग्रहसत्त्वे प्रतियोग्यविषयकाभावग्रहापत्तेर्दुर्व्वारत्वात् । यदि च निर्द्धर्म्मितावच्छेदकप्रतियोगिभाने विरोधाभावात् प्रतियोग्यविषयकाभावप्रत्ययोनापादयितुं शक्यते, तथापि तादृशबाधदशायां प्रतियोगिधर्म्मितावच्छेदकतानापन्नाभावत्वप्रकारकस्य स्वातन्त्र्येण प्रतियोगिविषयकस्य नास्ति घटीयश्चेत्याकारकसमूहालम्बनप्रत्यक्षस्यापत्तिः एवं घटत्वावच्छिन्नप्रतियोगिताकाभावस्य यदा भानं तदा निर्विकल्पकोपस्थितद्रव्यत्वादेर्विशेष्ये विशेषणमिति रीत्या घटाद्यंशे भानापत्तिश्च कारणबाधेन न शक्यते वारयितुं तादृशाभावस्य द्रव्यत्वावच्छिन्नप्रतियोगिताकत्वविरहेण तज्ज्ञाने द्रव्यत्वादिप्रकारकज्ञानस्यानपेक्षणात् ।

यदि च यादृशप्रकारतावच्छिन्ने धर्म्मे स्वावच्छिन्नप्रतियोगिताकत्व-सम्बन्धावच्छिन्नधर्म्मान्तरनिरूपितप्रकारता–तदन्यप्रकारतानिरू-पितविशेषणविषयतानिरूपितसंसर्गतासम्बन्धेन ज्ञानं प्रति अभा-वीयानुयोगिताविशेषभेदस्य कारणतां कल्पयित्वा ईदृशापत्तिः प्र-तियोगिप्रकारतानिरूपितधर्म्मितावच्छेदकतापन्नावृत्तिप्रकारतावि-शेषसम्बन्धेन लौकिकप्रत्यक्षं प्रत्यभावत्वभेदस्य कारणतां कल्पयित्वा च पूर्व्वापत्तिः (१) वार्य्यते तदा तावतैव सकलापत्तिवारणादलं प्रतियोगिज्ञानहेतुतया। न चैवमपि प्रतियोग्यविषयकस्याभाव-त्वाप्रकारकप्रत्ययस्यापत्तिर्विना प्रतियोगिज्ञानहेतुतां न शक्यते वारयितुं इति वाच्यम्। प्रतियोगिज्ञानं विना प्रतियोग्यविषयकस्य इदन्त्वादिना अभावप्रत्यक्षस्य इदन्त्वादिरूपतादृशविशेषणज्ञाना-सत्त्वे च तादृशस्य अभावनिर्व्विकल्पस्येष्टत्वात् अभावनिर्विकल्प-कानुपगमे प्रतियोगिज्ञानहेतुतयापि तद्वारणासम्भवात् इदन्त्वा-दिना अभावप्रत्यक्षे व्यभिचारवारणाय अभावत्वप्रकारकाभावप्र-त्यक्षत्वावच्छिन्नं प्रत्येव प्रतियोगिज्ञानहेतुताया वाच्यत्वात्, विशेष-णानवच्छिन्नविषयतासम्बन्धेन प्रत्यक्षं प्रति अभावभेदस्य हेतुतां स्वीकृत्य तद्वारणे च मयापि तथैव तस्य वारणीयत्वात्। वस्तु-तस्तु आपाद्याप्रसिद्धैव तादृशफलापत्त्यनवकाशः प्रसिद्धाया घटो नास्तीत्यादिबुद्धेर्घटत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र प्रति-योगितावच्छेदकघटत्वादिप्रकारकज्ञानस्य विशेषणतावच्छेदकज्ञा-

---

(१) नास्ति घटीयस्त्वेत्याकारकसमूहालम्बनप्रत्यक्षापत्तिरित्यर्थः।

नविधया हेतुतायाः क्लृप्तत्वात् तादृशकारणविरहादेव न तच्छून्य-
काले तदापत्तिः ।

यत्तु अनाहार्य्यप्रतियोगितावच्छेदकविशिष्टप्रतियोगिप्रकार-
कोपलम्भविरहो विशेष्यीभूततत्तद्धर्म्मिप्रत्यासन्नोऽभावग्रहहेतुः त-
थाच यस्य पुंसः समवायित्वादिविशिष्टवाच्यत्वादिप्रकारकोऽना-
हार्य्यभ्रमोऽप्रसिद्धः तदीयः समवायितया वाच्यत्वन्नास्तीकारकप्र-
त्ययो न व्यधिकरणधर्म्मावच्छिन्नाभावमवगाहितुमिष्टे तदीयतादृ-
शप्रतियोग्युपलम्भविरहरूपतदीयाभावप्रत्यक्षकारणस्याप्रसिद्धेरिति
तत्पुरुषीयतादृशप्रत्ययस्य वाच्यत्वाद्यनुयोगिकसमवायित्वाभाव-
विषयकत्वस्यावश्यकत्वे सर्व्वत्रैव तद्विषयकत्वमुचितं एकाकार-
प्रतीतेः पुरुषभेदेन विषयवैचित्र्यविरहादिति मिश्रोक्तव्यधिकरण-
धर्म्मावच्छिन्नाभावनिराकरणस्य पन्थाः सोऽपि न साधीयान् ।
अभावबुद्धौ स्वप्रतियोगितावच्छेदकविशिष्ट-स्वप्रतियोगिमत्त्वोप-
लम्भत्वेन एककारणतायाः स्वत्वाननुगमेन दुर्व्वचतया विशिष्य
कारणताकल्पनस्यावश्यकत्वे यत्र तादृशोपलम्भप्रसिद्धिस्तत्रैव तादृ-
शोपलम्भानन्तरमभावप्रत्ययवारणाय तदभावहेतुतोपगमाद्व्यधि-
करणधर्म्मावच्छिन्नाभावबुद्धौ क्वचिदप्रसिद्ध्या तदभावहेतुत्वासम्भवे-
ऽपि सन्निकर्षादिघटितसामग्रीतस्तदुत्पत्तौ बाधकादित्यत आह,
'यदि पुनरिति,'स्वरसवाही' विवादशून्यः, घटत्वेन घटो नास्तीति
पाठः घटत्वेन पटो नास्तीति पाठो न साधुस्तादृशप्रतीतेः
पटाद्यनुयोगिकघटत्वाद्यभावावगाहितया एव व्यधिकरणधर्म्मा-
वच्छिन्नाभावानभ्युपगन्तृभिरुपगमात् प्रतियोगिविशेषणतापन्न-

स्यैव प्रतियोगितावच्छेदकत्वं भासत इति नियमस्य तदाकार-प्रतीतिबलेनाशक्यवारणात्, 'आनुभविक इत्यस्य व्यधिकरणधर्म्म-स्यावच्छेदकत्वावगाहितया अनुभवसिद्ध इत्यर्थकतया वा कथञ्चित् सङ्गमनीयः, 'गीर्व्वाणगुरूणामपि न शक्यमित्यनेन प्रतीति-कारणबाधेन तादृशाभावनिराकरणवन्तोमिश्रादय आक्षिप्ताः। 'यदि तदा इत्यनेन तादृशप्रतीतेरानुभविकत्वे विवादं प्रदर्शयता तादृशाभावस्यापारमार्थिकत्वं सूचितम्।

इति श्रीमहामहोपाध्याय-गदाधरभट्टाचार्य्यविरचितायां अनुमानचिन्तामणिदीधितिविवृतौ व्यधिकरणधर्म्मावच्छिन्नाभावघटितव्याप्तिलक्षणं सम्पूर्णम्।

---

तत्त्वचिन्तामणौ

पूर्व्वपक्षः ।

अथ साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वं व्याप्तिः केवलान्वयिनि साध्यासामानाधिकरण्यं निरधिकरणे आकाशादौ प्रसिद्धमिति चेन्न ।

---

तत्त्वचिन्तामणि–दीधितौ

पूर्व्वपक्षदीधितिः ।

'साध्येति साध्यस्यासामानाधिकरण्यं येषु तेषामनधिकरणत्वं तदभाववत्त्वमितियावत् तस्मिन् सति साधिकरणत्वं तदवच्छिन्नाधिकरणताकत्वम् सतिसप्तम्याव-च्छेदकत्वलाभात्, तच्चेहान्यूनवृत्तित्वम् एवञ्च साध्यवद-वृत्तिसकलपदार्थाभाववत्त्वं यदधिकरणताया अन्यूनवृत्ति तत्त्वमिति तु फलितार्थः ।

---

गादाधर्य्यां विवृतौ

पूर्व्वपक्षदीधितिविवृतिः ।

'साध्यासामानाधिकरण्यानधिकरणत्वे सति साधिकरणत्वमिति लक्षणे दलयोः सामानाधिकरण्यं सतिसप्तम्यर्थः । विशेष्यदलमवृत्तिहेतुकातिव्याप्तिवारकपरमिति यथाश्रुतव्याख्यानं न साधु

अवृत्तौ साध्याधिकरणावृत्तित्वसत्त्वात् साध्यासामानाधिकरण्य-पदस्य साध्यानधिकरणाधिकरणकत्वाद्यर्थकतायामेव विशेषण-दलस्यावृत्तिसाधारण्यसम्भवात् तथाच सति एतादृशसाध्यासामा-नाधिकरण्याप्रसिद्धया केवलान्वयिन्यव्याप्तेः साध्यासामानाधि-करण्यं नोक्तरूपं किन्तु साध्याधिकरणानधिकरणत्वरूपं तदन-धिकरणत्वमप्यवृत्तिसाधारणम् अधिकरणाप्रसिद्धया अनधिकरणा-प्रसिद्धेरवृत्तौ तदसत्त्वात् इति चेदेवमपि 'केवलान्वयिनीत्यादि-ग्रन्थविरोधः, तेन गगनादौ साध्यासामानाधिकरण्यप्रसिद्धिदर्शनात् साध्यसमानाधिकरणे व्यभिचारिण्यतिव्याप्तिश्चेत्यालोच्य लक्षणम-न्यथा व्याख्यातुमुपक्रमते, 'साध्यस्येति, साध्यपदासामानाधिक-रण्यपदयोर्बहुव्रीहिबलात् साध्यासमानाधिकरणलाभः, तदनधि-करणत्वं यदि तदधिकरणत्वाभावस्तदा केवलान्वयिनि अवृत्तेरेव साध्यवदवृत्तितया तदनधिकरणत्वाप्रसिद्धया अव्याप्तिरतोऽनधि-करणपदं अभाववदर्थकतया व्याचष्टे, 'तदभाववत्त्वमिति, सति-सप्तम्याः सामानाधिकरण्यार्थकतया तदभाववत्त्वसमानाधि-करणसाधिकरणत्वस्य विवक्षितत्वे धूमादिहेतौ वह्न्याद्यसमाना-धिकरणधूमत्वादिमत्त्वादव्याप्तिरत आह, 'तदवच्छिन्नेति, अवच्छे-द्यावच्छेदकभावः कुतो लभ्यते इत्याशङ्कायामाह, 'सतिसप्तम्येति, 'अनधिकरणत्वे सतीत्यत्र या सप्तमी तत इत्यर्थः, 'अवच्छेदक-त्वलाभादिति तदभाववत्त्वरूपप्रकृत्यर्थे अधिकरणतानिरूपकत्व-रूपसमभिव्याहृतसाधिकरणत्वपदार्थैकदेशाधिकरणतानिरूपकता-वच्छेदकतालाभादित्यर्थः, अवच्छेदकत्वञ्चेदनतिरिक्तवृत्तित्वरूपं

विवक्ष्यते तदा विषमव्याप्ते धूमादावव्याप्तिः वह्न्यसमानाधिकरणपदार्थाभावस्य हेतुशून्यसाध्याधिकरणसाधारणस्य हेत्वतिरिक्तवृत्तित्वात् साध्यव्यापके व्यभिचारित्वातिव्याप्तिश्च तत्र साध्यसमनियतस्य साध्यासमानाधिकरणपदार्थाभाववत्त्वस्य हेत्वनतिरिक्तवृत्तित्वादत आह, 'तच्चेहेति, 'अन्यूनवृत्तित्वं' व्यापकत्वं, समुदितार्थमाह, 'साध्यवदवृत्तीति । साध्यानधिकरणाधिकरणकत्वरूपं साध्याधिकरणानधिकरणकत्वरूपञ्च साध्यासामानाधिकरण्यं केवलान्वयिसाध्यके न प्रसिद्ध्यतीति साध्यासामानाधिकरण्यपदस्य साध्यवदवृत्तित्वार्थकता स्फुटीकृता, धूमवदवृत्तिकृदत्वाद्यभावस्य वह्निव्यापकत्वादतिव्याप्तिरतः साध्यवदवृत्तयो ये ये पदार्थास्तदभावकूटलाभाय सकलेति, इत्थञ्च साकल्यावच्छिन्नतावत्पदार्थाभावस्य केवलान्वयित्वेऽपि न क्षतिः । साध्यवद्वृत्तित्वावच्छिन्नप्रतियोगिकैकसामान्याभावश्च निवेशयितुमशक्यः । येन येन सम्बन्धेन यस्य साध्यवद्वृत्तित्वं तत्तत्सम्बन्धावच्छिन्नतदभावस्य निवेशनीयत्वात्, प्रतियोगितावच्छेदकसम्बन्धाद्यननुगमेनाभावैक्यासम्भवात् । विशेषणताविशेषसम्बन्धमात्रनिवेशपक्षे तत्तदननुगमविरहादेक एव सामान्याभावो निवेशनीयः । साध्यपदं साध्यतावच्छेदकविशिष्टपरं अतो विशिष्टसत्तावान् जातिरित्यादौ गुणत्वादेः (१) शुद्धसाध्यवद्वृत्तित्वेऽपि न क्षतिः । तद्वत्त्वञ्च साध्यतावच्छेदकसम्बन्धेन बोध्यं, तेन समवायेन वह्नौ साध्ये पर्व्वतत्वादेर्वह्निसंयोगिवृत्तित्वेऽपि संयोगेन हेतौ धूमे नाति-

(१) ज्ञानत्वादेरिति पा० ।

व्याप्तिः। यत्पदं हेतुतावच्छेदकविशिष्टपरं अतो द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः। तदधिकरणता हेतुतावच्छेदकसम्बन्धेन बोध्या तेन समवायादिना धूमाधिकरणताया निर्वह्निसाधारण्येऽपि न क्षतिः।

---

तत्त्वचिन्तामणि-दीधितिः।

यथासन्निवेशे अधिकरणत्वस्य न वैयर्थ्यं हेतुतावच्छेदकसम्बन्धलाभाय वा तत्। येन येन सम्बन्धेन योयः साध्यवदवृत्तिस्तेन तेन सम्बन्धेन तत्तदभावो-बोध्यः, एतेन साध्यवदवृत्तित्वं यदि साध्यतावच्छेदकसम्बन्धेन विवक्षितं तदा समवायेन साध्यतायां साध्यवदसमवेतस्य सार्व्वत्रिकत्वात्मकलतच्छून्याप्रसिद्धिः। अथ तदभावोऽपि तादृशेनैव सम्बन्धेन वाच्यस्तदा जातिमान् प्रमेयत्वादित्यादावतिव्याप्तिः जातिमदसमवेतानां समवायेनाभावस्य केवलान्वयित्वादतएव न संयोगेन समवायेन वा, इदं न जातिमज्जातित्वादित्यादौ साध्यवत्समवेताद्यप्रसिद्धेश्च। नापि साधनतावच्छेदकेन, इदमेतद्रूपभिन्नं गुणत्वादित्यादावतिव्याप्तेः। नापि विषयतया, घटभिन्नं मेयत्वादित्यत्राप्यतिव्याप्तेः सविषयकमात्रस्यैव घटभिन्नविषयत्वात् घटनिर्व्विकल्प-

केऽपि घटत्वादिभानात्। नापि सम्बन्धमात्रेण, द्रव्यं सत्त्वादित्यादावतिव्याप्तेः वृत्तिमन्मात्रस्यैव स्वरूपसम्बन्धेन महाकाले वृत्तेरवृत्तेरभावस्य च केवलान्वयित्वादिति प्रत्युक्तम्। विशेषणताविशेषेण वा साध्यवदवृत्तित्वं वक्तव्यं सर्व्वत्रैव तत्तद्व्यक्तित्वे तत्तदन्यान्यत्वे तत्प्रकारकप्रमाविषयत्वे वा तत्सुलभम्। तेनैव सम्बन्धेन तदवच्छिन्नसामान्याभावो वाच्य इति।

---

गादाधरी विवृतिः।

ननु हेतुव्यापकतानिवेशेनैवोपपत्तेस्तदधिकरणत्वनिवेशे वैयर्थ्यमतआह, 'यथासन्निवेश इति यथोक्तविशेष्य-विशेषणभावक्रमेण निवेश इत्यर्थः, 'न वैयर्थ्यमिति हेतुविशेषितव्यापकतायाः प्रकृतलक्षणाघटकतया तदघटितस्य लक्षणत्वसम्भवेऽपि न वैयर्थ्यावसरः, प्रकृतलक्षणघटकस्य तथात्वसम्भव एवाधिकांशवैयर्थ्यात्। वैयर्थ्याभावेऽप्यनतिप्रयोजनकत्वं दुर्व्वारमेवेत्यतआह, 'हेतुतावच्छेदकसम्बन्धेति हेतुतावच्छेदकसम्बन्धेन हेतुं प्रति व्यापकताया लक्षणघटकत्वसूचनयेत्यर्थः। सम्बन्धसामान्येन हेतुं प्रति व्यापकताया निवेशे धूमादेर्वह्न्याद्यव्याप्यतापत्तेरिति भावः। यत्किञ्चित्सम्बन्धेन साध्यवदवृत्तेर्यत्किञ्चित्सम्बन्धावच्छिन्नाभावनिवेशे धूमाद्यसमानाधिकरणायोगोलकत्वादेर्व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य वह्न्यादिव्याप-

कत्वादतिव्याप्तिः। साध्यतावच्छेदकसम्बन्धेन साध्यवदवृत्ति-त्वादिविवक्षणे च वक्ष्यमाणदोषाणां दुर्व्वारतेत्यालोच्य साध्य-वदवृत्तितानिर्वाहकसम्बन्धाभावप्रतियोगितावच्छेदकसम्बन्धयोरैक्यं विवक्षति, 'येन येनेति, संयोगादिनायोगोलकत्वादेर्धूमादिमद-वृत्तित्वात्तत्सम्बन्धावच्छिन्नतदभावस्य च वह्न्यादिव्यापकत्वादति-व्याप्तिरतः 'येन येनेति वीप्सा, 'तत्तदभाव इति, संयोगादिसम्बन्धा-वच्छिन्नसाध्यवदसंयुक्तत्वाद्यवच्छिन्नसामान्याभावा एव यथासम्भवं लक्षणघटकाः, न तु तत्तत्पदार्थानां तत्तद्व्यक्तित्वावच्छिन्नाभावाः, अनन्ताभावनिवेशप्रसङ्गादित्यवधेयम्। एतादृशविवक्षाप्रयोजनं दर्शयति, 'एतेनेत्यादिना, 'साध्यतावच्छेदकसम्बन्धेनेति अस्य चाभावप्रतियोगितया भासमानायां वृत्तावन्वयः, 'समवायेनेति, संयोगादीनामप्युपलक्षणं, 'साध्यवदसमवेतस्येति, मेयत्वादेरिति शेषः। असमवेतपदमप्यसंयुक्ताद्युपलक्षणपरं, 'सकलतच्छून्येति साध्यवदवृत्तिसकलपदार्थाभावाप्रसिद्धिरित्यर्थः, एकसम्बन्धेन व्यभि-चारनिरूपकाधिकरणवृत्तेरपरसम्बन्धावच्छिन्नाभावस्य हेतुव्याप-कतामादायातिव्याप्तिवारणाय साध्यवदवृत्तेः सम्बन्धसामान्येना-भावोऽवश्यं विवक्षणीयः। संयोग-समवाय-स्वरूपादिनिष्ठसम्बन्धता-विशेषाणां मिथो भिन्नत्वेऽपि सम्बन्धतात्वेनानुगतानां तावन्निष्ठ-प्रतियोगितावच्छेदकसम्बन्धतावच्छेदकत्वे मानाभावात्। सामान्य-विशेषभावेनावच्छेद्यावच्छेदकभूतसम्बन्धतयोर्भेदेनात्माश्रयविरहात्, प्रत्येकं सकलसम्बन्धावच्छिन्नाभावकूट एव वा निवेश्य इत्य-भिप्रायेणेदं, अन्यथा मेयत्वादेरपि समवायादिना अभावप्रसिद्ध्या

प्रसङ्गत्यापत्तेः । 'तादृशेनैवेति, एवकारेण सम्बन्धसामान्यव्यवच्छेदः, तावतैव धूमवान् वह्नेरित्यादावतिव्याप्तिवारणसम्भवादयोगोलकीय-वह्न्यादेः साध्यतावच्छेदकसम्बन्धेनाभावस्य हेत्वन्यूनवृत्तिता-विरहादिति भावः । 'जातिमानिति समवायेन जातित्वावच्छिन्न-साध्यके व्यभिचारिणीत्यर्थः, 'केवलान्वयित्वादिति व्यधिकरणसम्ब-न्धावच्छिन्नप्रतियोगिताकत्वेनेत्यादिः, केवलान्वयित्वे सुतरामेव हेत्वन्यूनवृत्तित्वमिति तदभिधानम् । विशिष्य समवायादिसम्बन्ध-निवेशनं निरस्यति, 'अतएवेति एतादृशातिव्याप्तेरेवेत्यर्थः, संयोगेन समवायेन वा साध्यवदवृत्तेस्तेनैव सम्बन्धेनाभावः शक्यनिवेश इति शेषः । जातिमदसंयुक्तस्य संयोगेनाभावस्यापि केवलायित्वादिति भावः । एतत्पक्षद्वये अधिकामव्याप्तिमाह, 'इदमिति, 'समवेता-दीत्यादिना संयुक्तपरिग्रहः । 'साधनतावच्छेदकेनेति, सम्बन्धेनेति शेषः । साध्यवदवृत्तिरित्यादिकमपि पुरणीयं, एवमग्रेऽपि, जात्यादिसाध्यके व्यभिचारिणि स्वरूपसम्बन्धस्यैव साधनताव-च्छेदकतया तेन सम्बन्धेन साध्यवदवृत्तिजातित्वादेस्तादृशसम्बन्धा-वच्छिन्नाभावस्य हेत्वव्यापकत्वेन नैतत्कल्पेऽतिव्याप्तिरित्याशङ्काव-तारः । 'इदमिति पक्षनिर्देशः 'एतदित्यस्य पक्षनिर्देशताभ्रम-परीहाय, तथा सति रूपत्वावच्छिन्नभेदस्य साध्यतालाभेन तादृश-साध्यवदसमवेतस्य रूपत्वादेः प्रसिद्ध्या अतिव्याप्त्यनवकाशात् । 'अतिव्याप्तेरिति, एतद्रूपमात्रसमवेताप्रसिद्ध्या एतद्रूपभिन्नासम-वेतस्य समवायरूपसाधनतावच्छेदकसम्बन्धावच्छिन्नाभावस्य व्यधि-करणसम्बन्धावच्छिन्नाभावतया केवलान्वयित्वादिति भावः । तद्घटा-

दिमात्रसमवेतस्य रूपादेः प्रसिद्धया गुणत्वरूपैकव्यक्तिकानुसरणम् ।
'नापि विषयतयेति, व्यभिचारिणि साध्यवदविषयकस्य व्यभिचारनिरूपकाधिकरणविषयकज्ञानादेर्विषयतासम्बन्धावच्छिन्नाभावमादायातिव्याप्तिनिराकरणासम्भवात् शङ्कावतारः। 'घटभिन्नं मेयत्वादित्यत्रापीत्यपिना पूर्व्वोक्तस्थलपरिग्रहः, घटभेदसाध्यकस्य नानाव्यक्तिविपक्षकत्वं द्रव्यविपक्षकत्वञ्च पूर्व्वोक्तस्थलाद्विशेषइति पूर्व्वकल्पापेक्षया एतत्पक्षस्यातिहेयतासूचनायैतस्याधिकस्य प्रदर्शनम् अतिव्याप्तिवीजं, विषयतया साध्यवदवृत्तेस्तत्सम्बन्धावच्छिन्नाभावस्य केवलान्वयित्वं दर्शयति, 'सविषयकेति, 'मात्रपदं कात्स्न्यपरं, 'घटभिन्नविषयकत्वादिति, घट इत्याद्याकारकस्य घटादिविषकज्ञानादेरपि विशेषणीभूतघटत्व-तत्सम्बन्धविषयकत्वादिति भावः। ननु विशिष्टबुद्धेर्विशेषणादिविषयकत्वनियमेऽपि घटभिन्नाविषयकं घटनिर्विकल्पकमपि सम्भवतीत्यत आह, 'घटनिर्व्विकल्पकेऽपीति, 'घटत्वादीत्यादिना रूपादिपरिग्रहः, तद्भासकसन्निकर्षादिघटितसामग्र्या अपि तदानीं सत्त्वादिन्द्रियाणां स्वव्यवस्थापकगुणपुरस्कारेणैव प्रवृत्तेश्चाक्षुषादौ रूपादिभानस्यावश्यकत्वाच्चेति भावः। 'सम्बन्धमात्रेणेति, सम्बन्धमात्रेण साध्यवदवृत्तित्वं साध्यवत्सम्बद्धत्वसामान्यं साध्यवदाधेयत्वसामान्यं वा, तादृशसम्बन्धेनाभावश्च सम्बन्धत्वावच्छिन्नप्रतियोगितावच्छेदकसम्बन्धताक एक एवाभावः प्रतियोगितावच्छेदकतया प्रसिद्धा ये सम्बन्धास्तदवच्छिन्नाभावकूटो वा, 'स्वरूपसम्बन्धेन' कालिकविलक्षणसम्बन्धेन, 'प्रत्युतमिति, यत्र साध्यवति साध्यतावच्छेदकसम्बन्धेनावर्त्तमानं

तेन सम्बन्धेन क्वचिदपि न वर्त्तते तत्रापि विशेषणताविशेषेण साध्यवदवृत्तेस्तेन सम्बन्धेन व्यभिचारनिरूपकाधिकरणवृत्तेर्वस्तुनः प्रसिद्ध्या तस्य तादृशसम्बन्धावच्छिन्नाभावमादायैवातिव्याप्तिनिराकरणसम्भवादिति भावः। एवं सति विशेषणताविशेषस्यैव विशिष्योपादानमुचितं सम्बन्धान्तरनिवेशे प्रयोजनाभावादित्याशयेनाह, 'विशेषणताविशेषेणेति दैशिकविशेषणतयेत्यर्थः, एवं सति दर्शितातिव्याप्तीनां नावकाश इति सूचयितुं व्यभिचारनिरूपकाधिकरणे तेन सम्बन्धेन वृत्तिमति तेन सम्बन्धेन साध्यवदवृत्तित्वसौलभ्यमाह, 'सर्व्वत्रैवेति, व्यभिचारिहेतुक इति शेषः। 'तत्तद्दग्नित्व इति यद्दग्नौ हेतोः साध्यव्यभिचार इत्यादिः, अयोगोलकादिनिष्ठतत्तद्दग्नित्वं तन्मात्रवृत्तिरूपाद्यात्मकमेव न तु पदार्थान्तरं तस्य च न विशेषणताविशेषेण वृत्तिरिति केवलान्वयिनं तस्य तादृशसम्बन्धावच्छिन्नाभावमादाय नातिप्रसङ्गनिराकरणसम्भव इति तत्र तत्सौलभ्यमनुपयुक्तमित्याशङ्क्य 'तत्तदन्यान्यत्व इति, तत्तद्दग्नित्वावच्छिन्नभेदोऽपि स्वप्रतियोगितावच्छेदकभेदप्रतियोगितावच्छेदकतद्दग्नित्वादनतिरिक्त एव तथाच वक्ष्यते 'न हि घटभिन्नभेदो घटत्वादतिरिच्यत इत्याशङ्क्याह, 'तत्प्रकारकेति तद्दग्नित्वादिप्रकारकेत्यर्थः, तत्प्रकारकभ्रमविषयत्वस्य साध्यवत्यपि सम्भवात् 'प्रमेति, 'तत्' तेन सम्बन्धेन साध्यवदवृत्तित्वं, विशिष्य समवायादिसम्बन्धनिवेशे जात्यभावादिसाध्यकस्थले तेन सम्बन्धेन साध्यवदवृत्तित्वाप्रसिद्धिरुक्ता विशेषणताविशेषस्य विशिष्य निवेशे तु न तद्दोषावसर इति सूचयितुं सर्व्वत्र सद्धेतौ साध्यवन्निष्ठ-

तद्व्यक्तित्वादौ तेन सम्बन्धेन साध्यवदवृत्तित्वप्रसिद्धिपरमिदमिति तन्न सम्भवति ज्ञेयत्व-वाच्यत्वाभावादिष्वेव तत्प्रसिद्धिसम्भवात् तत्त-द्व्यक्तित्वाद्यनुधावनस्य वैयर्थ्यापातात्, अभावे तत्सम्बन्धावच्छिन्न-प्रतियोगिताकत्वानिवेशे यत्किञ्चित्सम्बन्धावच्छिन्नाभावमादायाति-व्याप्तिः, सम्बन्धसामान्येनाभावनिवेशे च तेन सम्बन्धेन साध्यवद-वृत्तेः साध्यवत्समवेतादेस्तादृशाभावस्य हेतुमत्यसत्त्वादसम्भव इति तन्निवेशयति, 'तेनैवेति, इदानीं प्रतियोगितावच्छेदकसम्बन्धा-द्यनुगमेन एक एवाभावो निवेशयितुं शक्यत इत्यभिप्रायेणाह, 'तदवच्छिन्नसामान्याभाव इति तादृशसाध्यवदवृत्तित्वावच्छिन्न-सामान्याभाव इत्यर्थः ।

---

तत्त्वचिन्तामणि-दीधितिः ।

केचित्तु नञ्व्यत्यासेनासाध्यानि साध्यविरोधीनि साध्यासमानाधिकरणानीति यावत् तानि सामानाधि-करण्यानधिकरणानि यस्य तत्त्वम् साध्यसामानाधिक-रण्याभावव्यापकाभावप्रतियोगिसामानाधिकरण्यसा--मान्यकत्वमिति फलितार्थः। अत्र च साध्यसामानाधि-करण्यं साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुताव-च्छेदकसम्बन्धेन वृत्तिः। परञ्च सामानाधिकरण्यं हेतुतावच्छेदकसम्बन्धेन हेतुमति तेनैव वृत्तिः तेन समवायेन पृथिवीत्वादेः साध्यतायां व्यभिचारिणि

कालिकसम्बन्धेन हेतौ घटादौ द्रव्यत्वादेश्च समवायेन साध्यतायां समवायेन हेतौ सत्त्व-गुणत्वादौ नातिप्रसङ्गः । न वा संयोगेन वह्न्यादौ साध्ये समवायेन तद्व्याप्यस्य रूपविशेषादेः कालिकसम्बन्धेनाधिकरणे काले स्पन्दे च कालपरिमाण-स्पन्दत्वादेः समवायेन तदधिकरणे घटादेः संयोगेन वृत्तावपि चाप्रसङ्गः, सम्बन्धविशेषेण व्याप्यत्वलाभाय साधिकरणत्वमित्याहुस्तच्चिन्त्यम् ।

---

गादाधरी विवृतिः ।

मिश्रव्याख्यानमुपन्यस्यति, 'केचित्त्विति, 'नञ्-व्यात्यासेन' साध्यपदानन्तरं श्रूयमाणस्य नञस्तत्पूर्व्वाभिसम्बन्धेन, तथाचासाध्यसामानाधिकरण्येति वक्तव्ये साध्यासामानाधिकरण्येत्यभिधानं प्रमादेनेति भावः। असाध्यपदस्य साध्यभिन्नार्थकत्वे एतद्वृत्तिधर्म्मवानेतत्त्वादित्याद्यतिरिक्ते सर्व्वत्र साध्यभिन्नस्य हेतुसमानाधिकरणतया क्वचिच्च साध्यभिन्नाप्रसिद्ध्या अव्याप्तिरतो नञ्पदस्य विरोधार्थकतामाह, 'साध्यविरोधीनीति, विरोधस्य तदभावव्याप्यतारूपत्वे केवलान्वयिनि साध्याभावाप्रसिद्ध्या अव्याप्तिरतः 'साध्यासमानाधिकरणानीति, केवलान्वयिन्यवृत्तावेव साध्यासामानाधिकरण्यप्रसिद्धिः, व्यभिचारिहेतुकेऽपि साध्यासामानाधिकरण्यस्यान्ततोऽवृत्तेरेव हेत्वसमानाधिकरणतया अतिव्याप्तिरिति साध्यासामानाधिकरण्यरूपोद्देश्यतावच्छेदकावच्छेदेन हेत्वसामा-

नाधिकरणरूपविधेयान्वयोऽत्र विवक्षित इत्याशयेन व्यापकत्वरूपमवच्छिन्नत्वमन्तर्भावयन् साध्यसामानाधिकरण्याधिकरणत्वाभावे अधिकरणत्वांशमनतिप्रयोजनकतया परित्यजन् फलितार्थमाह, 'साध्येति साध्यतावच्छेदकविशिष्टार्थकं, तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः व्यापकत्वं तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं न तु तत्समानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्म्मवत्त्वम् अभावत्वादिकमादायातिप्रसङ्गाद्गौरवाच्च। साध्यादिनिष्ठहेतुसामानाधिकरण्यव्यक्तिविशेषाभावस्य साध्यसामानाधिकरण्याभावव्यापकतामादायातिव्याप्तेर्व्वारणाय सामान्यपदं व्यापकाभावप्रतियोगितावच्छेदकस्वविशिष्टसामानाधिकरण्यत्वकधर्म्मवत्त्वमिति तु निष्कर्षः। तेन व्यभिचारिहेतुसामानाधिकरण्यसामान्य-गगनोभयत्वाद्यवच्छिन्नाभावस्य साध्यासामानाधिकरण्यव्यापकत्वेऽपि न क्षतिः। स्वपदं हेतुतावच्छेदकपरं, तद्विशिष्टसामानाधिकरण्यनिवेशात् द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः। 'परं सामानाधिकरण्यं' हेतुसामानाधिकरण्यं, साध्यतावच्छेदकसम्बन्धनिवेशस्य व्यावृत्तिमाह, 'समवायेन पृथिवीत्वादेरिति 'व्यभिचारिणि हेतौ घटादौ नातिप्रसङ्गः, इत्यग्रिमेण सम्बन्धः, वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन पृथिवीत्वाधिकरणकाले तादृशहेतुतावच्छेदकसम्बन्धेन वृत्तेरवृत्तिमात्रनिष्ठतदभावं प्रति हेतुसामानाधिकरण्याभावस्य व्यापकत्वेऽपि समवायरूपसाध्यतावच्छेदकसम्बन्धेन साध्याधिकरणपृथिव्यादिनिरूपितकालिकसम्बन्धावच्छिन्नवृत्त्यभावस्य महाकालादौ हेतुसमानाधिकरणे जन्यपृथिव्य-

समानकालीने चरमध्वंसादौ सत्त्वेन तं प्रत्यमुष्याव्यापकत्वादिति भावः। साध्यवद्वृत्तित्वे हेतुतावच्छेदकसम्बन्धनिवेशनप्रयोजनमाह, 'द्रव्यत्वादेश्चेत्यादि, समवायेन साध्याधिकरणमहाकाले वृत्तिमन्मात्रस्यैव कालिकसम्बन्धेन वृत्तेः साध्यवति सम्बन्धसामान्येन वृत्तेरभावं प्रति हेतुमद्वृत्तित्वाभावस्य व्यापकत्वेऽपि गुणत्वादिसाधारणं हेतुतावच्छेदकसमवायेन द्रव्यादिवृत्तित्वाभावं प्रति तस्याव्यापकत्वादिति भावः। हेतुमत्त्वे हेतुतावच्छेदकसम्बन्धनिवेशनप्रयोजनमाह, 'संयोगेन वह्न्यादौ साध्य इति वह्निमान् एतद्रूपादित्यादावित्यर्थः, 'समवायेनेति व्याप्यत्वान्वयि, कालपरिमाण-स्पन्दत्वादेर्वृत्तावपि नाप्रसङ्गः इत्यन्वयः। काले कालपरिमाणादेर्वृत्तिकथनेन साध्यतावच्छेदकसम्बन्धेन साध्यवति हेतुतातावच्छेदकसम्बन्धेन वृत्तेरभाववति तत्र सम्बन्धसामान्येन हेतुमत्समवेतत्वाभावासत्त्वान्न तस्य तादृशाभावव्यापकत्वमित्यव्याप्तिप्रसक्तिबीजं दर्शितं महाकालादिनिष्ठो यो वह्न्यादिसंयोगस्तत्साधारणरूपेण संयोगस्य साध्यतावच्छेदकसम्बन्धत्वे महाकालपरिमाणे साध्यसामानाधिकरण्याभावासम्भवात् स्पन्दत्वानुधावनम्। चतुर्थसम्बन्धप्रवेशप्रयोजनमाह, (१) 'समवायेनेति, 'तदधिकरणे' रूपविशेषाद्यधिकरणे, 'घटादेः संयोगेन वृत्तावपीति। एतेन समवेतस्याभाववति घटादौ हेतुसमवायिनि सम्बन्धसामान्येन वृत्तेरभावसत्त्वात्तस्य तादृशाभावाव्यापकत्वं दर्शितम्। सत्यन्तस्यैवावृत्तिव्यावृत्ततया साधिकरणत्वमित्यस्य वैयर्थ्यमाशङ्क्याह, 'सम्बन्ध-

(१) चतुर्थसम्बन्धप्रवेशफलमाहेति पा०।

विशेषेणेति उपदर्शितसम्बन्धनिवेशलाभायेत्यर्थः, तथाच साधिकरणत्वं लक्षणे न निवेश्यमिति भावः। 'तच्चिन्त्यमिति, चिन्ताबीजम् एतद्रूपभिन्नं गुणत्वात् महाकालान्यो घटादित्यादावतिव्याप्तिः, हेतुतावच्छेदकसमवाय-कालिकादिसम्बन्धेन साध्यवद्वृत्तित्वस्य तेन सम्बन्धेनाऽवृत्तावेव प्रसिद्धेः, तादात्म्येन सर्व्वविषयकज्ञानादिसाधारणे साध्ये(१) विषयितया हेतावव्याप्तिः तेन सम्बन्धेन साध्यवदसम्बद्धाप्रसिद्धेः। यदि च सामानाधिकरण्यद्वयघटकवृत्तित्वद्वये हेतुतावच्छेदकसम्बन्धं परित्यज्य सम्बन्धैक्यं विशेषणताविशेषसम्बन्धो वा निवेश्यते तदा नैतद्दोषावकाश इत्यवधेयम्।

---

तत्त्वचिन्तामणिः।

साध्यासामानाधिकरण्यं हि न साध्यानधिकरणाधिकरणत्वं साध्याधिकरणानधिकरणत्वं वा केवलान्वयिनि यत्किञ्चित्साध्याधिकरणानधिकरणे धूमे चाव्याप्तेः। नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं पर्व्वतीयवह्नेर्म्महानसीयधूमसमानाधिकरणात्यन्ताभावप्रतियोगित्वात् द्रव्यत्वादेरव्याप्यतापत्तेश्च। न च प्रतियोगिविरोधित्वं व्याप्यवृत्तित्वं वा अभावविशेषणं देयं संयोगादौ साध्ये

---

(१) सर्व्वविषयकज्ञानसाधारणसाध्यके चेति पा०।

सत्त्वादेरनैकान्तिकत्वाभावप्रसङ्गात्। न हि प्रतियोगिविरोधी संयोगादेरपरोऽत्यन्ताभावोऽस्ति अधिकरणभेदेनाभावभेदाभावात्। नापि साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवत्त्वं व्याप्तिः मूले वृक्षः कपिसंयोगवान्नेत्यबाधितप्रतीतेः तदन्योन्याभावस्यापि तत्र सत्त्वात्। न चैवं भेदाभेदः, अवच्छेदकभेदेन तत्सत्त्वाभ्युपगमात्, साधनवन्निष्ठान्योन्याभावाप्रतियोगिसाध्यवदस्येति षष्ठ्यर्थव्याप्य-व्यापकभावानिरूपणात् साध्य-साधनयोर्व्याप्तिनिरूप्यत्वात् वह्निमत्पर्व्वतस्य धूमवन्महानसनिष्ठान्योन्याभावप्रतियोगित्वाच्च विशेषाभावकूटादेवाभावव्यवहारोपपत्तौ सामान्याभावे मानाभावात्। नापि साधनसमानाधिकरणयावद्धर्म्मनिरूपितवैयधिकरण्यानधिकरणसाध्यसामानाधिकरण्यं साधनसमानाधिकरणस्य प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धेः महानसादौ समवायितया वह्नि-वह्निमतोरत्यन्तान्योन्याभावयोः सत्त्वात् धूमादावप्युक्तलक्षणाभावाच्च।

---

चिन्तामणि-दीधितिः।

तथाश्रुतं यथासम्भवं विकल्प्य दूषयति नेत्यादि। नन्वप्रतियोगिपदेन प्रतियोगितानवच्छेदकावच्छिन्नं

वक्तव्यमत आह, 'द्रव्यत्वादेरिति, 'प्रतियोगिविरोधित्वं' प्रतियोगि-तदधिकरणावृत्तित्वं, 'व्याप्यवृत्तित्वं' स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्, 'अधिकरणेति, तथासत्यभाव एव न सिध्येदिति भावः। संयोगाद्यभावस्य च द्रव्ये प्रतियोगिसामानाधिकरण्यमव्याप्यवृत्तित्वञ्च प्रतियोग्यधिकरणीभूतद्रव्यवृत्तित्वं स्वाधिकरणीभूतद्रव्यनिष्ठात्यन्ताभावप्रतियोगित्वं गुणे च प्रतियोग्यसामानाधिकरण्यं व्याप्यवृत्तित्वञ्च प्रतियोग्यनधिकरणीभूतगुणवृत्तित्वं स्वाधिकरणीभूतगुणनिष्ठात्यन्ताभावाप्रतियोगित्वम् एतानि च न भेदकान्यविरोधात् सामान्यतस्त्वाव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे च न तथात्वव्यतिरेक इति भावः। ननु साध्यवान् यस्येति साध्यवति सम्बन्धोऽन्वेष्टव्यः सचाधिकरणत्वं साध्य-साधनयोरपि सामानाधिकरण्यमेवेत्यतो दूषणान्तरमाह, 'साध्येति। साध्यत्व-साधनत्वे व्याप्तिप्रतियोगित्वानुयोगित्वे, यत्तद्भ्यामेव व्याप्तिर्निर्वक्तव्येत्यत आह, 'वह्निमदिति। ननु यत्समानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नं न भवति तद्रूपावच्छिन्नेन समं तस्य सामानाधिकरण्यं

व्याप्तिरित्यर्थः । न च धूमसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदको वह्नित्वावच्छिन्नो वह्निः धूमवान् वह्निमान्नेत्यप्रतीतेरत आह, 'विशेषेति । य एव प्रत्येकं वह्निमद्भेदाः धूमसमानाधिकरणास्त एव चैकाधिकरणवृत्तित्वावच्छिन्ना वह्निमत्सामान्यभेदबुद्धिं उपपादयन्ति(१) तत्प्रतियोगितावच्छेदकस्य वह्नित्वावच्छिन्नोवह्निरिति भवत्यव्याप्तिः।'साधनेति, वैयधिकरण्यं तदनधिकरणवृत्तित्वं तच्च केवलान्वयिनः साधनस्याप्रसिद्धम् अतिप्रसञ्जकञ्च पृथिवी द्रव्यत्वादित्यादौ, अतः समानाधिकरणोपादानं, धूमादेरपि न वह्न्यादिसमानाधिकरणद्रव्यत्वाद्यनधिकरणवृत्तित्वमतो यावदिति । यद्यपि पृथिवीत्वादिसमानाधिकरणघटत्व-पटत्वाद्यनधिकरणवृत्तित्वं द्रव्यत्वादेस्तदनधिकरणमात्रवृत्तित्वञ्च निखिलघट-पटादिरूपादीनां तथापि तादृशधर्म्मानधिकरणमात्रवृत्तित्वानवच्छेदकसाध्यतावच्छेदकवत्त्वं बोध्यं, न हि पृथिवीत्वसमानाधिकरणस्तादृशः कश्चिदेकोधर्म्मो यदनधिकरणमात्रवृत्तितावच्छेदकं रूपत्वादि, धूमत्वादिकन्तु वह्न्यादिसमानाधिकरणायोगोलकत्वा-

(१) जनयन्तीति पा० ।

द्यनधिकरणमात्रवृत्तितावच्छेदकं, तदवच्छेदकत्वञ्च तदनतिरिक्तवृत्तित्वं तच्च तच्छून्यधर्म्मावृत्तित्वं तेन मेयत्वसमानाधिकरणगुणत्वाद्यनधिकरणमात्रवृत्तितानधिकरणगगनादिवृत्तित्वेऽपि द्रव्यत्वस्य द्रव्यसाध्यकमेयत्वे नातिप्रसङ्गः ।

---

गादाधरी विवृतिः ।

यथाव्याख्यातलक्षणस्य निर्दोषतया मूलोक्तदूषणासङ्गतिमाशङ्कयाह, 'यथाश्रुतमिति 'दूषयतीत्यनेन सम्बन्धः, 'यथासम्भवमिति विकल्पक्रियाविशेषणं, साधनसमानाधिकरणाभावाप्रतियोगित्वघटितलक्षणे नानाव्यक्तिसाध्यस्य विशेषाभावमादाय दत्तं दोषमुद्धृत्य दूषणान्तरमवतारयति, 'नन्विति, 'प्रतियोगितानवच्छेदकेति । न चैवं धूमवान् वह्नेरित्यादौ धूमादेस्तथाविधद्रव्यत्वाद्यवच्छिन्नत्वमादाय दोषः, अनवच्छेदको यो धर्म्मस्तदवच्छिन्नसामानाधिकरण्यं तद्रूपावच्छिन्ननिरूपिता व्याप्तिरिति विवक्षणात् । प्रतियोगिविरोधित्वं यदि प्रतियोग्यनधिकरणवृत्तित्वं व्याप्यवृत्तित्वञ्च यत्किञ्चित्स्वाधिकरणनिष्ठाभावाप्रतियोगित्वं तदा संयोगि सत्त्वादित्यादौ वक्ष्यमाणातिव्याप्त्यसङ्गतिः, हेत्वधिकरणान्तर्भावेन तद्विवक्षणेऽतिव्याप्तिपरिहारस्यापि सम्भवात् इत्यग्रिमग्रन्थानुरोधेन तदुभयं व्याचष्टे, 'प्रतियोगिविरोधित्वमिति, 'तथासतीति अधिकरणभेदेनाभावभेदस्वीकार इत्यर्थः, 'अभाव एव' अधिकरणस्वरूपातिरिक्ताभाव एव, अधिकरणस्य अभावरूपत्वे घटा-

दिशून्यानन्ताधिकरणव्यक्तीनां घटाद्यभावत्वं कल्पनीयमिति तदपेक्षया घटाद्यभावत्वस्य एकैकव्यक्तावेव कल्पनमुचितं लाघवादिति युक्त्या तत्सिद्धिः । यदि चाभावा अपि अधिकरणसमसंख्यास्तदा किमपराद्धमधिकरणानामभावत्वकल्पनमिति भावः । ननु द्रव्य-गुणादिवृत्तिसंयोगाद्यभावस्याभेदे संयोगाभावो द्रव्ये प्रतियोगिसामानाधिकरणो गुणे न तथा, गुणे व्याप्यवृत्तिः द्रव्ये न तथेति व्यपदेशो न स्यात्तस्य मिथो विरुद्धतत्तद्धर्मद्वयविषयकत्वादित्याशङ्क्य तादृशव्यवहारविषयाणामपि अविरोधं व्युत्पादयितुं तन्निर्व्यक्ति, 'संयोगाद्यभावस्य चेति, 'द्रव्य इत्यस्याव्याप्यवृत्तित्वमित्यत्राप्यनुषञ्जनीयं, यथासंख्यमुद्देश्यद्वये विधेयद्वयान्वयः, एवमग्रेऽपि 'गुण इति 'व्याप्यवृत्तित्वमित्यत्रापि सम्बध्यते, 'न भेदकानि' संयोगाभावस्येत्यादिः, 'अविरोधादिति, प्रतियोग्यधिकरणवृत्तित्व-तदनधिकरणवृत्तित्वयोर्भावाभावरूपताविरहेण एकत्रापि सम्भवात्, द्रव्यनिष्ठाभावप्रतियोगित्व-गुणनिष्ठाभावाप्रतियोगित्वयोरपि नीलघट-पीतघटाभावसमशीलतया तथात्वादिति भावः । उक्तव्यवहाराश्च पारिभाषिका एव अवयवव्युत्पत्त्या तादृशतादृशार्थालाभादित्यवधेयम् । यादृशयोर्व्विरोधस्तादृशयोर्न व्यवहारविषयता इत्याह, 'सामान्यत इति 'तथात्वव्यतिरेक इत्यनेनास्य सम्बन्धः, 'अव्याप्यवृत्तौ प्रतियोगिसमानाधिकरणे चेति तथात्वेन च व्यवह्रियमाणे संयोगाभाव इत्यर्थः, 'सामान्यतो न तथात्वव्यतिरेकः' न स्वाधिकरणनिष्ठाभावप्रतियोगित्वसामान्याभावः, प्रतियोग्यधिकरणवृत्तित्वसामान्याभावश्च व्यपदिश्यत इति शेषः ।

स्वसमानाधिकरणान्योन्याभावाप्रतियोगिसाध्यवत्कत्वमित्यत्र साध्य-साधनयोः सम्बन्धो निविष्टः स च व्याप्य व्यापकभाव एवेत्यात्मा-श्रयः इति दूषणं दूषणान्तरावताराय उद्धरति, 'नन्विति,'यस्येत्यनेन साध्यवति साधनस्य सम्बन्धः 'अन्वेष्टव्यः' विवक्षणीयः, 'स चाधि-करणत्वं', न तु व्याप्य-व्यापकभाव इति शेषः, तथाच नात्माश्रय-इति भावः। साध्य-साधनयोः सम्बन्धनिवेशेऽपि न क्षतिः तयो-रपि सम्बन्धान्तरसम्भवात् इत्याशयेनाह, 'साध्य-साधनयोरपीति, सामानाधिकरण्यमेव सम्बन्धः सम्भवतीति शेषः। तथाच स एव विवक्षणीय इति भावः। मूले 'साध्य-साधनयोः' साध्यत्व-साधन-त्वयोः, 'व्याप्तिनिरूप्यत्वात्' व्याप्तिघटितत्वात्, साध्यत्व-साधनत्वे यदि सिद्धिकर्मत्व-तत्करणत्वरूपे तदा तयोर्व्याप्तिघटितत्वाभावात् असङ्गतिरतो दीधितिकारस्तमन्यथा निर्व्यक्ति(१),'साध्यत्व-साधनत्व-इति, द्वन्द्वादिश्रूयमाणं 'व्याप्तीत्युभयत्र सम्बध्यते। 'यत्तद्‌भ्यामिति यत्समानाधिकरणान्योन्याभावाप्रतियोगी यद्वान् तत्त्वं तद्व्याप्तिरिति क्रमेण साध्यत्व-साधनत्वे अनन्तर्भाव्येत्यर्थः, तथाच न व्याप्तेर्घट-कता यत्तत्पदयोर्धूमत्व-वह्नित्वादिरूपविशेषरूपेण धूम-वह्न्या-दिपरत्वादित्यच्च साधनतावच्छेदकभेदेन व्याप्तिभेदस्यागत्या स्वी-कारादिति भावः। विशेषान्योन्याभावमादायोपन्यस्तं दूषणं सामान्याभावखण्डनपरमूलमवतारयितुमुद्धरति, 'नन्वित्यादि, 'यदिति यादृशरूपावच्छेदेन यत्समानाधिकरणान्योन्याभावप्रति-योगितावच्छेदकत्वाभावस्तादृशरूपावच्छिन्नसामानाधिकरण्यं तस्य

(१) व्याचष्ट इति पा०।

तादृशरूपावच्छिन्ननिरूपिता व्याप्तिरित्यर्थः, पर्व्वतादौ महानसी-
यवह्न्यादिमदन्योन्याभावसत्त्वेऽपि शुद्धवह्नित्वाद्यवच्छेदेन महानसी-
यवह्न्यादाविव तत्प्रतियोगितावच्छेदकत्वाभावः सुलभ इत्याह, 'न
चेति न हीत्यर्थः, 'वह्नित्वावच्छिन्नः' शुद्धवह्नित्वावच्छिन्नः। न
चावच्छेदकत्व-तदभावयोर्विरोधेनैकत्रावस्थानं दुर्घटमिति वाच्यम्।
निभिन्नावच्छेदेन भावाभावयोरेकत्र वृत्तावविरोधेनावच्छेदकता-
नवच्छेदकरूपेणावच्छेदकत्वाभाव इति वाच्यम् यादृशस्यावच्छे-
दकतावच्छेदकत्वपर्य्याप्त्यनधिकरणत्वं तादृशधर्म्मावच्छेदेनावच्छेद-
कत्वाभावोपगमाद्विशिष्टवह्नित्वस्यावच्छेदकत्वेऽपि केवलस्य तस्य
तत्पर्य्याप्त्यनधिकरणत्वानुपपत्त्यभाव इति भावः। ननु सामान्याभा-
वनिवारणमनुपयुक्तमेव तावतापि सामान्यधर्म्मस्य प्रतियोगितानव-
च्छेदकतया उक्ताव्याप्तिपरीहारात् एवं विशेषाभावमात्रेण निर्व्वा-
हेऽपि सामान्याभावानभ्युपगमे यत्किञ्चिद्विशेषाभाववति पर्व्वतादौ
नायं वह्निमान् इत्याकारकप्रतीति-व्यवहारयोः प्रसङ्गादित्याशङ्कया
अतिरिक्तसामान्याभावासत्त्वपक्षे दर्शितातिप्रसङ्गं परिहरन्नेव लक्ष-
णाव्याप्तिं दृढ़यति, 'य 'एवेति, 'वह्निमद्भेदाः' तत्तद्वह्न्यवच्छिन्न-
भेदाः, 'एकाधिकरणवृत्तित्वावच्छिन्नाः' तादृशभेदाधिकरणैकव्य-
क्तिवृत्तित्वावच्छिन्नाः, 'वह्निमत्सामान्यभेदबुद्धिं' क्रदौ न वह्निमा-
नित्याकारकबुद्धिम्, 'उपपादयन्ति' विषयीभूयोपपादयन्ति, तादृ-
शाधिकरणवृत्तित्वावच्छेदेन तादृशबुद्धिविषयतावच्छेदकरूपवन्त-
इत्यर्थः, एतावतातिप्रसङ्गो वारितः, 'प्रतियोगितावच्छेदकस्येति
'चकारः 'वह्नित्वावच्छिन्नः' इत्यनन्तरं योज्यः, 'वह्नित्वावच्छिन्नः'

शुद्धवह्नित्वावच्छिन्न:, शुद्धवह्नित्वावच्छिन्नस्य तत्प्रतियोगितानवच्छे-दकत्वे तेषां न वह्निमानित्याकारकप्रतीतौ तादृशसामान्यधर्म्मावच्छिन्नप्रतियोगिताकत्वेन विषयतां स्वीकृत्य उक्तातिप्रसङ्गवारणानुपपत्तेः तद्दोषतादवस्थ्यमिति भावः। न च विशेषाभावकूटस्य तादृशप्रतीतिविषयतया यत्किञ्चिद्विशेषाभाववति न तत्प्रसङ्गः इति वाच्यम्। तत्तद्वह्नित्वेन सकलवह्नीनां युगसहस्रेणापि ज्ञातुमशक्यतया तत्तद्वह्न्यवच्छिन्नभेदत्वेन भेदसमुदायस्य भानासम्भवात् वह्निमत्प्रतियोगिकभेदत्वेन तावद्भेदभानोपगमे तेन रूपेण यत्किञ्चिद्भेदविषयकज्ञानस्यापि प्रकारगतविशेषाभावेन तदाकारतासम्भवात् पर्व्वतो न वह्निमानिति प्रतीतेर्दुर्व्वारत्वात्, न हि प्रकाराविशेषे विषयन्यूनाधिक्येन विचित्राकारताबुद्धीनां, घटत्वमात्रप्रकारेण शतसहस्रादिव्यक्तिविषयकप्रतीतीनां घट इत्येवाकारदर्शनात् अधिकमग्रे वक्ष्यामः। साधनसमानाधिकरणयावद्धर्म्मनिरूपितवैयधिकरण्यघटितलक्षणे वैयधिकरण्यं यदि तदधिकरणावृत्तित्वरूपं तदा प्रमेयत्वादिवैयधिकरण्यस्याप्यप्रवृत्तौ प्रसिद्ध्या 'प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धेरिति मूलविरोधः इत्यतोऽन्यथा तद्व्याचष्टे, 'वैयधिकरण्यमिति। ननु साधनवैयधिकरण्यानधिकरणत्वमेव कुतो न निविश्यते इत्यत आह, 'तच्चेति तादृशवैयधिरण्यञ्चेत्यर्थः, 'अप्रसिद्धमिति। यद्यपि समानाधिकरणयावद्धर्म्मोपादानेऽपि केवलान्वयिसाधनके साधनस्यापि तादृशयावद्धर्म्मान्तर्गततया अप्रसिद्धिस्तदवस्थैव (१) व्यतिरे-

(१) अप्रसिद्धिरस्त्येवेति पा०।

क्तिसाधनकेऽपि तद्दोषाधिक्यं तथापि समानाधिकरणयावद्धर्म्मोपादाने व्यतिरेकित्वं धर्म्मे विशेषणमङ्गीकृत्य वक्ष्यमाणप्रकारान्तरेण च परिष्कारः सम्भवति नान्यथा इत्याशयेनेयं व्यावृत्तिर्दर्शिता। व्यावृत्यन्तरमप्याह, 'अतिप्रसञ्जकञ्चेति, 'पृथिवी द्रव्यत्वादित्यादाविति, पृथिवीत्वादेर्द्रव्यत्वादिरूपसाधनानधिकरणवृत्तित्वानधिकरणत्वात् इति भावः। धूमवान् वह्नेरित्यादौ साधनस्य नानाव्यक्तितया अयोगोलकीयवह्निवैयधिकरण्यं धूमे सम्भवतीति तदुपेक्षितं, 'धूमादेरपीति, तथाच यावत्पदानुपादाने द्रव्यत्व-महानसत्वादिरूपयत्किञ्चिद्धर्म्मवैयधिकरण्यानधिकरणत्वमादाय व्यभिचारिण्यतिप्रसङ्गः स्यादिति भावः। 'यावत्पदोपादानमिति (१) यावतां धर्म्माणां प्रत्येकनिरूपितवैयधिकरण्यानधिकरणत्वं निवेश्यम् अतो नानाधिकरणकसाधनके तादृशयावद्धर्म्माधिकरणाप्रसिद्धावपि न क्षतिः, द्रव्यत्ववैयधिकरण्यमादायातिव्याप्तिस्तु समवायेन साध्यतायां, न तु संयोगेन तथात्वे तेन सम्बन्धेन तद्वैयधिकरण्याप्रसिद्धेरित्यवधेयम्। 'पृथिवीत्वादीति, तथाच द्रव्यं पृथिवीत्वादित्यादावव्याप्तिः द्रव्यत्वादौ पृथिवीत्वादिसमानाधिकरणयावद्धर्म्मवैयधिकरण्यानधिकरणत्वविरहादिति भावः। व्यधिकरणयोर्न व्याप्तिरिति मतालम्बने वह्निमान् धूमादित्यादौ महानसीयवह्न्यादौ पर्व्वतत्वादिवैयधिकरण्यसत्त्वेऽपि न दोष इत्येकव्यक्तिसाध्यकानुधावनम्। ननु तदनधिकरणमात्रवृत्तित्वमत्र वैयधिकरण्यं घटत्वादेस्तादृशवैयधिकरण्यञ्च न तदधिकरणेऽपि वर्त्तमानस्य द्रव्यत्वादेरत आह, 'तदनधिकरण-

(१) एतेन क्कचित् दीधितिपुस्तके तथैव पाठ इत्यनुमीयते।

मात्रवृत्तित्वञ्चेति घटत्व-पटत्वाद्यनधिकरणमात्रवृत्तित्वमपीत्यर्थः, 'निखिलघट-पटादिरूपादीनामिति यथासंख्येनान्वयः, तथाच रूपवान् पृथिवीत्वादित्यादावव्याप्तिः कुत्रापि रूपे तादृशयावद्धर्म्मवैयधिकरण्यानधिकरणत्वासत्त्वादिति भावः। एतादृशाव्याप्तिं परिजिहीर्षुर्वैयधिकरण्यानधिकरणपदस्य तदनवच्छेदकावच्छिन्नपरत्वमवलम्बते, 'तथापीति, अव्याप्त्यभावं स्फुटयति, 'न हीति, 'कश्चिदेको धर्म्मस्तादृश इत्यन्वयः, पृथिवीत्वादिसमानाधिकरणनिखिलधर्म्माणामिव तद्व्यापकरूपादिसमानाधिकरणतया रूपत्वाद्यवच्छेदेन तादृशधर्म्मानधिकरणमात्रवृत्तित्वासम्भवात् इति भावः। अवच्छेदकाघटितलक्षणे धूमवान् वह्नेरित्यादौ यावद्धर्म्मान्तर्गतमहानसत्वादिकमादायाप्यतिव्याप्तिवारणं सम्भवति पर्व्वतीयधूमादेस्तदनधिकरणमात्रवृत्तित्वात्। इदानीन्तु न तादृशधर्म्ममादाय तद्वारणसम्भवः धूमत्वाद्यवच्छेदेन तदनधिकरणमात्रवृत्तित्वादिति व्यभिचारनिरूपकाधिकरणमात्रवृत्तिधर्म्ममादाय तत्रातिव्याप्तिं वारयति, 'धूमत्वादिकन्त्विति। नन्ववच्छेदकत्वमन्यूनानतिरिक्तवृत्तित्वं तच्च धूमत्वादेर्जलादिसाधारणायोगोलकत्वादिवैयधिकरण्यन्यूनवृत्तित्वादित्यत आह, 'तदवच्छेदकत्वञ्चेति तादृशवैयधिकरण्यावच्छेदकत्वञ्चेत्यर्थः। वक्ष्यमाणप्रयोजनानुरोधेन तच्छून्यावृत्तित्वरूपतदनतिरिक्तत्वपदार्थे तच्छून्ये धर्म्मत्वमधिकं निवेशयति, 'तच्चेति, धर्म्मत्वं वृत्तिमत्त्वं, 'नातिप्रसङ्ग इति, गगनादेर्गगनत्वादिवैयधिकरण्यशून्यत्वेऽपि धर्म्मत्वविरहेण तादृशधर्म्मावृत्तित्वस्य द्रव्यत्वादावक्षतत्वादिति भावः। अथ तच्छून्यधर्म्मावृत्तित्वमित्यत्र साध्य-

तावच्छेदकताघटकसम्बन्धेन धर्मिवृत्तित्वं निवेशनीयमन्यथा धूमत्वादेरपि कालिकादिसम्बन्धेनायोगोलकत्वादिवैयधिकरण्यशून्यवह्न्यादिवृत्तित्वेनावच्छेदकत्वानुपपत्तिः तथाच द्रव्यवान् मेयत्वादित्यत्र गुणत्ववैयधिकरण्यशून्ये गुणादिवृत्तौ सत्त्व-गुणत्वादौ साध्यतावच्छेदकताघटकसम्बन्धेन वृत्तेरप्रसिद्धा द्रव्यत्वादेर्गुणत्वादिवैयधिकरण्यावच्छेदकत्वानुपपत्तिः तथाच साधनसमानाधिकरणघटत्वानधिकरणसंयुक्तवस्तुनि द्रव्यत्वस्य वृत्तेरतिव्याप्तिरिति भावः। न च समवायेन साध्यत्वे साधनसमानाधिकरणघटत्वादिवैयधिकरण्यावच्छेदकत्वं द्रव्यत्वस्य सुलभं तद्वैयधिकरण्यशून्ये घटरूपादौ समवायेन वृत्तेः प्रसिद्धेरिति नातिव्याप्तिरिति वाच्यम्। अतिव्याप्तिवारणसम्भवेऽपि धर्मिपदानुपादाने गुणत्ववैयाधिकरण्यावच्छेदकत्वानुपपत्त्या अतिव्याप्तिप्रदर्शनात्। तत्पदे दत्तेऽपि तद्वैयधिकरण्यावच्छेदकत्वानुपपत्त्या सन्दर्भविरोधस्य दुर्व्वारत्वात्, द्रव्यवान् द्रव्यसमवायिगुणान्यतरत्वादित्यादावतिव्याप्तेरपि दुर्व्वारत्वाच्च तत्र गुणमात्रस्य व्यभिचारनिरूपकाधिकरणतया तद्वृत्तिधर्मवैयधिकरण्यावच्छेदकत्वासम्भवे साधनसमानाधिकरणधर्मवैयधिकरण्यावच्छेदकभेदकूटस्य चाव्याहतत्वात् इति चेन्न, 'तच्छून्यधर्मावृत्तित्वमित्यनेन स्वाधिकरणतच्छून्यधर्मसामान्यकत्वस्य (१) तदाश्रय(२)-स्वाश्रयधर्मसामान्यकत्वस्य (३) वा विवक्षितत्वात्।

(१) स्वपदं अवच्छेदकत्वेनाभिमतपरं।

(२) तत्पदं साधनसमानाधिकरणधर्म्मानधिकरणमात्रवृत्तितापरं।

(३) अत्रापि स्वपदं अवच्छेदकत्वेनाभिमतपरं।

एतेन तदनधिकरणमात्रवृत्तित्वं साध्यतावच्छेदकसम्बन्धेन वाच्यम् अन्यथा धूमादेः कालिकादिसम्बन्धेनायोगोलकादिवृत्तितया धूमत्वाद्यवच्छिन्नस्यायोगोलकत्वाद्यनधिकरणमात्रवृत्तित्वानुपपत्तेः। तथाच समवायेन प्रमेयत्वाद्यवच्छिन्नसाध्यके वाच्यत्वादिहेतावति-व्याप्तिः तत्र व्यभिचारनिरूपकवृत्तिजातित्वाद्यनधिकरणमात्र-समवेतत्वशून्ये अभावादौ प्रमेयत्वादेर्वृत्त्या अवच्छेदकत्वानुपपत्तेः। साध्यतावच्छेदकसम्बन्धेन सम्बद्धत्वरूपधर्म्मत्वनिवेशेऽपि तद्दोषस्त-दवस्थः, जातित्वादौ समवायेन वृत्त्यप्रसिद्ध्या जातित्वादिवैयधिकर-ण्यशून्यसमवेताप्रसिद्धेर्जातित्वादिवैयधिकरण्यावच्छेदकत्वस्य साध्य-तावच्छेदके दुरुपपादत्वादित्यपि निरस्तम्। प्रमेयत्वाद्याश्रयीभूत-समवेतसामान्यस्य जातित्वाद्यनधिकरणमात्रसमवेतत्वरूपजाति-त्वादिवैयधिकरण्याश्रयतया मेयत्वादेस्तदवच्छेदकत्वनिर्व्वाहात्।

केचित्तु साध्यतावच्छेदकसम्बन्धेन यत्सम्बद्धत्वं यश्च तादृश-सम्बन्धेन तदनधिकरणमात्रवृत्तित्वस्याभावः तदुभयाभाववद्-यावत्स्वाश्रयकत्वविवक्षणान्न दोषः। सम्बद्धत्वं सम्बन्धप्रतियोगित्वं, यत्र संयोगः साध्यतावच्छेदकसम्बन्धस्तत्रापि सम्बद्धत्वं स्वरूप-सम्बन्धत्वेनैव वर्त्तते न तु संयोगस्वरूपः। तत्तद्दूषणमाह, 'अत-इत्यादि, 'अतः' वैयधिकरण्याभावानुरोधात्, स्वरूपसम्बन्धाव-च्छिन्नाभावनिवेशे संयोगस्य तेन सम्बन्धेनावृत्त्या तदभाव-तादृश-साध्यतावच्छेदकसम्बन्धोभयस्य स्वरूपसम्बन्धाभावः केवलान्वयीति तस्मादायावच्छेदकलक्षणातिव्याप्तिरिति निरस्तम्। न च सम्बन्ध-त्वस्य स्वरूपसम्बन्धेन वृत्तावपि स्वरूपाननुगमेनैकैकस्वरूप-

सम्बन्धेनोभयाभावस्य केवलान्वयितया तद्दोषतादवस्थ्यमिति वाच्यम्। स्वरूपाणामननुगमेऽपि अनतिप्रसक्तेन येन केनचिद्रूपेण तदनुगमसम्भवात्। अन्यथा विषयादिभेदेन विभिन्नस्य प्रमाविषयत्वादेः प्रमेयत्वादिनाऽपि केवलान्वयित्वानुपपत्तेः तद्घटकसम्बन्धाननुगमादित्याहुः।

---

तत्त्वचिन्तामणि-दीधितिः।

वस्तुतस्तु तादृशधर्म्मानधिकरणमात्रवृत्तित्वाव-च्छिन्नाधिकरणताकत्वं तदवच्छेदकत्वं वाच्यं तेन सत्ता-द्रव्यत्वोभयवान् गुणान्यत्वविशिष्टसत्तावान् वा जातिमत्त्वादित्यादौ नातिप्रसङ्गः सत्ताया गुणत्वाभाववन्मात्रवृत्तित्वविरहेऽपि उभयत्वाद्यवच्छिन्नाधिकरणतायाः गुणत्वाभाववन्मात्रवृत्तित्वात्, 'प्रमेयत्वादेरिति। ननु व्यतिरेकित्वेन धर्म्मोविशेषणीयः, वस्तुतस्तु यावत्पदं तादृशस्य कस्यापि न वैयधिकरण्यावच्छेदकमेतावन्मात्रस्फोरणाय तथाच साधनसमानाधिकरणधर्म्मनिरूपितवैयधिकरण्यावच्छेदकं यद्यत्तद्भिन्नधर्म्मवता यावत्तादृशावच्छेदकत्वशून्यधर्म्मवता वा समं सामानाधिकरण्यमिति पर्य्यवसितं अतोदोषान्तरमाह, 'महानसादाविति, तथाच तदनधिकरणत्वं तदभावा-

धिकरणत्वं तद्वद्भिन्नत्वं वा द्वयमपि दुष्टमित्यर्थः। एतेन तदधिकरणावृत्तित्वमत्र वैयधिकरण्यमिति निरस्तं, समवायितया महानसवृत्तित्वं वह्नौ नास्तीतिप्रतीतेर्वह्न्यादेरपि तादृशवैयधिकरण्याधिकरणत्वात्सम्बन्धविशेषेण वैयधिकरण्यविवक्षायान्तु नोक्तदोष इति ध्येयम्।

---

गादाधरी विवृतिः।

अथ तदनधिकरणमात्रवृत्तित्वं तदधिकरणावृत्तित्वे सति तदनधिकरणवृत्तित्वं तत्र सत्यन्तनिवेशादेव सामञ्जस्येन विशेष्यदलवैयर्थ्यं, तत्परित्यागे च सत्यन्तदलस्यावृत्तिसाधारणतया तच्छून्यत्वमात्रस्यैवावृत्तिव्यावृत्ततया धर्म्मत्वोपादानविरोधः। न च तदधिकरणावृत्तित्वमात्रनिवेशे 'प्रमेयत्वादेरित्यादिमूलासङ्गतिरिति विशेष्यदलनिवेशनासार्थक्यं तदधिकरणावृत्तित्वशून्यत्वात् अन्यस्य अवृत्तिसाधारणस्य विशिष्टशून्यत्वस्याभावान्तरतया चावैयर्थ्यमिति वाच्यम्। वृत्त्यंशमात्रस्य विशेष्यविधया निवेशेनैवाखण्डाभावान्तरस्य घटकत्वात्तदधिकरणांशस्याव्यावर्त्तकस्य निवेशे व्यर्थविशेषणतया दुर्व्वारत्वात्, वैयर्थ्यभिया तदंशस्यैव परित्यागे प्रमेयत्वाद्यधिकरणावृत्तिवृत्तिमतोऽप्रसिद्ध्या 'प्रमेयत्वादेरिति मूलसङ्गतावपि 'महानसादाविति मूलस्य वह्नित्वादौ सम्बन्धान्तरावच्छिन्नात्यन्ताभावादिघटितवह्न्यादिरूपसाधनसमानाधिकरणधर्म्मवैयधिकरण्यावच्छेदकत्वोपादानपरतया दीधितिकारव्याख्यानासङ्गतेर्दुर्व्वारत्वात्। एतेनावृत्तिव्यावृत्ततदधिकरण-

ताव्यापकभेदप्रतियोगितावच्छेदकत्वमेव तद्वैयधिकरण्यमित्यपि निरस्तम्। तत्रापि साधनसमानाधिकरणधर्म्मानधिकरणत्वाप्रवेशे दीधितिकृतां तन्मूलव्याख्यानासङ्गतेः इति चेन्न, 'तदनधिकरणमात्रवृत्तित्वमित्यनेन स्ववृत्तिव्यापकतदनधिकरणत्वकत्वस्य विवक्षिततया तन्मूलसङ्गतेः धर्म्मपदसार्थक्योपपत्तेः। न च तादृशमूलसङ्गमनस्य तदनधिकरणेतरावृत्तित्वनिवेशेनापि सम्भवात् निरुक्तवैयधिकरण्यं निवेश्य धर्म्मपदोपादानमयुक्तमिति वाच्यम्। तदनधिकरणेतरावृत्तित्वमित्यस्य तदनधिकरणेतरवृत्तिप्रतियोगिकाभावात्मकत्वे तादृशव्यक्तिविशेषाद्यभावस्य समानाधिकरणसाधारणतया तच्छून्याप्रसिद्धेः, तादृशवृत्तित्वाद्यवच्छिन्नाभावार्थकत्वे तादृशवृत्तित्वस्य स्वसमानाधिकरण-तदधिकरणवृत्तित्वापेक्षया गुरुशरीरत्वेनाभावप्रतियोगितानवच्छेदकत्वात् तादृशाभावाप्रसिद्ध्या तस्य तदर्थकत्वानुपपत्तेः इति तच्छून्यधर्म्मावृत्तित्वरूपावच्छेदकत्वप्रवेशे एकतराव्यभिचारिण्युभयसाध्यके विशेष्याव्यभिचारिणि विशिष्टसाध्यकव्यभिचारिण्यतिप्रसङ्गस्यापि दर्शनीयतया कल्पान्तरमाह, 'वस्तुतस्त्विति। यद्यपि अत्रापि तदनधिकरणमात्रवृत्तित्वं स्वव्यापकतदनधिकरणताकत्वमेव न तु तदधिकरणावृत्तित्वे सति तदनधिकरणवृत्तित्वं वृत्तिमत्त्वं वा तदभावप्रवेशेन उक्तरीत्या विशेष्यसार्थक्यस्योपपादयितुमशक्यत्वात्। न च तदधिकरणावृत्तित्वमात्रं प्रवेश्यं तथा सति गगनादौ प्रमेयत्वादेस्तादृशवैयधिकरण्यसत्त्वेऽपि गगनत्वावच्छिन्नाधिकरणत्वाप्रसिद्ध्या गगनत्वादौ निरुच्यमानवैयधिकरण्यावच्छेदकत्वा-

सम्भवेन 'प्रमेयत्वादेरित्यादिमूलस्य वैयधिकरण्यावच्छेदकाप्रसिद्ध्यर्थकतया सङ्गमयितुं शक्यत्वेऽपि दीधितिकारीयमूलव्याख्यानासङ्गतेः। तदनधिकरणमात्रवृत्तित्वावच्छिन्नकत्वनिवेशेनैवोपपत्तौ अधिकरणताया विशेष्यविधया निवेशनवैयर्थ्यम्। तदनधिकरणमात्रवृत्तित्वावच्छिन्नकत्वस्य स्वविशिष्टव्यापकतदनधिकरणताकत्वरूपतया गुणत्वाद्यनधिकरणसत्ता-द्रव्यत्वोभयत्वविशिष्टसत्तात्वाश्रयसत्तायाः सत्त्वेऽपि गुणत्वाद्यनधिकरणत्वेऽपि तादृशोभयत्वादिविशिष्टसत्तात्वावच्छिन्नव्यापकताया अनपायेन तादृशोभयत्वादौ तदनधिकरणमात्रवृत्तित्वावच्छिन्नकत्वरूपवैयधिकरण्यावच्छेदकत्वस्यापि निर्व्वाहात्। तथापि विशिष्टाधिकरणतागर्भविशिष्टनिरूपितव्यापकतालाभायैवाधिकरणतापदम्। वस्तुतो मूलोक्तदोषाणामनिष्कृष्टलक्षणे यथाकथञ्चित् सङ्गमनीयत्वेन निष्कृष्टलक्षणे तद्दोषासङ्गतावपि न क्षतिरिति निष्कृष्टलक्षणे तदधिकरणावृत्तित्वरूपवैयधिकरण्यमेव प्रवेश्यं न तु स्वव्यापकतदनधिकरणताकत्वरूपं इत्याशयेन तत्राधिकरणतापदोपादानं, तादृशवैयधिकरण्यांशे स्वविशिष्टाधिकरणत्वे तादृशवैयधिकरण्यमप्रवेश्यं विशिष्टतद्विशेषणत्वोपगमे वक्ष्यमाणातिव्याप्तिरेव दुर्व्वारा गुणत्वाद्यनधिकरणसत्ताया वृत्तौ उभयत्वविशिष्टसत्तात्वाद्यवच्छिन्नायामपि तस्यां तदधिकरणावृत्तित्वस्योपपादयितुमशक्यत्वात् वृत्तेर्व्याप्यवृत्तितया भिन्नरूपेणापि तद्वति तदभावादसम्भवात्। अधिकरणतापदानुपादाने स्वविशिष्टे साध्यतावच्छेदकसम्बन्धेनैव तदधिकरणावृत्तित्वस्य निवेशनीयतया

जातिमान् मेयत्वादित्यादौ जातित्वाद्यधिकरणे समवायेन वृत्तेर-प्रसिद्धा जातित्वादौ जातित्वादिवैयधिकरण्यावच्छेदकत्वस्य दुरुप-पादता बोध्या, अधिकरणतापदमधिकरणतासामान्यपरम् अन्यथा द्रव्य--गुणत्वादिवृत्तित्वविशिष्टसत्तादिनिरूपिताधिकरणतां विशेषे शुद्धसत्तात्वाद्यवच्छिन्नवत्तावुद्धुरपपत्तेः। एवञ्च धूमादेः कालिकादि-सम्बन्धावच्छिन्नाधिकरणतायाः अयोगोलकादौ वैयधिकरण्याव-च्छेदकत्वानुपपत्तिः इति साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेना-धिकरणता विशेषणीया। न च तादात्म्यादिवृत्त्यनियामकसम्बन्धेन साध्यतायामव्याप्तिः, सम्बन्धितया एव निवेश्यत्वात्। न च सम्बन्धि-तायाः सम्बन्धरूपतया संयोगेन दण्डादेः साध्यत्वे दण्डसमवेत-संयोगादिहेतावतिव्याप्तिः स्वसमानाधिकरणस्वसंयोगाधिकरण-ताया दण्डत्वाद्यवच्छिन्नसंयोगस्य साधनसमानाधिकरणतत्तद्दण्ड-त्वाद्यधिकरणवृत्तित्वेन तद्वैयधिकरण्यावच्छेदकत्वानुपपत्तेः, सम-वायैक्यमते समवायेन साध्यतायां सद्धेतौ साधनाधिकरणे सर्व्वत्र समवेतमात्रत्वस्यैव समवायसत्त्वावच्छेदकाप्रसिद्धा अव्याप्ति-श्चेति वाच्यम्। सम्बन्धानुयोगिताया एव सम्बन्धितारूपत्वात् सम्बन्धावच्छिन्नप्रतियोगिताकत्वविशिष्टसाध्यतावच्छेदकसम्बन्धानु-योगितायास्तदनधिकरणमात्रवृत्तित्वं तत्त्वमित्यर्थपर्य्यवसानेन सर्व्वत्र सामञ्जस्यात् समवायैक्यमते समवायानुयोगिताभेदस्याति-प्रसङ्गभङ्गायावश्यकतया अनुपपत्त्यभावात्। अथैवमपि महाकालो घटवान् कालपरिमाणात् इत्यादौ साधनाधिकरणमहाकाल-वृत्तिधर्म्मवैयधिकरण्यावच्छेदकाप्रसिद्धा अव्याप्तिः अवृत्तिगगन-

त्वाद्यवच्छिन्नस्य कालिकादिसम्बन्धेन सम्बन्धित्वाप्रसिद्ध्या गगनादेः कालवृत्तितामते महाकालेऽपि तादृशसम्बन्धितासत्त्वात् गगनत्वादेरपि तथात्वायोगात् साध्यतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये यद्विशिष्टप्रतियोगिकत्व-तदनधिकरणमात्रवृत्तित्वोभयाभाववत्त्वं तदित्युक्तौ गगनादेः कालवृत्तितामते गगनत्वादेरुक्तस्थले अवच्छेदकत्वोपपत्तावपि विषयतासम्बन्धेन घटादिसाध्यकनित्यज्ञानत्वादिहेतुके तदप्रसिद्धिर्दुर्व्वारैव वस्तुमात्रस्यैव नित्यज्ञानवृत्तित्वात् विषयतासामान्ये उभयाभावस्य दुर्घटत्वात्। न च यद्धर्म्मावच्छिन्ननिरूपितयद्यत्सम्बन्धावच्छिन्नाधिकरणता साधनसमानाधिकरणयत्किञ्चिद्धर्म्मानधिकरणमात्रवृत्तिः तद्धर्म्मावच्छिन्नतत्सम्बन्धावच्छिन्नाधिकरणताभिन्नत्वं साध्यसामानाधिकरण्यघटकप्रकृतसाध्यतावच्छेदकावच्छिन्ननिरूपितसाधनतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतायां निवेश्यं न तु साध्यतावच्छेदके अनवच्छेदकत्वम् उक्तस्थले समवायादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नाधिकरणतानां तथाविधानां भेदस्य कालिकादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नाधिकरणतायां सत्त्वाल्लक्षणसमन्वय इति वाच्यम्। उक्तयुक्त्या महानसीयवह्नित्वविशिष्टसत्तात्वाद्यवच्छिन्नाधिकरणताभ्यः शुद्धवह्नित्वाद्यवच्छिन्नाधिकरणताया अनतिरिक्ततया उक्तरूपावच्छिन्नघटत्वादिसाध्यकेऽव्याप्तेः। नैवं साधनसमानाधिकरणयत्किञ्चिद्धर्म्मानधिकरणत्वं यद्धर्म्मविशिष्टव्यापकं तद्धर्म्मविशिष्टाधिकरणतात्वाद्यवच्छिन्नभेदकूटसमानाधिकरणं साध्यतावच्छेदकसम्बन्धावच्छिन्नयद्रूपावच्छिन्नानधिकरणतात्वं तद्रूपाव-

च्छिन्नसामानाधिकरण्यं व्याप्तिरिति विवक्षया सर्व्वानुपपत्ति-परीहारसम्भवात् शुद्धवह्नित्वाद्यवच्छिन्नाधिकरणतात्वे प्रत्येकं महानसीयत्व-पर्व्वतीयत्वादिविशिष्टवह्नित्वाद्यवच्छिन्ननिरूपिताधि-करणतात्वाद्यवच्छिन्नभेदकूटसमानाधिकरणत्वात् व्यभिचारिणि साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधिकरण-तात्वस्यापि व्यभिचारनिरूपकाधिकरणवृत्तितानवच्छेदकतया तद-वच्छिन्नभेदस्य निरुक्तभेदकूटान्तर्गततया तादृशकूटाधिकरणतात्वे च तद्भेदसामानाधिकरण्यविरहेणातिव्याप्त्यनवकाशात् इत्यलं पल्लवितेन। पूर्व्वकल्पपरित्यागवीजं, दर्शयति (१) 'तेनेति, तदनधि-करणमात्रवृत्तिताशून्यधर्म्मावृत्तित्वस्थले तादृशधर्म्मापर्य्याप्तत्वनिवेशे सत्ता-द्रव्यत्वोभयत्वादेस्तथाविधसत्तामात्रपर्य्याप्तत्वविरहेणावच्छेद-कत्वमुपपद्यते इत्याशयेन विशिष्टसाध्यकानुसरणं, 'सत्ताया गुणत्वा-भाववन्मात्रवृत्तित्वविरहेऽपीत्यनेन तद्वृत्तितया उभयत्वादेः पूर्व्व-कल्पेऽवच्छेदकत्वासम्भवः सूचितः, 'महानसादावित्यादिमूलं साध-नाधिकरणे तत्तद्वह्नित्व-तद्दत्यन्ताभावान्योन्याभावप्रदर्शकं सिंह-गुहावलोकनन्यायेन पूर्व्वलक्षणद्वयदूषणपरतया साम्प्रदायिका-व्याचक्षते, स्वयञ्च तेषामसामर्थ्यसूचनाय प्रकृतलक्षणदूषणपरतया तत्सङ्गमयिष्यन् तदाकाङ्क्षामुत्थापयितुं 'प्रमेयत्वादेरित्यादिदूषणमु-द्धरति, 'नन्विति, 'व्यतिरेकित्वेन' साध्यतावच्छेदकसम्बन्धेन किञ्चिदधिकरणे वर्त्तमानो यो व्यतिरेकस्तत्प्रतियोगित्वेन, तेन समवायेन साध्यतायां साधनसमानाधिकरणस्य जात्यादिनिष्ठ-

(१) पूर्व्वकल्पपरित्यागवीजमाहेति पा०।

व्यतिरेकप्रतियोगिसत्त्वादेरनधिकरणमात्रे साध्यतावच्छेदकसम्ब-न्धेनाधिकरणत्वाप्रसिद्धावपि नाव्याप्तिः। एतेनाकाशादिरूपव्यति-रेकप्रतियोग्याकाशाभावाद्यनधिकरणाप्रसिद्धिभयेनान्योन्याभावप्र-तियोगितावच्छेदकपरतया केषाञ्चिद्‌व्यतिरेकपदव्याख्यानमश्रद्धेयम्। यद्यपि प्रमेयत्वादेरपि किञ्चित्सम्बन्धावच्छिन्नव्यतिरेकप्रतियोगि-त्वमक्षतमेव तथापि येन येन सम्बन्धेन यद्‌यत्साधनसमानाधि-करणं तेन तेन सम्बन्धेन तदनधिकरणमात्रवृत्तितानवच्छेद-कत्वे विवक्षणीये स्वनिष्ठव्यतिरेकप्रतियोगितावच्छेदकत्वस्य येन सम्बन्धेन इत्यत्र सम्बन्धविशेषणत्वोपगमान्न दोषः। अत्र चरम-निरुक्तस्यावच्छेदकत्वस्य स्वत्वघटिततया तत्तद्‌व्यक्तिविश्रामात् व्यभिचारिण्येकधर्म्मवैयधिकरण्यानवच्छेदकस्यापि साध्यतावच्छेद-कस्य धर्म्मान्तरवैयधिकरण्यावच्छेदकत्वेन तत्तद्धर्म्मवैयधिकरण्या-वच्छेदकानामेकभेदनिवेशासम्भव इति यावन्तो वैयधिकरण्याव-च्छेदकधर्म्माः प्रातिस्विकरूपेण तावद्भेदकूटवत्त्वनिवेशनस्याव-श्यकत्वे साधनसमानाधिकरणधर्म्मे यावत्त्वं विशेषणम् अनर्थकं व्यभिचारिणि एकधर्म्मवैयधिकरण्यानवच्छेदकस्यापि साध्यताव-च्छेदकस्य धर्म्मान्तरवैयधिकरण्यावच्छेदकयावद्धर्म्मान्तर्गततया तद्भेदस्य च तत्रासत्त्वेनातिप्रसङ्गविरहादिति व्यतिरेकित्वस्य धर्म्म-विशेषणत्वमन्तरेणैव सामञ्जस्यं प्रमेयत्वादेर्वैयधिकरण्याप्रसिद्धावपि येषां वैयधिकरण्यं प्रसिद्धं तदवच्छेदकभेदकूटमादाय सद्धेतौ लक्षण-गमनसम्भवात् इत्याशयेन धर्म्मे यावत्त्वोत्कीर्त्तनं यावदवच्छेदकभेद-लाभार्थकतया व्याचष्टे, 'वस्तुतस्त्विति, 'तादृशस्य' साधनसमाना-

धिकरणस्य, 'कस्यापि न वैयधिकरण्यावच्छेदकं' साध्यतावच्छेदकमिति शेषः । एतावता लक्षणं कीदृशमित्याकाङ्क्षायामाह, 'तथा-चेति, 'साधनसमानाधिकरणेति तादृशयत्किञ्चिदेकधर्म्मवैयधिकरण्यावच्छेदकं यद्यदित्यर्थः, तेन साधनसमानाधिकरणधर्म्मत्वावच्छिन्नानधिकरणाप्रसिद्धावपि न क्षतिः । विशिष्टवह्नित्वादिरूपवैयधिकरण्यावच्छेदकधर्म्मभेदस्य शुद्धवह्नित्वादावसत्त्वादव्याप्तिरतोऽवच्छेदकानां तत्तद्वह्नित्वावच्छिन्नभेदकूटनिवेशनपक्षं परित्यज्यावच्छेदकताव्यक्तीनां तत्तद्वह्नित्वेनाभावकूटं निवेशयति, 'यावत्तादृशावच्छेदकत्वशून्येति तादृशावच्छेदकत्वं यद्यत्तच्छून्येत्यर्थः । विशेषण-विशेष्यान्तर्भावेन वह्नित्वादौ पर्य्याप्तं यदवच्छेदकत्वं तदभावः केवलविशेष्ये अक्षत एवेति । न च यद्धर्म्मावच्छिन्नानधिकरणता तादृशधर्म्मानधिकरणमात्रवृत्तिस्तद्वत्त्वरूपमवच्छेदकत्वं विशिष्टवह्नित्वादौ विशिष्टवह्नित्वत्वादिरूपमेव यद्रूपपदेन अतस्तद्रूपपदेन तद्रूपस्योपादानात् तच्चाव्यासज्यवृत्त्येवेति कथं तदभावः शुद्धवह्नित्वादाविति वाच्यम् । यादृशधर्म्मावच्छिन्नपर्य्याप्तावच्छेदकतानिरूपकाधिकरणतासामान्यं तादृशधर्म्मानधिकरणमात्रवृत्ति तादृशधर्म्मरूपवैयधिकरण्यावच्छेदकतानिवेशात् महानसीयवह्नित्वाद्यवच्छिन्नाधिकरणतानिरूपितावच्छेदकत्वस्य महानसीयत्वादिसमुदाये व्यासज्यवृत्तितया तत्पर्य्याप्त्यवच्छेदकधर्म्मस्यापि तथात्वेनानुपपत्त्यभावात्, तत्तदवच्छेदकताकात्यन्ताभावापेक्षया तत्तदवच्छेदकत्वावच्छिन्नभेदस्य धर्म्मिनिवेशाधिक्येन गुरुतया न तन्निवेशः, तत्र विशिष्टस्यावच्छेदकत्वे शुद्धस्यानवच्छेदकत्वानुपपत्ति-

भयेन व्यासज्यवृत्तिधर्म्मात्यन्ताभावस्येव तादृशधर्म्मावच्छिन्नभेदस्यापि एकोन द्वावित्यादिप्रतीतिबलेन तद्धर्म्मवति स्वीकारात्, विशिष्टपर्य्याप्त्यवच्छेदकत्वावच्छिन्नभेदस्य शुद्धविशेष्येऽच्चतत्वात् महानसादौ वह्नि तद्वतीरत्यन्तान्योन्याभावसत्त्वेन प्रकृतलक्षणक्षतिमाविष्करोति, 'तथाचेति, 'तदनधिकरणत्वं' वैयधिकरण्यघटकम्। 'द्वयमपि दुष्टमिति, साधनसमानाधिकरणस्य वह्नेरिव तादृशोभयविधतदनधिकरणत्वघटितवैयधिकरण्यावच्छेदकत्वस्य वह्नित्वावच्छिन्ने सत्त्वादिति भावः। न चैवं सर्व्वस्यैव वस्तुनो वह्न्यनधिकरणतया मात्रपदव्यवच्छेद्याप्रसिद्ध्या वह्नित्वावच्छिन्ने वैयधिकरण्यं दुरुपपादमिति वाच्यम्। स्वव्यापकतदनधिकरणताकत्वरूपतदनधिकरणमात्रवृत्तित्वस्य सूपपादत्वात् तदधिकरणावृत्तित्वरूपवैयधिकरण्यस्य निवेशे 'प्रमेयत्वादेरित्यादिदूषणानवकाशात्। न्यूनताभङ्गाय तत्पक्षेऽपि दूषणमाह, 'एतेनेति सम्बन्धभेदेन वह्न्यादिवैयधिकरण्यस्य वह्नेः सत्त्वेनेत्यर्थः, तदेव स्फुटीकरोति, 'समवायितयेति, एतच्च वृत्तित्वविशेषणं, 'तादृशेति यत्किञ्चित्सम्बन्धावच्छिन्नवह्न्यधिकरणवृत्तित्वाभावरूपेत्यर्थः। एतादृशधर्म्मवत्सम्बद्धत्वसामान्याभावनिवेशे च क्वचिद्व्यभिचारिण्यतिव्याप्तिरवच्छेदकाप्रसिद्ध्या क्वचित्सद्धेतावव्याप्तिरपि द्रष्टव्या, 'सम्बन्धविशेषेणेति साधनवति येन सम्बन्धेन यद्वर्त्तते तेन सम्बन्धेन तदधिकरणत्वगर्भस्य उभयत्र विशेषणताविशेषगर्भस्य वा वैयधिकरण्यस्य विवक्षायामित्यर्थः, 'नोक्तदोषः' नोक्तोऽपि दोषः।

केचित्तु 'उक्तेतिविशेषणात् महाकालो घटवान् कालपरि-

माणादित्यादाववच्छेदकाप्रसिद्धिरूपदोषो दुर्व्वार एवेति 'एतेन' इत्यादिना सूचितमित्याहुः । तन्न, तद्दोषस्यापि पूर्व्वमुद्धृतत्वात् ।

---

तत्त्वचिन्तामणिः ।

अथानौपाधिकः सम्बन्धोव्याप्तिः, उपाधिश्च साध्यव्यापकत्वे सति साधनाव्यापकः, व्यापकत्वन्तु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वं, व्यभिचारे चावश्यमुपाधिः, प्रतियोगित्वं न विरोधित्वं सहानवस्थाननियमलक्षणं, गोत्वाश्वत्वयोरतथात्वात् अन्योन्याभावप्रतियोगिन्यसत्त्वाच्च । किन्तु यथाधिकरणाभावयोः स्वरूपविशेषः सम्बन्धः तथा प्रतियोगित्वमनुयोगित्वमपि, अभावविरहात्मत्वं वेति चेत्, यत्किञ्चित्साध्यव्यापक-साधनाव्यापकधर्म्मनिषेधो न, धुमादौ प्रकृतसाध्यव्यापक-साधनाव्यापकधर्म्मस्य सिद्ध्यसिद्धिभ्यां न, निषेद्धुं शक्यः, यावत्साध्यव्यापके प्रमेयत्वादौ साधनाव्यापकत्वं यावत्साधनाव्यापके च घटत्वादौ साध्यव्यापकत्वं निषिध्यत इति चेन्न, व्यधिकरणत्वात् ।

---

चिन्तामणि-दीधितिः ।

उपाधिपदस्य साध्यसमव्याप्तवचनतया आत्माश्रयप्रसङ्गादाह, 'साध्यव्यापकेति । व्यापकत्वं व्याप्ति-

निरूपकत्वमात्माश्रयादिग्रस्तमतआह, 'तद्वन्निष्ठेति । यत्रोपाधिरव्याप्यवृत्तिर्नानाव्यक्तिकोवा तत्रापि व्याप्यवृत्तिरखण्डश्चान्ततस्तद्वृत्तिन्नत्वप्रकारकप्रमाविषयत्वाभावादिरेवास्ति, यदि च तस्यापि विशेषणान्तरविशिष्टस्य द्वित्वाद्यवच्छिन्नस्य वा तत्राभावसम्भवस्तदा साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकीभूत--साधनसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्म्मवत्त्वं दलद्वयार्थो बोध्यः । अनवस्थान्निरसितुमाह, 'प्रतियोगित्वमिति, 'सद्देति, एकदेश-कालावच्छेदेनेति पूरणीयं, तेन नाव्याप्यवृत्तेरभावस्य प्रागभावादेश्च प्रतियोगितायामव्याप्तिः । 'अन्योन्येति, अत्र समवायादिसम्बन्धावच्छिन्नप्रतियोगिताकाभाववति महानसादौ संयोगादिना वह्न्यादेर्वृत्तेर्येन सम्बन्धेनाभावः तद्वति तेनावृत्तिर्वक्तव्या इत्यस्य तेन सम्बन्धेनासम्बद्धत्वोक्तौ नायं दोषः, अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकतया तद्वति तेन सम्बन्धेन प्रतियोगिनोऽसम्बद्धत्वात् परन्तु समवायेन सत्ताया अभावस्य प्रतियोगितायामव्याप्तिः तद्वति समवायेन वृत्तेरप्रसिद्धेः, तादृशस्वसम्बन्धाधिकरणावृत्तितत्वाभिधाने

च व्यधिकरणसम्बन्धावच्छिन्नाभावप्रतियोगितायामव्याप्तिः, सिद्धान्तलक्षणवक्ष्यमाणरीत्या च खण्डशः प्रसिद्ध्या तत्परिहारोऽपीति ध्येयम् । 'अभावविरहात्मत्वमिति, नचान्योन्याभावप्रतियोगि-तत्त्वावच्छेदकयोरप्रसक्त्यतिप्रसक्ती प्रकृतोपयोगिप्रतियोगिताभावस्य लक्ष्यत्वे तु लक्षणेऽत्यन्तपदवैयर्थ्यं सर्व्वत्र नित्यस्य नित्यसाधारणरूपावच्छिन्नस्य वा उपाधितासम्भवात् इतरथा तु भेदप्रतियोगितावारणाय संसर्गाभावपरतया तस्य सार्थकत्वादिति वाच्यम् । विरहपदस्य तज्ज्ञानप्रतिबन्धकज्ञानविषयार्थकत्वात् । प्रतिबध्नाति हि तादात्म्येन प्रतियोगिज्ञानमन्योन्याभावबुद्धिं, प्रतिबन्धकत्वञ्चात्रैककालावच्छेदेन एकत्रावर्त्तमानत्वं अभावपदस्य च स्वाभावपरत्वात् । वस्तुतस्त्वेकसम्बन्धावच्छिन्नायास्तत्समानाधिकरणाभावप्रतियोगिताया अनवच्छेदकमपि भवत्येव सम्बन्धान्तरावच्छिन्नायाः तस्या अवच्छेदकम् अतो यत्सम्बन्धावच्छिन्नायाः साध्यसमानाधिकरणाभावप्रतियोगिताया अनवच्छेदकं तत्सम्बन्धावच्छिन्नाया एव साधनसमानाधिकरणाभावप्रतियोगिताया अवच्छेदकं तद्वाच्यम्, तथाच संसर्गाभावत्व-

मनुपादेयमेव, 'वाशब्दोऽत्रास्वरससूचनाय, स च व्यधिकरणसम्बन्धेन सर्व्वस्य प्रतियोगिनस्तादृशभ्रमे मानाभावात् स्वाभावसम्बन्धित्वस्य स्वाभावज्ञानविषयत्वस्य वा लघोः सर्व्वत्र सम्भवित्वात् स्वाभावेत्यादौ षष्ठार्थप्रतियोगितायाः प्रवेशात् तत्र स्वरूपसम्बन्धस्यैव शरणीकरणीयतया तस्यैवावश्यकत्वेन तथात्वौचित्याच्च। अभावत्व-प्रतिबन्धकत्वयोः प्रतियोगिताघटितत्वात् तथाविधव्यवहारगोचरस्यापि विना प्रतियोगितां निर्व्वक्तुमशक्यत्वाच्च।

---

गादाधरी विवृतिः।

'आत्माश्रयेति, साध्यसमव्याप्तत्वघटकसाध्यनिरूपितोपाधिनिष्ठव्याप्तेरप्यनौपाधिकत्वरूपतया अनौपाधिकत्वशरीरे अनौपाधिकत्वनिवेशादिति भावः। यद्यप्यनौपाधिकत्वरूपव्याप्तेः प्रकृतसाधनघटिततया साधनभेदेन भेद आवश्यकः तथाच साध्यसमव्याप्तौ उपाधिनिष्ठव्याप्तेः प्रकृतसाधननिष्ठव्याप्तिभिन्नत्वात् नात्माश्रयावकाशः। तथापि सिद्धासिद्धिव्याघातपरीहाराय साध्यसमव्याप्तस्य व्यभिचारित्वसम्बन्धावच्छिन्नाभाव एव विवक्षणीयः तथाच प्रकृतसाधनाप्रवेशात् साधनभेदेन न व्याप्तिभेद इत्यभिप्रायेणेदम्। 'आत्माश्रयादीति, यावत्साध्यव्यापकव्यापकत्वरूपानौपाधिकत्वे यावत्साध्यव्यापकान्तर्गतं साध्यमपीति व्याप्तिनिरूपकत्वं यदि

व्यापकत्वं तदा स्वनिष्ठव्याप्तिनिरूपकप्रकृतसाध्यकत्वघटितं तादृ-शानौपाधिकत्वं प्रकृतव्याप्तिघटितमित्यात्माश्रयः, यदि च याव-त्साधनाव्यापकाव्यापकसाध्यसामानाधिकरण्यमनौपाधिकत्वं तदा प्रकृतसाध्यातिरिक्ते साधनाव्यापकत्वं गृहीत्वापि घटादौ तदव्याप-कत्वग्रहसम्भवेन प्रकृतसाधननिष्ठप्रकृतसाध्यव्याप्तिग्रहस्यानौपाधि-कत्वग्रहे नापेक्षेति नात्माश्रयः अपि तु अनवस्थैवेत्यभिप्रायेणादि-पदम्। ननु साध्यवन्निष्ठाभावाप्रतियोगित्वघटितोपाधिलक्षणस्य एतद्रूपवान् सत्त्वादित्यादिस्थलीये तत्संयोगाद्युपाधावव्याप्तिः तेषा-मव्याप्यवृत्तितया साध्यवति तदभावसत्त्वात् एवं नानाव्यक्तिकार्द्रे-न्धनाद्युपाधावपि तत्तद्व्यक्तित्वाद्यवच्छिन्नाभावप्रतियोगित्वमादाया-व्याप्तिरित्याशङ्कां व्याप्तिलक्षणघटकनिरुक्तोपाधित्वस्य सकलोपा-धिसाधारण्यविरहेऽपि सर्व्वत्र व्यभिचारिणि किञ्चिदुपाधिसाधा-रण्येनैव व्याप्तिलक्षणे नातिप्रसङ्ग इति तदव्याप्तिर्न दोषायेति परिहरति, 'यत्रोपाधिरिति, 'तद्भिन्नेति अव्याप्यवृत्तिनानाव्यक्ति-कतत्तदुपाधिमद्भिन्नेत्यर्थः, तद्वत्त्वप्रकारकप्रमाविषयत्वस्य विषयभे-देन भिन्नतया नाखण्डत्वसम्भवः इति तदुपेक्षितं, संयोगाद्युपाध्य-भावप्रमाविषयत्वं केवलान्वयीति तदभावाप्रसिद्धिरतस्तदत्यन्ताभा-वमुपेक्ष्य तद्भेदानुसरणं,तद्भेदाभावस्य प्रतियोगितावच्छेदकात्मक-तया स एव दोष इति प्रमाविषयत्वानुधावनं, साध्यवत्यपि तद्भेद-भ्रमविषयतासम्भवात् ज्ञानसामान्यमुपेक्ष्य प्रमानुधावनम्, आदि-पदाद्व्यभिचारनिरूपकाधिकरणभेदादिपरिग्रहः, 'अस्ति' निरुक्तो-पाधित्वाश्रय इति शेषः, तथाच तावतैव तत्र नानौपाधिकत्वमिति

भावः। ननु तादृशाखण्डोपाधेरपि किञ्चिद्देश-कालवृत्तित्वविशिष्टस्य द्वित्वाद्यवच्छिन्नस्य वाभावः साध्यवति वर्त्तते इति तस्याप्युपाधित्वं न घटते यदि चाप्रतियोगिपदं प्रतियोगितानवच्छेदकावच्छिन्नपरं तदा सद्धेतौ साधनाव्यापकस्य घटादेर्द्रव्यत्व-प्रमेयत्वादिना साध्यव्यापकत्वमादायानौपाधिकत्वव्याघात इत्यत आह, 'यदि चेति, केचिद्विशिष्टाभावस्य विशेष्य विशेषणसम्बन्धप्रतियोगिकत्वमेव स्वीकुर्व्वन्ति द्वित्वाद्यवच्छिन्नाभावञ्च नाङ्गीकुर्व्वन्ति, अतएव मणिकारेणापि तादृशाभावानभ्युपगमादिति सिद्धान्तग्रन्थे वक्ष्यते अतो यदि सम्भव इत्युक्तं, 'दलद्वयार्थं इति तथाच सद्धेतौ घटत्वादिना साधनाव्यापकस्य प्रमेयत्वादिना साध्यव्यापकत्वेऽपि साध्यव्यापकतावच्छेदकस्य साधनव्यापकतानवच्छेदकत्वासम्भवान्न निरुक्तधर्म्मवत्त्वमिति न सोपाधितापत्तिरिति भावः। अत्र सम्बन्धादिविवक्षा स्वयमूह्या। सहानवस्थाननियमलक्षणविरोधितायाः प्रतियोगितास्वरूपताखण्डनस्य प्रकृतानुपयोगित्वशङ्काव्युदासार्थं तत्प्रयोजनं दर्शयति, 'अनवस्थामिति 'सहानवस्थाननियम इति घटकस्य नियमस्य व्याप्तिरूपतया अनौपाधिकत्वघटकोपाधिशरीरनिविष्टप्रतियोगितायाम् अनौपाधिकत्वान्तरस्य प्रवेशः तद्घटकप्रतियोगित्वान्तरे वा अनौपाधिकत्वान्तरमस्त्येवेत्येवं क्रमेण व्याप्तिज्ञानविषयानवस्थामित्यर्थः। यद्यपि सहानवस्थाननियमस्तदधिकरणसामान्यावृत्तित्वं तच्च तदधिकरणवृत्तित्वत्वावच्छिन्नाभावरूपं न व्याप्तिघटितमिति नानवस्थावसरः। न च तदभावव्याप्यत्वरूपसहानवस्थाननियमपदार्थाभि-

प्रायेणानवस्थाप्रदर्शनमिति वाच्यम् । एवं सत्यग्रे सत्ताभाववत्समवेतत्वाप्रसिद्ध्या समवायेन सत्ताभावप्रतियोगितायामव्याप्तिप्रदर्शनस्यासङ्गत्यापत्तेः । तथापि तदधिकरणावृत्तित्वं यथाश्रुतम् । यदि च सहानवस्था न नियमपदार्थः तदा विशिष्टसत्ताद्यभावप्रतियोगित्वासंग्रहः विशिष्टस्यानतिरेकेण तत्र विशिष्टाभावाधिकरणावृत्तित्वस्य दुर्लभत्वात् इति यदभाववन्निष्ठाधिकरणतासामान्ये यद्धर्मावच्छिन्ननिरूपितत्वाभावस्तद्वत्त्वमेव विवक्षणीयं घटाभावादिमन्निष्ठान्यदीयाधिकरणतामादाय पटादिनिरूपितत्वस्याभावसत्त्वादतिप्रसङ्गस्य वारणाय सामान्यपदम् । तदर्थश्च व्याप्तिरेवेत्यभिप्रायेण इदं, तादृशाधिकरणतायां प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशस्यावश्यकतया अग्रे अप्रसिद्धिप्रदर्शनसङ्गतिः कपिसंयोगादेस्तदभावाधिकरणे भिन्नदेशावच्छेदेन घटादेश्च स्वध्वंस-प्रागभावाधिकरणे द्रव्यभिन्नकालावच्छेदेन वृत्त्या अव्याप्तिमाशङ्क्य पूरयति, 'एकेति तथाच एकदेशावच्छिन्नं सदेककालावच्छिन्नं यदेकाधिकरणावस्थानं तदभाव इत्यर्थः । देश-कालावच्छिन्नत्वयोरनुगतरूपेण निवेशस्तु न युक्तः कपिसंयोगादि-तदत्यन्ताभावयोरेककालावच्छेदेन संयोग तत्प्रागभावाद्योश्चैकदेशाद्यवच्छेदेन एकाधिकरणवृत्तितया तद्दोषतादवस्थ्यात् (१) । यद्यप्येकदेश-कालावच्छिन्नमित्यादेरभावावच्छेदकदेशावच्छिन्नं तदवच्छेदककालावच्छिन्नं यत्तदधिकरणनिष्ठमधिकरणत्वं तदनिरूपकत्वं तत्सामान्ये यन्निरूपितत्वाभावस्तत्त्वं वा अर्थो न सम्भवति इत्त-

(१) अव्याप्तितादवस्थ्यादिति पा० ।

निष्ठकपिसंयोगावच्छेदकशाखयामपि तादृशसंयोगानुत्पाददशायां तत्र तदभावावच्छेदकत्वात् तादृशसंयोगावच्छेदककालस्यापि मूलावच्छेदेन तदभाववृत्तौ तथात्वादव्याप्तेर्दुर्वारत्वात्, तथापि शाखावच्छेदेन कपिसंयोगादिसत्त्वदशायामपि इदानीं शाखायां वृक्षो न कपिसंयोगीति प्रतीत्यापत्तिवारणाय (१) तादृशप्रतीत्या कालविशेषावच्छिन्नस्यैव देशस्यावच्छेदकत्वमवगाह्यते इति स्वीकरणीयं तादृशदेश-कालायोर्वृत्त्यऽभाववृत्तौ पृथगवच्छेदकत्व-सम्भवेऽपि तत्कालावच्छिन्नतद्देशस्यानवच्छेदकत्वान्नातिप्रसङ्गः। तथाच यत्कालावच्छिन्नयद्देशस्याभाववृत्तावच्छेदकत्वं तत्काला-वच्छिन्न-तद्देशावच्छिन्नत्वमेकदेश-कालावच्छेदेनेत्यर्थ इति न दोषः, कालपदं क्षणपरं, तेन दिवसाद्यात्मकस्थूलकालावच्छिन्न-शाखादेः संयोग तदभावावच्छेदकत्वेऽपि न क्षतिः। देशपदमव-च्छेदकदेशान्तरानवच्छिन्नदेशपरं तेन विभिन्नभागावच्छिन्नस्थूला-वयवस्य प्रतियोगि-तदभावोभयावच्छेदकत्वसम्भवेऽपि न क्षतिः। अथैवमपि व्याप्यवृत्तेरवच्छेदकानभ्युपगमाद्घटत्वाद्यभावप्रतियोगि-त्वासंग्रहः तदवच्छेदकस्यैवाप्रसिद्धेः। न चैकदेश-कालावच्छेदेनेत्य-स्यानवच्छिन्नत्वविशेषणतात्पर्य्यान्न दोष इति वाच्यम्। संयोगा-द्यभावस्यानवच्छिन्नाधिकरणतावति गुणादौ संयोगादेरवृत्त्या संयोगाद्यभावस्य प्रतियोगित्वसंग्रहेऽपि संयोगादेरनवच्छिन्नाधिक-रणत्वाप्रसिद्ध्या तत्प्रतियोगित्वासंग्रहात्। न चाभावाधिकरणतायां

(१) अग्रावच्छेदेन संयोगसत्त्वदशायाम् इदानीं अग्रे वृक्षो न कपिसंयोगीति प्रतीत्यापत्तिवारणायेति पा०।

न तद्विशेषणम् अपि तु यदन्निष्ठाधिकरणतायामेवेति (१) नायं दोष इति वाच्यम् । एवमपि संयोगादेः स्वसमानाधिकरणगगनाद्यभावप्रतियोगित्वापत्तेर्दुर्व्वारत्वात् ।

यत्तु व्याप्यवृत्तेरवच्छेदकानभ्युपगमे यदधिकरणनिष्ठाभावाधिकरणतायां यद्यत्चणावच्छिन्नयद्देशानवच्छेद्यत्वं तत्चणावच्छिन्नतद्देशानवच्छिन्नतदधिकरणनिष्ठाधिकरणत्वानिरूपकत्वे सति यदधिकरणनिष्ठस्वाधिकरणतायां यद्यत्चणावच्छिन्नयद्यद्देशानवच्छिन्नत्वं तत्चणावच्छिन्नतद्देशानवच्छिन्नतदधिकरणनिष्ठाधिकरणत्वानिरूपकतदभावकत्वस्य विवक्षणीयत्वात् व्याप्यवृत्त्यभावप्रतियोगिन्यपि तस्याक्षतत्वात् । तथाहि पटादौ घटत्वाद्यभावाधिकरणता यद्देश-कालानवच्छिन्ना तदनवच्छिन्ना व्याप्यवृत्तिघटत्वाद्यधिकरणताप्रसिद्धा तदनिरूपकत्वादनवच्छिन्नस्वाधिकरणतावद्घटादिनिष्ठताद्दृशपटत्वाभावाधिकरणत्वनिरूपकघटत्वाद्यभावकत्वाच्च घटादेः स्वाभावप्रतियोगित्वनिर्व्वाहः, घटत्वादेर्व्याप्यवृत्तिस्वसमानाधिकरणसंयोगादिप्रतियोगितावारणाय सत्यन्तं, संयोगादेर्गगनाद्यभावप्रतियोगित्ववारणाय विशेष्यदलं, विभिन्नक्षणावच्छिन्नस्य संयोगादिविशेषावच्छेदकाग्रादेस्तदभावाधिकरणतावच्छेदकत्वाद्वृक्षादिनिष्ठतदभावाधिकरणताया न अग्राद्यनवच्छेद्यत्वं किन्तु प्रतियोग्यनधिकरणघटाद्यवयवानवच्छेद्यत्वमेव तदनवच्छिन्ना च वृक्षनिष्ठसंयोगविशेषाधिकरणतापीति तत्राव्याप्तिरतः क्षणत्वनिवेशः, तन्निवेशे च यत्चणावच्छिन्नस्य मूलादेः प्रतियोग्य-

(१) तद्विशिष्टाधिकरणतायामिति पा० ।

वच्छेदकत्वं तत्त्वणावच्छिन्नतदनवच्छेद्यत्वमभावाधिकरणतायां तादृशतदनवच्छेद्यत्वञ्च न प्रतियोग्यधिकरणतायामिति तथाविधाधिकरणत्वान्तरानिरूपकत्वं प्रतियोगिन्यक्षतमेवेति नाव्याप्तिरिति, तदपि न, मूलाग्रादिरूपविभिन्नावच्छेदेन मध्यभागादिरूपैकावच्छेदेन च वृक्षादौ वर्त्तमानयोः संयोगयोरेकस्यापराभावप्रतियोगित्वापत्तेः एकसंयोगाभावाधिकरणतायास्तादृशमध्यभागाद्यनवच्छिन्नत्वात् अपरसंयोगाधिकरणतायास्तदनवच्छिन्नत्वेनापरसंयोगस्य तदनवच्छिन्नाधिकरणतान्तराप्रतियोगित्वात् सत्यन्तदलसत्त्वात् तत्संयोगावच्छेदकापरादिभागस्यापरसंयोगाभावाधिकरणतावच्छेदकत्वेन विशेष्यदलसत्त्वात्।

मैवं यादृशयादृशावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववद्वृत्तिनिष्ठं यदभावाधिकरणत्वं तन्निष्ठं यत्तादृशावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववदधिकरणत्वं तदनिरूपकत्वविवक्षया सामञ्जस्यात्। गगनादेः स्वाभावाभावत्वं नोपेयते इति स्वाभावनिष्ठतत्प्रतियोगित्वासंग्रहो न दोषाय। अन्योन्याभावप्रतियोगिनि मूलोपदर्शिताव्याप्तिमुद्धरति, 'अत्रेति, 'वह्न्यादेर्वृत्तेरिति. सम्बन्धविशेषमनन्तर्भाव्य अभावाधिकरणवृत्तित्वसामान्याभावनिवेशे अव्याप्तिरत इति शेषः। 'येन सम्बन्धेनाभाव इति यः सम्बन्धो यदभावप्रतियोगितावच्छेदकतयाभिमतः इत्यर्थः, एवमन्योन्याभाववति प्रतियोगिनस्तादात्म्याभावेऽपि तेन सम्बन्धेन वृत्त्यप्रसिद्ध्या तत्र तेन सम्बन्धेन तदधिकरणावृत्तित्वं दुर्घटमत आह, 'तेन सम्बन्धेनासम्बद्धत्वोक्ताविति। स्वयं दूषणान्तरमाह,'परन्त्विति, तद्वति सामा-

न्यादाविति शेषः । 'समवायेन वृत्तेः' प्रतियोगितावच्छेदकीभूत-समवायेन स्वसम्बद्धत्वस्य, 'तादृशेति तादृशेन प्रतियोगितावच्छेदकसम्बन्धेन स्वसम्बद्धं यदधिकरणं तदवृत्तितदभावकत्वाभिधाने चेत्यर्थः, तथा सति सत्तासमवाय्यवृत्तित्वस्य तदभावे सत्त्वेन उक्ताव्याप्तिपरीहारासम्भवादिति भावः । 'व्यधिकरणसम्बन्धेति व्यधिकरणसम्बन्धेन संयोगादिना गुणाद्यभावप्रतियोगितायां तेन सम्बन्धेन गुणादिसम्बद्धाधिकरणाप्रसिद्धा अव्याप्तिरित्यर्थः । इदमुपलक्षणं, प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिमत्यपि काले कालिकादिसम्बन्धेनाभावस्य वृत्त्या अनुयोगिताविशेषरूपाभावत्वावच्छेदकसम्बन्धेनावृत्तिरवश्यं वाच्या तथाच स्वरूपविशेषसम्बन्धेन सत्ताद्यभावस्य यः सत्तादिरूपोऽभावस्तत्प्रतियोगित्वासंग्रहोऽपि द्रष्टव्यः सत्ताद्यभावसम्बन्धाधिकरणसामान्यादौ समवायादिरूपतादृशसम्बन्धेन वृत्तेरप्रसिद्धेः । 'वक्ष्यमाणरीत्येति यादृशसम्बन्धसामान्ये एकदेश-कालावच्छिन्नयदभावाधिकरणानुयोगिकत्वस्य यद्रूपविशिष्टप्रतियोगिकत्वस्य च द्वयोर्व्यतिरेकस्तद्रूपवत्त्वं तादृशसम्बन्धेन तदभावप्रतियोगित्वमितिरीत्येत्यर्थः । न च व्याप्यवृत्तेरवच्छेदकानुपगमे देश-कालावच्छिन्नाभावाधिकरणत्वाप्रसिद्धा तद्घटितोभयाभावस्याप्रसिद्धेरिति वाच्यम् । एकदेश-कालावच्छिन्नाभावाधिकरणानुयोगिकत्वस्थले यद्यदधिकरणनिष्ठाभावाधिकरणतायां यद्यद्देश-कालानवच्छिन्नत्वावच्छिन्नत्वोभयाभावस्तत्र तत्तद्देश-कालानवच्छिन्नत्वावच्छिन्नत्वोभयाभावस्तत्तदधिकरणानुयोगिकत्वद्वयं निवेश्य तद्द्वयप्रतियोगि-

काले तन्नितयत्वावच्छिन्नाभावनिवेशेन सामञ्जस्यात्(१)। न चैवमपि समवायैक्यमते समवायेन द्रव्यत्वाद्यभावप्रतियोगित्वासंग्रहः प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधिकरणताधर्म्मिकोभयाभावविवक्षया अधिकरणभेदेन भेदं व्यवस्थाप्य तत्संग्रहे चान्योन्याभावप्रतियोगिन्यव्याप्तिः तादात्म्यसम्बन्धेनाधिकरणताया अप्रसिद्धेः सम्बन्धिता च सम्बन्ध एवेति तद्धर्म्मिकोभयाभावविवक्षणे पूर्व्वोक्तदोष एवेति वाच्यम्। प्रतियोगितावच्छेदकसम्बन्धनिरूपितानुयोगिताधर्म्मिकस्य यत्प्रतियोगिकत्वविशिष्टसम्बन्धप्रतियोगित्व-निरुक्तयदभावाधिकरणवृत्तित्वोभयाभावस्य विवक्षया समवायैक्यमतेऽतिप्रसङ्गवारणाय द्रव्यादिनिष्ठद्रव्यत्वादिप्रतियोगिकत्वविशिष्टसमवायप्रतियोगिकत्वविवक्षयानुयोगितातो गुणादिनिष्ठतदनुयोगिताभेदस्यावश्याभ्युपेयत्वेन प्रतीकारसम्भवात् अधिकमग्रे वक्ष्यामः। अवृत्तिगगनादेस्तदभावनिष्ठं प्रतियोगित्वं नोपेयत एव तत्स्वीकारे च यस्य येन सम्बन्धेनाधिकरणे यस्य येन सम्बन्धेनावच्छिन्ना एकावच्छेदकावच्छिन्ना वा वृत्तिः तदुभयावृत्तिः स्ववृत्तिर्यो धर्म्मः स्वभिन्नत्वे सति तद्धर्म्मवत्त्वमेव तत्सम्बन्धावच्छिन्न स्वनिष्ठानुयोगितानिरूपकं तत्सम्बन्धावच्छिन्नप्रतियोगित्वमिति विवक्षणीयं तादृशधर्म्मश्च घट-तदभावान्यतरत्वादिकमेव। अवृत्तिद्वयस्य परस्परप्रतियोगित्ववारणाय वृत्तिमन्निष्ठत्वेन धर्म्मो विशेषणीयः। एवमपि गोत्वादेरश्वत्वादिप्रतियोगिताप्रसङ्गवद्घटत्वादौ द्रव्यत्वाद्यभावप्रतियोगित्वप्रसङ्गतादवस्थ्यमेव स्वाभावविरोधित्वनिवेशे वक्ष्य-

(१) न चेत्यादिः सामञ्जस्यादित्यन्तः पाठः कस्मिंश्चिदादर्शपुस्तके नास्ति।

माणमत इव स्वाभावेत्यत्र षष्ठ्यर्थप्रतियोगितानिवेशेनात्माश्रय एव विरोधिताघटकोभयाभावादावपि प्रतियोगित्वान्तरप्रवेशादनवस्था चेत्यपि बोध्यम्। 'तत्त्वावच्छेदकेति प्रतियोगितावच्छेदकेत्यर्थः, 'अप्रसक्त्यतिप्रसक्ती इति, घटाद्यन्योन्याभावाभावस्य तत्प्रतियोगितावच्छेदकघटत्वादिमात्ररूपत्वात् इति भावः। ननु नेदं प्रतियोगितापदमुख्यार्थनिर्वचनं किन्तु व्याप्तिलक्षणप्रविष्टोपाधित्वघटकव्यापकतानिविष्टप्रतियोगितास्वरूपनिरूपणमेव तादृशप्रतियोगितायाः भेदप्रतियोगिसाधारण्यविरहेऽपि न क्षतिः तावतापि व्याप्तिलक्षणस्य निर्दोषत्वादित्यत आह, 'प्रकृतोपयोगीति, 'अत्यन्तपदवैयर्थ्यमिति, धूमवान् वह्नेरित्यादौ अयोगोलकान्यत्वादिरूपस्य उपाधेः साध्यवन्निष्ठभेदप्रतियोगितया व्यापकत्वानुपपत्तिरिति तद्वारणायैवात्यन्तपदोपादानं, यदि चाभावाभावत्वरूपमन्योन्याभावप्रतियोगिव्यावृत्तं प्रतियोगित्वमुपाधित्वघटकव्यापकताशरीरे निवेश्यते तदा साध्यवन्निष्ठोपाधिभेदमादाय दोषस्यानवकाशात्तद्वैयर्थ्यमिति भावः। ननु साध्यवन्निष्ठध्वंस-प्रागभावप्रतियोगिनआर्द्रेन्धनादेरुपाधितानिर्व्वाहायात्यन्ताभावपदोपादानं तस्यापि तद्ध्वंस-प्रागभावरूपत्वादित्यत आह, 'सर्व्वत्रेति, व्यभिचारिणीति शेषः। 'नित्यस्य' व्यभिचारनिरूपकाधिकरणभेदादेः, द्वित्वावच्छिन्नाभावप्रतियोगितामादायासम्भववारणार्थं प्रतियोगितानवच्छेदकरूपावच्छिन्नत्वविवक्षाया आवश्यकत्वेन आर्द्रेन्धनादेरपि ध्वंसादिप्रतियोगितानवच्छेदकार्द्रेन्धनायोगोलकभेदान्यतरत्वादिना आर्द्रेन्धनादेरप्युपाधित्वसम्भव इत्याशयेनाह, 'नित्य-

साधारणेति, न च ध्वंस-प्रागभावादीनां सामान्यधर्म्मो न प्रतियोगितावच्छेदक इति साध्यवन्निष्ठध्वंस-प्रागभावादिरूपाभावप्रतियोगितावच्छेदकं नार्द्रेन्धनत्वमिति नित्यसाधारणरूपपर्य्यन्तानुसरणमफलमिति वाच्यम्। स्वसमानाधिकरणार्द्रेन्धनासमानकालीनतत्प्रागभावानां तादृशतत्प्रागभावासमानकालीनतद्ध्वंसानामार्द्रेन्धनत्वस्यैव प्रतियोगितावच्छेदकत्वात् अन्यथा ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वमते तादृशध्वंस प्रागभावाधिकरणे अत्रेदानीमार्द्रेन्धनं नास्तीत्यादिप्रतीत्यनुपपत्तेः। वस्तुतस्तु एतद्धूमवान् वह्नेरित्यादौ इन्धनादिव्यक्तीनां नोपाधिता सम्भवति एतदार्द्रेन्धनत्वादेः साध्यवन्निष्ठध्वंसादिप्रतियोगितावच्छेदकत्वादित्याशङ्कायां 'नित्यस्येत्यनेन तद्व्यक्तीनां व्याप्तिलक्षणाप्रवेशेऽपि न क्षतिरित्युक्त्वा तादृशोपाधीनामपि व्यापकरूपेणोनाधितया व्याप्तिलक्षणप्रवेश एवेति 'नित्यसाधारणरूपावच्छिन्नस्य चेत्यनेनाभिहितं, नित्यसाधारण्यञ्चात्र तद्देशनिष्ठध्वंसाद्यप्रतियोगिसाधारण्यार्थकं, तेनार्द्रेन्धनत्वादेरपि सुग्रहान्न न्यूनमिति ध्येयम्। 'उपाधित्वसम्भवादिति, तथा चार्द्रेन्धनत्वाद्यवच्छिन्नस्य प्रकृतोपाधित्वानुपपत्तावपि न व्याप्तिलक्षणातिप्रसङ्ग इति भावः। 'इतरथा' भेदप्रतियोगितासाधारणरूपावच्छिन्नप्रतियोगिताया लक्षणघटकत्वे, 'भेदप्रतियोगितेति अयोगोलकभेदादिभेदप्रतियोगितेत्यर्थः। अथायोगोलकभेदादेः साध्यवन्निष्ठभेदप्रतियोगितया अनुपाधित्वेऽपि अयोगोलकभेद-धूमवदन्यतरत्वाद्यवच्छिन्नस्य उपाधितासम्भवाद्व्याप्तिलक्षणानतिप्रसङ्गो निर्व्वहति, नहि तादृशान्यतरत्वावच्छिन्ने

धूमादिमति तदवच्छिन्नभेदो वर्त्तते येन भेदप्रतियोगितामादाय तदवच्छिन्नस्योपाधित्वं व्याहन्येत । न च इदं जन्यं पृथिवीत्वादित्यादौ परमाणुभेदादेर्जन्यनिष्ठभेदप्रतियोगित्वेन साध्याव्यापकतया जन्य-परमाणुभेदान्यतरत्वावच्छिन्नस्य परमाणुसाधारणत्वेन (१) साधनव्यापकतयोपाधित्वं न सम्भवतीति तत्रानौपाधिकत्ववारकतया अत्यन्तपदसार्थक्यमिति वाच्यम् । साधनाव्यापकतायामप्यत्यन्ताभावनिवेशस्य निष्प्रयोजनकतया तादृशान्यतरत्वावच्छिन्नस्य परमाणुभिन्नत्वाद्यवच्छिन्नस्य च साधनवत्परमाणुनिष्ठभेदप्रतियोगितया साधनाव्यापकतयोपाधित्वसम्भवात् ।

यत्तु घटाभावभिन्नं मेयत्वादित्यादौ घटाभावभिन्नत्वाद्यवच्छिन्नस्यापि साध्यवन्निष्ठघटाद्यभावस्वरूपघटाद्यभावनिष्ठस्वभेदप्रतियोगितया साध्यव्यापकत्वासम्भवेनानौपाधिकत्वापत्त्या तद्वारकतया अत्यन्तपदसार्थक्यं तत्पददाने घटाभावभिन्नादेः अत्यन्ताभावत्वनिरूपकप्रतियोगित्वघटितसाधनाव्यापकत्वविरहेण अनुपाधित्वेऽपि घटाभावभेदादेरेवोपाधित्वसम्भवादिति तन्न । घटाभावभेदात्यन्ताभावस्यापि घटाभावमात्रवृत्तित्वेन तुल्ययुक्त्या घटाभावरूपतया अत्यन्तपददानेऽपि तत्रोपाधिसौलभ्याभावात् । न चात्यन्तपदोपादानादत्यन्ताभावत्वनिरूपकप्रतियोगित्वलाभादुक्तस्थले घटाभावभिन्नस्य घटाभावात्मकस्वभेदीयभेदत्वनिरूपकप्रतियोगित्वसत्त्वेऽपि अत्यन्ताभावत्वनिरूपकप्रतियोगित्ववि-

---

(१) जन्यस्य घटादिध्वंसस्य परमाणौ सत्त्वात् तदन्यतरत्वावच्छिन्नस्य परमाणुसाधारणत्वम् ।

र्हादुपाधित्वं सम्भवत्येवेति वाच्यम्। घटाभावभिन्नं पटत्वा-दित्यादावुक्तक्रमेण साध्यव्यापकस्य घटाभावभिन्नस्य साधन-समानाधिकरणघटाभावरूपस्वभेदप्रतियोगितया उपाधितापत्त्या साधनाव्यापकत्वदले़ऽपि अत्यन्ताभावत्वनिरूपकप्रतियोगित्वनि-वेशनस्यावश्यकत्वेन प्रमेयत्वादिसाधनाव्यापकतया तस्योपाधित्व-सम्भवात्, विवक्षान्तरेण घटाभावभिन्नभेदस्य घटाभावत्वस्वरूपतया तस्य साध्यासमानाधिकरणत्वान्नोपाधित्वहानिरिति भावः। घटा-भावभेदस्य उपाधित्वोपपादाने घटाभावभिन्नस्यापि तदुपपादान-सम्भवेनात्यन्तपदवैयर्थ्यस्यावश्यकत्वादिति चेन्न। अखण्डनित्यायोगो-लकभेदादिरूपोपाधेः साध्यवति कथञ्चिदपि नात्यन्ताभावः विशि-ष्टाभावस्य विशेष्य-विशेषणसम्बन्धप्रतियोगिताकत्वमतावलम्बनात् द्वौ नस्त इत्यादिप्रतीतेश्च परम्परासम्बन्धेन द्वित्वाद्यभाव एव विषय-इति मताश्रयणाच्च। व्यासज्यवृत्तिधर्म्मानवच्छिन्नत्वं वा प्रतियोगि-तायां विशेषणं देयं, तथाचाप्रतियोगित्वगर्भमेव व्यापकत्वं वाच्यम् न तु प्रतियोगितानवच्छेदकावच्छिन्नत्वरूपं,ग्रन्थकृतापि 'यदि चे-त्यनेनानवच्छेदकावच्छिन्नत्वनिवेशे प्रागनिर्भरो दर्शितः। एवञ्चा-योगोलकभेद-साध्यवदन्यतरत्वावच्छिन्नस्योपाधित्वं(१) दुरुपपादमेव साध्यवतः साध्यवन्निष्ठात्यन्ताभावप्रतियोगित्वात्, अयोगोलक-भेदादेश्च तादृशभेदप्रतियोगित्वादत्यन्तपदसार्थक्यात्। नन्वेवमपि नित्यसंसर्गाभावत्वरूपात्यन्ताभावत्वघटकध्वंसादिबाधकनित्यत्वांश-स्यानतिप्रयोजनकत्वमेवेत्याशङ्कायां नित्यत्वांशो न निवेश्यत एव

(१) अयोगोलकभिन्नत्वावच्छिन्नस्योपाधित्वमिति पा०।

केवलसंसर्गाभावत्वलाभायैवात्यन्तपदमिति दर्शयति, 'संसर्गाभावेति, 'तस्य' अत्यन्तपदस्य, अन्योन्याभावप्रतियोगिन्यव्याप्तिं परिहर्त्तुमाह, 'विरहपदस्येति, 'तज्ज्ञानेति तदन्वितं अभावान्वितं यज्ज्ञानं तत्प्रतिबन्धकज्ञानविषयार्थकत्वात् इत्यर्थः, अभावान्वये उपलक्षणज्ञानप्रभृतीनामेव विरहपदार्थघटकत्वं बोध्यम्, तेन नाभावपदवैयर्थ्यम् । एवञ्च तदभावग्रहप्रतिबन्धकग्रहविषयत्वमेव तदभावप्रतियोगित्वमिति फलितं एतच्चान्योन्याभावप्रतियोगित्वसाधारणमेवेत्याह, 'प्रतिबध्नाति हीति, प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिप्रकारकनिश्चयस्याभावधीप्रतिबन्धकत्वादिति भावः । प्रतिबन्धकत्वं यदि कारणीभूताभावप्रतियोगित्वं तदा प्रतियोगित्वान्तरप्रवेशादनवस्था इत्यतस्तदन्यथा निर्व्वक्ति, 'प्रतिबन्धकत्वञ्चेति, 'अत्र' प्रतियोगितालक्षणे, अभाव-प्रतियोगिमत्ताज्ञानयोरपि भिन्नकालावच्छेदेन एकत्रात्मनि एकक्षणावच्छेदेन च विभिन्नात्मनि-वर्त्तमानत्वात् 'एककालावच्छेदेन एकत्रेति, कालपदं क्षणपरं, तेन स्थूलकालावच्छेदेन तयोरेकाधिकरणवृत्तित्वेऽपि न क्षतिः । अत्र एकत्रेत्यनतिप्रयोजनकं, अभावज्ञानाधिकरणक्षणावच्छेदेन तच्छून्यात्मनिष्ठप्रतियोगिज्ञानस्यासंग्रहेऽपि तज्ज्ञानाधिकरणक्षणावृत्तियत्किञ्चित्प्रतियोगिज्ञानव्यक्तिमादाय लक्षणगमनसम्भवात् । न च कालमात्रस्यैव परमेश्वरीयाभावज्ञानाधिकरणतया अभावज्ञानाधिकरणक्षणावृत्तिज्ञानाप्रसिद्धिरिति वाच्यम् । अभावज्ञानावच्छेदकक्षणावच्छिन्नवृत्तिकान्यत्वरूपस्य एककालावच्छेदेनावर्त्तमानत्वस्य निवेशे नित्यस्य भगवज्ज्ञानस्य कालविशेषानवच्छिन्नतया सर्व्वत्र

प्रतियोगिज्ञाने तादृशवृत्तिकत्वानियमात् । घटाद्यभावज्ञानाद्य-
वच्छेदकक्षणानवच्छिन्नपटादिज्ञानव्यक्तिमादायातिप्रसङ्गस्तु एक-
क्षणावच्छेदेन घटाद्यभावज्ञानाधिकरणवृत्तिपटादिज्ञानस्यापि सत्त्वे-
नातिप्रसङ्गवदभावपदस्य स्वाभावपरतयैव वारणीय इत्यवधेयम् ।
न चैवं सति एकक्षणावच्छिन्नत्वं परित्यज्य एकाधिकरणावृत्तित्व-
निवेशेनापि निर्व्वाहसम्भवः एकपुरुषीयघटाद्यभावज्ञानव्यधि-
करणपुरुषान्तरीयघटादिज्ञानमादायैव घटादौ तदभावप्रतियोगि-
त्वोपपत्तेरिति वाच्यम् । अभावज्ञानस्य हि घटाद्यभावज्ञानत्वेनैव
निवेशान्न तत्तद्व्यक्तित्वादिना तथाच घटाद्यभावज्ञानव्यधिकरण-
घटादिज्ञानमेव दुर्लभं सर्व्वेषामेवात्मनां कदाचिद्घटाद्यभावज्ञानव-
त्त्वात् इत्येकक्षणावच्छिन्नत्वनिवेशस्यावश्यकत्वात् । न च तदधिकर-
णावृत्तित्वशरीरे प्रतियोगितायां तदधिकरणवृत्तित्वत्वावच्छिन्नत्व-
निवेशनमफलं तदधिकरणवृत्तित्वप्रतियोगिताकाभावनिवेशेना-
प्युपपत्तेः घटाभावज्ञानवदवृत्तिपटादिज्ञाने तद्वृत्तित्वप्रतियोगि-
कतद्विशेषाभावादिसत्त्वेऽपि स्वाभावस्य निवेशनीयतया अति-
प्रसङ्गानवकाशात् तथाच घटादिज्ञाने घटाभावादिज्ञानाधि-
करणवृत्तित्वसत्त्वेऽपि तत्प्रतियोगिकाभावसौलभ्यात् घटादेः
स्वाभावप्रतियोगित्वमुपपद्यत एवेति वाच्यम् । तदधिकरणवृत्ति-
त्वनिष्ठप्रतियोगितायाः प्रकारतया निवेशे प्रतियोगित्वज्ञानस्य
प्रतियोगित्वान्तरज्ञानापेक्षया दुर्ज्ञेयतापत्त्या अभावे तादृश-
प्रतियोगितायाः सम्बन्धतया निवेश्यतया प्रतियोगिताया यत्र
प्रतियोगिसंसर्गतया प्रवेशस्तत्र प्रतियोगिप्रकारीभूतधर्म्मावच्छिन्न-

त्वभानस्यावश्यकतया तदधिकरणवृत्तित्वत्वावच्छिन्नाभावस्यैव प्रतिबन्धकतारूपतया एकक्षणावच्छिन्नत्वानिवेशे उक्तानुपपत्तेरनुद्धारादित्यवधेयम् (१)। अन्योन्याभावप्रतियोगितावच्छेदकातिप्रसक्तिं निराकर्त्तुमाह, 'अभावपदस्य चेति, 'स्वाभावपरत्वादिति, तथाच स्वीयोयोऽभावः स्वनिष्ठं तद्विरहत्वमेव स्वस्य तदभावप्रतियोगित्वं, घटान्योन्याभावश्च न घटत्वाभाव इति घटत्वादिनिष्ठं तद्विरहत्वं न तत्प्रतियोगित्वमिति भावः। घट एव तदभावप्रतियोगीत्यादौ अभावपदं लक्षणया घटादिरूपसमभिव्याहृतपदार्थविशेषिताभावपरं, प्रतियोगिपदं ज्ञानप्रतिबन्धकज्ञानविषयत्वावच्छिन्नार्थकं, तदेकदेशज्ञाने वाभावविषयकत्वान्वयः; स्वत्वाननुगमेऽपि न प्रतियोगिपदशक्त्यानन्त्यप्रसङ्गः, न वा अभावपदार्थान्वयानुपपत्तिः इति ध्येयम्। सम्बन्धविशेषावच्छिन्नत्वस्य व्यापकताघटकप्रतियोगितायां अवश्यनिवेशनीयतया भेदप्रतियोगितामादायोक्तदोषासम्भवेन संसर्गाभावनिवेशवैयर्थ्यमित्यत्यन्तपदं सम्बन्धविशेषावच्छिन्नत्वलाभार्थकतया एव व्याख्येयं तथाच प्रकृतोपयोगिप्रतियोगितामात्रस्य लक्षणत्वेऽपि न क्षतिरित्याह, 'वस्तुतस्त्वित्यादिना, 'एकसम्बन्धावच्छिन्नाया इति, तथाच साध्यवन्निष्ठाभावप्रतियोगितासामान्यानवच्छेदकत्वनिवेशे प्रतियोगितावच्छेदकमात्रस्यैव साध्यवन्निष्ठयत्किञ्चित्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतया तादृशप्रतियोगितासामान्यानवच्छेदकसाध्यवन्निष्ठाभावप्रतियोगितावच्छेदकाप्रसिद्धिः। न चायोगो-

(१) न चैवमित्यादिः इत्यवधेयमित्यन्तः पाठः कस्मिंश्चिदादर्शपुस्तके नास्ति।

लकभेदत्वादिकमेव तथा धूमादिमति संयोगादिव्यधिकरणसम्बन्धावच्छिन्नायोगोलकभेदाद्यभावसत्त्वेऽपि तत्प्रतियोगितायां लाघवेन शुद्धभेदत्वादेरवच्छेदकत्वोपगमात् इति वाच्यम्। विषयितासम्बन्धेन कालिकसम्बन्धेन वा अयोगोलकभेदाभावस्य प्रतियोगितायामेवायोगोलकभेदत्वादेरवच्छेदकतया तस्य साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वासम्भवात् अयोगोलकभेदाविषयकभेदान्तरविषयकज्ञाने विषयितासम्बन्धेन भेदत्वरूपसामान्यधर्म्मावच्छिन्नाभावासम्भवेन तत्साधारणतादृशसम्बन्धावच्छिन्नायोगोलकभेदाद्यभावस्य भेदसामान्यानधिकरणदेशाप्रसिद्ध्या कालिकसम्बन्धावच्छिन्नभेदत्वावच्छिन्नाभावासम्भवेन अयोगोलकावच्छेदेन कालवृत्तेः कालिकसम्बन्धावच्छिन्नायोगोलकभेदाद्यभावस्य च शुद्धभेदत्वादेरवच्छेदकत्वायोगात्। यदि च यत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वं निवेश्य अयोगोलकभेदत्वादेस्तथात्वमुपपद्यते, तदा वह्निमान् धूमादित्यादौ वह्न्यादिमन्निष्ठसंयोगसमवाय-दैशिकसम्बन्धावच्छिन्नाभावप्रतियोगिता(१)नवच्छेदकधूमादिमन्निष्ठसमवाय--संयोग--दैशिकविशेषणतासम्बन्धावच्छिन्नाभावप्रतियोगिता(२)वच्छेदक-वह्नित्व द्रव्यत्वत्व-ह्रदभेदत्वाद्यवच्छिन्नस्योपाधितापत्तिरिति भावः। 'यत्सम्बन्धावच्छिन्नाया इति, तथाच संयोगादिसम्बन्धावच्छिन्नवह्न्यादिमन्निष्ठाभावप्रतियोगितानवच्छेदकवह्नित्वादेः साधनवन्निष्ठतत्सम्बन्धावच्छिन्नाभावप्रतियोगिता-

(१) संयोग-समवायादि-कालिकसम्बन्धावच्छिन्नाभावप्रतियोगितेति पा०।

(२) संयोग-समवाय-कालिकादिसम्बन्धावच्छिन्नाभावप्रतियोगितेति पा०।

नवच्छेदकत्वसम्भवात् धूमादिमन्निष्ठविशेषणताविशेषादिसम्बन्धा-वच्छिन्नाभावप्रतियोगितानवच्छेदकायोगोलकभेदत्वादेर्वह्न्यादिम-न्निष्ठतादृशसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वाच्च न कश्चि-द्दोष इति भावः। 'संसर्गाभावत्वमनुपादेयमेवेति अयोगोलभेदत्वा-देर्धूमादिमन्निष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि विशेषणताविशे-षादिसम्बन्धघटितनिरुक्तोपाधितावच्छेदकत्वस्य तत्राक्षतत्वात् इति भावः। 'स च' अस्वरसः, 'व्यधिकरणसम्बन्धेनेति, तथाच तादृश-व्यधिकरणसम्बन्धेन संयोगादिना यस्य रूपविशेषादेः क्वचिदपि कस्यचिद्भ्रमो न जातस्तस्य तादृशसम्बन्धावच्छिन्नाभावप्रति-योगित्वानुपपत्तिः। प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगि-प्रकारकज्ञानस्याभावधीविरोधित्वात् तादृशाभावधीप्रतिबन्धक-ज्ञानस्यैवाप्रसिद्धेः। यद्यपि समानधर्म्मिकयोरेवाभाव-प्रतियोगि-मत्ताज्ञानयोः प्रतिबध्य-प्रतिबन्धकभाव इति समानाधिकरण-सम्बन्धावच्छिन्नाभावस्थलेऽपि विरोधिनोरभाव-प्रतियोगिज्ञानयो-रेकतरस्य भ्रमत्वनियम इति यादृशाभावस्य तत्प्रतियोगिनो वा भ्रमो न कदाचिदपि प्रसिद्धः तदभावप्रतियोगित्वाव्याप्तिः सम्भ-वति तथापि समानविशेष्यताप्रत्यासत्त्या प्रतिबध्य-प्रतिबन्धकभा-वोपगमे भिन्नधर्म्मिकज्ञानस्यापि प्रतिबन्धकतावच्छेदकाक्रान्ततया तादृशभ्रमात्मकज्ञानमादाय लक्षणसमन्वयः सम्भवति इति व्यधिक-रणसम्बन्धावच्छिन्नाभावानुधावनम्। ननु प्रतिबन्धकत्वं न कारणी-भूताभावप्रतियोगित्वमपित्वेककालावच्छेदेनैकत्रावर्त्तमानत्वमिति प्रागेवोक्तम् एवञ्च यादृशव्यधिकरणसम्बन्धेन यस्य प्रतियोगिनो-

भ्रमोऽप्रसिद्धः तादृशसम्बन्धावच्छिन्नतदभावज्ञानासमानकालीनत-त्प्रतियोगिविषयकसम्बन्धान्तरावगाहिप्रमामादायैव लक्षणसङ्गतिः सम्भवतीत्यतो दूषणान्तरमाह, 'स्वाभावेति, सम्बन्धित्वस्य नियम-घटिततया गौरवादाह, 'स्वाभावज्ञानेति, 'लघोरित्यस्य स्वाभाव-ग्रहप्रतिबन्धकज्ञानविषयत्वापेक्षयेत्यादिः, 'सर्व्वत्र सम्भवित्वादिति सर्व्वत्र प्रतियोगितास्वरूपत्वसम्भवादित्यर्थः, तदभावज्ञानविषयोदा-सीनेऽतिप्रसङ्गस्य स्वांशेनैवायोगात् (१) इति भावः। ननु तथैवा-स्त्वित्यत आह, 'स्वाभावेत्यत्रेति, 'स्वाभावेत्यादाविति पाठे यथा-श्रुतविरहत्वनिवेशपक्षे अभावविरहस्येत्यस्य परिग्रहः, 'षष्ठ्यर्थप्रति-योगितायाः इति, स्वस्याभावः स्वाभावः स्वाभाव इति षष्ठ्यर्थस्य प्रतियोगित्वातिरिक्तानतिप्रसक्तसम्बन्धस्य दुर्व्वचत्वात् इति भावः। 'तत्र स्वरूपसम्बन्धस्यैवेति, अन्यथा आत्माश्रयादिति भावः। यद्यपि 'स्वाभावेत्यत्र प्रतियोगितायाः सम्बन्धविधया निवेशे सम्ब-न्धज्ञानस्य विशिष्टवैशिष्ट्यबुद्धिहेतुतया 'स्वाभावेत्यत्र स्वाभावा-भावत्वरूपप्रतियोगितानिवेशेऽपि तज्ज्ञानात् पूर्व्वं न तज्ज्ञाना-पेक्षेति न दुर्ज्ञेयता। तथापि विशिष्टसम्बन्धे सम्बन्धस्यापि घटकतया सम्बन्धविधया भासमानस्य तस्य शरीरेऽपि तस्य सम्बन्धविधया भानं तादृशरीत्या भानान्तर्गतमपि सम्बन्धविधया तज्ज्ञानमिति विषयतानवस्था दुर्व्वारैव। 'तथात्वौचित्यात्' प्रतियोगितौचित्यात्। न चाभावे स्वस्य सम्बन्धानुयोगिता न तु प्रतियोगिता सा च स्वरूपसम्बन्धरूपैवास्तां प्रतियोगिता तु निरुक्तरूपेत्याशङ्क्य, अनु-

(१) स्वांशनिवेशेनैवायोगादिति पा०।

योगितायाः स्वरूपसम्बन्धात्मकत्वे निरुक्तापेक्षया लघोस्तन्निरूपकत्वस्यैव प्रतियोगितात्वौचित्यात्। प्रकारान्तरेण प्रतियोगिताप्रवेशमाह, 'अभावत्वेति, अभावत्वं, द्रव्यादिप्रतियोगिकभेदवत्त्वं, 'प्रतिबन्धकत्वम्' एकत्र वर्त्तमानत्वप्रतियोगिकाभाव इति भावः। नन्वभावादिव्यवहारगोचरत्वमेवाभावत्वं न तु प्रतियोगिताघटितनिरुक्तरूपमित्यत-आह, 'तथाविधेति, 'विना प्रतियोगितामिति प्रतियोगितान्तर्भावमन्तरेणेत्यर्थः, तथाविधव्यवहारगोचरत्वम् अभावपदप्रतिपाद्यत्वं तत्पदशक्तिविषयत्वरूपं वा उभयथापि जन्यताघटितं प्रतिपाद्यत्वस्य जन्यप्रतिपत्तिविषयत्वरूपत्वात्, तत्पदशक्तेश्च पदजन्यबोधविषयत्वप्रकारकभगवदिच्छारूपत्वात्, जन्यता च व्याप्तिघटिता, तस्याश्च प्रतियोगिताघटितत्वादिति भावः। एवञ्च प्रतियोगिता स्वरूपसम्बन्धविशेष इति पूर्व्वमत एव मणिकारस्य निर्भर इति सूचितम्। इदमवधेयं घटो नास्तीत्यादिबुद्धावभावांशे प्रतियोगिनः प्रकारतया भानान्मरणभावादेः कारणत्वे प्रतियोगिनोऽवच्छेदत्वाच्चाभावनिष्ठप्रतियोगित्वनिरूपितानुयोगित्वाख्यस्वरूपसम्बन्धोऽवश्यमङ्गीकार्य्यः प्रतियोगिन्यभावविशिष्टबुद्ध्यात्मकोऽभावीयो घटइत्यादिप्रत्ययस्तु नानुभवसिद्धः इत्यभावीयप्रतियोगित्वाख्यस्वरूपसम्बन्धे मानाभावः प्रतियोगिव्यवहारस्तु अनुयोगितानिरूपकत्वमेवावलम्बते ध्वंसस्य च प्रतियोगिनिष्ठप्रत्यासत्त्या प्रतियोगिजन्यत्वानुरोधेन तस्य प्रतियोगिनिष्ठसम्बन्धोपगम आवश्यक इति चेदस्तु, तथाप्यभावान्तरस्य तादृशसम्बन्धो निष्प्रमाणक एव। न च जन्यत्वस्य

यत्र कार्य्यतावच्छेदकता तत्र प्रागभावनिष्ठानुयोगितानिरूपकत्वापेक्षया प्रतियोगितासम्बन्धेन प्रागभावे तस्य तस्य तथात्वे लाघवात् प्रागभावस्यापि तादृशसम्बन्धः सिद्ध इति वाच्यम्। तत्र निरूपकतासम्बन्धेनानुयोगिताविशेषरूपप्रागभावत्वस्यैवावच्छेदकत्वोपगमात्। अन्यथा प्रागभावनिष्ठात्यन्ताभावादिभेदस्याधिकरणस्वरूपतामते जन्यत्वस्यात्यन्ताभावादिसाधारण्यापत्तेः गौरवाच्चेति।

---

तत्त्वचिन्तामणिः।

यावत्साधनाव्यापकमव्यापकं यत्साध्यस्य यावत्साध्यव्यापकं व्यापकं वा यस्य तत्त्वं तदिति चेन्न, सोपाधेरपि तथात्वात्, तथाहि साधनस्य वह्नेरव्यापकं यावदार्द्रेन्धनन्तत् प्रत्येकमव्यापकं साध्यधूमस्य द्वितीये साध्यधूमस्य व्यापकमार्द्रेन्धनं तद्व्यापकं महानसीयवह्नेः। नापि साध्यं यावद्व्यभिचारि तदव्यभिचारित्वमनौपाधिकत्वं, साध्याव्यभिचारित्वस्यैव गमकत्वसम्भवात्, तच्च दूषितम्। नापि कार्त्स्न्येन सम्बन्धोव्याप्तिः एकव्यक्तिके तदभावात् नानाव्यक्तिकेऽपि सकलधूमसम्बन्धस्य प्रत्येकवह्नावभावात्। अतएव न कार्त्स्न्येन साध्येन सम्बन्धोव्याप्तिः विषमव्याप्ते तदभावाच्च। न च यावत्साधनाश्रयाश्रितसाध्यसम्बन्धः, साधनाश्रये

महानसादौ सकले प्रत्येकं वह्नेराश्रितत्वाभावात्। नापि साधनसमानाधिकरणयावद्धर्म्मसमानाधिकरण-साध्यसामानाधिकरण्यं, यावद्धर्म्मसामानाधिकरण्यं हि यावत्तद्धर्म्माधिकरणाधिकरणत्वं तच्चाप्रसिद्धं साधन-समानाधिकरणसकलमहानसत्वाद्यधिकरणाप्रतीतेः। नापि स्वाभाविकः सम्बन्धोव्याप्तिः, स्वभावजन्यत्वे तदा-श्रितत्वादौ वा अव्याप्त्यतिव्याप्तिः। नाप्यविनाभावः, केवलान्वयिन्यभावात्। अथ सम्बन्धमात्रं व्याप्तिः व्यभिचारिसम्बन्धस्यापि केनचित् सह व्याप्तित्वात् धूमादिव्याप्तिस्तु विशिष्यैव निर्व्वक्तव्येति तन्न, लिङ्ग-परामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावे लक्षणाभि-धानस्यार्थान्तरत्वात्। न च सम्बन्धमात्रं तथा, तद्-बोधादनुमित्यनुत्पत्तेः।

---

दीधितिः।

यत्साध्यस्य यत्समानाधिकरणसाध्यस्य। 'तथाही-त्यादि, यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छे-दकं यावत् साध्यसमानाधिकरणात्यन्ताभावप्रतियोगि-तावच्छेदकम् साध्यसमानाधिकरणात्यन्ताभावप्रतियो-गितानवच्छेदकं यावत् यत्समानाधिकरणात्यन्ताभाव-

प्रतियोगितानवच्छेदकं तत्त्वमित्यर्थे तु नोक्तदोषइति ध्येयम्। प्रतियोगितयोश्चैकसम्बन्धावच्छिन्नत्वं वा वक्तव्यम् तेन प्रतियोगितावच्छेदकमात्रस्यैव यत्किञ्चित्सम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वेऽपि एकसम्बन्धावच्छिन्नसाध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकस्य सम्बन्धान्तरावच्छिन्नसाधनसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेऽपि च न क्षतिः। व्यभिचारिणि तु यत्राधिकरणे व्यभिचारी विशेषणताविशेषावच्छिन्नतन्निष्ठाभावप्रतियोगितावच्छेदकं साध्यवत्त्वप्रकारकप्रमाविषयत्वत्वम् विशेषणताविशेषावच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति नातिप्रसङ्गः। वस्तुतो हेतुसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं यावद्‌यद्धर्मावच्छिन्नसमानाधिकरणान्योन्याभावप्रतियोगितावच्छेदकं तद्धर्मावच्छिन्नसामानाधिकरण्यम् साध्यसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकं यावत्स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकं तत्त्वं वा व्याप्तिरिति ध्येयम्। 'साध्यमिति यावतां तेषामित्यर्थः। 'दूषितं' केवलान्व-

यिन्यव्याप्त्या, सा च यथोक्तलक्षणेऽपि गौरवं परमति-रिच्यत इति । कात्स्न्यं साधनस्य, साध्यस्य, साध्याश्रयस्य, साध्यसमानाधिकरणस्य, साधनाश्रयस्य, साधनसमाना-धिकरणस्य वा, आद्ये कृत्स्नसाधनसामानाधिकरण्यं साध्ये, कृत्स्नेषु साधनेषु साध्यसामानाधिकरण्यं वार्थः, प्रथमे 'एकेति, 'नानेति च, व्याप्तेश्चाहेतुवृत्तित्वम् पृथिवी पृथिवीत्वव्यापकजातेरित्यादावतिव्याप्तिश्च। अतएव ने-तरः। अर्थाभिधानपूर्व्वकं द्वितीयं निरस्यति, 'अतएवेति, 'अतएव' एकव्यक्तिसाध्यकाव्याप्तेरेव, विषमव्याप्ते सम-व्याप्तेऽपि च संख्यापरिमाणादावेकत्र साधने सकल-साध्यसम्बन्धस्याभावात् भावाच्च शब्दवान् द्रव्यत्वादि-त्यादौ। तृतीये च साध्याश्रययावद्वृत्तित्वं, चतुर्थे साध्य-समानाधिकरणयावत्सामानाधिकरण्यमर्थः, तत्र च यथासम्भवमेकमात्रवृत्तिसाध्यके वह्न्यादौ साध्ये धूमा-दावव्याप्तिरतिव्याप्तिश्च सत्त्वादौ। अर्थपरिष्कारपूर्व्वकं पञ्चमं निरस्यति, 'नचेति। एकमात्रवृत्तिसाधने चा-व्याप्तिश्च, तथैव षष्ठं निरस्यति, 'नापीति, तादृशानां सर्व्वेषां महानसत्वादीनां प्रत्येकनिरूपितान्यपि सामा-नाधिकरण्यानि न कुत्रापि वह्नौ। अथ यद्धर्म्मावच्छिन्न-

सामानाधिकरण्यत्वेन साधनसामानाधिकरण्यव्यापकत्वं तद्धर्म्मावलीढ़सामानाधिकरण्यं विवक्षितमिति चेत्, इतोऽपि लघुतया साधनव्यापकतावच्छेदकरूपावच्छिन्नसामानाधिकरण्यमेव व्याप्तिरिति सिद्धान्तयिष्यते। 'अविनेति, साध्यं विना साध्याभाववति योभावोवृत्तिस्तद्विरहः साध्यं विना अभावः साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति वा। 'अथेति, 'सम्बन्धः' सामानाधिकरण्यं व्यभिचारिसम्बन्धस्य केनचित्किञ्चिद्रूपावच्छिन्नेन धूमादेरपि द्रव्यत्वादिना वह्निव्यापकत्वात्। 'तद्बोधादिति। नच व्यभिचाराग्रहसहकृतस्तद्बोधस्तथा, व्यभिचार-तद्व्यतिरेकयोः अनुपस्थितावपि समानाधिकरणधर्म्मवत्ताज्ञानमात्रादनुमित्यनुत्पादस्य सर्व्वानुभवसिद्धत्वात् हेत्वन्तरे तत्रैव च रूपान्तरेण व्यभिचारग्रहे हेतुतावच्छेदकाग्रहेऽप्यनुमित्युत्पादाच्च, विवदन्ते च सामानाधिकरण्यज्ञानस्यैव हेतुतायां, व्यभिचारज्ञानाभावकारणत्वमपेक्ष्य कारणीभूतसामाधिकरण्यज्ञाने लाघवेनाव्यभिचारस्य विषयतयावच्छेदकत्वमुचितम्। नच व्यभिचारसंशयेऽनुमित्यनुत्पादादव्यभिचारनिश्चयत्वेन कारणत्वोक्तौ गौरवम्, व्यभिचारज्ञानस्य हि भ्रम-

त्वनिश्चयदशायामेवाविरोधितया भ्रमत्वेनानिश्चीयमानस्य विरोधित्वं वाच्यम् अव्यभिचारनिश्चयस्य च भ्रमत्वशङ्कायामप्यनुमित्यजनकतया भ्रमत्वेनागृह्यमाणस्यैव हेतुत्वमिति तवैव गौरवात् नानाविधव्यभिचारज्ञानाभावानां नियतपूर्व्ववर्त्तित्वेन क्लृप्तानामपि हेतुत्वमपेत्य वक्ष्यमाणैकविधाव्यभिचारज्ञानस्यैव हेतुत्वं युक्तमित्यप्याहुः।

---

गादाधरी विवृतिः।

'यत्साध्यस्येत्यत्र कर्म्मधारयसमासे व्याप्तेर्हेतुनिष्ठत्वानुपपत्तिः इति षष्ठीतत्पुरुषमवलम्ब्य व्याचष्टे, 'यत्समानाधिकरणेति, 'तथाहीत्यादिना दर्शितमुभयविधानौपाधिकत्वस्य सोपाधौ अतिप्रसङ्गमुद्धरति, 'यत्समानाधिकरणात्यन्ताभावेत्यादिना, अत्यन्तपदानि तत्पदमस्तीत्युपात्तानि न तु विवक्षितार्थकानि, सम्बन्धविशेषावच्छिन्नत्वेन प्रतियोगिताया अग्रे विशेषणीयत्वेन व्यावृत्त्यभावात्। 'नोक्तदोष इति, आर्द्रेन्धनायोगोलकान्यत्वादीनां धूमादिरूपसाध्यवन्निष्ठतत्तद्व्यक्तित्वोभयत्वावच्छिन्नप्रतियोगितावत्त्वेऽपि तत्त्वस्य साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वात् तादृशधर्म्मस्य महानसीयवह्न्यादिरूपयत्किञ्चित्साधनवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वेऽपि साधनवन्निष्ठाभावप्रतियोगितावच्छेदकत्वसामान्याभाववत्त्वाभावादिति भावः। 'एकसम्बन्धावच्छिन्नत्वमिति साध-

नसमानाधिकरणाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगितावच्छेद-कत्वं यस्य तस्य साध्यवन्निष्ठाभावीयतत्तत्सम्बन्धावच्छिन्नप्रतियोगि-तावच्छेदकत्वं साध्यवन्निष्ठाभावीययद्यत्सम्बन्धावच्छिन्नप्रतियोगिता-नवच्छेदकत्वं यस्य तस्य साधनवन्निष्ठाभावीयतत्तत्सम्बन्धावच्छिन्न-प्रतियोगितानवच्छेदकत्वमित्येवं विवक्षणीयमित्यर्थः। विशेषणता-विशेषसम्बन्धमात्रनिवेशेनैव सामञ्जस्ये सम्बन्धान्तरनिवेशनमफल-मित्याशयेनाह, 'विशेषणतेति। प्रथमलक्षणे सम्बन्धविवक्षायाः फलमाह, 'प्रतियोगितावच्छेदकमात्रस्यैवेति, मात्रपदं कृत्स्नार्थकं, तथाच सुतरां साधनसमानाधिकरणाभावप्रतियोगितावच्छेद-कसामान्यस्य साध्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्व-मिति सम्बन्धाविवक्षणे अतिव्याप्तिः स्यादिति भावः। लघुधर्म्म-समनियतगुरुधर्म्मस्य साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्वा-सम्भवात् धर्म्ममात्रमुपेक्ष्य प्रतियोगितावच्छेदकधर्म्मानुधावनम्। यद्यपि कम्बुग्रीवादिमत्त्वादेरपि विषयितासम्बन्धावच्छिन्नतद्वि-शिष्टाभावप्रतियोगितावच्छेदकत्वं सम्भवति घटत्वादिविशिष्ट-विषयकेऽपि कम्बुग्रीवादिमत्त्वाद्यप्रकारकज्ञानादौ तद्विशिष्टस्य विषयितासम्बन्धावच्छिन्नाभावसत्त्वेन लघुघटत्वादेस्तत्प्रतियोगि-तावच्छेदकत्वसम्भवात् तथापि विषयिताया वृत्त्यनियामकत्वेना-भावप्रतियोगितावच्छेदकसम्बन्धत्वं नास्तीत्यभिप्रायेणेदम्। द्वितीय-लक्षणे सम्बन्धविवक्षाफलं दर्शयति, 'एकसम्बन्धेति, तथाच यदि यत्किञ्चित्सम्बन्धावच्छिन्नसाध्यसमानाधिकरणाभावप्रतियोगितान-वच्छेदकं यत् तत्र साधनसमानाधिकरणाभावप्रतियोगिता-

सामान्यावच्छेदकत्वाभावो विवक्ष्यते तदा असम्भवः स्यादिति भावः। यदि साधनसमानाधिकरणाभावीययत्किञ्चित्सम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाभावो निवेश्यते तत्र उभयदल एव प्रतियोगितासामान्यं वा तदा पुनरतिव्याप्तिरेवेति हृदयम्। उभयलक्षण एव सम्बन्धविवक्षणे व्यभिचारिण्यतिव्याप्तिवारणप्रकारं दर्शयति, 'व्यभिचारिणि त्विति,'तन्निष्ठाभावप्रतियोगितावच्छेदकमिति, तथाच साधनवन्निष्ठाभावप्रतियोगितावच्छेदकेषु साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकेषु यावत्सु साध्यवत्त्वप्रकारकप्रमाविषयत्वत्वान्तर्भावात् तत्र साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकत्व--साधनवन्निष्ठाभाप्रतियोगितानवच्छेदकत्वयोरभावाल्लक्षणे नातिव्याप्तिरिति भावः। अत्यन्ताभावघटितयावत्साधनाव्यापकाव्यापककसाध्यसमानाधिकरण्य–यावत्साध्यव्यापकव्यापकत्वयोरभावप्रतियोगितावच्छेदसम्बन्धविशेषघटितत्वेन गुरुतया तदघटितमन्योन्याभावगर्भलक्षणद्वयमाह, 'वस्तुत इति, यद्यप्यन्योन्यभावगर्भलक्षणेऽपि प्रतियोगितावच्छेदकयोरेकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा निवेशनमावश्यकमन्यथा अयोगोलोकान्यत्वादेरपि धूमाद्यात्मकसाध्यवन्निष्ठस्य विषयितादिसम्बन्धेन स्वावच्छिन्नभेदस्य प्रतियोगितावच्छेदकतया अतिप्रसङ्गात् अत्यन्ताभावघटितलक्षणे च तादृशसम्बन्धेन चायोगोलकभेदत्वावच्छिन्नज्ञानादेर्योऽत्यन्ताभावस्तत्प्रतियोगितावच्छेदकतामादायातिप्रसङ्गो न सम्भवति विशेषणताविशेषसम्बन्धावच्छिन्नप्रतियोगिताकस्य तादृशाभावस्य प्रतियोगितायां शुद्ध-

भेदत्वादेरवच्छेदकत्वसम्भवेन गुरोरयोगोलकभेदत्वादेरनवच्छेदकत्वादिति तत्र प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धनिवेशो नास्ति तथाचान्योन्याभावगर्भव्याप्तौ लाघवानवकाशः, तथापि गुरुधर्म्मस्य प्रतियोगितावच्छेदकत्वमते अत्यन्ताभावगर्भलक्षणेऽपि प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धनिवेशनमावश्यकम् एवञ्च भेदत्वादेर्विषयितासम्बन्धेन प्रतियोगितावच्छेदकत्वे अयोगोलकभेदत्वादेः प्रतियोगितावच्छेदकत्वनिर्व्वाहः विशेष्यपर्य्याप्तस्यापि विशिष्टानुयोगिकाभावानभ्युपगमादिति तादृशधर्म्मस्य साध्यव्यापकतावच्छेदकत्वनिर्व्वाहाद्दितीये अत्यन्ताभावघटितलक्षणे तन्निवेशस्यावश्यकता सर्व्वथैवेत्यभिप्रायेणेदम्। 'वस्तुतस्त्वित्यादिर्भ्रान्तकल्पितः पाठ इत्यपि वदन्ति। 'यावदव्यभिचारितदव्यभिचारित्वं इत्यत्रोभयत्र बहुव्रीहिभ्रमनिरासाय व्याचष्टे, 'यावतां तेषामिति, 'दूषितमित्यत्र केन दोषेणेत्याकाङ्क्षायां पूरयति, 'केवलान्वयिन्यव्याप्त्येति। साध्याव्यभिचारित्वमात्रे धौव्ये केवलान्वयिन्यव्याप्तिः प्रसज्यते इत्यत एव शेषं स्वार्थक्यं भविष्यतीत्याकाङ्क्षायामाह, 'सा चेति केवलान्वय्यव्याप्तिश्चेत्यर्थः,'यथोक्तलक्षणे' यावतां साध्यमव्यभिचारि तेषामव्यभिचारित्वरूपे, केवलान्वयिसाध्यं व्यतिरेकिणो व्यभिचार्य्येव केवलान्वयिनश्च व्यभिचार एवासिद्ध इति तदव्यभिचारित्वमपि तथेति साध्यं यस्याव्यभिचारि तादृशवस्तुनोऽप्रसिद्धेरिति भावः। 'कार्त्स्न्येन सम्बन्ध इत्यत्र साधन-साध्य-साधनाश्रय-साधनसमानाधिकरणधर्म्मेषु कार्त्स्न्यविशेषणतापक्षाः मूलकृता दूषिताः न तु साध्याश्रय-तत्समानाधिकरणयोस्तद्विशेषणत्वपक्षौ,

अतो न्यूनताभङ्गाय स्वमतौ दूषयितुं तावदन्तर्भाव्य वितर्कयति, 'कार्त्स्न्यमित्यादिना,'साधनसमानाधिकरणस्य वा', विवक्षितमिति शेषः। सकलधूमसम्बन्धस्य प्रत्येकं वह्न्यावभावात् इत्यभिधानेन साध्यानुयोगिककृत्स्नसाधनसम्बन्धस्य व्याप्तितापक्षस्य दूषणे मूलस्य तात्पर्य्यं प्रतीयते तथाच कृत्स्नसाधनानुयोगिकसाध्यसम्बन्धस्यादूषणेन न्यूनतां परिहर्त्तुं तत्पक्षं दूषयिष्यन् साधनस्य कार्त्स्न्यमन्तर्भाव्य वितर्कयति, 'आद्य इति, प्रथमपक्षे मूलोक्तदूषणद्वयं सङ्गमय्याधिकदूषणद्वयमाह, 'व्याप्तेश्चेति, 'पृथिवीति, पृथिवीवृत्तिघटत्व-पटत्वादिसकलधर्म्माधिकरणाप्रसिद्ध्या सकलतत्सामानाधिकरण्याप्रसिद्धिरतः पृथिवीवृत्तित्वमुपेक्ष्य तत्र व्यापकतानुधावनं, पृथिवीत्वव्यापकत्वं पृथिवीनिष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वमवृत्तिसाधारणमिति तेन रूपेण हेतुत्वे अवृत्तेरपि सकलसाधनान्तर्गततया तदधिकरणाप्रसिद्ध्या नातिव्याप्तिप्रसक्तिरतो जातिपदं समवेतार्थकं, 'अतएव' एकव्यक्तिसाधनाव्याप्तिसहितदर्शितातिव्याप्तेरेव, 'इतरः' कृत्स्नः साधने साध्यसम्बन्धो व्याप्तिरितिपक्षः। 'द्वितीयं' साध्ये कार्त्स्न्यविशेषणपक्षं, 'एकव्यक्तिके तदभावादित्यत्र एकव्यक्तिपदं तादृशसाधनपरं, तस्य साधने कार्त्स्न्यविशेषणपक्षदूषणपरत्वात्। तथाचातएवेत्यस्य तादृशदूषणपरत्वासम्भवात् एकव्यक्तिसाध्यकाव्याप्तिपरतया व्याचष्टे, 'अतएवेति, न्यूनताभङ्गाय पूरयति, 'समव्याप्तेऽपि चेति, 'संख्यापरिमाणादौ' संख्यादिसाध्यकपरिमाणादौ,'शब्दवानिति, रूपादेः साध्यत्वे सकलतदधिकरणाप्रसिद्ध्या नातिव्याप्तिरतः शब्दसाध्यकानुसरणं, तत्र गगन-

स्यैव सकलशब्दाधिकरणत्वात्। तृतीय-चतुर्थयोरर्थाभिधानपूर्व्वकं दूषणमाह, 'तृतीये चेत्यादिना, एकमात्रवृत्तिसाध्यके यावत्साध्याश्रयाप्रसिद्धा दोषस्तृतीय एव न चतुर्थे वह्निमान् सत्त्वादित्यादौ अतिव्याप्तिरपि तत्रैव, चतुर्थे यावत्साध्यसमानाधिकरणपर्व्वतत्व-महानसत्वाद्यधिकरणाप्रसिद्धा तदनवकाशात् अतः 'यथासम्भवमिति, 'धूमादावव्याप्तिरिति, सकलवह्निमति प्रत्येकधूमस्यावृत्तेः वह्निसमानाधिकरणयावद्धर्म्माधिकरणाप्रसिद्धेश्चेति भावः। 'सत्त्वादावित्यत्र वह्न्यादिसाध्य इत्यनुषज्यते। पञ्चमे यथाश्रुते यावत्साधनाश्रयसम्बन्धः साध्ये लभ्यते तावता व्याप्तेः साधननिष्ठत्वानिर्व्वाह इति तन्निर्व्वाहाय तादृशसाध्यसामानाधिकरण्यस्याधिकस्य निवेशनमेव 'अर्थपरिष्कारः', स्वयमधिकदूषणमाह, 'एकमात्रवृत्तिसाधन इति, यावत्साधनाश्रयाप्रसिद्धेरिति भावः। 'तथैव' अर्थपरिष्कारपूर्व्वकमेव, अत्रापि यथाश्रुते कृत्स्नसाधनसामानाधिकरण्यं साध्ये लभ्यते व्याप्तेर्हेतुनिष्ठतासम्पादनाय तत्सामानाधिकरण्यस्याधिकस्य निवेशेनैव परिष्कार इति बोध्यम्। ननु साधनसमानाधिकरणानां मिथो विरुद्धानां एकाधिकरणाप्रसिद्धावपि तेषां प्रत्येकसामानाधिकरण्यमेव साध्ये निवेश्यमिति न मूलोक्तदोषावसर इत्यत आह, 'तादृशानामिति साधनसमानाधिकरणानामित्यर्थः, 'न कुत्रापि वह्नाविति, साध्यतावच्छेदके तद्धर्म्मसमानाधिकरणवृत्तित्वं निवेश्य तद्दोषोद्धारेऽपि नानाधर्म्मावच्छिन्नसाध्यके दण्डिमान् दण्डिसंयोगादित्यादौ कुत्रापि दण्डादिव्यक्तौ साध्यसमानाधिकरणानां सर्व्वेषां प्रत्येकसमानाधिक-

रणवृत्तित्वासम्भवेनैवाव्याप्तिर्बोध्या। साधनसमानाधिकरणाः सर्वे याद्दृशसाध्यसमानाधिकरणास्ताद्दृशसाध्यसमानाधिकरण्यमित्यर्थे न कोऽपि दोषः इत्याशङ्कते, 'अथेति, तत्तद्व्यक्तित्वादिना साध्यं चेद् व्यापकतावच्छेदककोटौ निविशते तदा नानाव्यक्तिसाध्यकेऽव्याप्तिरतो यद्धर्मपदं प्रकृतसाध्यतावच्छेदकपरं, विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणाय विशिष्टाधिकरणतागर्भसामानाधिकरण्यं प्रवेश्यमित्येतल्लाभाय आश्रयपदमुपेक्ष्य अवच्छिन्नपदं, धूमादिसामानाधिकरण्यस्यापि प्रमेयत्वादिना वह्न्यादिसामानाधिकरण्यव्यापकतया अतिप्रसङ्ग इति ताद्दृशसामानाधिकरण्यत्वे व्यापकतावच्छेदकत्वपर्य्यन्तानुसरणं, साधनसामानाधिकरण्यव्यापकत्वं साधनतावच्छेदकविशिष्टसामानाधिकरण्यत्वावच्छिन्नं प्रति व्यापकत्वं, तेन धूमादिसामानाधिकरण्यत्वेन तद्वह्न्यादिसामानाधिकरण्यत्वावच्छिन्नं प्रति व्यापकत्वेऽपि गुणत्वादिसाधारणं विशिष्टसत्तात्वाश्रयसमानाधिकरण्यत्वावच्छिन्नं प्रति द्रव्यत्वादिसामानाधिकरण्यत्वेनाव्यापकत्वेऽपि न क्षतिः। परिष्कारस्यावश्यापेक्षणीयत्वे एतदपेक्षया लघोः कृत्स्नसाधनाश्रयाश्रितसाध्यसम्बन्धस्य व्यापकत्वरूपकृत्स्नपदार्थमन्तर्भाव्य परिष्कार एवोचितः, स च सिद्धान्तग्रन्थ एव करिष्यते इत्याह, 'इतोऽपीति', तथाच इदानीं यथाश्रुतार्थदूषणपर एव मूलग्रन्थ इति नासङ्गतिरिति भावः। मूलोक्तसिद्धान्तलक्षणत्वन्योन्याभावस्याव्याप्यवृत्तितामते द्रव्यनिष्ठसंयोगाभावोऽपि प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तिरिति संयोगिद्रव्यत्वादित्यादावव्याप्त्या

दूषयित्वा साधनसमानाधिकरणधर्म्मे कात्स्नविशेषणपक्ष एव दी-
धितिकारेणाग्रे अवलम्बनीय: अभाववदर्थकं विनापदमत्र सप्तम्य-
न्तमित्याशयेन व्याचष्टे, 'साध्याभाववतीति, साध्याभाववदवृत्ति-
त्वमिति प्रथमलक्षणे साध्याभाववद्वृत्तिभेदो विवक्षित: अत्र तत्त्वा-
त्यन्ताभाव इति भेद इति भाव:। सत्तावान् जातिरित्यादौ
साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिरि-
त्यतोऽविनाभावमन्यथा व्याचष्टे, 'साध्यं विना अभाव इति, तथाच
नञ: व्यत्यास: कार्य्य इति भाव:। विनाशब्दार्थोऽभाव एव न तु
तद्वान् तस्य च निपातार्थतया प्रयुक्तत्वसम्बन्धेनाभावे साक्षादे-
वान्वय:, प्रयुक्तत्वञ्च व्यापकत्वमित्याशयेनाह, 'साध्याभावव्याप-
केति, साध्यस्य संयोगादिसम्बन्धो न तदीयव्याप्तिरतो व्याचष्टे,
'सामानाधिकरण्यमिति, मूले 'व्यभिचारिसम्बन्धस्येति तद्व्यभि-
चारिनिष्ठतदीयसम्बन्धस्येत्यर्थ:, 'केनचित् सहव्याप्तित्वादित्यत्रा-
न्यदीयव्याप्तित्वं प्रतीयते तच्च न सम्भवतीति व्याचष्टे, 'किञ्चि-
द्रूपेति, तथाच रूपान्तरावच्छिन्नतद्व्याप्तित्वादित्यर्थ:, तदेव दर्श-
यति, 'धूमादेरपीति, 'व्यापकत्वात्' व्याप्तिनिरूपकत्वात्, तथाच
वह्न्यादौ धूमादिव्याप्तिरिष्टैवेति भाव:। मूले 'तद्बोधादिति
केवलसाध्यसामानाधिकरण्यप्रकारकहेतुमत्ताज्ञानादित्यर्थ:, 'अनु-
मित्यनुदयादिति अनुमित्युदयोपगमासम्भवात्, तथा सति
द्रव्यत्वादिहेतुना ह्रदादावप्यभ्रान्तानां वह्न्याद्यनुमानोपपत्ते:
उदाहरणे वीप्सितयत्पदप्रयोगवैयर्थ्यापत्ते: व्यभिचारस्य हेत्वा-
भासतानुपपत्ते: सर्व्वत्र मेयत्वादिना सत्प्रतिपक्षापत्तेश्चेति

भावः। ननु व्यभिचारज्ञानाभावः साक्षादेवानुमितिहेतुर्वाच्यः तथाच साध्याभावव्यभिचारिमेयत्वादेर्न सत्प्रतिपक्षोन्नायकत्व-प्रसङ्गः (१) न व्यभिचारस्य हेत्वाभासतानुपपत्तिः व्यभिचारशङ्का-निवर्त्तनेनैव उदाहरणे वीप्सापदप्रयोग इत्याशङ्कते, 'न चेति, 'तद्बोधः' साध्यसामानाधिकरण्यप्रकारकहेतुमत्ताबोधः, 'सर्व्वा-नुभवसिद्धत्वादिति, तथाच तत्रानुमित्यापत्तिरिति भावः। एव-ञ्चैतन्मते कोटिद्वयसहचरितधर्म्मद्वयदर्शनात् उभयत्र व्यभिचारा-ग्रहे संशयानुमितिप्रसङ्गोऽपि दुर्व्वारः विपरीतकोटिसमाना-धिकरणधर्म्मवत्ताज्ञानस्य विशिष्टबुद्ध्यविरोधित्वात् अन्यथा साधारणधर्म्मदर्शनाधीनप्रत्यक्षसंशयस्याप्युच्छेदप्रसङ्गात्। व्यभि-चारज्ञानाभावहेतुत्वं सम्भवदुक्तिकमपि नेत्याह, 'हेत्वन्तर इति द्रव्यत्वादौ वह्न्यादिव्यभिरग्रहदशायां धूमादिलिङ्गकवह्न्याद्यनु-मितेरुत्पादादित्यर्थः, तथाच तत्साध्यकानुमितेस्तत्साध्यनिरूपित-व्यभिचाराग्रहव्यभिचारित्वान्न तत्र हेतुतासम्भव इति भावः। ननु तल्लिङ्गक तत्साध्यकानुमितित्वस्य तल्लिङ्गधर्म्मिकव्यभिचार-ज्ञानाभावजन्यतावच्छेदकत्वोपगमे नायं व्यभिचार इत्यत आह, 'तत्रैवेति, हेताविति शेषः, 'रूपान्तरेणेति द्रव्यत्वादिप्रकारेण व्यभिचारग्रहे धूमत्वाद्यवच्छिन्नतल्लिङ्गकानुमित्युत्पत्तेरित्यर्थः। ननु तद्धर्म्मावच्छिन्नलिङ्गकाऽनुमितित्वमेव तद्धर्म्मावच्छिन्नधर्म्मिकव्यभि-चारज्ञानप्रतिबध्यतावच्छेदकं वाच्यं तथा सति नोक्तदोषावसर इत्यत आह, 'हेतुतावच्छेदकाग्रह इति धूमत्वादिप्रकारेण पक्षधर्म्म-

(१) सत्प्रतिपक्षोपधायकत्वप्रसङ्ग इति पा०।

त्वाज्ञानं विनापि अयमालोको धूमो वा इत्यादिसन्देहदशायां वह्नि-व्याप्यवान् अयमिति व्याप्तिप्रकारेण पक्षधर्म्मताज्ञानादनुमित्युत्-पत्तेरित्यर्थः, तथाच तादृशानुमितौ व्यभिचारग्रहप्रतिबध्यता-वच्छेदकनिरुक्तधर्म्मानाक्रान्तायाम् अव्यभिचारग्रहस्य हेतुताया-आवश्यकत्वेन व्यभिचाराग्रहहेतुत्वं न कुत्रापि कल्पयितुमुचितम् । न चाव्यभिचारस्य केवलान्वयिस्थलेऽप्रसिद्धया व्यतिरेकिस्थले-ऽपि केवलान्वयित्वभ्रमदशायां दुर्ग्रहतया तत्र व्यभिचारज्ञा-नाभावसहकृतसामानाधिकरण्यज्ञानादेवानुमितिरुपगन्तव्या इति वाच्यम् । स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतारूपस्य सिद्धान्तग्रन्थनिर्व्वाच्यस्याव्यभिचारस्य सर्व्वत्रैव सुग्रहत्वात् । साध्यस्य केवलान्वयित्वग्रहदशायाम् अनुमितिमनङ्गीकुर्व्वाणैः साध्याभाव-वदवृत्तित्वरूपाव्यभिचारज्ञानस्यानुमितिसामान्यहेतुतास्वीकारेऽपि बाधकाभावादिति भावः । ननु हेतुतावच्छेदकाग्रहस्थले साध्य-सामानाधिकरण्यप्रकारकव्यभिचारग्रहाभावसहकृतसाध्यसामाना-धिकरण्यप्रकारकपक्षधर्म्मताज्ञानादेवानुमितिः सम्भवति इति तत्राप्यव्यभिचारज्ञानहेतुत्वम् असिद्धम् एवं 'स्वसमानाधिकरणे-त्यादिसिद्धान्तग्रन्थनिर्व्वाच्यव्याप्तिज्ञानस्य हेतुतायां रासभादि-व्यावर्त्तकतत्तद्धेतुतावच्छेदकस्य साध्यसामानाधिकरण्यधर्म्मिता-वच्छेदकविधया विषयितायाः अवश्यं निवेशनीयतया हेतु-तावच्छेदकधर्म्मप्रकारकज्ञानं विना अनुमितिर्न भवत्येवेत्यत-आह, 'विवदन्ते चेति, केवलान्वय्यनुमानानभ्युपगन्तारोनव्या-इति शेषः, तथाच सामानाधिकरण्यज्ञानस्यापि हेतुता नाव्य-

भिचारज्ञानहेतुतावादिभिरुपगम्यते तन्मतापेक्षया अव्यभिचार-ज्ञानस्थाने व्यभिचाराग्रहहेतुत्वं कल्पयतः सामानाधिकरण्य-मात्रस्य व्याप्तित्वं मन्यमानस्य मते गौरवाभावेऽपि साध्याभा-ववदवृत्तित्वरूपाव्यभिचारज्ञानहेतुतावादिनवीनमतापेक्षया कार-णताद्वयकल्पनेन गौरवं दुर्व्वारमेवेति भावः। हेतुव्यापकसाध्यसा-मानाधिकरण्यरूपव्याप्तिज्ञानहेतुतावादिनां सिद्धान्तिनां मतेऽपि-तन्मतापेक्षया लाघवमाह, 'व्यभिचारज्ञानेति, सिद्धान्तिमतेऽप्य-व्यभिचारसामानाधिकरण्यज्ञानयोर्न कारणताद्वयम् अपि तु स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपाव्यभिचारवि-षयतानिरूपितत्वं साध्यसामानाधिकरण्यज्ञानहेतुतावच्छेदक-कोटिप्रविष्टसाध्यतावच्छेदकविषयितायां निवेश्यते तथाच कारण-ताया ऐक्याल्लाघवमक्षुण्णमेवेति भावः। इदन्त्ववधेयं पक्षभेदेन साध्यसमानाधिकरणहेतुमत्ताज्ञानहेतुतानामानन्त्यात्तत्राव्यभिचार-विषयतानिवेशेऽनन्तस्थलेऽवच्छेदकगौरवं निरुक्तसाध्यतावच्छेदक-विषयतायां निरुक्ताव्यभिचारविषयतानिरूपितत्वं निरुक्ताव्यभि-चारविषयतायां वा साध्यतावच्छेदकविषयतानिरूपितत्वं निवे-श्यते इत्यत्र विनिगमनाविरहेणानन्तपक्षभेदेनानन्तकारणताधिक्य-ञ्चेति पक्षविशेषमनन्तर्भाव्य सामान्यतस्तल्लिङ्गक-तत्साध्यकानुमितौ तल्लिङ्गधर्म्मिकतत्साध्यव्यभिचारज्ञानाभावत्वेन एकैककारणताक-ल्पनमेव सम्यक्।

अत्र केचित् व्यभिचारग्रहस्य शरीरनिष्ठप्रत्यासत्त्या आत्मनिष्ठ-प्रत्यासत्त्या वा प्रतिबन्धकत्वं न सम्भवति परपुरप्रवेशस्थले तच्छ-

रीरे अभिभाव्यव्यभिचारज्ञानसत्त्वेऽप्यभिभावकभूतादेरप्यनुमित्युद-याात् कायव्यूहस्थले एकशरीरे आत्मनि व्यभिचारज्ञानसत्त्वेऽपि शरीरान्तरावच्छिन्ने तत्रानुमित्युदयादिति शरीरविशेषावच्छिन्नत्वं निवेश्यात्मनिष्ठप्रत्यासत्त्या व्यभिचारग्रहस्य प्रतिबन्धकता वाच्या तथाच चैत्र-मैत्रादिशरीरभेदेन तदभावस्यानन्तहेतुतापेक्षया सामानाधिकरण्य-समानावच्छेदकत्वोभयप्रत्यासत्त्या अवश्यकल्प्य-सामानाधिकरण्यज्ञानहेतुतायामव्यभिचारविषयकत्वनिवेश एव लघीयान्। न च समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्य व्यभिचारग्रहविरहस्य सामानाधिकरण्य-समानावच्छेदकत्वप्रत्या-सत्तिभ्यां कारणताकल्पनेनैव सामञ्जस्यात् तद्धेतुतामतेऽपि शरीर-भेदनिवेशनं नास्तीति वाच्यम्। तथा सति तच्छरीरावच्छेदेन तदात्मनि व्यभिचारधीसत्त्वेऽपि तदात्मनि तदभावस्यान्यावच्छे-देनान्यात्मनि तदभावस्य च तच्छरीरावच्छेदेन वृत्तेः तदात्मनि अनुमित्यापत्तेर्दुर्व्वारत्वात् उभयप्रत्यासत्त्यवच्छिन्नैकहेतुतास्थले एककारणप्रत्यासत्तेः उभयाधिकरणप्रत्यासन्नकार्य्योत्पत्तिप्रयोजक-तया अव्यभिचारविषयकसामानाधिकरण्यज्ञानं यत्र कायव्यूह-वत्येव तदात्मनि शरीरान्तरावच्छेदेन एतच्छरीरावच्छेदेन परपुरप्रवेशकर्त्तर्य्यात्मान्तरे तत्रैतच्छरीरावच्छेदेन एतदात्मन्य-नुमित्यापत्त्यनवकाशः आत्मभेदेन ज्ञानव्यक्तिभेदादिति ज्ञान-हेतुतायां शरीरभेदनिवेशमन्तरेणैवोपपत्तेः अधिकरणभेदेऽप्यभाव-व्यक्तिभेदाभावेन व्यभिचारज्ञानाभावहेतुतामते शरीरभेदनिवेशनं विना अतिप्रसङ्गवारणोपपत्तेरयोगात्। न च यद्देशावच्छेदेन यदा

यदधिकरणे कार्य्यं तदवच्छेदेन तदव्यवहितपूर्व्वक्षणे तदधिकरणे कारणमित्येताद्दशावच्छेदकीभूतदेशघटितव्यापकताघटितकारणत्वं व्यभिचाराग्रहे स्वीक्रियते ताद्दशकारणताश्रयस्य च तद्देशावच्छेदेन तदधिकरणसत्त्वं तद्देशावच्छिन्नतदधिकरणनिष्ठकार्य्योत्पादे तन्त्र-मिति तच्छरीरावच्छेदेन तदात्मनि व्यभिचारग्रहदशायां तदवच्छेदेन तदात्मनि तदग्रहस्य दुर्ल्लभतया नोक्तातिप्रसङ्ग इति वाच्यम्। एवमपि यत्र महाशरीरनाशे खण्डशरीरस्योत्पाददशायां व्यभिचारग्रहस्तत्र खण्डशरीरोत्पादद्वितीयक्षणे तदव-च्छेदेनानुमित्यापत्तेः व्यभिचाराग्रहहेतुतावादिनां दुर्व्वारत्वात् तच्छरीरस्य व्यभिचारग्रहपूर्व्वकालेऽसत्त्वेन व्यभिचारग्रहानव-च्छेदकतया तदवच्छेदेन तदग्रहस्यात्मनि सत्त्वात्। न च तदा-व्यभिचारग्रह एव न सम्भवति शरीररूपकारणविरहादिति शङ्क्य, शरीरावयवसाधारणचेष्टावत्त्वमात्रस्यैव ज्ञानजननौपयिक-तया शरीरासत्त्वेऽपि तदवयवावच्छेदेनैव तज्ज्ञानोत्पत्तेः सम्भवात् इत्याहुः।

व्यभिचाराग्रहस्यानुमितिहेतुतामते अनुमितिसामग्र्या अधिक-कारणताघटिततया भिन्नविषयकप्रत्यक्षादौ तत्प्रतिबन्धकतायां गौरवमित्यन्ये। अव्यभिचारग्रहहेतुतामते तत्र संशयान्यत्वप्रवे-शप्रयुक्तगौरवमाशङ्कते, 'अव्यभिचारनिश्चयत्वेनेति व्यभिचारा-प्रकारकाव्यभिचारप्रकारकज्ञानत्वेनेत्यर्थः, 'गौरवमिति, व्यभि-चाराग्रहहेतुतामते व्यभिचारसंशयस्यापि प्रतिबन्धकत्वेन सत्ता-धारणव्यभिचारग्रहत्वावच्छिन्नाभावस्यैव हेतुतया व्यभिचारग्रहे

संशयभेदानिवेशेन लाघवादिति भावः। व्यभिचारग्रहप्रतिबन्धकता-मते व्यभिचारग्रहे निश्चयत्वानिवेशेऽपि तदुत्तेजकीभूतभ्रमत्वज्ञाने निश्चयत्वस्य निवेशनीयतया गौरवमिति समाधत्ते, 'व्यभिचार-ज्ञानस्येति, 'भ्रमत्वनिश्चयदशायामेव' इत्येवकारेण तत्संशयदशा-यामनुमित्यविरोधित्वव्यवच्छेदः, अप्रामाण्यशङ्कया निश्चितस्यापि विषयस्य संशयोत्पत्तेः तच्छङ्काकवलितस्य निश्चयकार्य्यकारित्वं नास्तीति तथाविधस्य व्यभिचारग्रहस्य तत्संशयान्तरवदनुमितिप्रति-बन्धकताध्रौव्यादिति भावः। 'भ्रमत्वेनानिश्चीयमानस्य' भ्रमत्व-निश्चयत्वावच्छिन्नाभावविशिष्टस्य, 'विरोधित्वं', 'वाच्यं' भवता वाच्यं, 'भ्रमत्वशङ्कायामपीति, तच्छङ्कास्कन्दितज्ञानस्य विरोध्यप्रकारक-स्यापि निश्चयकार्य्यासमर्थत्वादिति भावः। अपिकारात्तन्निश्चयद-शासमुच्चयः, 'भ्रमत्वेनाऽगृह्यमाणस्येति भ्रमत्वज्ञानत्वावच्छिन्ना-भावविशिष्टस्येत्यर्थः, एवकारेण तन्निश्चयत्वावच्छिन्नाभाववैशिष्ट्यस्य कारणतावच्छेदकत्वव्यवच्छेदः। 'तवैवेति व्यभिचाराग्रहहेतुता-वादिन एवेत्यर्थः, 'गौरवादिति, व्यभिचारिविशेष्यकत्वावच्छिन्ना-व्यभिचारप्रकारकत्वज्ञानाभावविशिष्टव्यभिचाराप्रकारकाव्यभिचा-रज्ञानत्वापेक्षया अव्यभिचारिविशेष्यकत्वावच्छिन्नव्यभिचारप्रका-रकत्वाभावाप्रकारकाव्यभिचारिविशेष्यकत्वावच्छिन्नव्यभिचारप्रका-रकत्वप्रकारकज्ञानत्वावच्छिन्नाभावविशिष्टव्यभिचारज्ञानत्वावच्छिन्ना-भावत्वरूपकारणतावच्छेदकस्य गुरुशरीरत्वादिति भावः। न च भ्रमत्वज्ञानास्कन्दितस्वविषयकभ्रमत्वज्ञानदशायामव्यभिचारग्रह-स्यानुमितिजनकतया तदवच्छेदकाभावप्रतियोगिनि भ्रमत्वज्ञाने

भ्रमत्वान्तरग्रहाभावविशिष्टत्वं निवेश्य तादृशभ्रमत्वग्रहस्य च निश्चयत्वेनैवाभावो निवेश्यः भ्रमत्वशङ्काक्रन्दितस्यापि परामर्शीय-भ्रमत्वग्रहस्य भ्रमत्वसंशयान्तरवदनुमित्यनुत्पादप्रयोजकत्वादित्य-व्यभिचारग्रहहेतुतामते गौरवं व्यभिचारग्रहोत्तेजकभ्रमत्वनिश्चये भ्रमत्वान्तरग्रहस्य संशयसाधारणतज्ज्ञानत्वेनैवाभावनिवेशात् इति वाच्यम्। अप्रामाण्यग्रहे अप्रामाण्यान्तरग्रहाभावनिवेशे तत्राप्य-प्रामाण्यान्तरग्रहाभावस्य निवेशनीयतया तत्र भवतां निश्चयत्व-निवेशेन लाघवविरहात् (१)। न चावच्छेदककोटिप्रविष्टाप्रामा-ण्यग्रहधारायामिकैकं परित्यज्य निश्चयत्वनिवेशनमुभयमते समानम् अव्यभिचारग्रहहेतुतामते पुनरव्यभिचारग्रहे निश्चयत्वनिवेशन-मधिकमिति वाच्यम्। अव्यभिचारविशिष्टवैशिष्ट्यज्ञानत्वेनैव हेतु-ताया वक्तव्यतया तत्संशये च तद्विशिष्टवैशिष्ट्यावगाहित्वानुपगमेनै-वाव्यभिचारसंशयादनुमितिवारणसम्भवे तदंशे निश्चयत्वस्यानिवे-शादव्यभिचारविषयकाप्रामाण्यग्रहे अप्रामाण्यग्रहसत्त्वेऽप्यनुमित्यु-त्पादानुपगमेनाप्रामाण्यग्रहे अप्रामाण्यान्तरग्रहाभावस्य न विशेषण-त्वम् अन्यथा विशेषणानवस्थाप्रसङ्गादित्यपि वदन्ति। गौरवान्तरेण व्यभिचारग्रहप्रतिबन्धकतामतं दूषयतामन्येषां मतमाह, 'नानावि-'धेति हेतुनिष्ठसाध्याभाववद्वृत्तित्व-साध्यतावच्छेदकनिष्ठहेतुसमा-नाधिकरणाभावप्रतियोगितावच्छेदकत्व--तादृशप्रतियोगितानिष्ठ--साध्यतावच्छेदकावच्छिन्नत्वादिस्वरूपबहुविधेत्यर्थः, यत्किञ्चिदेक-

---

(१) भ्रमत्वनिश्चयनिवेशेन लाघवविरहादिति पा०।

विधव्यभिचारग्रहदशायामेवानुमित्यनुत्पादस्यानुभविकतया सर्व्व-विधव्यभिचारज्ञानस्यैव पृथक् पृथक् प्रतिबन्धकताया आवश्यक-त्वादिति भावः। 'नियतपूर्व्ववर्त्तित्वेन क्लृप्तानामपीति, अव्यभि-चारज्ञानहेतुतामतेऽपि तद्धेतुभूतयावद्व्यभिचारज्ञानाभावानाम-नुमितौ नियतपूर्व्ववर्त्तित्वादिति भावः। एतेन बहुष्वनन्यथा-सिद्धिकल्पनमपेक्ष्य एकधर्म्मावच्छिन्ने नियतपूर्व्ववर्त्तितासहिततत्क-ल्पने लाघवमिति ध्वनितम्।'वक्ष्यमाणैकविधेति केवलान्वयिखण्ड-नावसरे साध्याभाववदवृत्तित्वरूपलघुशरीराव्यभिचारेत्यर्थः, तादृ-शाव्यभिचारज्ञानस्यापि सर्व्वविधव्यभिचारग्रहप्रतिबध्यतया तद्धेतु-तयैव सकलव्यभिचारज्ञानदशायामनुमितिवारणसम्भवात् अव्यभि-चारान्तरापेक्षया तच्छरीरलाघवस्यैव विनिगमकतया विनिगम-नाविरहेण नानाविधाव्यभिचारधियामेव कारणत्वमित्यस्यापि वक्तुमशक्यत्वादिति भावः। 'आहुरित्यस्वरसोद्भावनं, तद्वीजन्तु असमानप्रकारतया व्यभिचारान्तरग्रहस्य साक्षादुक्ताव्यभिचार-ग्रहाविरोधितया व्यभिचारान्तरधीदशायां उक्ताव्यभिचारज्ञानसत्त्वे अनुमितिस्वीकारे गुरुशरीरव्यभिचारान्तरग्रहस्यानुमितिविरोधि-तया तावतैवोपेक्षितत्वात्, अस्माकमपि लघुशरीरसाध्याभाववदवृ-त्तित्वरूपव्यभिचारग्रहाभाव एव हेतुरिति वक्तुं शक्यतया उक्त-लाघवानवकाशः व्यभिचारान्तरग्रहदशायाम् उक्ताव्यभिचारग्रह-सत्त्वेऽनुमित्यनुत्पादोऽनुभवसिद्ध इति चेत्तर्हि अव्यभिचारग्रहासत्त्वे तदनुत्पादोऽनुभवसिद्ध इत्युक्तास्मदीययुक्तिरेव जागर्त्ति किमे-तावतेति।

तत्त्वचिन्तामणिः।

नापि व्याप्तिपदप्रवृत्तिनिमित्तमिदं, सम्बन्धज्ञानेऽपि व्याप्तिपदाप्रयोगात्। केवलान्वयिनि केवलान्वयिधर्म्मसम्बन्धो व्यतिरेकिणि साध्यवदन्यावृत्तित्वं व्याप्तिः एतयोरनुमितिविशेषजनकत्वम् अनुमितिमात्रे पक्षधर्म्मतैव प्रयोजिका। न चातिप्रसङ्गः, विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्य्यजनकत्वनियमादिति केचित्, तदपि न, साध्यवदन्यावृत्तित्वस्य धूमेऽसत्त्वात् वह्निमत्पर्व्वतान्यस्मिन् धूमसत्त्वात्। न च सकलसाध्यवदन्यावृत्तित्वं, वह्निमतां प्रत्येकं तथात्वात् सर्व्वत्र लक्षणे साध्यत्व-साधनत्व-तदभिमतत्वानां व्याप्तिनिरूप्यत्वेनात्माश्रयः, साध्यत्वं हि न सिद्धिकर्म्मत्वं, सिषाधयिषाविषयत्वं वा, महानसीयवह्नौ तदभावात्। न च सामान्यतो व्याप्त्यवगमोऽस्त्येव परस्य कथमन्यथा दूषणेनासाधकतां साधयेदिति वाच्यं, स्वार्थानुमानोपयोगिव्याप्तिस्वरूपनिरूपणं विना कथायामप्रवेशादिति।

श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ पूर्व्वपक्षः सम्पूर्णः।

तत्त्वचिन्तामणि-दीधितिः ।

सामानाधिकरण्यविशिष्टपक्षधर्म्मत्वं तु पक्षे साध्यग्रहं विना दुर्ग्रहमिति केवलान्वयित्वस्याग्रहे सामानाधिकरण्यमात्रग्रहादनुमित्यनुत्पत्तेस्तद्ग्रहोऽपि वाच्यः तच्च वृत्तिमदत्यन्ताभावाप्रतियोगित्वादिकमन्योन्याभावप्रतियोगितानवच्छेदकत्वं वा तथाच सर्व्वसाधारण्याय लाघवात्साधनवतस्तद्वृत्तित्वस्य वा वृत्तेरन्योन्याभावस्य वा विशेषणत्वमुचितमिति सिद्धान्तरहस्यं, शेषं केवलान्वयिखण्डने वक्ष्यामः ।

इति श्रीमन्महामहोपाध्याय-रघुनाथशिरोमणि-भट्टाचार्य्यविरचितायां तत्त्वचिन्तामणिदीधितौ पूर्व्वपक्षदीधितिः सम्पूर्णा ।

---

गादाधरी विवृतिः ।

ननु केवलसामानाधिकरण्यस्य व्याप्तित्वे द्रव्यत्वादिना ह्रदादौ वह्न्याद्यनुमानापत्तिरेव बाधिका तद्वारणाय वरं साध्यसामानाधिकरण्यविशिष्टहेतुमत्ताज्ञानस्यैवानुमितिहेतुत्वमुपेयतां किमव्यभिचारज्ञानहेतुतया ह्रदादौ वह्निशून्ये वह्निसामानाधिकरण्यविशिष्टवैशिष्टासत्त्वात् व्यभिचारिणोऽपि साध्यसामानाधिकरण्यविशिष्टस्य साध्यवत्येव सत्त्वात् पक्षे विशिष्टवैशिष्ट्यग्रहे हेतौ व्यभि-

चारग्रहेऽप्यनुमितिरिष्टैव सामानाधिकरण्यविशिष्टवैशिष्ट्यस्याव्यभिचारविशिष्टवैशिष्ट्यतुल्यत्वात् इत्याशङ्कां परिहरति, 'सामानाधिकरण्यविशिष्टपक्षधर्म्मत्वन्त्विति पक्षे साध्यसामानाधिकरण्यविशिष्टवैशिष्ट्यन्त्वित्यर्थः, 'पक्षे साध्यग्रहं विना' साध्यनिश्चयं विना, 'दुर्ग्रहं' दुर्निश्चयं, पक्षे साध्यसन्देहदशायां साध्यसामानाधिकरण्यविशिष्टस्यापि सन्देह औत्सर्गिकः स साध्यनिश्चयेनैव व्यावर्त्तकधर्म्मदर्शनविधया व्यावर्त्तनीय इति भावः। तथाचान्योन्याश्रयात् तत्सामानाधिकरण्यविशिष्टवैशिष्ट्यनिश्चयस्य हेतुता न सम्भवतीत्याशयः। अथ पर्व्वते वह्निसन्देहदशायां निश्चितसाध्यकमहानसादिवृत्तितया अगृह्यमाणायां पर्व्वतीयधूमव्यक्तौ वह्निसामानाधिकरण्यसन्देह औत्सर्गिक इति न तत्सामानाधिकरण्योपलक्षितधूमवत्तानिश्चयोऽपि सुघट इति कथमव्यभिचरितसामानाधिकरण्यप्रकारकज्ञानहेतुतापक्ष एव प्रतीकार इति चेत्, महानसीयधूमादौ प्रत्यक्षतो वह्निसामानाधिकरण्ये निश्चीयमाने लाघवज्ञानाधीनाद्धूमत्वावच्छेदेन वह्निजन्यत्वनिश्चयरूपविशेषदर्शनतः (१) तदवच्छेदेनैव तन्निर्णयात् धूमत्वदर्शनविषयपक्षीयधूमेऽपि साध्यसामानाधिकरण्यसंशयायोगात् धूमव्यापकसाध्यसमानाधिकरणवृत्तित्वोपलक्षितव्याप्तित्वपक्षे तत्प्रकारकहेतुमत्त्वस्य पक्षे साध्यस्य सन्देहदशायामपि निश्चयस्य निष्प्रत्यूहतया अनुपपत्त्यनवकाशाच्च साध्यस्य केवलान्वयित्वज्ञानकालीनायामनुमितौ केवलान्वयिसाध्यसामानाधिकरण्यज्ञानम् अतादृशस्याव

(१) वह्निसामानाधिकरण्यनिश्चयरूपविशेषदर्शनत इति पा० ।

साध्यवदन्यावृत्तित्वज्ञानं हेतुरिति मते साध्यवद्व्यक्तिञ्चिद्व्यक्तिभिन्न-वृत्तौ नानाधिकरणकसाध्यके हेतावव्याप्तिर्मूलोक्ता साध्यवदन्यत्वस्य साध्यतावच्छेदकावच्छिन्नवद्भेदरूपत्वे तस्या अनवकाशात् स्वयं सिद्धान्तमतापेक्षया गौरवेण तन्निराकरोति, 'केवलान्वयित्वेति साध्य-इत्यादिः, 'अनुमित्यनुत्पत्तेरिति, साध्यसामानाधिकरण्यमात्रग्रहस्य व्यभिचारग्रहाविरोधित्वादिति भावः। 'तद्ग्रहोऽपि' साध्ये केवलान्व-यित्वग्रहोऽपि, हेतुर्व्वाच्यः। यद्यपि स्वमते अवृत्तिगगनादेः स्वाभावा-भावत्वविरहादत्यन्ताभावे वृत्तिमत्त्वमनिवेश्यैव तदभावसाधारण-केवलान्वयित्वं सुवचं तथापि साम्प्रदायिकानुमततद्घटितसामानाधि-करण्यशरीरे वृत्तौ साधनवन्मात्रस्य विशेषणत्वोपगमेनैव व्यापक-तापर्य्यवसानं भवति स्वमते च पुनरत्यन्ताभावांशे साधनवद्वृत्ति-त्वविशेषणप्रक्षेपेणैव इति साम्प्रदायिकानुमतमेव केवलान्वयित्वं दर्शयति, 'तच्चेति, 'वृत्तिमदत्यन्ताभावाप्रतियोगित्वादिकमिति आदिपदान्निष्कृष्टतादृशाभावप्रतियोगितानवच्छेदकत्वपरिग्रहः। अथान्योन्याभावघटितव्यापकतापर्य्यवसानाय तद्घटितमपि केवला-न्वयित्वमाह, 'अन्योन्याभावेति, गगनादेरत्यन्ताभावप्रतियोगित्वानु-रोधेन तदभावत्वस्वीकारेऽपि तद्वदन्योन्याभावत्वमप्रामाणिकमित्य-न्योन्याभावे वृत्तिमत्त्वमव्यावर्त्तकतया नोपात्तं, 'सर्व्वसाधार-ण्याय' साध्यव्यतिरेकित्वग्रहकालीनानुमितिकारणीभूतज्ञानविष-यत्वनिर्व्वाहाय, 'लाघवात्' साध्यवदन्यावृत्तित्वज्ञानहेतुत्वान्तरा-कल्पनालाघवात्, 'साधनेति साधनवतोऽत्यन्ताभावविशेषणीभूता-यावृत्तेः, साधनवद्वृत्तितायाः अन्योन्याभावस्य वा विशेषणत्वमुचितं,

तथाचोच्यते इत्यादिवक्ष्यमाणसिद्धान्त एव पर्य्यवसानं अन्यथा कार्य्य-कारणभावद्वयकल्पनागौरवप्रसङ्गात् इत्यर्थः। 'शेषमिति, साध्ये केवलान्वयित्वग्रहदशायां तस्य पक्षे अननुमितावपि न क्षतिः। तदानीं केवलान्वयित्वेन हेतुना साध्य-पक्षवृत्तित्वानुमित्यैव पक्षे साध्यवत्तानिश्चयकार्य्यसम्भवात्। तथाच साध्यवदन्यावृत्तित्वमेवानुमित्यौपयिकं लघुशरीरत्वादित्यादिकमर्थः।

इति श्रीमन्महामहोपाध्यायगदाधरभट्टाचार्य्यविरचिता पूर्व्वपक्षस्य टिप्पनी समाप्ता ॥ * ॥

---

तत्त्वचिन्तामणौ

## व्याप्तिवादे सिद्धान्तलक्षणम् ।

अत्रोच्यते । प्रतियोग्यसमानाधिकरण-यत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यं व्याप्तिः ।

---

सिद्धान्तलक्षणस्य दीधितिः ।

प्रतियोग्यसमानाधिकरणेति, प्रतियोग्यसमानाधिकरण-यद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्म्मस्तद्धर्म्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्म्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्यर्थः ।

---

सिद्धान्तलक्षणस्य गादाधरी विवृतिः ।

'प्रतियोगितावच्छेदकावच्छिन्नं यन्न भवतीतियथाश्रुतमूलात् यत्पदार्थे साध्ये प्रतियोगितावच्छेदकावच्छिन्नान्यत्वं प्रतीयते तथाच वह्निमान् धूमादित्यादौ हेतुसमानाधिकरणमहानसीयवह्नित्वाद्यवच्छिन्नाभावमादाय दोषो दुर्व्वारः, सर्व्वेषामेव वह्न्यादीनां तादृशाभावप्रतियोगितावच्छेदकविशिष्टतया (१) तदन्यत्वासम्भवात् । यत्पदस्य यद्रूपावच्छिन्नपरतया यद्रूपावच्छिन्नस्य (२) प्रतियोगि-

---

(१) तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नतयेति पा० ।

(२) यद्रूपावच्छिन्नेत्यस्य अग्रिमेण तदवच्छिन्नान्यत्वमित्यनेन सम्बन्धः ।

तावच्छेदका ये ये धर्म्माः प्रत्येकं तदवच्छिन्नान्यत्वमित्यर्थे साध्यतावच्छेदकस्य तत्तत्प्रतियोगितावच्छेदकधर्म्मावच्छिन्नभेदकूटेन प्रत्येकं सामानाधिकरण्यपर्य्यवसिते वह्न्यादिसाध्यकहेतौ वह्नित्वादेर्विभिन्नवह्न्यादिव्यक्त्यन्तर्भावेन महानसीयवह्नित्वाद्यवच्छिन्नभेदैः प्रत्येकं सामानाधिकरण्यसत्त्वेऽप्येकव्यक्तिसत्तादिसाध्यके सत्तात्वादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नभेदसामानाधिकरण्यासत्त्वादव्याप्तिः । यद्रूपावच्छिन्नं प्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषय इत्यर्थे उक्तदोषोद्धारेऽपि यद्रूपं प्रतियोगितावच्छेदकभिन्नं प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयो वा (१) इत्यत एव सामञ्जस्ये प्रतियोगिताव-

---

(१) यद्रूपं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकमित्यपेक्षया यद्रूपं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकाविषयकप्रतीतिविषय इत्यर्थे लाघवमिति । अथ गुण-कर्म्मान्यत्वविशिष्टसत्तावान् द्रव्यत्वादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकगुणत्वत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं न गुणत्ववत्कर्म्मत्ववदन्यत्वविशिष्टसत्तात्वस्य इत्यव्याप्तिसम्भवे गौरवप्रदर्शनमनुचितं, न च गुणत्वत्वेन गुणत्वं न भेदप्रतियोगितावच्छेदकं गौरवात् अतो गुणत्ववद्भेदाप्रसिद्धा साध्याप्रसिद्धिः स्वरूपतो गुणत्वनिष्ठावच्छेदकताकभेदस्य साध्यघटकत्वे गुणत्वत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं तादृशसाध्यतावच्छेदकस्य इति नाव्याप्तिरिति वाच्यम् । तथापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत् तदवच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वं न साध्यतावच्छेदकस्य इत्यव्याप्तितादवस्थ्यात् घटकालीनवह्निसाध्यकेऽव्याप्तेश्च तत्र तादृशघटत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वस्य घटकालीनवह्नित्वेऽसत्त्वादिति चेन्न, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नमुख्यविशेष्यताशून्यप्रतीतिविशेष्यतावच्छेदकत्वस्य विवक्षितत्वात् । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नापर्य्याप्त-

विषयतावच्छेदकतापर्य्याप्त्यधिकरणत्वमिति कश्चित्। तादृशधर्म्मावच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वमित्यपि कश्चित्।

अत्र प्रकृतानुमितिविधेयतावच्छेदकतापर्य्याप्त्यवच्छेदकधर्म्मावच्छेदेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदविवक्षणेन महानसीयवह्न्यभावमादायाव्याप्तिवारणम् अवच्छेदकभेदेनावच्छेदकताभेदेऽपि तत्तत्प्रतियोगितानिरूपितावच्छेदकतात्वेन व्यासज्यवृत्तित्वेन तदवच्छिन्नभेदो वह्नित्वादावक्षत एव। अथ हेतुसमानाधिकरणाभावीयतत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटनिवेशे दुर्ज्ञेयत्वम्। न च हेतुसमानाधिकरणाभावीयप्रतियोगितावच्छेदकतात्वेनापि पर्य्याप्त्यन्तरं वर्त्तत एव इत्यनुगतरूपेणैव निवेशः कार्य्य इति वाच्यम्। तथा सति धूमवान् वह्नेरित्यादौ अतिव्याप्त्यापत्तेः यावन्तो वह्निसमानाधिकरणाभावप्रतियोगितावच्छेदकधर्म्मास्तावत्समुदायत्वस्यैव तदवच्छेदकतापर्य्याप्त्यवच्छेदकतया धूमत्वत्वावच्छेदेन वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकत्ववह्न्नेदसत्त्वादिति चेन्न, अवच्छेदकम् अवच्छेदकत्ववत् इति प्रतीत्योर्वैलक्षण्येन स्वरूपसम्बन्धरूपपर्य्याप्तिसम्बन्धावगाहनस्यैव नियामकत्वं तथाच धूमत्वं वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकमिति प्रतीतिबलादेव धूमत्वादावपि वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकत्वपर्य्याप्तिस्वीकारेणातिव्याप्तिविरहात् वह्नित्वं धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकमिति प्रतीत्यभावेन च वह्नित्वत्वावच्छेदेन धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वपर्य्याप्त्यभावान्नाव्याप्तिः, अतएव साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नावच्छेदकताकभेदो वह्नित्वे न वर्त्तत एवेत्यव्याप्तिरिति परास्तम्। वह्नित्वं समवायेन धूमसमानाधिकरणाभावप्रतियोगितावच्छेदकं नेति प्रतीत्यभावादेव तादृशभेदसत्त्वेनाव्याप्तिविरहात् एतेन साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नावच्छेदकतानिरूपकप्रतियोगितानिरूपकतावच्छेदकत्वत्वेन निवेशोऽव्याप्तिवारणाय नोपादेयः हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यावत् स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकम् एतादृशं स्वं साध्यतावच्छेदकमित्यनवच्छेदकान्तपारिभाषिकबलात् दण्डिमानित्यादौ नैतादृशं स्वं किमपि दण्डस्वरूपं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकयावद्दण्डस्य प्रत्येकं कस्यापि दण्डस्य स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वविरहादिति परम्परासम्बन्धानुधावनमिति भट्टाचार्य्येण वस्तुतस्त्वित्यादिना लिखितं न सम्यक् यत्र यादृशं साध्यतावच्छेदकं तत्र तादृश-

च्छेदकविशिष्टाविषयकप्रतीतिविषयत्वस्य साध्यतावच्छेदकविशिष्टे निवेशनमनुचितं, एवं स्वरूपसम्बन्धरूपावच्छिन्नत्वविवक्षया यद्रूपावच्छिन्नं प्रतियोगित्वं उक्ताभावप्रतियोगितावच्छेदकानवच्छिन्नमित्यर्थः, शुद्धवह्नित्वादिरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगित्वे महानसीयत्वादिविशिष्टवह्नित्वाद्यनवच्छेद्यत्वं सुलभमेव यद्रूपावच्छिन्नं प्रतियोगित्वं तादृशप्रतियोगिताभिन्नमित्युक्तौ समवायादिना घटादौ साध्ये संयोगादिना घटादिहेतावतिव्याप्तिः संयोगादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नप्रतियोगितायां हेतुमन्निष्ठाभावप्रतियोगिताभेदसत्त्वात् इदं वाच्यं ज्ञेयत्वादित्यादावव्याप्तिवारणाय हेतुमन्निष्ठाभावप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयतया व्यभिचारिमात्र एव सम्बन्धान्तरावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताभेदसत्त्वेनातिव्याप्तिः स्यात् यद्रूपावच्छिन्नप्रतियोगितात्वावच्छेदेन हेतुमन्निष्ठसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताभेदनिवेशे च व्यापकत्वघटनया महागौरवमिति प्रतियोगिताभेदमुपेक्ष्य प्रतियोगितावच्छेदकावच्छिन्नभेदोपादानं, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं भेदानुयोगिसाध्यतावच्छेदकावच्छिन्नप्रतियोगितायां निवेश्यातिव्याप्तिवारणेऽपि केव-

---

मेव स्वपदेन धर्त्तव्यम् अन्यथा महानसीयत्वविशिष्टवह्नित्वस्य साध्यतावच्छेदकतास्थले व्यभिचारिण्यतिव्याप्तेः तथात्रापि दण्डत्वरूपेण दण्डस्य उपादानसम्भवेन सर्व्वस्यैव दण्डस्य दण्डत्वावच्छिन्नसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वसम्भवेनाव्याप्तेरयोग इत्यतो वस्तुतस्त्वित्यादिपाठः प्रामादिक इति वदन्ति इति कृतं पल्लवितेन ।

त्वान्वयिसाध्यके तादृशप्रतियोगित्वाप्रसिद्धा अव्याप्तिरितिरीत्या मिश्रव्याख्यापरिष्कारेऽपि स्वावलम्बनीयपक्षापेक्षया गौरवमित्युपाध्यायोपदिष्टनञ्व्यत्यासपक्षमवलम्ब्य व्याचष्टे, 'प्रतियोग्यसमानाधिकरणेति। न च नञ्व्यत्यासेन साध्यतावच्छेदके प्रतियोगितावच्छेदकभेदनिवेशेऽपि शुद्धवह्नित्वादौ महानसीयत्वादिविशिष्टवह्नित्वादिभेदासत्त्वात् साध्यतावच्छेदके प्रतियोगितावच्छेदकाविषयकप्रतीतिविषयत्वमेव विवक्षणीयं तदपेक्षया साध्यतावच्छेदकावच्छिन्नप्रतियोगित्वे प्रतियोगितावच्छेदकानवच्छेद्यत्वनिवेशपक्षे न गौरवमिति वाच्यम्। प्रत्येकं घटादौ घट पटोभयत्वाद्यवच्छिन्नभेदवत् शुद्धवह्नित्वादौ महानसीयत्वाद्यन्तर्भावेन पर्य्याप्तविशिष्टवह्न्याद्यभावीयप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य सुघटत्वात्। अवच्छेदकाविषयकप्रतीतिविषयत्वविवक्षामन्तरेणैव प्रतीकारात्। अवच्छेदकत्वस्य वह्नित्व महानसीयत्वादिनिष्ठस्य सम्बन्धादिभेदेन भिन्नत्वेऽपि अनुगतेन तत्तत्प्रतियोगितावच्छेदकतात्वरूपेण व्यासज्यवृत्तितायाश्चक्रवर्त्तिलक्षणे वह्नित्वादेरवच्छेदकत्वपर्य्याप्त्यनधिकरणत्वमुपपादितवतो दीधितिकारस्यानुमतत्वात्, सार्व्वभौमैस्तु विशेषधर्म्मावच्छिन्नप्रतियोगिताकूटानतिरिक्तसामान्यधर्म्मावच्छिन्नप्रतियोगितासम्बन्धस्य विशेषरूपेणाव्यासज्यवृत्तेरपि सामान्यधर्म्मावच्छिन्नप्रतियोगितासम्बन्धत्वेनानुगतेन व्यासज्यवृत्तित्वमितिकण्ठरवेणैवोक्तम्। एवं सति महानसीयवह्निभिन्नवह्निमान् धूमादित्यादौ साध्यतावच्छेदकमहानसीयवह्निभिन्नत्व-वह्नित्वाद्योः प्रत्येकं धूमादिसमानाधिकरणा-

भावप्रतियोगितावच्छेदकत्वपर्य्याप्त्यनधिकरणत्वेऽपि प्रकृतानुमितिविधेयतावच्छेदकता यादृशरूपावच्छिन्ने पर्य्याप्ता तादृशरूपावच्छिन्नानुयोगिताकतादृशावच्छेदकत्वावच्छिन्नभेदस्यैव व्याप्तिघटकत्वोपगमेन नातिप्रसङ्गः (१) उक्तस्थलीयानुमितिविधेयतावच्छेदकता-

---

नन्‌ महानसीयवह्निभिन्नवह्निमान् धूमादित्यादौ अतिव्याप्तिवारणाय अनुमितिविधेयतावच्छेदकता यादृशरूपावच्छिन्ने पर्य्याप्ता तद्रूपावच्छिन्नानुयोगिताकतादृशाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदविवक्षणेऽपि रूपवान् पृथिवीत्वादित्यादावव्याप्तिर्हेतुमन्निष्ठस्य विषयितया रूपत्वादिविशिष्टाभावस्य यत्प्रतियोगितावच्छेदकत्वं तदवच्छिन्नभेदस्य रूपत्वादावसत्त्वात्। न च साध्यतावच्छेदकताघटकसम्बन्धेन तादृशप्रतियोगितावच्छेदकत्वस्य विवक्षणान्नैषदोष इति वाच्यम्। तथा सति पर्य्याप्तिनिवेशेऽपि साध्यतावच्छेदकताघटकसमवायाद्यवच्छिन्नाया हेतुमन्निष्ठमहानसीयवह्न्यभावप्रतियोगितावच्छेदकताया व्यासज्यवृत्तित्वविरहेण वह्नित्वादौ तदवच्छिन्नभेदासत्त्वाद्वह्निमान् धूमादित्यादावव्याप्तिवारणासम्भवादिति चेन्न, साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्ना या हेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकता तन्निरूपकीभूता या प्रतियोगिता तदवच्छेदकत्वावच्छिन्नभेदस्य निवेशनीयत्वात् तथाच रूपवान् पृथिवीत्वादित्यादौ विषयित्वावच्छिन्नरूपत्वनिष्ठावच्छेदकताया लक्षणाघटकत्वान्नाव्याप्तिः न वा वह्निमान् धूमादित्यादौ तादृशसम्बन्धावच्छिन्नतादृशावच्छेदकतानिरूपकप्रतियोगितावच्छेदकत्वस्य व्यासज्यवृत्तित्वसत्त्वेन तदवच्छिन्नभेदस्य वह्नित्वादौ सत्त्वादव्याप्तिरपीति ध्येयम्। न चैवमनुमितिविधेयतावच्छेदकतापर्य्याप्त्यवच्छेदकीभूतदण्डत्वाद्यवच्छेदेन दण्डादेर्हेतुमन्निष्ठाभावीयतादृशप्रतियोगितावच्छेदकतानिरूपकप्रतियोगितावच्छेदकतावच्छेदसत्त्वाद्दण्डत्वादिसाध्यकेऽव्याप्तिदानासङ्गतिरिति वाच्यम्। हेतुमन्निष्ठाभावीयतादृशप्रतियोगितावच्छेदकताया व्याप्यवृत्तितया दण्डत्वावच्छेदेन तदवच्छिन्नभेदसत्त्वाभावात्। न च यो यदनवच्छेदकः स तदभावावच्छेदक इति नियमबलादेव दण्डत्वावच्छेदेन तादृशावच्छेदकत्ववद्भेदसत्त्वान्नाव्याप्तिरिति वाच्यम्। तादृशनियमस्याप्रामाणिकत्वात् द्रव्यत्वावच्छेदेन दण्डे घटजनकत्वाभावसत्त्वप्रसङ्गादिति। इदमत्रावधेयं तत्तद्दण्डाभावप्रतियोगितावच्छेदकतात्वरूपेण

पर्य्याप्त्यवच्छेदकदर्शितधर्म्मद्वयनिष्ठद्वित्वाद्यवच्छिन्नहेतुमन्निष्ठाभाव-
प्रतियोगितावच्छेदकत्वपर्य्याप्तिमति विरोधेन तदवच्छिन्नभेदा-
सत्त्वात्, साध्यतावच्छेदकवृत्तिमहानसीयवह्निभिन्नत्व-वह्नित्वो-
भयत्वाद्यनुपस्थितिकाले तदवच्छिन्नेऽनवच्छेदकत्वस्य दुर्ग्रहतया
अनुमित्यनुत्पादो व्यापकताज्ञानकारणतावादिनामिष्ट एव, तेन
तेन रूपेणानवच्छेदकत्वग्रहात्तद्रूपावच्छिन्नविधेयतावच्छेदकताका-
नुमित्यनुपपत्तिश्च केवलान्वयिग्रन्थे ग्रन्थकृतैव वक्ष्यते, यत्त्व-तत्त्वेन
हेतोर्निवेशे हेतुव्यक्तिभेदेन व्याप्तिर्भिद्येत, सा च नानुमित्युप-
योगिनी पक्षीयधूमादिव्यक्तिव्यापकतायाः पूर्व्वं वह्न्यादावगृहीत-
त्वादिति 'यद्रूपविशिष्टेत्युक्तं, तथाच धूमत्वादिरूपहेतुतावच्छेदक-
धर्म्मानेव विशिष्य निवेश्य तत्तद्रूपावच्छिन्नहेतुकानुमित्यौपयिक-
व्याप्तिर्निर्वाच्या महानसादौ धूम-वह्न्यादिव्यभिचाराग्रहाद्वह्नित्वा-
दिना तत्तद्धूमत्वाद्यवच्छिन्ननिरूपिताया भाव पक्षीयधूमादिसाधा-
रणधूमत्वाद्यवच्छिन्ननिरूपिताया अपि व्यापकताया ग्रहसम्भवा-
त्तदघटितव्याप्तेः पक्षधर्म्मधूमे ग्रहादनुमितिनिर्व्वाह इति भावः।
न च सामानाधिकरण्यस्य व्याप्तित्वपक्षे हेतुव्यक्तिभेदेन व्याप्तिभेद-
आवश्यक एवेत्यनुगतरूपेण हेतुनिवेशो व्यर्थ इति वाच्यम्।
हेतुव्यक्तिभेदेन व्याप्तिभेदेऽपि अनुगतरूपेण हेतुनिवेशे धूमव्यापक-

---

तादृशावच्छेदकताया व्यासज्यवृत्तितानुपगमस्य अवच्छेदकतापर्य्याप्तिनिवेशेऽपि
न तादृशावच्छेदकत्वावच्छिन्नानुगताभावनिवेशननिर्व्वाहः हेतुसमानाधिकरणा-
भावप्रतियोगितावच्छेदकतात्वस्वरूपेण तथात्वमुपगमस्य अनुगताभावनिवेशसम्भवेऽपि
धूमवान् वह्नेरित्यादौ धूमत्वत्वाद्यवच्छेदेन तादृशावच्छेदकत्वावच्छिन्नभेदसत्त्वादति-
प्रसङ्गादिति।

वह्निप्रतियोगिकधूमनिष्ठसामानाधिकरण्यव्यक्तीनामननुगमात् सामा-न्यप्रत्यासत्त्या पक्षीयहेतुनिष्ठव्याप्तेरपि प्रथमं अनुगतसामाना-धिकरण्यत्वरूपव्याप्तित्वेन ग्रहसम्भवेनानुमित्युपपत्तेः तत्तद्व्यक्ति-त्वेन हेतुनिवेशेऽननुगमात् सामान्यप्रत्यासत्त्यापि पक्षीयहेतुनिष्ठ-व्याप्तेर्व्याप्तित्वेन दुर्ग्रहतया अनुमित्यनुपपत्तेः, हेतुतावच्छेद-काश्रयाधिकरणत्वमुपेक्ष्य तद्विशिष्टनिरूपिताधिकरणत्वप्रवेशप्रयो-जनमग्रे वक्ष्यते प्रतियोगितानवच्छेदकत्वमात्रेण साध्यताव-च्छेदकनिवेशे वह्नित्वत्वादिना वह्नित्वादिकमनवगाहमानात् प्रति-योगितानवच्छेदकवत्समानाधिकरणधूमवानित्यादिज्ञानाद्वह्निमा-नित्याद्यनुमित्यापत्तिः स्यात् । न चेष्टापत्तिसम्भवः, कदाचिद्वह्नि-त्वेन कदाचिद्द्रव्यत्वादिना वह्न्यनुमितिरिति नियमानुपपत्तेः । न चानवच्छेदकत्वेन तत्तद्धर्मावगाहित्वमेव व्याप्तिग्रहस्यानु-मितौ विधेयतावच्छेदकतया तत्तद्धर्मभाननियामकमिति वाच्यम् । अनवच्छेदकत्वेन वह्नित्वादिभाने द्रव्यत्वादिभानस्यापि प्रायशः सम्भवात् एवं तत्तत्साध्यतावच्छेदकावच्छिन्नव्यभिचारितया हेतु-भानस्य हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमात्रेण तत्तत्साध्यतावच्छेदकावगाहिव्याप्तिज्ञानाविरोधितया विशिष्य साध्य-तावच्छेदकानवगाहिव्याप्तिज्ञानस्य हेतुत्वे व्यभिचारस्य हेत्वा-भासतानुपपत्तिश्चेति विशिष्य साध्यतावच्छेदकस्य व्याप्ति-घटकतालाभाय प्रतियोगितानवच्छेदकावच्छिन्नेनेत्यनुक्त्वा प्रति-योगितानवच्छेदको यो धर्मस्तदवच्छिन्नेनेत्युक्तम् । यत्र वह्नित्वत्वा-दिविशेषणावच्छिन्नस्य साध्यतावच्छेदकता तत्र तेन रूपेणैव तद्ध-

र्म्माणां व्याप्तिघटकता यत्र च स्वरूपत एव वह्नित्वाद्यखण्ड-धर्म्माणां साध्यतावच्छेदकत्वं तत्रापि विशेषणावच्छिन्नतत्तद्धर्म्म-घटिततत्तद्धर्म्मवदितरावृत्तित्वरूपवह्नित्वत्वादिना तन्निवेशो न तु स्वरूपत एव, अनवच्छेदकत्वरूपविशेषणपुरस्कारेण भाने निर्व्विशे-षणकभानात्मकस्य स्वरूपतो भानस्यासम्भवात् वह्न्यादीतरावृत्ति-त्वस्य वह्न्यादिमात्रवृत्तिधर्म्मान्तरसाधारण्येऽपि तन्मात्रपुरस्कारेण व्यापकतावच्छेदकत्वग्रहस्यापि वह्नित्वाद्यवच्छिन्नविधेयकानुमिति-हेतुत्वमुपेयते सकलवह्न्यादिवृत्तित्वविषयतानिवेशे गौरवात् सकलवह्न्यादिवृत्तित्वस्य वह्न्यादीतरवृत्तिसाधारणतया तन्मात्र-पुरस्कारेण व्यापकतावच्छेदकत्वग्रहस्य न हेतुतासम्भवः तथा सति इन्धनादिहेतुनापि वह्नित्वाद्यवच्छिन्नानुमितिप्रसङ्गात् सकल-वह्न्यादिवृत्तिद्रव्यत्वादाविन्धनादिव्यापकतावच्छेदकत्वसत्त्वाद्वह्नि-त्वादिनिष्ठतद्व्यक्तित्व--धूमजनकतावच्छेदकजातित्वादेर्वह्नित्वादि--मात्रवृत्तित्वेऽपि तेन रूपेण व्यापकतावच्छेदकत्वग्रहाद्वह्निमानित्य-नुमितिरनुभवविरुद्धा येन रूपेणोपस्थिते वह्न्यादीतरसाधारण्य-संशयो न जायते तत्पुरस्कारेण व्यापकतावच्छेदकत्वग्रहादेवोक्ता-नुमित्युत्पादानुभवात् अतएव ज्ञानत्वत्वानुभवत्वव्यापकगुणत्व-व्याप्यजातित्वयोरविशेषेण (१) ज्ञानत्वत्वरूपेण व्यापकतावच्छेदक-त्वग्रहाज्ज्ञानवानयमित्यनुमितिर्न भवितुमर्हतीति दीधितिकार-वक्ष्यमाणदूषणं प्रत्युक्तम्, अधिकमग्रे वक्ष्यामः। तत्तद्व्यक्तिसामाना-धिकरण्यं न तत्तद्व्यक्तिगमकताप्रयोजकं पर्व्वतीयधूमे महानसीय-

(१) अत्राविशेषत्वं तन्मात्रवृत्तितया।

वह्निसामानाधिकरण्याग्रहेऽपि ततः पर्व्वते लाघवज्ञानादिवशा-न्महानसीयवह्न्यनुमितिरिति दर्शयति, 'येन केनापीति 'यावन्निरू-पितेत्याभ्यां, 'तद्रूपविशिष्टस्य तद्धर्म्मावच्छिन्नयावन्निरूपिता व्याप्ति-रिति तद्रूपावच्छिन्ननिष्ठा तद्रूपावच्छिन्नयावद्व्यक्तिगमकताप्रयो-जिका व्याप्तिरित्यर्थः, यथाश्रुते एकसाध्यव्यक्तिसामानाधिकरण्य-स्यापरव्यक्तिप्रतियोगिकत्वासम्भवेनासङ्गतेः ।

---

अनुमानदीधितिः ।

**दण्डादौ साध्ये परम्परासम्बद्धं दण्डत्वादिकमेव साध्यतावच्छेदकमतो नाव्याप्तिः ।**

---

गादाधरी विवृतिः ।

यत्रैकैकसाध्यतावच्छेदकव्यक्तिर्न सकलहेतुमद्वृत्तितावच्छे-दिका तत्रानुगतरूपावच्छिन्नेनापि तेन रूपेण न तादृशहेतु-व्यापकतासम्भवः सकलसाध्यतावच्छेदकव्यक्तीनामेव चालनी-न्यायेन हेतुसमानाधिकरणतत्तद्व्यक्त्यवच्छिन्नाभावप्रतियोगिता-वच्छेदकत्वादित्याशङ्कामिष्टापत्त्या परिहरति, 'दण्डादाविति, 'परम्परासम्बद्धमिति स्वसमवायिसंयोगादिसम्बन्धेन साध्यसम्बद्ध-मित्यर्थः, एतच्च साध्यावृत्तितया दण्डत्वादेर्न व्यापकतावच्छेदकत्व-सम्भव इत्याशङ्कानिराकरणाय, 'साध्यतावच्छेदकं' दण्डिसंयोगत्वा-दिरूपनानाधिकरणवृत्तितावच्छेदकावच्छिन्नहेतुव्यापकतावच्छेद-कमित्यर्थः (१) । एवकारेण दण्डादिरूपसखण्डधर्म्मव्यवच्छेदः,

---

(१) दण्डिसंयोगादिरूपनानाधिकरणवृत्तितावच्छेदकावच्छिन्नहेतुव्यापकता-

तथाच तत्र प्रतियोगितानवच्छेदकत्वस्य दुरुपपादत्वेऽपि न क्षतिः। दण्डत्वादिनैव प्रकारेण तद्धेतुकदण्डाद्यनुमितेरुपगन्तव्यत्वात्। व्यापकतावच्छेदकत्वभ्रमादेव दण्डादिप्रकारकदण्डानुमितेरुपगमात्। स्वाश्रयघटितपरम्परासम्बन्धेन यद्धर्म्मे व्यापकतावच्छेदकत्वग्रहस्तद्विशिष्टधर्म्मिप्रकारेण सामानाधिकरण्यप्रतियोगितया साध्यावगाहिव्याप्तिग्रहस्यैव वा तद्धर्म्मविशिष्टदण्डादिरूपधर्म्मिणोऽनुमितिविधेयतावच्छेदकताप्रयोजकत्वोपगमेन दण्डिमानित्याकारकानुमितेर्भ्रमशून्यतादशायां निर्व्वाह्यत्वादिति भावः। अथ महानसीयत्वादिसहितवह्नित्वादेर्धूमादिसन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि शुद्धवह्नित्वादिरूपसाध्यतावच्छेदकस्य तादृशप्रतियोगितानवच्छेदकत्ववत्, तत्ताविशिष्टदण्डस्य तादृशप्रतियोगितावच्छेदकत्वेऽपि दण्डत्वाद्यवच्छिन्नस्य तादृशप्रतियोगितानवच्छेदकत्वस्य सुघटतया तस्य व्यापकतावच्छेदकत्वानुपगमो न सङ्गच्छते। न च तद्दण्डीनास्तीति बुद्धौ तत्तोपलक्षित एव दण्डे प्रतियोगितावच्छेदकत्वपर्य्याप्तिर्भासते न तु तत्तामन्तर्भाव्य तत्तोपलक्षितव्यक्तेरेवानतिप्रसक्ततया तत्तांशस्यावच्छेदकान्तर्भावे गौरवादतोविशिष्यस्यावच्छेदकत्वपर्य्याप्त्यधिकरणतया दण्डत्वविशिष्टस्यापि तस्यानवच्छेदकत्वं दुर्घट(१) महानसीयवह्न्याद्यभावप्रतियोगितायां वह्नित्वादेरतिप्रसक्ततया तन्मात्रेऽवच्छेदकतापर्य्याप्त्यसम्भवेन महा-

---

वच्छेदकमित्यर्थ इति पा०। एतादृशपाठे दण्डिसंयोगादिरूपेत्यस्य उत्तरवर्त्तिनि हेतुव्यापकतावच्छेदकमित्यत्र हेतावन्वयः।

(१) विशेष्यवृत्तेर्विशिष्टानुयोगिकाभावानभ्युपगमादिति भावः।

नत्वीयत्वादेरवच्छेदकान्तर्भाव आवश्यक इति शुद्धवह्नित्वादेस्तादृश-प्रतियोगितानवच्छेदकत्वं सुघटमिति वाच्यम्। स्वरूपतो भास-मानस्यैव स्वरूपतोऽवच्छेदकतायाः सिद्धान्तसिद्धतया सखण्ड-पदार्थस्य दण्डादेः स्वरूपतोऽभानात्तस्य स्वरूपतोऽवच्छेदकत्वा-सम्भवेन दण्डत्वादिविशिष्टस्य चातिप्रसक्तत्वेन तत्तादिरूपविशेषण-मनन्तर्भाव्य तत्रावच्छेदकत्वपर्य्याप्तेरयोगात्। अभावप्रतियोगि-तावच्छेदकतया भासमाने उपलक्षणीभूतधर्म्मान्तरभानोपगमे उपलक्षणतया दण्डत्वमात्रं तत्तद्दण्डावच्छिन्नाभावप्रतियोगिताव-च्छेदकतया भासमानतत्तद्दण्डांशे विषयीकृत्य दण्डिमति दण्डी-नास्तीति प्रत्ययस्य दुर्व्वारत्वाच्च। अत्र केचित् उक्ताशयेनैव 'दण्डा-दावित्यादिपदद्वयोपादानं तेन च (१) पृथिवीत्वव्याप्यजातित्वा-दिना अनुगतीकृत्य घटत्व-पटत्व-मृत्तिकात्व-पाषाणत्वादिमतः सम-वायादिना पृथिव्यादिहेतुकसाध्यस्य तादृशजातित्वादेश्च परिग्रहः। समवायादिना हेतुभूतपृथिव्यादिमति तन्तु-कपालादौ विशेषणा-नवच्छिन्न-घटत्व-पटत्वाद्यवच्छिन्नाभावस्य सत्त्वात्। सर्व्वास्वेव साध्यतावच्छेदकतादृशजातिषु तथाविधाभावप्रतियोगितावच्छेद-कत्वपर्य्याप्तेस्तासां व्यापकतावच्छेदकत्वासम्भवेन तदनुगमकोक्त-धर्म्मस्यैव परम्परासम्बन्धेन तथात्वोपगमस्यावश्यकत्वादित्याहुः।

अन्ये तु तद्दण्डवान्नास्तीत्यादौ प्रतियोगिविशेषणतया भासमान-दण्डादिष्वेव प्रतियोगितावच्छेदकत्वपर्य्याप्तिर्भासते तद्विशेषण-तत्तादौ तत्तदवच्छेदकतावच्छेदकत्वमेव प्रतियोगिताव्यधिकरणस्य

(१) आदिपदाभ्याञ्चेति पा०।

तदवच्छेदकत्वासम्भवेन तदन्तर्भावेन तदवच्छेदकतापर्य्याप्त्यसम्भवात्। न चानवच्छिन्नावच्छेदकत्वरूपं स्वरूपतोऽवच्छेदकत्वं निवेशनीयमिति वाच्यम्। तत्तत्सखण्डसाध्यतावच्छेदककव्यभिचारिण्यतिव्याप्तेः(१)। अतो तदण्डादेरनवच्छेदकत्वं दुर्घटं(२) महानसीयवह्निर्नास्तीत्यादौ च महानसीयत्वादेः प्रतियोगिन्येव विशेषणतया भानात् तदन्तर्भावेनैव प्रतियोगितावच्छेदकत्वपर्य्याप्तिर्भासत इति विशेषः। अथ वह्नित्वाद्यंश एव सामानाधिकरण्यसम्बन्धेन विशेषणतया महानसीयत्वादिकमवगाहमाना महानसीयत्वविशिष्टवह्नित्ववान्नास्तीत्याकारिका प्रतीतिः तस्या उक्तयुक्त्या (३) वह्नित्वादेरेव प्रतियोगितावच्छेदकत्वपर्य्याप्तिविषयकतया वह्नित्वादेरप्यनवच्छेदकत्वं दुर्घटमेव स्यात्, यदि च सामानाधिकरण्यसम्बन्धेन महानसीयत्वादेस्तदवच्छेदकतायामवच्छेदकत्वे गौरवान्महानसीयत्वादिसहितस्य वह्नित्वादेः प्रतियोगितावच्छेदकत्वं उक्तप्रतीतिस्तु कम्बुग्रीवादिमान्नास्तीति प्रतीतिवदवच्छेदकतावच्छेदकत्वांशे भ्रमरूपैवेत्युच्यते (४)। तदा यत्र सामानाधिकरण्यसम्बन्धेन महानसीयत्वादिविशिष्टस्य वह्नित्वादेः साध्य-

---

(१) तथाच दण्डादिसाध्यकव्यभिचारिण्यतिप्रसक्तिभयेनानवच्छिन्नावच्छेदकत्वनिवेशायोग इति भावः।

(२) अनवच्छिन्नावच्छेदकत्वमेव च स्वरूपतोऽवच्छेदकत्वं तच्चखण्डे नास्त्येव अतो दण्डादेरनवच्छेदकत्वं दुर्घटमिति पा०।

(३) प्रतियोगिताव्यधिकरणस्य प्रतियोगितावच्छेदकत्वासम्भवयुक्त्या।

(४) कम्बुग्रीवादिमान्नास्तीतिप्रतीतिर्यथा प्रतियोगितावच्छेदकत्वांशे भ्रमरूपा तथेत्यर्थः।

तावच्छेदकता तत्स्थलीये व्यभिचारिणि धूमादिहेतावति-व्याप्तिरिति स्वविशिष्टसम्बन्धिनिष्ठेत्यादिना निर्व्वाच्यम् पारिभाषिकमेवावच्छेदकत्वं निवेशनीयं तच्च तल्लक्षणे यादृशस्य स्वपदार्थस्य प्रवेशस्तादृशत्वं, एवञ्च महानसीयत्वादिविशिष्टस्य वह्नित्वादेस्तत्र स्वपदेनोपादानसम्भवात् विशिष्टवह्नित्वत्वादिकमेव पारिभाषिकमवच्छेदकत्वं तदवच्छिन्नभेदश्च शुद्धवह्नित्वादावपि दुर्घटः, तथाचावच्छेदकं यादृशं स्वं तादृशविशिष्टाविषयकप्रतीतिविषयत्वमेवानवच्छेदकत्वपदेन विवक्षणीयं तथाच सति सखण्डस्य दण्डादेः स्वरूपतोऽभानात्तत्तादिविशेषणविशिष्टस्यैवावच्छेदकलक्षणस्थस्वपदेनोपादेयतया तद्विशिष्टाविषयकप्रतीतिविषयत्वस्य दण्डत्वादिविशिष्टे सुघटत्वात् व्यापकतावच्छेदकत्वमव्याहतमेवेति चेन्न, पारिभाषिकस्यावच्छेदकत्वस्य स्वत्वघटितत्वेनाननुगतस्याभावकूटज्ञानासम्भवेन प्रतियोगितायाः स्वरूपसम्बन्धरूपावच्छेदकत्वस्यागत्या गुरुधर्म्मसाधारण्यमुरीकृत्य व्याप्तिलक्षणे तदेव हि निवेशनीयम्, एवञ्च (१) सामानाधिकरण्यसम्बन्धेन महानसीयत्वादिविशेषणावच्छिन्नस्य वह्नित्वादेर्हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि(२) महानसीयत्वादिविशिष्टनिरूपितसमवायादेरेव प्रतियोगितावच्छेदकताघटकसम्बन्धत्वं तत्रापियं शुद्धसमवायादिना

---

(१) गुरुधर्म्मस्याभावप्रतियोगितावच्छेदकत्वे चेत्यर्थः ।

(२) सामानाधिकरण्यसम्बन्धेन महानसीयत्वादिविशिष्टवह्नित्वावच्छिन्नवन्न्यादिसाध्यकव्यभिचारिण्यतिव्याप्तिवारणाय तद्विशिष्टस्य प्रतियोगितावच्छेदकत्वमवश्यमङ्गीकर्त्तव्यमिति भावः ।

वह्नित्वादेरतिप्रसक्तत्वात्, शुद्धसमवायादेस्तत्रावच्छेदकतावच्छेदकत्वे महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वाद्यवच्छिन्नाभावात् तद्विशिष्टवह्नित्वाद्यवच्छिन्नाभावस्य वैलक्षण्यानुपपत्तेश्च। तथाच साध्यतावच्छेदकताघटकशुद्धसमवायादिना अखण्डवह्नित्वादेरनवच्छेदकत्वं न दुर्लभं (१)। न च महानसीयत्वादिसामानाधिकरण्यस्य यत्रोपलक्षणता तत्र तस्यावच्छेदककोटौ न प्रवेशः यत्र विशेषणत्वं तत्र प्रवेशः, इत्यत एव वैलक्षण्यमिति वाच्यम्। उपलक्षणीभवत्तत्तद्रूपावच्छिन्नप्रतियोगितावच्छेदकताकाभावबुद्धावपि तत्तद्रूपस्य प्रतियोगितावच्छेदकांशे प्रकारतया भानात् तत्रावच्छेदकतावच्छेदकत्वभानस्यावश्यकतया अवच्छेदकशरीराप्रवेशरूपोपलक्षणताया उपलक्षणविधया अवच्छेदके तत्रासम्भवात्। यदुपलक्षितनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तस्योपलक्षणतयावच्छेदकत्वं यद्विशिष्टनिरूपितसमवायादेरवच्छेदकतावच्छेदकत्वं तस्य विशेषणविधया अवच्छेदकतावच्छेदकत्वमित्यस्यैव विशेषत्वात्। एकत्वप्रागभावविशिष्टघटादेः (२) संयोगादिसम्बन्धेनाभावस्य प्रतियोगितायां अप्रसिद्धतया (३) विशिष्टनिरूपितसंयोगादेरवच्छेदकत्वासम्भवेनागत्या विशेषणविधया प्रति-

---

(१) साध्यतावच्छेदकताघटकसंसर्गावच्छिन्नावच्छेदकत्वाभावस्य लक्षणघटकत्वादिति भावः।

(२) नन्वेवं विशिष्टसत्तावान् जातेरित्यादौ प्रतियोगितावच्छेदकावच्छिन्नव्यावृत्तिर्दीधितिकृतो विरुध्येत तत्र प्रतियोगितावच्छेदकीभूतविशिष्टनिरूपितसमवायेन प्रतियोगिनो गुणादावनधिकरणत्वादित्यत आह, एकत्वेत्यादि।

(३) प्रतियोगिताया व्यावर्त्तकतयेति पा०।

योगितावच्छेदकत्वमित्यन्यथैव वैलक्षण्यस्य (१) उपपादनीयतया शुद्धसमवायादेरेव विशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकसम्बन्धतया तादृशाभावस्य तादृशसम्बन्धेन प्रतियोगिसमानाधिकरणतया दीधितिकृतां प्रतियोगितावच्छेदकविशिष्टासामानाधिकरण्यपर्य्यन्तव्याप्तिसङ्गतिः । मा भूद्वा विशिष्टनिरूपितसमवायात्वादिना प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धता तथापि महानसीयत्वादिसामानाधिकरण्योपलक्षितवह्नित्वादेस्तद्विशिष्टवह्नित्वादेश्च प्रतियोगितावच्छेदकतयोर्वैलक्षण्यं, आद्या तद्धर्म्मावच्छिन्नविशेष्यपर्य्याप्ता, अन्या च विशेष्य-विशेषणभावापन्नयोर्धर्म्म-धर्म्मिणोर्द्वयोः पर्य्याप्तेत्येवं रीत्यैवोपपादनीयं, तावतापि अखण्डस्य शुद्धवह्नित्वादेर्हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वमुपपद्यते धर्म्मान्तरोपलक्षितवह्नित्वाद्यवच्छिन्नाभावस्य धूमादिमत्यवृत्तेः विशिष्टवह्नित्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकतायाश्च विशेष्य-विशेषणान्तर्भावेनैव पर्य्याप्तेः । तत्तोपलक्षितदण्डावच्छिन्नप्रतियोगिताकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकता च तत्तावच्छिन्नशुद्धविशेष्य एव पर्य्याप्ता साध्यतावच्छेदकताघटकशुद्धसंयोगसम्बन्धावच्छिन्ना चेति तादृशसम्बन्धेन दण्डादेस्तादृशाभावप्रतियोगितानवच्छेदकत्वं दुरुपपादमिति सामञ्जस्यमिति वदन्ति ।

वस्तुतो गुरुधर्म्मस्य प्रतियोगितानवच्छेदकत्वे पारिभाषिका-

(१) अगत्या विशिष्टाभावप्रतियोगिता विशेषणान्तर्भावेन पर्य्याप्ता उपलक्षिताभावप्रतियोगिता उपलक्षिते विशेष्य एव इत्येवं वैलक्षण्यस्य ।

वच्छेदकत्वं निवेशनीयं तच्छरीरे यादृशं स्वं निविष्टं तादृशधर्म्म-भेदनिवेशे वह्नित्वादौ विशिष्टवह्नित्वादिभेदासत्त्वेन तादृश-तादृशधर्म्माविषयकप्रतीतिविषयत्वं निवेशनीयमिति गौरव-मतः प्रतियोगितावच्छेदकं यादृशयादृशरूपं स्वविशिष्टसम्बन्धि-निष्ठाभावप्रतियोगितानवच्छेदकतत्तत्त्वरूपं तत्तदतिरिक्तवृत्तित्व-मेवानवच्छेदकात्वेन विवक्षणीयं तथाच सर्व्वासामेव दण्डादिव्य-क्तीनां हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतया कस्या-श्चिदपि दण्डादिव्यक्तेर्न यावत्प्रतियोगितावच्छेदकातिरिक्तवृत्तित्वं स्वस्य स्वातिरिक्तवृत्तित्वविरहात् इत्यखण्डधर्म्मस्य व्यापक-तावच्छेदकत्वानुसरणम् (१)। एतच्चैकोक्त्यभिप्रायेण यथाश्रुतमूल-लक्षणमुपपादयितुं सार्व्वभौमप्रभृतिमतमनुसृत्य। एकोक्त्यनादरे तु अनुगतरूपेण नानाव्यक्तिविधेयतावच्छेदककानुमित्यौपयिक-व्याप्तिर्यद्रूपावच्छिन्नमनवच्छेदकं यद्रूपं वा प्रतियोगितावच्छेद-कतानवच्छेदकं तद्रूपविशिष्टावच्छिन्नसामानाधिकरण्यं तद्रूप-विशिष्टावच्छिन्ननिरूपिता व्याप्तिरित्येवं रीत्या निर्व्वचनीया, तथा सति दण्डिसंयोगादिहेतुकापि दण्डिमानयमित्याकारि-कानुमितिर्विशेषदर्शिनामपि निर्व्वहति, एवमेकोक्त्या प्रति-योगिताधर्म्मिकोभयाभावघटिताया ग्रन्थकारेण स्वयमुपदर्श-नीयाया व्याप्तेरपि दण्डत्वादिविशिष्टदण्डाद्यवच्छिन्ननिरूपितत्व-निर्व्वाहः, हेतुसमानाधिकरणविशेषाभावप्रतियोगितायां दण्डत्व-पृथिवीत्वव्याप्यजातित्वादिविशिष्टावच्छेद्यत्वाभावस्याव्याहतत्वात्

(१) प्रतियोगितानवच्छेदकत्वानुसरणमिति पा०।

दण्डादिसामान्याभावप्रतियोगितायामेव तद्धर्म्मविशिष्टनिरूपित-
विलक्षणावच्छेद्यतासत्त्वादिति ध्येयम् ।

---

अनुमानदीधितिः ।

इत्थञ्च इदन्द्रव्यं गुण-कर्म्मान्यत्वे सति सत्त्वादित्यादौ सत्त्वाद्यधिकरणगुणादिनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि द्रव्यत्वादेः नाव्याप्तिः साधनस्य विशिष्टसत्त्वादेर्गुणादावव्वत्तेः, सामानाधिकरण्यव्यक्तीनां भेदेऽपि निरूपकतावच्छेदकस्याधिकरणतावच्छेदकस्य चैक्याद्व्याप्तेरैक्यं, वस्तुतस्तु धूमत्वादिविशिष्टव्यापकवह्निसामानाधिकरण्यस्य रासभादिसाधारणत्वाद्धूमत्वादिमति तादृशसामानाधिकरण्यं तद्वति धूमत्वादिकं वा व्याप्तिः, आद्या भिन्ना द्वितीया त्वभिन्नैवेति ध्येयम् । अयं कपिसंयोगी एतद्वृक्षत्वादित्यादिसंग्रहायासमानाधिकरणान्तम् ।

---

गादाधरी विवृतिः ।

'इत्थञ्चेति हेतुतावच्छेदकोपलक्षितहेतुसामानाधिकरण्यसाधारणरूपमुपेक्ष्य विशिष्टसामानाधिकरण्यत्वेन सामानाधिकरण्यविशेषनिवेशनेन चेत्यर्थः, 'नाव्याप्तिरिति न विशिष्टसत्तात्वरूपहेतुतावच्छेदकविशिष्टवैशिष्ठ्यावगाहिज्ञानजन्यानुमि-

त्यौपयिकव्याप्त्यनिर्व्वाह इत्यर्थः, तेन विशिष्टसत्तात्वाद्युपलक्षित-हेतुमत्ताज्ञानजन्यानुमित्यौपयिकव्याप्तौ तु तदुपलक्षितहेतु-सामानाधिकरण्यमेव निवेश्यं, अतो द्रव्यत्वाद्यभावे तादृश-हेतुसामानाधिकरण्यसत्त्वात् तादृशहेतौ न द्रव्यत्वादेर्व्याप्तिरित्य-भ्रान्तस्यापि गुणादौ विशिष्टसत्तात्वाद्युपलक्षितहेतुमत्ताज्ञान-सम्भवेऽपि न तत्र द्रव्यत्वाद्यनुमित्यापत्तिरिति नासङ्गतिः। यत्र घट-पटवृत्तिसंयोगत्वादिना हेतुता, घट-पटाद्यन्यतरत्वं साध्यं तत्रोभयवृत्तित्वविशिष्टाधिकरणाप्रसिद्धग्रा हेतुतावच्छेदकोपलक्षित-हेतुसामानाधिकरण्यगर्भं व्याप्त्यन्तरं स्वीकरणीयं अन्यथा तद्धे-तुकतत्साध्यकानुमित्युच्छेदप्रसङ्गात्। तादृशव्याप्त्यन्तरानभ्युपगमे साध्यस्य हेतुकानुमितिरप्युच्छिद्येत तद्भेदसामानाधिकरण्यसहित-तद्वृत्तिधर्म्मत्वरूपसादृश्यत्वविशिष्टाधिकरणाप्रसिद्धग्रा विशिष्टाधि-करणतागर्भव्याप्त्यसम्भवात्। एवं व्यतिरेकव्याप्तिरपि हेतुताव-च्छेदकविशिष्टवैयधिकरण्यघटिता तदुपलक्षितवैयधिकरण्यघटिता चावश्यमुपेया अन्यथा एकव्यक्तिसमवेतत्वाद्यनुमितिलक्षणस्यानु-मितिसामान्ये इतरभेदानुमापकत्वानिर्व्वाहात्। न च तत्र विशिष्टवैयधिकरण्यगर्भव्याप्तिरप्यस्तीति किं व्याप्त्यन्तरेणेति वाच्यं। तादृशव्याप्तिविषयकस्य विशिष्टहेत्वधिकरणतागर्भपक्षधर्म्मताज्ञान-स्यैव हेतुताया विशिष्टसत्ताहेतुकगुणादिपक्षकगुणाद्यनुमित्या-पत्तिभयेन स्वीकरणीयतया तत्स्वीकारस्यावश्यकत्वात्। अन्यथा एतद्व्यक्तिसमवेतत्वघटितहेतुतावच्छेदकविशिष्टस्य भागासिद्धग्रा अनुमितिसामान्ये तद्विशिष्टवैशिष्ट्यावगाहिप्रमात्मकपरामर्शस्या-

सम्भवादसमञ्जसम् (१)। अथैवं विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टनिरूपितसमवायस्य सम्बन्धतया तेन सम्बन्धेन व्याप्तिर्हेतुतावच्छेदकसम्बन्धेन हेतुमत्त्वस्याग्रे विवक्षयैव निर्व्वहतीति कथमत्र विशिष्टपदोपादानम्। न च विशिष्टवैशिष्ट्यबोधे विशिष्टनिरूपितसमवायत्वादिना न विशेषणसम्बन्धता अपि तु शुद्ध एव समवायादिर्विशेषणसम्बन्धः स्वविशिष्टनिरूपितसमवायादिस्तु विशेषणतावच्छेदकसम्बन्धः इति मताभिप्रायेणेदं तथाचोक्तस्थले हेतुतावच्छेदकसम्बन्धः शुद्धसमवाय एवेति हेतुतावच्छेदकसम्बन्धमात्रविवक्षया न प्रतीकार इति वाच्यम्। हेतुतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञाने हेतुतावच्छेदकस्य पक्षे परम्परासम्बन्धभाननियमे व्यापकताशरीरघटकाभावाधिकरणेऽपि तदीयतादृशसम्बन्धस्य निवेशितत्वात् तत एव हेतुतः पक्षे साध्यानुमितिनिर्व्वाहे विशिष्टत्वेन सत्त्वादेर्द्रव्यत्वादिव्याप्तिस्वीकारस्य निरर्थकताप्रसङ्गात्। न च दर्शितरीत्या विशिष्टव्यापकताग्रहस्य विशेषणव्यापकतावगाहित्वेऽपि विशिष्टे पक्षधर्म्मताग्रहस्य विशेषणे तदवगाहित्वेऽपि च विशिष्टहेतुकपरामर्शस्य विशेषणे साध्यसामानाधिकरण्यावगाहित्वानियमात् न विशेषणहेतुकानुमितिसामग्र्या विशिष्टहेतुकानुमितिपूर्व्वमावश्यकता इति वाच्यम्। साध्ये विशिष्टहेतोर्व्यापकताग्रहेऽपि विशिष्टहेतौ साध्यविरोधग्रहसत्त्वेऽनुमित्यनुत्पत्त्या विशिष्टहेतुकस्थले विशिष्टाधिकरणत्वघटितहेतु-साध्यसामानाधिकरण्य-

(१) 'एवं व्यतिरेकव्याप्तिरपीत्यादिः 'असमञ्जसमित्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति।

विषयकस्यैव परामर्शस्यानुमितिहेतुता वाच्या, अन्यथा विरोधस्य जनकज्ञानाविरोधितया हेत्वाभासत्वस्य दुर्घटत्वप्रसङ्गात्, साध्यवति विशिष्टहेत्वधिकरणत्वभाने च विशेषणपरम्परासम्बन्धस्यापि तत्र भाननियमेन विशिष्टहेतुकपरामर्शस्य नियमतो विशेषणेऽपि साध्यसामानाधिकरण्यावगाहित्वात्। मैवं, विशिष्टनिरूपितव्यापकताशरीरे विशेषणस्य धर्म्मिपारतन्त्र्येणैव विशिष्टाधिकरणे विशेषणतया प्रवेशः न तु स्वातन्त्र्येण तथाच तद्ग्रहे न विशेषणव्यापकतावगाहित्वनियमो निर्व्वहति विशेषणनिरूपितव्यापकतायास्तद्वन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वपर्य्याप्तप्रतियोगितावच्छेदकताकाभावघटितत्वात्, विशिष्टवन्निष्ठाभावप्रतियोगितावच्छेदकत्वरूपप्रतियोग्युपरागेणाभावभाने च विशिष्टवत्तान्तर्गतविशेष्यवत्त्वपरित्यागेन विशेषणवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वे पर्य्याप्तिभानासम्भवात् अभावप्रतियोगिप्रकारघटकस्योपलक्षणविधया भानानुपगमात्। न च परम्परासम्बन्धेन विशेषणनिष्ठव्याप्त्यवगाहिपरामर्शनिष्ठकारणताया उभयवादिसिद्धत्वात् विशिष्टहेतुकपरामर्शान्तरकारणत्वाकल्पनप्रयुक्तलाघवानुरोधेन विशिष्टस्य व्याप्तिग्रहस्थलेऽधिकरणे स्वातन्त्र्येण विशेषणवत्त्वभानमुपगम्य विशेषणेऽपि व्याप्तिभानं कल्पनीयमिति वाच्यम्। शब्दाधीनविशिष्टवत्त्वगर्भव्याप्तिग्रहस्थले स्वातन्त्र्येण विशेषणवत्त्वगर्भव्याप्तिभानानियमात्, तादृशव्याप्तिबोधकशब्दस्य स्वातन्त्र्येण विशेषणवत्त्वाभासकत्वात्। अथ तत्र तदुत्तरं विशेषणे मानसव्याप्तिग्रह एवानुमित्यर्थं कल्प्यते तत्कारणतायाः क्लृप्तत्वादिति

चेन्न, एवं सति दण्डाद्युपलक्षितधर्म्मिहेतुकानुमितेर्व्विलयप्रसङ्गात्, तद्धेतुकव्याप्तिग्रहस्थले परम्परासम्बन्धेनोपस्थितदण्डादौ व्याप्तिग्रहस्य कल्पनसम्भवात्। स्वातन्त्र्येण सकलपरम्परासम्बन्धघटितसकलविशेषणवत्त्वग्रहस्याप्रामाणिकतया विशेषणहेतुकपरामर्शस्य कारणतायाः क्लृप्तत्वानियमाच्च । ननु वह्निसंयोगिसंयोगाद्यात्मकसाध्यसामानाधिकरण्यस्य व्याप्तित्वे 'एकैव हि सा व्याप्तिरिति मूलग्रन्थविरोधः, महानस-पर्व्वतादिनिष्ठधूमादिगतवह्निसंयोगिसंयोगादेरैक्यासम्भवादित्यत आह, 'सामानाधिकरण्यव्यक्तीनामिति, 'भेदेऽपीति, अधिकरणभेदेन धूमादिभेदेन चेत्यादिः, निरूपकतावच्छेदकं वह्नित्वादिरूपसाध्यतावच्छेदकं धूमत्वादिरूपहेतुतावच्छेदकं, 'ऐक्यात्' साध्य-हेतुभेदेऽप्यभेदात्, तदभेदतात्पर्य्येण एकत्वव्यवहार इत्यर्थः । ननु लक्षणया तद्व्यवहारसमर्थनमसङ्गतं सामान्यप्रत्यासत्त्यभावपक्षे विशिष्टपरामर्शनिर्व्वाहार्थं व्याप्त्यैक्यकथनात्, तन्निर्व्वाहस्य (१) सामानाधिकरण्यस्य व्याप्तित्वे धूमत्वादेरैक्येऽपि पक्षीयधूमादिनिष्ठसामानाधिकरण्यस्य सामान्यप्रत्यासत्तिं विना पूर्व्वं ग्रहासम्भवेन तत्स्मरणासम्भवात् पक्षीयधूमे तदुपनयासम्भवेनायोगादतिप्रसङ्गेन (२) धूमादिव्यापकवह्न्यादिसामानाधिकरण्यमात्रस्य व्याप्तित्वासम्भवात् धूमत्वादिरूपहेतुतावच्छेदकस्य द्विधा व्याप्तिशरीरप्रवेशस्यावश्यकत्वं दर्शयन् व्याप्तेर्भेदमभेदञ्च दर्शयति, 'वस्तुतस्त्वित्यादिना, प्रथमपक्षप्रदर्शनं तत्पक्षे धूमत्वत्वाद्यप्रवे-

---

(१) अयोगादित्युत्तरवर्त्तिना अस्यान्वयः ।

(२) भ्रमं विना रासभादिलिङ्गकवह्न्यनुमित्यापत्त्या चेत्यर्थः ।

शाल्लाघवेन (१) सामान्यप्रत्यासत्तिपक्षे तज्ज्ञानस्यैवानुमितिहेतुत्व-मिति सूचनाय। 'रासभादिसाधारण्यादिति, तत्साधारण्ये च भ्रमं विनापि रासभादिलिङ्गकवह्न्याद्यनुमानापत्तिरिति भावः। अथ व्यापकताप्रविष्टहेतुतावच्छेदकधर्म्मितावच्छेदकसामानाधिकरण्य-प्रकारकज्ञानस्यैवानुमितिहेतुत्वोपगमान्नायमतिप्रसङ्गः धूमत्वादि-प्रकारेण भासमाने रासभादौ साध्यसामानाधिकरण्यग्रहस्य धूमत्वाद्यंशे भ्रमत्वनियमात् वक्ष्यमाणधूमत्वादिमन्निष्ठवह्न्यादि-सामानाधिकरण्यस्य व्याप्तित्वेऽपि तद्धर्म्मितावच्छेदकतापन्नहेतु-तावच्छेदकविशिष्टवत्ताज्ञानस्य हेतुताया अवश्योपेयत्वात् अन्यथा विशिष्टसत्तादिव्यापकद्रव्यत्वादिनिरूपितविशिष्टसत्तादिनिष्ठसामा-नाधिकरण्योपलक्षितवत्ताज्ञानाद्गुणादिरूपपक्षेऽभ्रान्तस्य द्रव्यत्वा-द्यनुमानापत्तेः। साध्यसामानाधिकरण्यविशिष्टवत्त्वस्य पक्षे साध्य-निश्चयं विना दुर्निश्चयतया तदुपलक्षितवत्तानिश्चयस्यापि अनुमिति-हेतुताया उपगन्तव्यत्वात्, केवलसामानाधिकरण्यप्रकारेण पक्ष-धर्म्मताज्ञानस्यानुमितिहेतुत्वे धूमाभाववान् पक्ष इत्यसिद्धिग्रह-दशायामपि साध्ये धूमव्यापकताज्ञानादप्यनुमित्यापत्तेश्च असमान-प्रकारकतया धूमाभाववान् पक्ष इत्यादिबुद्धेर्धूमवृत्तिसामानाधि-करण्यवत्त्वान् पक्ष इत्यादिज्ञानाविरोधित्वादिति चेत्, सत्यं, 'धूम-त्वादिमति सामानाधिकरण्यमित्यस्य धूमत्वादिविशिष्टविशेषणता-पन्नं सामानाधिकरण्यमित्यर्थः, न तु धूमादिवृत्तित्वविशेषितं

(१) कारणतावच्छेदककोटावित्यादिः, धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्व्वत इत्याकारकपरामर्शस्यैवात्र पक्षे कारणत्वादिति भावः।

सामानाधिकरण्यमिति, तथाच एकधर्म्मिविशेषणतापन्नं धूमत्वादिरूपहेतुतावच्छेदक-साध्यसामानाधिकरण्योभयं व्याप्तिरिति पर्य्यवसितं, कारणञ्च धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्व्वत इत्यादिरेव परामर्शः तावतैव च उक्तोभयस्य हेतुविशेषणतया अनुमितिजनकज्ञानविषयत्वरूपव्याप्तित्वनिर्व्वाहः। द्वितीयपक्षे च धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्ववद्धूमवान् पक्ष इति ज्ञानं हेतुर्न तु स्वरूपतो धूमत्वाप्रकारकं तादृशधूमत्ववत्त्वान् पक्ष इत्याकारकं तादृशज्ञानस्य धूमाभाववान् पक्ष इत्याकारकधूमत्वत्वाद्यप्रकारकासिद्धिज्ञानाप्रतिबध्यत्वात्। एतन्मते च हेतुतावच्छेदकवृत्त्यसाधारणधर्म्मावच्छिन्ने साध्यसमानाधिकरणावृत्तित्वमेव विरोधः न तु हेतुतावच्छेदकावच्छिन्ने साध्यासामानाधिकरण्यं, उपदर्शितज्ञानस्य हेतुतावच्छेदकं धर्म्मितावच्छेदकीकृत्य साध्यसामानाधिकरण्यानवगाहितया तथाविधज्ञानाप्रतिबध्यत्वात्। यदि च विरोधस्यानुमितिं प्रति साक्षाद्विरोधितया हेत्वाभासत्वमुपपादयितुं शक्यते तदा समानाधिकरणवृत्तित्वांशे निर्धर्म्मितावच्छेदकं समानाधिकरणवृत्तिमद्धूमवान् पर्व्वत इत्येतादृशमपि ज्ञानं हेतुरुपेयते अन्यथा धूमत्वत्वादिविषयताया: कारणतावच्छेदककुक्षिप्रवेशे गौरवात्, सामानाधिकरण्यप्रकारकत्वापेक्षया समानाधिकरणवृत्तिप्रकारकत्वस्य गुरुत्वेऽपि सामान्यस्याप्रत्यासत्तित्वे विशिष्टपरामर्शनिर्व्वाहानुरोधेन तेन रूपेण हेतुताया अगत्योपगमात्। 'आद्या' हेतुतावच्छेदकधर्म्मसहितसाध्यसामानाधिकरण्यरूपा, 'भिन्नेति, प्रतिधूमादिकमित्यादिः। 'द्वितीया'

साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपा, 'अभिन्ना' सर्व्वधूम-साधारणी, अनुगतरूपावच्छिन्ननानाव्यक्तिदण्डादिविशिष्टहेतुक-स्थलेऽपि परम्परासम्बन्धदण्डत्वाद्यखण्डधर्म्म एव हेतुतावच्छेदक-उपगन्तव्य इति भावः। यद्यपि साध्यसामानाधिकरण्यावच्छेदक-रूपवक्ष्यमाणव्याप्त्यभिप्रायेणापि 'एकैव हीत्यादिग्रन्थः सङ्गच्छते, तथापि स्वयं तत्र स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशस्य खण्डनीय-तया स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्व-रूपपारिभाषिकावच्छेदकत्वस्यैव च विवक्षणीयतया एतदपेक्षया तादृशी व्याप्तिर्गुरुशरीरेति कथञ्चिदीदृशव्याप्तेरैक्योपपत्तिसम्भवेन तज्ज्ञानमनुमितिहेतुरित्येतादृशव्याप्तेरैक्यमुपपादितम्।

मिश्रादिमतमालम्ब्य प्रतियोग्यसमानाधिकरणपदप्रयोजन-माह, 'अयं कपिसंयोगीति। अथैतद्वृक्षत्वादेरव्याप्यवृत्तिकपि-संयोगादिव्याप्यतोपगमे कपिसंयोगाद्यनवच्छेदकमूलादेः पक्षता-वच्छेदकत्वे तदवच्छेदेनापि एतद्वृक्षादौ कपिसंयोगादिसिद्धि-प्रसङ्गः। न चेष्टापत्तिः, सल्लिङ्गकपरामर्शस्य भ्रमानुमित्य-जनकत्वनियमात्। न च तदवच्छेदेन हेतुमत्ताज्ञानस्य तद-वच्छेदेन साध्यानुमितिहेतुत्वात् एतद्वृक्षत्वादिरूपव्याप्यवृत्तिहेतोश्च किञ्चिदवच्छेदेनावृत्तेर्नातिप्रसङ्ग इति वाच्यम्। यदि स्वरूपसम्ब-न्धरूपावच्छेदकत्वावगाहिन्यामनुमितावपि तादृशहेतुमत्ताज्ञान-त्वेन हेतुत्वमुपेयते तदापि तुल्ययुक्त्या एतद्वृक्षत्वादेरिव मूलाद्यव-च्छिन्नसंयोगविशेषस्यापि कपिसंयोगादिव्याप्यतया तेन हेतुना मूलाद्यवच्छेदेन कपिसंयोगाद्यनुमितेर्निष्प्रत्यूहत्वादिति चेदत्रो-

पाध्यायाः, साध्यस्य पक्षतावच्छेदकसामानाधिकरण्यं विना व्याप्यस्य पक्षधर्म्मत्वमनुपपन्नमिति पक्षधर्म्मताबलात् पक्षतावच्छेदकसामानाधिकरण्यमेव साध्ये सिध्यति न तु तदवच्छेद्यत्वमपि प्रमाणाभावादिति तादृशानुमितेरप्रामाणिकतया तत्र परामर्श-हेतुताकल्पनमेव नास्ति इति न तदापत्तिरिति समादधिरे ।

मिश्रादयस्तु बाधानवतारे मूलाद्यवच्छेदेन कपिसंयोगादि-सिद्धिरिष्टैव इति वदन्ति । एतत्तत्त्वं ग्रन्थकृता हेत्वाभासे वक्ष्यते ।

---

अनुमानदीधितिः ।

**यत्तु इदं संयोगि द्रव्यत्वादित्यत्राव्याप्तिवारणाय तत् संयोगस्य शाखाद्यवच्छेदेन वृत्तेर्वृक्षत्वावच्छेदेन तत्सामान्याभाववृत्तावविरोधात् तत्र चातीन्द्रियस्य संयोगस्य सत्त्वात्परितः प्रतियोग्युपलब्धेर्दोषाद्वा वृक्षे न संयोग इत्यादि नाध्यक्षमिति तन्न, द्रव्ये संयोगसामा-न्याभावे मानाभावात् । न च यो यदीययावद्विशेषा-भाववान् स तत्सामान्याभाववानिति व्याप्तेर्यावत्सं-योगाभावा एव मानम् ।**

---

गादाधरीविवृतिः ।

प्राचीनसिद्धव्यावृत्तिस्थलं दूषयितुमुपन्यस्यति, 'यत्त्विति, 'तत्' असमानाधिकरणान्तम् । ननु द्रव्ये संयोगत्वाद्यवच्छिन्ना-

भावसत्त्व एवानवच्छेदकगर्भीक्तलक्षणाव्याप्तिः प्रसज्यते तदेव न, यतः प्रतियोग्यनवच्छेदकावच्छेदेनैवाभावो वर्त्तते न तु तदवच्छेदकावच्छेदेन विरोधात् वृक्षादौ च संयोगानवच्छेदकी-भूतमूलसामान्याभावावच्छेदक एव दुर्लभ इत्यत आह, 'संयोगस्येति, 'वृक्षत्वाद्यवच्छेदेनेति, वृक्षत्वादेः प्रत्येकं सकलसंयोगातिप्रसक्ततया तस्य संयोगावच्छेदकत्वासम्भवात्। आकाशादि-संयोगस्यापि यावद्वृक्षवृत्तेरेकस्याभावात् वृक्षत्वे तत्संयोगानति-प्रसक्तत्वासम्भवादिति भावः। ननु वृक्षत्वाद्यवच्छेदेन वृक्षादौ संयोगसामान्याभावसत्त्वे वृक्षे संयोगो नास्तीत्यादिप्रत्यक्षापत्ति-रित्यत आह, 'तत्रेति, 'अतीन्द्रियस्येति, 'सत्त्वात्' अनु-योगितासम्बन्धेन सत्त्वात्, तथाच अतीन्द्रियप्रतियोगिकतया संयोगसामान्याभावस्यातीन्द्रियत्वमिति भावः। ननु संयोग-सामान्याभावस्य वृक्षे सत्त्वे महदुद्भूतरूपवन्मात्रसमवेतसंयोग-सामान्याभावोऽप्यावश्यकः तद्व्यापकधर्म्मावच्छिन्नाभावस्य तद्धर्म्मा-वच्छिन्नाभावनियतत्वात् इति योग्यमात्रप्रतियोगिकोऽयमभावः कथं न वृक्षे साक्षात्क्रियते इत्यत आह, 'परित इति, प्रतियोग्युप-लब्धेर्विभिन्नावच्छेदेनाभावग्रहं प्रति विरोधिज्ञानमुद्रया प्रतिबन्ध-कत्वं न सम्भवतीति तस्या दोषत्वकथनं दोषविधया प्रतिबन्धक-त्वलाभाय। अथ यत्र संयोगाविषयकमेव उपनीतभानाद्यात्मकं वृक्षादिरूपाधिकरणज्ञानं तदग्रिमक्षणे वृक्षादौ तादृशसंयोग-सामान्याभावग्रहप्रसङ्गः तादृशदोषस्य प्रागसत्त्वात्, एवं वृक्षे न संयोग इति लौकिकप्रत्यक्षस्यालीकतया तत्र तादृशदोषस्य प्रति-

बन्धकत्वकल्पनमेवाशक्यमिति चेन्न, वृक्षादौ संयोगसामान्याभाव-लौकिकप्रत्यक्षस्याप्रसिद्धत्वेऽपि गुणादौ तत्प्रसिद्ध्या अधिकरणीय-विषयतासम्बन्धेन संयोगाभावलौकिकप्रत्यक्षत्वावच्छिन्नं प्रति स्वविषयसंयोगवत्त्वसम्बन्धेन ज्ञानत्वेनैव प्रतिबन्धकत्वकल्पनात्, सर्व्वत्र द्रव्येऽन्तत ईश्वरीयप्रत्यक्षस्यैव सर्व्वदा तादृशसम्बन्धेन सत्त्वे-नातिप्रसङ्गविरहात्। इदमापाततः द्रव्यरूपाधिकरणविषयक-संयोगाभावविषयकप्रत्यक्षस्य कदाचिदप्यनुदयेन तादृशप्रत्यक्ष-सामग्र्या एवाकल्पनेनापादकाभावादेवातिप्रसङ्गवारणसम्भवेन तादृशप्रतिबन्धकताकल्पनस्याप्ययुक्तत्वात्। कथञ्चिदापत्तिसम्भवेऽपि तादात्म्यसम्बन्धेन द्रव्यत्वेनैव तादृशसम्बन्धेन (१) संयोगाभावलौ-किकं प्रति प्रतिबन्धकत्वौचित्यात्। 'मानाभावादिति लौकिकप्रत्य-क्षस्य योग्यानुपलब्धिविरहेणासम्भवात्, उपनीतभानस्य च संयोगा-भावो वृक्षावृत्तिरित्याकारकस्य विपरीतविषयकस्याप्युपनयवशेन सम्भवात्, विनिगमनाविरहेण एकतमस्य प्रामाण्यासिद्धिः, शब्दस्य चाप्तोक्तत्वासिद्ध्या तदव्यवस्थापकत्वात् अनुमानस्य च लिङ्गा-भावेनासम्भवादिति भावः। ननु वृक्षादौ यावत्संयोगविशेषा-भावानामुभयवादिसिद्धतया तत एव हेतोस्तत्राप्रत्यक्षस्यापि तत्सामान्याभावस्य सिद्धिर्निष्प्रत्यूहैवेति शङ्कां निरस्यति, 'न चेत्या-दिना, यः संयोगीययावद्विशेषाभाववान् स संयोगसामान्याभाववान् इति व्याप्तेरग्रे व्यर्थविशेषणत्वाप्रयोजकत्वादिदोषेण निराकरणीय-तया प्रथमतः सामान्यमुखीं व्याप्तिमनुमानोपष्टम्भकतया दर्शयति,

(१) अधिकरणीयविषयतासम्बन्धेनेत्यर्थः।

'यो यदीयेति यद्धर्म्माश्रयस्य यावद्विशेषाभाववान् यः स तद्धर्म्माव-च्छिन्नाभाववानित्यर्थः, संयोगत्वाश्रयस्य विशेषधर्म्मावच्छिन्ना-भावकूटं वृक्षादौ वर्त्तते इति तन्नोक्तव्याप्तेः संयोगत्वावच्छिन्नाभाव-सिद्धिः, प्रतियोगिनो यत्त्व-तत्त्वरूपेण निवेशे संयोगवृत्तिकपिसंयोग-त्वादिरूपसामान्यधर्म्मावच्छिन्नाभावमादाय सिद्धसाधनं स्यादिति धर्म्मस्य यत्त्व-तत्त्वेनोपादानं, संयोगादिसम्बन्धावच्छिन्नसंयोगत्वाद्य-वच्छिन्नाभावमादाय सिद्धसाधनवारणाय समवायसम्बन्धावच्छिन्ना-भाव एव साधनीयः, अन्यसम्बन्धावच्छिन्नविशेषाभावकूटस्य तत्-सम्बन्धावच्छिन्नाभावव्यभिचारित्वे समवायसम्बन्धावच्छिन्नविशेषा-भावकूटस्यापि तत्सम्बन्धावच्छिन्नसामान्याभावव्यभिचारित्वं तुल्य-न्यायेन सम्भाव्येतेति प्रतियोगितावच्छेदकसम्बन्धानामपि यत्त्व-तत्त्वेन व्याप्तावन्तर्भावः। अत एव समवायसम्बन्धावच्छिन्नयाव-द्विशेषाभावहेतुना तत्सम्बन्धावच्छिन्नसंयोगसामान्याभावसिद्धिः, तद्धर्म्माश्रयविशेषाभावश्च उभयावृत्तितद्धर्म्मसमानाधिकरणधर्म्माव-च्छिन्नाभावः(१), अतः संयोगत्वाद्यपेक्षया वृक्षवृत्तिसंयोगत्वादेर्विशे-षधर्म्मत्वेऽपि संयोगसामान्याभावं वृक्षादावनभ्युपगच्छताम् अवयव-विशेषरूपावच्छेदकदुर्भिक्षेण वृक्षवृत्तिसंयोगत्वाद्यवच्छिन्नाभावस्य वृक्षादावनभ्युपगमेऽपि च न सन्दिग्धासिद्धिः, वृक्षवृत्तिसंयोगत्वा-दीनामुभयवृत्तित्वेन तदवच्छिन्नाभावव्यावृत्तिः। न च हेतावुभया-

(१) उभयावृत्तितद्धर्म्मसामानाधिकरण्यञ्च उपलक्षणविधया निविष्टं न तु विशेषणविधया अनुगततत्तद्रूपेण तद्धर्म्मावच्छिन्नाभावस्यैक्येनावयवविशेषरूपाव-च्छेदकविरहेण वृक्षादावनभ्युपगमादिति भावः।

वृत्तित्वविशेषणस्यासिद्धिवारकत्वेऽपि व्यभिचारावारकतया वैयर्थ्यं यावत्त्वविशेषणस्य धीविशेषविषयत्वरूपस्य परिचायकमेव तादृश-धर्म्मावच्छिन्नप्रतियोगिताकत्वं न तु हेतुप्रविष्टं इति न सत् तथा सति यत्तत्पदार्थस्य हेतु-साध्यशरीराप्रवेशेन सामान्यमुखव्याप्तित्वा-नुपपत्तिरिति वाच्यम्। यावत्पदस्य व्यापकतार्थकतया तत्तद्धर्म्म-समानाधिकरणोभयावृत्तिधर्म्मावच्छिन्नाभावत्वनिरूपिताया आधे-यत्वसम्बन्धावच्छिन्नव्यापकताया एव हेतुतया विशेषधर्म्मव्यापक-त्वाघटकाभावान्तरस्यैव सामान्यधर्म्मव्यापकताघटकतया वैय-र्थ्यानवकाशात्। न च तादृशाभावत्वव्यापकत्वं तादृशाभाव-निष्ठभेदप्रतियोगितायामाधेयतासम्बन्धेनानवच्छेदकत्वम् एवञ्च संयोगविशेषाभावानां सर्व्वेषामेव सर्व्वाधिकरणवृत्तितया तन्नि-ष्ठभेदप्रतियोगितायामाधेयतासम्बन्धेनावच्छेदकमधिकरणमप्रसिद्धं इति तदनवच्छेदकत्वरूपहेत्वप्रसिद्धिरिति वाच्यम्। आधेयत्व-सम्बन्धावच्छिन्नावच्छेदकतासम्बन्धेन प्रतियोगिताया अभावस्यैव प्रतियोगितानवच्छेदकत्वस्थले निवेशनीयत्वात्, उक्तस्थले च व्यधिकरणतादृशसम्बन्धावच्छिन्नाभावप्रसिद्धिसौलभ्यात्। यद्धर्म्म-समानाधिकरणेत्यत्र प्रतियोगितावच्छेदकत्वेन धर्म्मो विशेषणीयः, तेन कम्बुग्रीवादिमत्त्वादिव्याप्यधर्म्मावच्छिन्नप्रतियोगिताकयावद-भाववतस्तद्धर्म्मावच्छिन्नाभावाप्रसिद्ध्या तादृशाभाववत्त्वासम्भवेऽपि न क्षतिः। न च भेदप्रतियोगितावच्छेदकवाच्यत्व-घटान्यतर-त्वादिव्याप्यधर्म्मावच्छिन्नसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताक-यावदभाववतस्तद्रूपावच्छिन्नसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिता-

काभाववत्त्वासम्भवाद्व्यभिचारः वाच्यत्वादेः संयोगादिना अवृत्ति-त्वात्तेन सम्बन्धेन घटादेरेव तादृशाभावविरोधितया घटत्वादेरेव तत्प्रतियोगितावच्छेदकत्वसम्भवेन गुरोरन्यतरत्वस्य तत्प्रतियोगिता-नवच्छेदकत्वादिति वाच्यम्। वाच्यत्वादिसाधारणस्यान्यतरनिष्ठ-प्रतियोगित्वस्य न्यूनवृत्तिघटत्वादिना अवच्छेदासम्भवादगत्या गुरुणाप्यन्यतरत्वादिनैव तदवच्छेदात्। वस्तुतो यत्सम्बन्धावच्छिन्न-प्रतियोगिकाभावस्य साध्य-हेतुघटकता तत्सम्बन्धावच्छिन्नप्रति-योगितावच्छेदकत्वेनैव सामान्यधर्म्मस्य विशेषणीयत्वात् उक्त-सामान्यधर्म्मस्य भेदप्रतियोगितावच्छेदकत्वेऽपि संयोगादिसम्बन्धा-वच्छिन्नप्रतियोगितानवच्छेदकतया संयोगसम्बन्धावच्छिन्नतदव-च्छिन्नाभावाप्रसिद्धावपि न व्यभिचारः। अतएव भेदप्रतियोगि-तावच्छेदकजातित्वादिघटकनित्यत्वादेः समवायसम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकगर्भे निवेशस्य गौरवेणासम्भवेऽपि न जाति-त्वादिसामान्यधर्म्मघटितहेतोर्व्यभिचारितया सामान्यव्याप्तिभङ्गः। वस्तुतस्तु यद्धर्म्मे प्रतियोगितावच्छेदकत्वविशेषणमनुपादेयमेव कम्बु-ग्रीवादिमत्त्वसमानाधिकरणोभयावृत्तिधर्म्मावच्छिन्नाभावनिष्ठभेद-प्रतियोगितात्वस्य घटत्वादिघटिततादृशधर्म्मापेक्षया गुरुतया तदव-च्छिन्नाभावरूपव्यापकत्वाप्रसिद्धेर्यद्धर्म्मेत्यनेन कम्बुग्रीवादिमत्त्वा-दिरूपधर्म्मोपादानस्य गुरुधर्म्मस्याभावप्रतियोगितानवच्छेदकत्व-पक्षेऽसम्भवेन व्यभिचारानवकाशात्। अभावे यावत्त्वादिविशेषण-प्रवेशात् यत्किञ्चिज्जात्यादिव्यक्त्यभाववति जात्यादिसामान्या-भावासत्त्वेऽपि न सामान्यव्याप्तिभङ्गः। यद्यपि यत्तदर्थघटित-

साध्य-हेतूनामननुगमेन नैका व्याप्तिरिति संयोगसामान्याभाव-तदीयविशेषाभावकूटयोर्व्याप्तौ यावत्त्वादिविशेषणवैयर्थ्यमेव तथाप्येतद्दोषस्य स्वयमग्रे वाच्यतया यथाकथञ्चिच्छङ्कासङ्गतिः। अथ वृक्षादौ यावत्संयोगाभाववत्त्वमुभयवाद्यसिद्धं तत्र विभुसंयोगाभावावच्छेदकस्यावयवविशेषस्य दिग्विशेषस्य वा दुर्वचत्वात् ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वे कालविशेषावच्छेदेनापि तत्र तदभावासम्भवात् तयोस्तदविरोधितामते द्रव्ये संयोगादिसामान्याभावस्याप्युत्पत्तिकालावच्छेदेन वृत्तावविरोधात्। न च मूलाग्राद्यवच्छिन्नविभुसंयोगव्यक्तीनां भेदादग्र-मूलाद्यवच्छेदेनाभावः सुलभ इति वाच्यम्। तासां भेदस्याप्रामाणिकत्वात्। न च नानावयवावच्छिन्नसंयोगव्यक्तीनामभेदे तत्संयोगव्यक्तौ तत्तदवच्छेदकव्यक्तीनां तादात्म्यसम्बन्धेन कारणतायां व्यभिचार इत्यवच्छेदकभेदेन संयोगभेद आवश्यकः आवश्यकस्वावच्छेदकव्यक्तीनां विशिष्य स्वावच्छिन्नसंयोगव्यक्तिषु हेतुताभ्युपगमः, अन्यथा मूलादिमात्रावच्छिन्नमूर्त्तान्तरसंयोगानां अग्राद्यवच्छेदेन तद्वृक्षादिवृत्तिविभुसंयोगानाञ्च वृक्षान्तरावयवावच्छेदेनानुत्पत्तिप्रयोजकस्य दुर्लभतापत्तेरिति वाच्यम् (१)। व्याप्यवृत्तेरवच्छेदकानभ्युपगमेन

---

(१) इति वाच्यम् इति सन्दर्भानन्तरं 'न च मूलाद्यवच्छिन्नेति सन्दर्भात् पूर्व्वं 'व्याप्यवृत्तेरवच्छेदकानभ्युपगमेन विभुसंयोगस्य व्याप्यवृत्तितया मूलाद्यवच्छिन्नत्वविरहेण तत्र मूलादीनां हेतुताविरहात् व्याप्यवृत्तेरवच्छेदकोपगमे तत्तदवच्छेदकस्वरूपतत्तन्निष्ठावच्छेदकताव्यक्तीनामेव तत्तदवच्छेदकजन्यतावच्छेदकसम्बन्धतया मूलाग्राद्यवच्छिन्नविभुसंयोगादीनामभेदेऽपि व्यभिचारानवकाशात् अन्यथा मूलाद्यवच्छिन्नसंयोगस्य दिग्विशेषैरप्यवच्छिन्नतया तत्राप्यवच्छेदकतासम्बन्धेन

वृक्षादौ विभुसंयोगस्य व्याप्यवृत्तितया तदवच्छेदकतानियाम-
कावच्छेदककारणताकल्पनानवकाशात्, मूलाद्यवच्छिन्नसंयोगस्य
दिग्विशेषैरप्यवच्छिन्नतया तत्राप्यवच्छेदकतासम्बन्धेन तत्तत्संयोग-
व्यक्तीनामुत्पत्त्या मूलादेस्तत्र व्यभिचारस्य वारणाय तत्तद-
वच्छेदकस्वरूपतत्तदवच्छेदकताव्यक्तीनामेव तत्तदवच्छेदकजन्य-
तावच्छेदकसम्बन्धताया उपगन्तव्यतया तत एव नानावच्छेदकाव-
च्छिन्नैकसंयोगस्वीकारेऽप्यव्यभिचारनिर्व्वाहाच्च। न च मूलाद्यव-
च्छिन्नसंयोगानामग्राद्यवच्छिन्नसंयोगादेरिव प्राच्याद्यवच्छिन्नसंयो-
गादेरपि भेदः स्वीकर्त्तुं शक्यते, मूले प्राच्यां शरीर-वृक्षसंयोग-
इत्यादिप्रतीत्या एकसंयोगव्यक्ताविव मूल-प्राच्याद्यवच्छिन्नत्वाव-
गाहनात्। न चाग्र-मूलयोः शरीरसंयोग इत्यस्या इव तादृश्या-
अपि प्रतीतेः संयोगद्वयावगाहित्वमस्मदनुमतमिति वाच्यम्।
यत्र मूल-प्रतीचीमात्रावच्छिन्न एकशरीरसंयोगः अग्र-प्राची-
मात्रावच्छिन्नश्च शरीरान्तरसंयोगस्तत्र मूले प्राच्यां शरीर-
संयोग इति प्रत्ययापत्तेः, शरीर-तरुसंयोगव्यक्तीनामेकैकासामेव
शरीरावयवेन वृक्षावयवेन चावच्छिन्नतया व्यभिचारस्यापि दर्शित-
सम्बन्धसङ्कोचमन्तरेण दुर्व्वारत्वाच्च। तत्तदवच्छेदकावच्छिन्ननाना-
संयोगसाधारणं तत्तदवच्छेदकावच्छिन्नत्वमेव तत्तदवच्छेदकजन्य-
तावच्छेदकं न तु संयोगनिष्ठतत्तद्व्यक्तित्वं अनन्तकार्य्यकारणभाव-
प्रसङ्गात्। तथाच एकावच्छेदकावच्छिन्नसंयोगस्यापरावच्छेदका-

---

तत्संयोगव्यक्तीनामुत्पत्त्या मूलादेस्तत्र व्यभिचारस्य दुर्व्वारत्वात्, इति पाठः कुत्र-
चिदादर्शपुस्तके वर्त्तते।

वच्छिन्नत्वेऽपि तदवच्छिन्नत्वविशिष्टस्य नान्यत्रोत्पत्तिरिति न व्यभिचारशङ्का इति वदन्ति।

यत्तु संयोगमात्रस्याव्याप्यवृत्तितासिद्धान्तानुरोधेन मूलाग्रावच्छिन्नतरु-विभुसंयोगादीनां भेदस्वीकार आवश्यक इति, तदपि न सम्यक्, तादृशसंयोगव्यक्तीनां गगनादौ दिग्देशविशेषरूपावच्छेदकनियमेनैव तादृशसिद्धान्तसङ्गतेः।

अत्र वदन्ति द्रव्यमात्र एव संयोगसामान्याभावस्याप्रामाणिकतायाः 'तन्नेत्यादिनोक्तेः 'न चेत्यादिना गगनादावेव संयोगसामान्याभावसाधकमनुमानमाशङ्कितं, विभुद्वयसंयोगानभ्युपगमेन तत्र यावत्संयोगव्यक्तीनामेव प्रतिनियतदिग्देशावच्छिन्नतया तत्तद्रक्तित्वेन तत्र तदभावसत्त्वेऽविवाद एव इति नासिद्ध्यवकाशः, विभुमात्रे संयोगसामान्याभावसिद्धावपि संयोगि द्रव्यत्वादित्यत्र व्यावृत्तिसङ्गतेर्वृक्षादावेतद्व्याप्तिबलात् संयोगसामान्याभावासिद्धावपि न क्षतिः। प्रतियोग्यनवच्छेदकस्य तदवच्छेदकत्वनियमसत्त्वे च वृक्षत्वाद्यवच्छेदेन वृक्षादावपि संयोगसामान्याभावसिद्धिसम्भवेन तत्रापि तदभावं साधयतां तादृशनियमवादिनामाशङ्कां 'न च प्रतियोग्यनवच्छेदकवृक्षत्वादेरभावावच्छेदकत्वमित्यादिना निराकरिष्यते पूर्व्वमपि वृक्षत्वाद्यवच्छेदेन संयोगसामान्याभाववृत्तेरविरोधमात्रेण प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वनियमेन वा सेद्धुमर्हतीत्याशयेनैव वृक्षादौ संयोग-तत्सामान्याभावयोर्वृत्तावच्छेदकभेद उपपादितः वृक्षे न संयोग इति प्रत्यक्षञ्च वारितं न तु यो यदीयेत्यादिनियमस्य तत्सा-

धकत्वाशयेनेति न सन्दर्भविरोधः। यत्किञ्चिदवयवनाशात्महा-वृक्षनाशानन्तरं खण्डवृक्षोत्पत्तिक्षणे पूर्व्वोत्पन्नक्रियातो यत्नावस्थि-तयावत्तदवयवैर्गगनादिसंयोगानां (१) विनाशः द्वितीयक्षणे च खण्डवृक्षस्यापरावयवनाशस्तृतीयक्षणे च तन्नाशस्तत्र तद्वृक्षे विभु-संयोगानुत्पत्त्या यावद्विशेषाभावसौलभ्यम्। न चैवं ताट्टशवृक्षे मूर्त्ता-न्तरेणापि संयोगस्तदवयवसंयोगैस्तत्कर्म्मणा वा न सम्भवति तद-वयव-गगनादिसंयोगनाशककर्म्मणा मूर्त्तान्तर-तदवयवसंयोगाना-मपि तदुत्पत्तिकाले विनाशात्, अवयवावयविनोः संयोगानभ्युप-गमेन अवयवेषु आरम्भकसंयोगसत्त्वेन तन्निष्ठसंयोगजननासम्भवात्, उत्पत्तिकाले च द्रव्ये गुणवत्कर्म्मसत्त्वानुपपत्तेरिति संयोगसाध्यक-द्रव्यत्वस्य सद्धेतुतैव न निर्व्वहतीति वाच्यम्। ताट्टशखण्डद्रव्ये तदवयवसंयोगजन्यस्य तत्कर्म्मजन्यस्य च संयोगस्यासम्भवेऽपि सर्व्व-त्रैव सदागतिशीलपवनादिपरमाणूनां कर्म्मभिस्तत्संयोगानामुत्पत्तौ बाधकविरहेण द्रव्यस्य संयुक्तत्वनियमादित्यपि केचित्। 'यावत्-संयोगाभावा एव मानमिति ज्ञायमानलिङ्गस्यानुमितिकरणत्व-मताभिप्रायेण, 'यत्तदर्थयोरिति साध्य-हेतुघटकयत्तच्छब्दार्थयोः संयोगत्व-घटत्वाद्योरित्यर्थः, 'अननुगमादिति एकरूपेण निवेशा-सम्भवादित्यर्थः, एकव्याप्तेर्निर्व्वाहयितुमशक्यत्वादिति शेषः, तथाच घटत्वाद्यवच्छिन्नाभाव घटादिविशेषाभावकूटयोर्व्याप्तिः संयोगसामा-न्याभावसिद्धावनुपयोगित्वात् यावत्संयोगविशेषाभावे संयोगसामा-

---

(१) तदवयवावच्छिन्नगगनादिसंयोगानामित्यर्थः, यावत्तदवयवे गगनादि-संयोगानां इति पा०।

न्याभावीयविशेषव्याप्तेश्चाग्रे निराकर्त्तव्यत्वान्नोक्तानुमानसम्भव इति भावः । ननु प्रकृतहेतौ प्रकृतसाध्यव्याप्तेरग्रहेऽपि यथा यो यत्र प्रवर्त्तते स कार्य्यतया तज्ज्ञानातीत्याकारात् स्तनपानादिप्रवृत्ति-तद्विषयककार्य्यताज्ञानयोर्व्याप्तिग्रहाद्गवानयनादिप्रवृत्तिरूपलिङ्गेन गवानयनादिकार्य्यताज्ञानसिद्धिः तथा प्रकृते संयोगीययावद्विशेषा-भावे तत्सामान्याभावस्य व्यर्थविशेषणत्वादिना व्याप्त्यग्रहेऽपि घटादिविशेषाभावकूटे तत्सामान्याभावव्याप्तिग्रहादेव संयोगीय-यावद्विशेषाभावे पक्षधर्म्मताज्ञानाद्गगनादौ (१) संयोगसामान्या-भावसिद्धिर्दुर्व्वारैव व्यतिरेकिहेतुकानुमिताविव सामान्यव्याप्त्यधीन-विशेषसिद्धौ व्याप्तिविशिष्टपक्षधर्म्मताज्ञानस्य हेतुत्वानुपगमात् (२) । न च विशेषभावान्तरे सामान्याभावान्तरव्याप्तिग्रहात् संयोग-विशेषाभावेन तत्सामान्याभावसिद्ध्युपगमे यावत्त्वाद्यविशेषितकपि-संयोगादिप्रतियोगिकाभावे(३) कपिसंयोगादिसामान्याभावव्याप्ति-ग्रहादेव संयोगप्रतियोगिकाभावेन तत्सामान्याभावसिद्धिसम्भ-वात् यावत्त्वादिविशेषणमनर्थकं प्रकृतहेतुतुल्यनिखिलहेत्वन्तरेषु तत्प्रविष्टतत्तत्पदार्थघटितप्रकृतसाध्यतुल्यसाध्यव्याप्तिग्रहापेक्षायाः स्वीकर्त्तुमशक्यत्वात् तादृशसकलहेतु-साध्यानां युगसहस्रेणापि

---

(१) वृक्षादाविति पा० ।

(२) तथाच यथा व्यतिरेकिस्थले हेतौ व्याप्तिग्रहकालीनस्य पक्षे हेतुमत्ता-ज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन हेतुत्वं तथा प्रकृतपक्षे प्रकृतहेतुमत्ताज्ञानकालीनस्य विशेषाभावान्तरे सामान्याभावान्तरव्याप्तिग्रहस्य ज्ञानविशिष्टज्ञानत्वेनैव हेतुत्वं बोध्यमिति भावः ।

(३) कपिसंयोगप्रतियोगिकत्वं अभावे न निवेशनीयं व्यर्थविशेषणत्वात् ।

असर्व्वज्ञैर्ज्ञातुमशक्यत्वात् इति वाच्यम्। उपस्थितयावत्तादृश-हेतुषु तादृशतत्तत्साध्यव्याप्तिग्रहापेक्षया सामञ्जस्यात् तावन्मात्रा-पेक्षायाश्च तत्तत्साधनधर्म्मिकतत्तत्साध्यव्याप्तिग्रहाभावविशिष्टतत्त-त्साध्यसाधनोपस्थितेरनुमितिप्रतिबन्धकतया सूपपादत्वात्। एवं सति (१) यावत्त्वविशेषणानुपादाने जात्यादिविशेषघटत्वाद्यभावे जात्यादिसामान्याभावव्यभिचारोपस्थितिदशायां संयोगादिसामा-न्याभावसाधनासम्भवेन तादृशविशेषणसार्थक्यात् (२), गगनाद्य-वृत्ति-स्वसमानाधिकरणनिरुक्तधर्म्मावच्छिन्न(३)प्रतियोगिताकय-त्किञ्चिदभावकं यद्यत् तदन्यो गगनादिवृत्त्यभावप्रतियोगितावच्छे-दकोभयावृत्तिधर्म्मसमानाधिकरणान्यो वा यो धर्म्मः स तन्निष्ठा-भावप्रतियोगितावच्छेदक इत्येतादृश्या उक्तसामान्यव्याप्तिस्थला-भिषिक्तव्याप्त्यैव वा संयोगत्वादौ गगनादिनिष्ठाभावप्रतियोगिताव-च्छेदकत्वं साधनीयं तत्र च नाननुगमदोष इत्याशङ्का उक्तानुमाने-उपाधिमाह, 'एकावच्छेदेनेति अनवच्छिन्नतदीययावद्विशेषा-भावाधिकरणत्वस्योपाधित्वादित्यर्थः, यथाश्रुते गुणादिनिष्ठायाः यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तितया अवच्छेदकत्वविर-हेण उपाधेः साध्यव्यापकत्वानिर्वाहात्। न च गुणादिनिष्ठाया-यावत्संयोगाभावाधिकरणताया व्याप्यवृत्तित्वेऽपि गुणत्वाद्यवच्छि-

(१) साध्यव्याप्तिग्रहस्यापेक्षितत्वे सतीत्यर्थः।

(२) तथाच यत्किञ्चिज्जात्यभाववति जातिसामान्याभावासत्त्वाद्व्यभिचार-वारणाय यावत्पदम्।

(३) उभयावृत्तिधर्म्मावच्छिन्नेत्यर्थः।

न्नत्वमावश्यकम् अन्यथा अधिकरणतावच्छेदकप्रकारकज्ञानासम्भवेन (१) गुणादौ तदभावग्रहासम्भवादिति वाच्यम् । द्रव्यनिष्ठयावत्संयोगाभावाधिकरणताया अपि द्रव्यत्वादिरूपैकावच्छेदकावच्छिन्नतया उपाधेः साधनाव्यापकतानिर्वाहाय सप्तमीनिर्देश्यं यदव्याप्यवृत्तितानिर्वाहकं विलक्षणमवच्छेद्यत्वं तस्यैव विवक्षणीयतया गुणनिष्ठसंयोगाभावाद्यधिकरणतायां तादृशावच्छेद्यत्वविरहेण साध्यव्यापकताया यथाश्रुते दुरुपपादत्वात् । अथैवं कपिसंयोगादिसामान्यस्य मूलाद्यवच्छेदेनाभाववति कपिसंयोगादिमद्वृक्षादौ अनवच्छिन्नतदीययावद्विशेषाभाववत्त्वविरहेण साध्योपाध्योर्न सामान्यव्याप्तिनिर्वाहः (२) । अत्र केचित् अवच्छिन्नत्वेकावच्छेदकानवच्छिन्नत्वोभयाभाववद्यावद्विशेषाभाववत्त्वम् दृष्टोपाधित्वेनाभिमतं गुणे यावद्विशेषाभाववत्त्वम् अवच्छिन्नत्वाभावेनोक्तोभयाभाववत्, कपिसंयोगवति वृक्षे कपिसंयोगीययावद्विशेषाभाववत्त्वं मूलाद्येकावच्छेदकावच्छिन्नमिति तदनवच्छिन्नत्वाभावादुभयाभाववदिति(३) नोपाधि-साध्ययोः सामान्यव्याप्तिभङ्गः ।

---

(१) अभावलौकिकप्रत्यक्षे अधिकरणतावच्छेदकप्रकारकज्ञानस्य हेतुत्वादिति भावः ।

(२) तथा च प्रकृतसाध्यतुल्यसाध्ये प्रकृतोपाधितुल्यव्याप्तिरत्वोपाधित्वनिर्वाहिका यो यद्धर्मावच्छिन्नप्रतियोगिताकाभाववान् स निरवच्छिन्नतद्धर्मसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकयावदभावाधिकरणतावान् इत्याकारा सैव साध्योपाध्योः सामान्यव्याप्तिरिति भावः ।

(३) कपिसंयोगवति वृक्षे संयोगीययावद्विशेषाभाववत्त्वं मूलाद्येकावच्छेदकानवच्छिन्नत्वाभावादुभयाभाववदितीति पा० ।

अथ वृक्षादिनिष्ठानां यावत्कपिसंयोगविशेषाभावाधिकरणतानां नैकावच्छेदकावच्छिन्नत्वं सम्भवति वृक्षाद्यवृत्तिकपिसंयोगादि-व्यक्तीनां येऽभावास्तेषां वृक्षादौ व्याप्यवृत्तितया तन्निष्ठतदधि-करणतानामनवच्छिन्नत्वात्। न च व्याप्यवृत्त्यधिकरणतानामनव-च्छिन्नतया अन्यासाञ्चैकावच्छेदकावच्छिन्नतया सर्वास्वधिकरण-तासूभयाभावोऽक्षत एवेति वाच्यम्। एवं सति पक्षनिष्ठसंयोग-व्यक्तीनां दिग्देशविशेषाद्यवच्छिन्नानां यावन्तोऽभावाः पक्षनिष्ठ-तावन्निरूपिताधिकरणतानां सर्वासामेकावच्छेदकविरहेऽपि वृक्षा-दीनामवच्छेदकैक्यसम्भवेन सर्वास्वेव तासु तादृश-तादृशावच्छेदक-मादाय एकावच्छेदकावच्छिन्नत्वमस्तीत्युभयाभावसत्त्वात् तद-वृत्तिसंयोगव्यक्तीनाञ्च येऽभावास्तेषां तन्निष्ठाधिकरणताकूटानाम-नवच्छिन्नतया उभयाभावसत्त्वात् उक्तोपाधेर्यावत्संयोगाभावरूप-साधनव्यापकत्वापत्तेः, स्वसमानाधिकरणयावत्तदभावाधिकरणता-वच्छेदकावच्छिन्नत्वस्य एकावच्छेदकावच्छिन्नत्वरूपत्वे च (१)वृक्षा-दिनिष्ठमूलाद्यवच्छिन्नकपिसंयोगाद्यभावाधिकरणतास्वपि न तथात्व-सम्भवः तत्समानाधिकरणव्याप्यवृत्तिकपिसंयोगाद्यभावाधिकर-णतानामपि तादृश-यावदधिकरणतान्तर्गतत्वात् तदवच्छेदकस्य चाप्रसिद्धत्वात् इति चेन्न, एकावच्छेदकावच्छिन्नत्वस्य स्व(२)-समानाधिकरणकिञ्चिदवच्छिन्नयावत्तदभावाधिकरणतावच्छेदका-वच्छिन्नत्वरूपस्य विवक्षितत्वेन अनवच्छिन्नाधिकरणताभिः

(१) उभयाभावघटकीभूतैकावच्छेदकावच्छिन्नत्वे चेति पा०।

(२) स्वपदं प्रतियोगिपरं न तु तदभावाधिकरणतापरम्।

सद्दावच्छिन्नाधिकरणतानामेकावच्छेदकावच्छिन्नत्वासम्भवेऽपि क्षतिविरहात्। अथवा यावद्विशेषाभाववत्त्वमित्यनेन यावत्तदीयविशेषाभावत्वावच्छिन्ननिरूपितमेकाधिकरणत्वं विवक्षितं न तु तत्समुदायः (१) एकावच्छेदकावच्छिन्नत्वञ्च एकमात्रवृत्तिधर्मावच्छिन्नावच्छेदकावच्छिन्नत्वं न त्वभिन्नावच्छेदककत्वं, वृक्षावृत्तिकपिसंयोगानां वृक्षनिष्ठा अभावा यद्यपि व्याप्यवृत्तयः तथाप्यव्याप्यवृत्तिसाधारणयावत्त्वेन तेषामव्याप्यवृत्तित्वात् तत्साधारणयावत्त्वावच्छिन्ननिरूपिताधिकरणता एकमात्रवृत्तितत्तन्मूलत्वाद्यवच्छिन्नतत्तन्मूलादिरूपावयवावच्छिन्नेति तन्नोभयाभावोऽत्रत इति न साध्योपाध्योः सामान्यव्याप्तिभङ्गः, पक्षनिष्ठसंयोगसामान्यीययावद्विशेषाभावाधिकरणता च न प्रत्येकावच्छेदकावच्छिन्ना अस्यां दिशि अत्र देशे वा गगने न संयोग इत्यादिप्रतीतिविरहात् अपि तु यत्किञ्चिदनुगतधर्मावच्छिन्नावच्छेदकावच्छिन्ना यावत्संयोगाभाववद्गगनमित्यादिप्रत्ययात्, एकरूपावच्छिन्नस्य प्रतियोग्यभावाधिकरणतावच्छेदकत्वे विरोधात् एकस्यापि विशेषरूप-सामान्यरूपाभ्यामुभयावच्छेदकत्वोपगमात् तथाच पक्षनिष्ठसंयोगविशेषाभावानां यावत्त्वावच्छिन्ननिरूपिताधिकरणता न निरुक्तैकावच्छेदकावच्छिन्नत्ववतीति तस्या उक्तोभयवत्त्वादुपाधिः साधनाव्यापकत्वमिति वदन्ति।

वस्तुतस्तु अनवच्छिन्नयावद्विशेषाभाववत्त्वमेवोपाधिः तादृशोपाधिना साध्यस्य सामान्यव्याप्तिविरहेऽपि संयोगसामान्या-

(१) यावद्विशेषाभावाधिकरणतासमुदायः।

भावरूपपर्य्यवसितसाध्यव्यापकतया तादृशोपाधेः सत्प्रतिपक्षो-त्थापकत्वमभ्याहृतं तादात्म्येन साध्यवतोऽप्युपाधिव्याप्यतया तादृशोपाध्यभावेन संयोगसामान्याभावरूपसाध्यवद्भेदोऽन्यत्राप्रसिद्धोऽपि (१) साधयितुं शक्यत एव अभावसाध्यकव्यतिरेकिणि प्रतियोगिमात्रप्रसिद्धेरपेक्षितत्वात् उपाध्यभावेन साध्याभावसाधनन्तु न सम्यक्संयोगरूपस्य तस्य साधने सिद्धसाधनात् सत्प्रतिपक्षानिर्वाहात् सिद्धसाधनादितः साध्याभावादिसाधनासम्भवेऽपि प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकतावच्छेदकतया गृह्यमाणोपाधितावच्छेदकावच्छिन्नाभाववत्ताज्ञानात् पक्षे साध्यानुमितिप्रतिरोधः (२) एवेति सारम्। अथवा प्रतियोग्यधिकरणत्वरूपपक्षधर्म्मावच्छिन्नसामान्याभावरूपसाध्यव्यापकतया एकावच्छेदेनेत्यादेर्यथाश्रुतस्यैवोपाधितानिर्वाहः, यत्र प्रतियोगिमति यस्य सामान्याभावस्तत्रैकावच्छेदेन तस्य यावद्विशेषाभाववत्त्वमिति सामान्यव्याप्तेः कपिसंयोगादिमतः कपिसंयोगादिसामान्याभावाधिकरणवृक्षादेरेकावच्छेदेन कपिसंयोगादिविशेषाभावकूटवत्त्वनियमेन सुग्रहत्वात्, गुणादावेकावच्छेदेन यावद्विशेषाभावासत्त्वेऽपि तत्र तत्प्रतियोग्यसत्त्वेनावच्छिन्नसाध्यव्यापकत्वाक्षतेः द्रव्ये च प्रतियोगिमत्त्वविशिष्टयावत्संयोगविशेषाभावाधिकरणे एकावच्छेदेन तदीययावद्विशेषाभावासत्त्वात् साधनाव्याप-

(१) पक्षे अप्रसिद्धोऽपीत्यर्थः।

(२) तद्वत्ताबुद्धिं प्रति तद्धर्म्मे तद्व्यापकतावच्छेदकत्वग्रहसहिततद्धर्म्मावच्छिन्नाभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वादिति भावः।

कत्वं तस्य, वृत्त्यादिवृत्तिकपिसंयोगादिविशेषाभावाधिकरणता-कूटान्तर्गतकतिपयाभावाधिकरणतानामनवच्छिन्नत्वेऽपि तत्कूटस्य एकावच्छेदकावच्छिन्नत्वं पूर्व्ववदुपपादनीयम् । अथैतादृशोपाधेर्व्यभिचारोन्नायकत्वं सत्प्रतिपक्षोत्थापकत्वं वा न सम्भवति प्रकृतसाध्यव्यापकस्य एकावच्छेदकावच्छिन्नसंयोगीययावद्विशेषाभाववत्त्वस्यासिद्धेः द्रव्ये तदीययावद्विशेषाभाववत्त्वस्यावच्छिन्नत्वेऽपि एकावच्छेदकावच्छिन्नत्वाभावात् गुणे च तस्यावच्छिन्नताया एवाभावात् प्रतियोगिमत्त्वविशिष्टकपिसंयोगीयसामान्याभावव्यापकस्य तदीयैकावच्छेदकावच्छिन्नयावद्विशेषाभाववत्त्वस्य प्रसिद्धत्वेऽपि तदभावेन प्रकृतसाध्यवद्भेदसाधनं न सम्भवति तस्य प्रकृतसाध्याव्यापकत्वात् प्रतियोगिमत्त्वविशिष्टकपिसंयोगादिसामान्याभाववद्भेदस्य कपिसंयोगादिरूपप्रतियोगिशून्ये हेतुमति साध्यमानो न कपिसंयोगादिसामान्याभाववद्भेदपर्य्यवसायी प्रतियोगिमद्भेदस्याबाधात् प्रतियोगिमति चैकावच्छेदकावच्छिन्नतदीययावद्विशेषाभावसत्त्वेन तद्वत्ताभावादिरूपहेतोरसिद्धिरिति (१) न व्यभिचारोन्नयनसम्भव-इति (२) मैवं, क्वचिद्द्रव्ये जलादिसंयोगवति तत्सामान्याभावस्य सत्त्वे एकावच्छेदकावच्छिन्नतदीययावद्विशेषाभावसत्त्वात् तदीयप्रतियोगिमत्त्वविशिष्टतत्सामान्याभावव्यापकं एकावच्छेदकावच्छिन्नतदीययावद्विशेषाभाववत्त्वं यावद्द्रव्ये सर्व्वावयवावच्छेदेन विभिन्ना जलादिसंयोगव्यक्तयः वर्त्तन्ते यावद्विशेषाभावरूप-

---

(१) तादृशाभावादिरूपहेतोरसिद्धिरिति पा० ।

(२) न व्यभिचारोन्नयननिर्व्वाह इतीति पा० ।

हेतुमति एकावच्छेदकावच्छिन्नयावद्विशेषाभावरूपोपाध्यभावेन प्रतियोगिमत्त्वविशिष्टसामान्याभाववद्भेदस्य सिद्धौ बाधकाभावात्, प्रतियोगिमति तत्र विशेष्यवद्भेदपर्य्यवसानेन व्यभिचारसिद्ध्या सामान्यव्याप्तिभङ्गात्। संयोगत्वे गगनादिनिष्ठाभावप्रतियोगितावच्छेदकत्वसाधकानुमानौपयिकदर्शितव्याप्तावपि एकावच्छेदकावच्छेद्य-स्व(१)समानाधिकरणोभयाद्वृत्तिधर्म्मावच्छिन्नप्रतियोगिताकयावदभावाधिकरणताशून्यगगनादिकं यद्‌यत् तदन्यत्वस्योपाधित्वं बोध्यम्।

---

अनुमानदीधितिः।

यत्तदर्थयोरननुगमात् एकावच्छेदेन यावद्विशेषाभाववत्त्वस्योपाधित्वाच्च। एतेन अयं संयोगसामान्याभाववान् संयोगयावद्विशेषाभाववत्त्वादिति परास्तं व्यर्थविशेषणत्वादप्रयोजकत्वान्निर्गुणत्वादेरुपाधित्वाच्च। न च प्रतियोग्यनवच्छेदकतयैव वृक्षत्वादेरभावावच्छेदकत्वं, गुणाद्यनवच्छेदकप्रमेयत्वादेस्तदभावावच्छेदकत्वप्रसङ्गात्। यथाच घटपूर्व्ववर्त्तित्वस्य प्रतिदण्डं वह्निसामानाधिकरण्यस्य वा प्रतिधूमं भिन्नत्वेऽपि दण्डत्वं धूमत्वं वा तत्सामान्यस्यावच्छेदकं तथैव संयोगसामान्यस्यावच्छेदकं द्रव्यत्वादिकमित्यस्यापि सुवचत्वाच्चेति सम्प्रदायविदः।

---

(१) स्वपदं संयोगत्वादिपरम्।

गादाधरी विवृतिः ।

'एतेनेति अनवच्छिन्नयावत्संयोगविशेषाभाववत्त्वस्योपाधित्वेनेत्यर्थः, 'इति' विशेषव्याप्त्युपष्टम्भमनुमानं, 'परास्तं', दूषणान्तरमाह, 'व्यर्थेति तन्मते संयोगसामान्याभावस्य केवलान्वयितया अभावत्वस्यैव तद्व्याप्यतावच्छेदकत्वेन इतरांशस्य व्यर्थत्वादित्यर्थः। नन्वभावादित्येव हेतुरस्तु इत्यत आह, 'अप्रयोजकत्वादिति व्याप्तिग्राहकतर्कशून्यत्वादित्यर्थः, विशेषव्याप्तावुपाध्यन्तरमपि सुलभमित्याह, 'निर्गुणत्वादेरिति, आदिना निष्परिमाणत्वादेरपि परिग्रहः। यत् यद्धर्माश्रयानवच्छेदकं तत्तद्धर्मावच्छिन्नाभावावच्छेदकमिति व्याप्त्युपष्टम्भं वृक्षत्वादेः संयोगसामान्याभावावच्छेदकत्वसाधकमनुमानमाशङ्क्य निराकुरुते, 'न चेति, 'गुणाद्यनवच्छेदकेति गुणत्वस्याश्रयानवच्छेदकेत्यर्थः, 'तदभावेति गुणत्वावच्छिन्नाभावेत्यर्थः, तथाच गुणत्वावच्छिन्नाभावस्यापि अव्याप्यवृत्तिताप्रसङ्ग इति भावः। घटादौ द्रव्यत्वाद्यवच्छेदेन घटत्वाभावप्रसङ्गः घटत्वादेर्व्याप्यवृत्तितया तदवच्छेदकाप्रसिद्ध्या तदनवच्छेदकत्वरूपापादकाप्रसिद्धेर्न सम्भवतीति नाभिहितम्। गुणत्वाद्याश्रयस्य संयोगादेरवच्छेदकत्वप्रसिद्ध्या न गुणत्वाद्यवच्छिन्नाभावावच्छेदकत्वापादकाप्रसिद्धिरिति भावः। ननु यद्धर्माश्रयानवच्छेदकमित्यत्र यत्पदेन व्याप्यवृत्त्यवृत्तिधर्म्म एव विवक्षणीयः गुणत्वादेश्च व्याप्यवृत्तिरूपादिवृत्तितया तदाश्रयानवच्छेदकत्वस्य न तदवच्छिन्नाभावावच्छेदकतापादकता इत्याशङ्क्य वृक्षत्वादौ संयोगत्वाश्रयानवच्छेदकत्वरूपसंयोगत्वावच्छिन्नाभावावच्छेदकत्वसाधक-

हेतोरसिद्धिमाह, 'यथा चेति, 'घटपूर्व्ववर्त्तित्वस्येति दण्डनिष्ठ-घटकारणताघटकतदव्यवहितपूर्व्वकालसम्बन्धस्येत्यर्थः, 'प्रतिदण्डं भिन्नत्वेऽपि' 'दण्डत्वं तत्सामान्यावच्छेदकमित्यग्रिमेनान्वयः, 'प्रति-दण्डं भिन्नत्वेऽपि' इत्यनेन च दण्डत्वं तत्प्रत्येकातिप्रसक्तमिति सूचितं, एवमग्रेऽपि, 'तत्सामान्येति घटपूर्व्ववर्त्तितात्वावच्छिन्नेत्यर्थः, प्रत्ये-कातिप्रसक्तत्वेऽपि अवच्छेद्यतावच्छेदकानुगतरूपावच्छिन्नानति-प्रसक्ततया तस्यावच्छेदकत्वं, अन्यथा घटकारणतावच्छेदकत्वमेव तस्य भज्येतेति भावः। ननु दण्डत्वस्य घटनियतपूर्व्ववर्त्तितावच्छे-दकत्वं न घटनियतपूर्व्ववर्त्तितायाः स्वरूपसम्बन्धरूपमवच्छेदकत्वं अपितु तदव्यवहितपूर्व्वकालनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपं पारिभाषिकमेव तच्च(१) अतिप्रसक्तेऽनतिप्रसक्ते च निराबाधमेव(२) स्वरूपसम्बन्धरूपावच्छेदकताया एवावच्छेद्यानतिप्रसक्तत्वनियतत्वा-दिति (३) प्रत्येकातिप्रसक्तस्य सामान्यानतिप्रसक्तत्वेन सामान्य-रूपावच्छिन्नावच्छेदकत्वे दृष्टान्तान्तरमाह, 'वह्निसामानाधिकर-ण्यस्येति, 'प्रतिधूमं भिन्नत्वेऽपि' 'धूमत्वं तत्सामान्यावच्छेदकमि-त्यन्वयः, 'तत्पदेनात्र वह्निसामानाधिकरण्यपरामर्शः, धूमत्वस्य तदनवच्छेदकत्वे तस्य वह्निव्याप्यतावच्छेदकत्वं नोपपद्यते। न च

---

(१) तथाचातिप्रसक्तस्य तादृशावच्छेदकत्वं स्वीक्रियते न तु स्वरूपसम्बन्धरूपा-वच्छेदकत्वं अतिप्रसक्तस्येति भावः।

(२) अतिप्रसक्तेऽपि वर्त्तत इति पा०।

(३) तथाच घटपूर्व्ववर्त्तिताया अतिप्रसक्तत्वेन दण्डत्वस्य कारणतावच्छेदकत्वं स्वीक्रियते न तु दण्डत्वं कारणतानतिप्रसक्तमिति अतिप्रसक्तस्यावच्छेदकत्व-स्वीकारे दृष्टान्तासम्भव इति भावः।

व्याप्यतावच्छेदकत्वमपि स्वविशिष्टव्यापकसाध्यकत्वरूपं पारिभाषिकमेव तच्चातिप्रसक्तसाधारणमिति न दृष्टान्तसङ्गतिरिति वाच्यम् । साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वं व्याप्तिस्तत्रावच्छेदकत्वं स्वरूपसम्बन्धविशेषः, अतएव यत्र व्यर्थविशेषणघटितनीलधूमत्वादिना हेतुता तत्र व्याप्यत्वासिद्धिरिति प्राचीनमतानुसारेणैतदभिधानात्, अन्यथा पुनः स्वरूपसम्बन्धरूपकारणत्वप्रतियोगित्वादिनिरूपितमनुगतधर्म्मनिष्ठं स्वरूपसम्बन्धरूपमवच्छेदकत्वं दृष्टान्ततया बोध्यं, संयोगसामान्यस्य संयोगत्वरूपावच्छेद्यतावच्छेदकरूपावच्छिन्नस्य सुवचत्वाच्चेति प्रत्येकं संयोगादिव्यक्त्यतिप्रसक्तस्यापि द्रव्यत्वादेस्तद्रूपावच्छिन्नानतिप्रसक्तत्वादिति भावः । यद्यप्येवमपि प्रमेयत्वादेः संयोगसामान्यातिप्रसक्तत्वेन तत्सामान्यावच्छेदकत्वासिद्धा उक्तव्याप्तिबलात् तदवच्छेदेन संयोगसामान्याभावसिद्धिर्न शक्यते निराकर्त्तुं, तथापि प्रतियोगिमत्सम्बद्धदेश-कालयोरेव प्रतियोग्यनवच्छेदकयोरभावावच्छेदकत्वनियमः तयोरेव (१) तदनुभवात् न तु प्रतियोग्यनवच्छेदकमात्रस्य मानाभावादित्यत्र तात्पर्य्यम् । द्रव्ये संयोगसामान्याभावस्य कालभेदावच्छेदेन स्वयमनुपदं व्यवस्थापनीयतया 'सम्प्रदायविदः' इत्यनेनास्वरसोदर्शितः (२) ।

---

(१) प्रतियोग्यनवच्छेदकयोर्देश-कालयोरेव तदभावावच्छेदकत्वनियमः, न तु देशकालादिभिन्नस्य प्रतियोग्यनवच्छेदकधर्म्मस्यापि तदभावावच्छेदकत्वनियम इत्यर्थः ।

(२) 'सम्प्रदायविदः' इत्यनेनास्वरसोद्भावनं कृतमिति पा० ।

अनुमानदीधितिः ।

नवीनास्तूत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रलयावच्छेदेन गगनादौ संयोगस्य सामान्याभावोवर्त्तते तथा धूमवत्यपि विरहो दहनस्य इह पर्व्वते नितम्बे हुताशनो न शिखरे इति प्रतीतेः संयोगेन द्रव्यस्याप्यव्याप्यवृत्तित्वात् वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्वाच्च । एवं प्रतियोगिमतोऽपि काल-देशयोर्देश-कालभेदावच्छेदेन तदभावः । तथाच तत्तत्साध्यकाव्याप्तिवारणाय तत्, नोपादेयञ्च सर्व्वथैव व्याप्यवृत्तिसाध्यके साध्यादिभेदेन (१) व्याप्तिभेदादिति वदन्ति ।

---

गादाधरी विवृतिः ।

'गुणस्य सामान्याभावोवर्त्तत इत्यन्वयः, ध्वंस-प्रागभावयोरत्यन्ताभावविरोधिताया निराकृतत्वादिति भावः । एतेन तदवच्छेदेन संयोगसामान्याभावोऽपि सुतरां वर्त्तते व्यापकधर्म्मावच्छिन्नाभाववति व्याप्यधर्म्मावच्छिन्नाभाववत्त्वनियमादिति सूचितम् । न चोत्पत्तिकालावच्छेदेन घटादौ गुणस्य प्रागभाव एव न तु तत्सामान्यात्यन्ताभावोऽपि मानाभावात् इति वाच्यम् । तदा

---

(१) साध्य-साधनभेदेनेति पाठः कुत्रचित् पुस्तके वर्त्तते परन्तु स पाठो न भट्टाचार्य्यैर्धृतः ।

तत्र जन्यैकत्वहेतुभूतस्य (१) एकत्वत्वावच्छिन्नाभावस्यावश्यकतया तस्यैव स्वसमनियतगुणत्वाद्यवच्छिन्नाभावरूपतया विवादायोगात्। संयोगादिसाध्यकनित्यद्रव्यमात्रवृत्तिहेतुकस्थले व्यावृत्तिदानायाह, 'प्रलयेति, महाप्रलयस्य जन्यभावानधिकरणतया तदानीं संयोगाद्यसत्त्वादिति भावः। तदानीञ्च गगनादौ नित्यैकत्वपरिमाणादिसत्त्वेन गुणसामान्याभावासत्त्वात् संयोगस्यैवेत्येवमुक्तं, अत्र च प्रमाणं महाप्रलये गगने न संयोग इत्यादिप्रामाणिकव्यवहार एव, तादृशव्यवहारस्य ध्वंसावगाहित्वेऽतिप्रसङ्गात्, (२) व्यवहारानादरेऽतीन्द्रियगगनादौ गोत्वाद्यभावस्याप्रामाणिकत्वापत्तेः प्रत्यक्षासम्भवात् अनुमानस्याप्रयोजकत्वात्। वह्निमान् धूमादित्यादौ व्यावृत्तिदानायाह, 'तथेति, 'दहनस्य' दहनत्वावच्छिन्नस्य, 'प्रतीतेरित्यन्तं द्रव्यस्याव्याप्यवृत्तित्वादित्यत्र हेतुः, प्रत्यक्षप्रमाणमुक्त्वा युक्तिमप्याह, 'वृत्तेरिति संयोगरूपसम्बन्धस्येत्यर्थः, 'वृत्तिमतो व्याप्यवृत्तित्वस्य' संयुक्तस्य तेन सम्बन्धेन व्याप्यवृत्तितायाः, 'असम्भावितत्वादिति। अयमाशयः सम्बन्धिसत्तायाः सम्बन्धाधीनत्वाद्यदवच्छेदेन यदीययत्सम्बन्धो नास्ति तदवच्छेदेन तत्सम्बन्धावच्छिन्नतदभावसत्त्वमावश्यकं संयोगादेः सम्बन्धस्य समवायस्य व्याप्यवृत्तित्वेऽपि न संयोगादेर्व्याप्यवृत्तिता गुणादौ समवायसत्त्वेऽपि संयोगाद्यसत्त्ववत् संयोगाद्यनवच्छेदकावच्छिन्ने संयोगादिमति तत्समवायसत्त्वेऽपि तदभावसत्त्वोपपत्तेरिति।

---

(१) एकत्वोत्पत्त्यनन्तरमेकत्वोत्पत्तिवारणाय एकत्वाभावस्य हेतुत्वमिति भावः।

(२) इदानीं गगने न संयोग इत्यादिव्यवहारप्रसङ्गादित्यर्थः।

केचित्तु वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतोऽव्याप्यवृत्तित्ववत् वृत्ते-र्व्याप्यवृत्तित्वे वृत्तिमतोव्याप्यवृत्तित्वं युक्तितौल्यादिति संयोगादि-प्रतियोगिकत्वविशिष्टसमवायत्वेन समवायोपि न व्याप्यवृत्ति-रित्याहुः ।

वह्निमान् धूमादित्यादौ कालविशेषावच्छेदेन हेतुमति वर्त्तमानं साध्याभावमादाय घटत्ववान् कालत्वादित्यादौ पटा-द्यवच्छेदेन काले वर्त्तमानं कालिकसम्बन्धावच्छिन्नाभावमादाया-व्याप्तिदानायाह, 'एवमिति प्रतियोगिमतो देशस्य प्रतियोग्य-नाधारकालावच्छेदेन प्रतियोगिमतः कालस्य च प्रतियोग्यनाधार-देशावच्छेदेनाभाववत्त्वमित्यर्थः, 'देशे कालस्येवेति, इदानीमत्र घटो नास्तीत्यादिप्रत्यये देशनिष्ठायाः कालावच्छिन्नाधारतायाः काल-निष्ठाया देशविशेषावच्छिन्नाधारताया वा विषयत्वमित्यत्र विनि-गमनाविरहादुभयस्यैव विषयत्वादिति भावः । 'तत्तत्साध्यकेति गुणत्वाद्यवच्छिन्नसाध्यक-द्रव्यत्वाद्यव्याप्तिवारणायेत्यर्थः। 'तत्' अस-मानाधिकरणान्तम्। अव्याप्यवृत्तिसाध्यके प्रतियोगिवैयधिकरण्या-घटितव्याप्तेरप्रसिद्धया तद्घटितैव व्याप्तिः व्याप्यवृत्तिसाध्यके तु प्रतियोगिवैयधिकरण्यानुपस्थितिदशायामपि हेतुसामानाधि-करणाभावप्रतियोगितावच्छेदकत्वसामान्याभावग्रहादनुमित्युत्पत्त्या प्रतियोगिवैयधिकरण्याघटितापि व्याप्तिरस्ति प्रतियोगिवैयधि-करण्यघटितव्याप्तिरुभयत्रैव प्रसिद्धानुमितिप्रयोजिका चेत्याशयेन मूलकृतस्तदनुपादानमित्याह, 'नोपादेयमिति, व्याप्यवृत्तिसाध्यके सार्व्वत्रिकमुपादानं प्रतिषिद्धं न त्वनुपादानस्य सार्व्वत्रिकत्व-

मुक्तं, व्याप्यवृत्तेरपि साध्यस्याऽव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानादेवानुमित्युपगमात्, व्याप्यवृत्तेरपि साध्यस्याव्याप्यवृत्तित्वभ्रमदशायां प्रतियोगिवैयधिकरण्यघटितव्याप्तिज्ञानादेवानुमित्युपगमेऽपि व्याप्यवृत्तिसाध्यके सर्व्वत्र तादृशविशेषणोपादानानियमः तदघटिताया अपि व्याप्तेः सर्व्वत्रानुमित्यौपयिकत्वात् अव्याप्यवृत्तिसाध्यके तु सर्व्वत्र तदुपादाननियम एव तदघटितव्याप्तेरप्रसिद्धेरिति वार्थः । व्याप्यवृत्तिसाध्यकत्वञ्च स्वसमानाधिकरणाभावाप्रतियोगिसाध्यकत्वं, सत्तावान् द्रव्यत्वात् कालिकसम्बन्धावच्छिन्नाकाशाभावाभाववान् आत्मत्वादित्यादिकञ्च न तथा,(१) साध्यवति(२) कालात्मादौ कालिक-दैशिकविशेषणताभ्यां साध्याभावसत्त्वात्, अतस्तत्र प्रतियोगिवैयधिकरण्याविशेषितहेतुमन्निष्ठाभावाप्रतियोगित्वस्य साध्येऽसत्त्वेन व्याप्तेः प्रतियोगिवैयधिकरण्यघटितत्वनियमेऽपि न दोष (३) ।

केचित्तु व्याप्यवृत्तिसाध्यकत्वं यथाश्रुतमेव हेतुमत्यभावस्य दैशिकविशेषणतया वृत्तिर्व्विवक्षणीया अतो न हेतुमति कालादौ कालिकविशेषणतादिना साध्याभावसत्त्वेऽप्यव्याप्तिः भावस्याप्यभावत्वेन दैशिकविशेषणतया वृत्तिः प्रामाणिकी अतो नाभावसाध्यकव्यभिचारिण्यतिव्याप्तिः (४) यादृशप्रतियोगितानिरूपकाभावत्व-

(१) न व्याप्यवृत्तिसाध्यकमित्यर्थः ।

(२) कुत इत्याकाङ्क्षायामाह, साध्यवतीति ।

(३) प्रतियोगिवैयधिकरण्यघटितैव व्याप्तिरित्येवमपि न दोष इति पा० ।

(४) दैशिकविशेषणतया सत्तारूपसाध्याभावाभावस्य वृत्तेरिति भावः ।

विशिष्टस्य दैशिकविशेषणतया हेतुमति वृत्तिस्तादृशप्रतियोगि-तानवच्छेदकत्वविवक्षया कालिकसम्बन्धावच्छिन्नप्रतियोगिताका-काशाभावाभाववान् इत्यादावव्याप्तेर्निरासः तत्र आकाशाभावस्या-काशाभावत्वेनैव दैशिकविशेषणतया आत्मनि वृत्तिर्न तूक्तसाध्यताव-च्छेदकावच्छिन्नप्रतियोगिताकत्वेन, आत्मनि तादृशाभावाभावो नास्तीत्यप्रतीतेः, अव्याप्यवृत्तिसाध्यकेऽपि संयोगाभाववान्नित्य-गुणत्वादित्यादौ(१) अनुमित्यौपयिकद्विविधव्याप्तेः सम्भवेन सर्व्वथै-वेत्युक्तं तावता अव्याप्यवृत्तिसाध्यकेऽपि क्वचित्तदघटितव्याप्तिसम्भव-इति सूचितमित्याहुः ।

यत्तु 'व्याप्यवृत्तिसाध्यके' अव्याप्यवृत्तित्वग्रहाविषयसाध्यके, सर्व्वथैवासमानाधिकरणान्तस्यानुपादेयतया तत्र लाघवेन प्रति-योग्यसामानाधिकरण्याघटितव्याप्तेरेवानुमानाङ्गतास्वीकारादिति-व्याख्यानं, तदसत्, तत्रापि शब्दादिना प्रतियोग्यसामानाधिकरण्य-घटितव्याप्तेर्यदा ग्रहस्तदा अनुमितेरुत्पादाय तादृशव्याप्तेरनुमाना-ङ्गत्वस्योपगन्तव्यत्वात्, अन्यथा यादृशव्यतिरेकिसाध्ये न केवलान्व-यित्वभ्रमस्तादृशसाध्यके लाघवेन साध्याभाववदवृत्तित्वस्यैव व्याप्ति-त्वोपगमप्रसङ्गात् । केवलान्वयिनो यस्य साध्यस्य न व्यतिरेकित्व-भ्रमविषयता तत्साध्यके हेतुसामानाधिकरण्यविशेषणपरित्याग-स्यापि प्रसङ्गाच्च (२) ।

---

(१) संयोगाभववान् द्रव्यत्वादित्यादौ प्रतियोगिवैयधिकरण्याघटितव्याप्तेर-सिद्धया तत्र तद्घटितव्याप्तिरपि हेतुरिति भावः ।

(२) अन्यथा यादृशव्यतिरेकिसाध्ये न केवलान्वयित्वभ्रमस्तत्र साध्याभाववद-

यत्तु प्रतियोग्यसमानाधिकरणेत्यत्र प्रतियोगिपदं स्वप्रतियोगिपरमवश्यं वाच्यम्, अन्यथा प्रतियोगित्वस्य सामान्यरूपेण केवलान्वयितया प्रतियोग्यसमानाधिकरणाभावस्यैव दुर्लभत्वापत्तेः। तथाच स्वपदस्य तत्तदभावपरतया तत्तदभावप्रतियोग्यसामानाधिकरण्यविशिष्टत्वेन हेतुमद्वृत्तीनां तत्तदभावव्यक्तीनां प्रतियोगितावच्छेदकत्वाभावकूटज्ञानमनुमितिकारणं वाच्यम् तादृशञ्च ज्ञानमसर्व्वज्ञस्य दुर्घटं अतः प्रतियोगिपदस्य प्रकृतसाध्यार्थकतया साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टः सन् हेतुमद्वृत्तिरभाव एवानुगतरूपेण निवेश्यः, सद्धेतौ सर्व्वेषामेव हेतुसमानाधिकरणाभावानां सर्व्वत्र हेत्वधिकरणे साध्यसमानाधिकरणतया साध्यसामानाधिकरण्याभावविशिष्टस्य हेतुमद्वृत्तित्वं न प्रसिध्यतीति साध्याभावनिष्ठं साध्यसामानाधिकरण्यविशेषणं (१) तथा सति सद्धेतौ साध्याभावातिरिक्ताभावे तत्प्रसिद्धिसम्भवात्। व्यभिचारिणि च (२) व्यभिचारनिरूपकाधिकरण एव साध्याभावे साध्यसामानाधिकरण्याभावविशिष्टतया हेतुमद्वृत्तित्वमिति साध्याभावस्यापि लक्षणघटकतया नातिव्याप्तिः, संयोगेन प्रमेयसामान्यसाध्यकसद्धेतौ साध्याभावातिरिक्ताभावाप्रसिद्ध्या हेतुमति साध्याभावनिष्ठसाध्यसामानाधिकरण्याभावविशिष्टाभावाप्रसिद्धि---

---

वृत्तित्वस्यैवानुमानाङ्गता न तु व्यापकसामानाधिकरण्यस्य गुरुशरीरस्येत्यपि स्यात्, एकसाध्यके यादृशव्याप्तिपक्षादनुमितिरन्यत्रापि तज्ज्ञानादनुमितेरानुभविकतया नापह्नवमर्हतीति चेत्, तुल्यं प्रकृतेऽपीति पा०।

(१) साध्याभावनिष्ठसाध्यसामानाधिकरण्यस्याभावो निवेश्य इति पा०।

(२) संयोगी सत्त्वादित्यादौ चेत्यर्थः।

रिति साध्यतावच्छेदकावच्छिन्नाभावनिष्ठसाध्यसामानाधिकरण्य-स्याभावो निवेश्यः। एवञ्च व्याप्यवृत्तिसाध्यके साध्यतावच्छेदकावच्छिन्नसाध्याभावनिष्ठसाध्यसामानाधिकरण्याप्रसिद्ध्या तादृश-व्याप्तिर्न प्रसिद्ध्यतीति तत्साध्यके प्रतियोग्यसामानाधिकरण्याघटितैव व्याप्तिरित्युक्तं 'नोपादेयञ्चेत्यादिना, तदपि न, साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यविशेषणीभूतसाध्याभावे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वनिवेशनप्रयोजनाभावात् व्याप्यवृत्तिसाध्यकेऽपि सम्बन्धान्तरावच्छिन्नसाध्याभावे साध्यसामानाधिकरण्यप्रसिद्ध्या तत्राप्युक्तव्याप्तिप्रसिद्धेः (१)।

व्याप्यवृत्तिसाध्यकस्थले व्याप्तिर्द्विविधा न त्वव्याप्यवृत्तिसाध्यके इति साध्यादिभेदेन व्याप्तिभेदाभावे न सम्भवतीत्यत आह, 'साध्यादिभेदेनेति साध्यतावच्छेदकादेर्विशिष्य व्याप्तिघटकतया तद्भेदेन तद्भेदस्यावश्यकत्वादित्यर्थः।

---

अनुमानदीधितिः।

प्रतियोग्यसामानाधिकरण्यञ्च प्रतियोगितावच्छेदकावच्छिन्नासामानाधिकरण्यं तेन अयं गुण-कर्म्मान्यत्वविशिष्टसत्तावान् जातेः भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादौ नातिप्रसङ्गः। न चोभयत्वमेकविशिष्टापरत्वं विशिष्टञ्च केवलादन्यदिति तदभावो मनसि

---

(१) तत्राप्युक्तव्याप्त्यप्रसिद्धेरिति पा०।

सहजत एव प्रतियोगिव्यधिकरण इति वाच्यम्, उभयत्वं हि न विशिष्टत्वादनतिरिक्तं न वा तदवच्छिन्नाभावस्तदवच्छिन्नाभावात् वैशिष्ट्यविरहेऽपि घटत्वपटत्वयोरुभयत्वस्योभयत्वेन तदभावस्य च प्रत्यक्षसिद्धत्वात्। न च तत्र व्याप्तिरेवोभयत्वाधिकरणस्य मूर्त्तत्वस्य मनसि सत्त्वादिति वाच्यम्। तथात्वेऽप्युभयत्वेन रूपेण तत्रासत्त्वात् नात्रोभयमिति प्रतीतेर्दुर्व्वारत्वात्।

---

गादाधरी विवृतिः।

यद्यपि जात्यादौ गुण-कर्म्मान्यत्वसामानाधिकरण्योपलक्षितस्य सत्तादेर्व्याप्तिरस्त्येव गुणादौ तदुपलक्षितसत्ताद्यनुमितेः प्रमात्वात्, तथापि गुणादौ विशिष्टसत्तादिप्रतियोगिकवैशिष्ट्यावगाह्यनुमितेर्भ्रमत्वात्(१) तत्र तादृशानुमित्यौपयिकव्याप्तिस्वीकारे सल्लिङ्गकपरामर्शादपि भ्रमः स्यादिति तादृशानुमित्यौपयिकव्याप्तिर्गुणादिवृत्तिहेतौ न स्वीकर्त्तुं शक्यते अतः साध्यतावच्छेदकविशिष्टवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तिशरीरे प्रतियोगितावच्छेदकविशिष्टवैयधिकरण्यपर्य्यन्तं निवेश्य तत्र तादृशव्याप्तिं वारयति, 'प्रतियोग्यसामानाधिकरण्यमिति। न च तत्रापि व्याप्तिस्वीकारे क्षतिविरहः गुणे

---

(१) 'भ्रमत्वात्' इत्यनन्तरं 'न च तत्रापि व्याप्तिस्वीकार इति सन्दर्भात् पूर्व्वं 'तादृशानुमित्यौपयिकव्याप्तिर्गुणादिवृत्तिहेतौ न स्वीकर्त्तुं शक्यते इति गुणादिनिष्ठविशिष्टसत्ताद्यभावस्य अभावान्तेनोपादाननिर्व्वाहाय प्रतियोगिपदं प्रतियोगितावच्छेदकविशिष्टपरतया व्याचष्टे, 'प्रतियोगीतीतिपाठः कुत्रचिदादर्शपुस्तके वर्त्तते।

गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादौ बाधेनैव हेतोर्दुष्टत्वोपपत्तेः। द्रव्यपक्षक-तादृशसाध्यक-जात्यादिहेतोश्च समीचीनताया एवोपगमात् बाधानतारदशायां गुणादौ जात्यादिलिङ्गकविशिष्टसत्तावैशिष्ट्यानुमितिर्भ्रमरूपा प्रमात्मकपरामर्शादपि (१) स्वीक्रियत एव गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ बाधानतारदशायां प्रमात्मकपरामर्शात् विशिष्टानुयोगिकवैशिष्ट्यावगाहिन्या भ्रमानुमितेर्मणिकारानुमतत्वमिति वाच्यम्। भ्रमानुमितिजनकपरामर्शस्य भ्रमत्वसम्भवे तदुपादानमावश्यकमित्याशयात् गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ परामर्शस्य कथञ्चिदपि भ्रमत्वासम्भवेनागत्या प्रमापरामर्शाद्भ्रमानुमितिस्वीकारात् गुणो विशिष्टसत्तावान् जातिमत्त्वादित्यादिविशिष्टप्रतियोगिकवैशिष्ट्यविषयकानुमितिस्थलमुपेक्ष्य गन्धप्रागभाववान् घटो गन्धवान् पृथिवीत्वादित्यादिविशिष्टानुयोगिकवैशिष्ट्यविषयकानुमितिस्थलमसिद्धि–व्यभिचारासङ्कीर्णबाधोदाहरणत्वेनाभिहितवतो मणिकृतोप्युक्तस्थले व्याप्तिर्नास्तीत्याशय उन्नीयते। अथ विशिष्टनिरूपित एव समवायादिर्विशेष्याविरोधिनो विशिष्टाभावस्य प्रतियोगितावच्छेदकसम्बन्धः शुद्धसमवायादेस्तथात्वे दण्डाद्युपलक्षितपुरुषादिमत्त्वविरोधितादृशपुरुषाद्यभावात् तदविरोधिविशिष्टपुरुषाद्यभाववैलक्षण्यानिर्व्वाहात्। न च तदुपलक्षितपुरुषाद्यभावस्य स धर्म्मो न प्रतियोगितावच्छेदकः अपि तु प्रतियोगितासमानाधिकरण एव प्रतियोगितावच्छेदकस्यैव प्रति-

(१) सल्लिङ्गकपरामर्शादपीति पा०।

योगिनि विशेषणत्वात् अतादृशस्यैव चोपलक्षणत्वात् इति तादृशाभावयोर्विशेष इति वाच्यम्। उपलक्षणेन दण्डादिना व्यावृत्तप्रतियोगिनिष्ठप्रतियोगितायां पुरुषत्वादेरतिप्रसक्ततया तन्मात्रे तदवच्छेदकतायाः पर्य्याप्त्यसम्भवेन दण्डादेरपि तदवच्छेदककोटाववश्यमन्तर्भावात्। अतएव पुरुषादिमात्रेण न दण्डाद्युपलक्षितपुरुषाद्यभावस्य विरोधः तदवच्छिन्नाभावस्यैव तद्विशिष्टाभावत्वे सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ ग्रन्थकृतां कूटघटितलक्षणातिव्याप्तिदानमपि विरुध्येत पृथिवीसमवेतत्वविशिष्टाभावस्य वाय्वादौ सत्त्वेन वायुत्वादेस्तत्र साध्ये सद्धेतुत्वादिति चेन्न, विशिष्टनिरूपितसम्बन्धस्य विशिष्टाभावप्रतियोगितावच्छेदकत्वं सर्व्वत्र न सम्भवतीति प्रागुक्तत्वात्, अगत्या विशिष्टाभावप्रतियोगिता विशेषणान्तर्भावेन पर्य्याप्ता उपलक्षिताभावप्रतियोगिता तु दण्डादिरूपावच्छेदकोपलक्षितविशेष्य एव पर्य्याप्ता इत्युपगम्य तयोर्विशेषस्य उपपादनीयत्वात्। विशिष्टस्यातिरिक्ततामते विशिष्टसत्ताभावः सहजत एव प्रतियोग्यसमानाधिकरण इत्युभयसाध्यकानुसरणं, 'नातिप्रसङ्ग इति हेतुमति विशिष्टाभावादेः शुद्धप्रतियोगिसामानाधिकरण्यसत्त्वेऽपि विशिष्टप्रतियोगिसामानाधिकरण्यविरहात् न भ्रमानुमितिजनकपरामर्शस्य प्रमात्वप्रसङ्ग इत्यर्थः। व्याप्यवृत्तिसाध्यकेऽपि प्रतियोगिवैयधिकरण्यावगाहिपरामर्शस्यानुमितिहेतुतया उक्तसाध्यस्य व्याप्यवृत्तित्वेऽपि नातिप्रसङ्गाप्रसक्तिः। ननु मूर्त्तत्वादिहेतौ भूतत्वादिविशिष्टमूर्त्तत्वत्वादिरूपतदुभयत्वावच्छिन्नस्यैव न व्याप्तिः, न तु तदुभयवृत्तिबुद्धिविशेषविषयत्वरूप-

तदुभयत्वावच्छिन्नस्य तथाच विशिष्टसत्तादिसाध्यकजात्यादिहेता-
विव उक्तोभयसाध्यकमूर्त्तत्वादिहेतावपि यथाश्रुतप्रतियोग्यसामा-
नाधिकरण्यनिवेशपक्षेऽपि नातिप्रसक्तिरित्यभिमानं 'न चेत्यादिना
निराकरोति, 'सहजत एव' प्रतियोगिपदस्य तत्त्वावच्छेदकविशिष्ट-
परतां विनैव, 'उभयत्वं' उभयव्यवहारविषयतावच्छेदकं, 'न विशि-
ष्टत्वात्' एकविशिष्टापरत्वात्, 'अनतिरिक्तं' अभिन्नं, अतिरिक्तमित्य-
नुक्त्वा 'नानतिरिक्तमित्यभिधानं उभयपदार्थतावच्छेदकावच्छे-
नातिरिक्तत्वलाभाय, नञ्पदस्यानुयोगितावच्छेदकावच्छेदेन अभाव-
बोधकत्वव्युत्पत्तेः, तावता एकविशिष्टापरत्वमुभयनिष्ठव्यासज्य-
वृत्तिधर्म्मस्य उभयपदार्थतावच्छेदकमस्तु (१) प्रकृते चोभयत्वमेक-
विशिष्टापरत्वमेवेतिशङ्काव्युदासः। अत्र हेतुः 'वैशिष्ट्यविरहेऽपि
घटत्व-पटत्वयोरुभयत्वस्य प्रत्यक्षसिद्धत्वादिति घटत्व-पटत्वयोः
सामानाधिकरण्यविरहेऽपि तत्र उभयव्यवहारविषयतावच्छेदकस्य
प्रत्यक्षसिद्धत्वादित्यर्थः, अन्यथा तत्रोभयव्यवहारानुपपत्तेरिति
भावः। यद्यपि घटत्व-पटत्वोभयमितिप्रतीतौ कालिकसम्बन्ध-
घटितसामानाधिकरण्यरूपवैशिष्ट्यस्य विषयतासम्भवः तथापि
वाच्यत्व-घटत्वोभयं समवेतमित्यादिप्रतीतिव्यवहारविरहेण उभयं
समवेतमिति प्रतीति-व्यवहारयोः समवायिसमवेतत्वरूपवैशि-
ष्ट्यविषयताया अभ्युपगन्तव्यतया घटत्व-पटत्वोभयं समवेत-
मित्यादौ तादृशवैशिष्ट्याप्रसिद्धा व्यासज्यवृत्तिधर्म्म एव विषय-

(१) अस्त्वित्यनन्तरं 'न तु तन्मात्रं वक्ष्यमाणानुपपत्तेः' इत्यतिरिक्तपाठः क्वचित्आदर्शपुस्तके वर्त्तते।

इति भावः । तथाच तदनुरोधेन व्यासज्यवृत्तिधर्म्मविशिष्टस्य उभय-व्यवहारविषयताया आवश्यकत्वे एकविशिष्टापरत्वस्य तद्व्यवहार-विषयत्वमप्रामाणिकमिति न भूतत्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादि-त्यादावेकविशिष्टापरत्वस्य साध्यतावच्छेदकत्वप्रसक्तिः तथा सति अनुमितेरुभयवानित्याकारकतानुपपत्तेरिति निर्व्यूढ़म्। ननु मूर्त्त-त्वाधिकरणे मनसि भूतत्व-मूर्त्तत्वोभयं नास्तीति बुद्धेरेक-विशिष्टापराभावावलम्बनेनैव मनसि प्रतियोगिसत्त्वेन उभयवृत्ति-धर्म्मावच्छिन्नाभावासत्त्वादिति क्वचिदेकविशिष्टापरत्वस्याप्युभय-व्यवहारविषयतावच्छेदकत्वमावश्यकमित्यत आह, 'न वेति, 'तद-वच्छिन्नाभावः' उभयव्यवहारविषयतावच्छेदकावच्छिन्नाभावः, (१) 'तदवच्छिन्नाभावात्' एकविशिष्टापरत्वावच्छिन्नाभावात्, नानतिरिक्त-इति विपरिणतेनान्वयः,(२) प्रतियोगितावच्छेदकविशिष्टेनैव प्रति-योगिना अभावस्य विरोधादेकस्याधिकरणेऽपि व्यासज्यवृत्ति-धर्म्मावच्छिन्नाभावसत्त्वे बाधकाभावादिति भावः । एतेन मूर्त्तत्वस्य व्यासज्यवृत्त्युभयत्वावच्छिन्नव्यभिचारितापि व्यवस्थापिता, आव-श्यकश्च एकाधिकरणे व्यासज्यवृत्तिधर्म्मावच्छिन्नतदभावः अन्यथा घटादौ समवायेन घटत्व-पटत्वोभयं नास्तीति प्रतीतेरनुपपत्ति-स्तव समवायिसमवेतत्वरूपवैशिष्ट्यावच्छिन्नाभावस्यैव विषयतायाः स्वीकरणीयत्वादन्यथा एककालीनत्वादिरूपघटत्वादिवैशिष्ट्याव-

---

(१) प्रत्येकाधिकरणवृत्तिरपि उभयव्यवहारविषयतावच्छेदकावच्छिन्नाभाव-इति पा० ।

(२) विपरिणतेन सम्बन्धः, विपरीतेन सम्बन्ध इति पा० ।

च्छिन्नस्य पटत्वादेः समवायेन पटादौ सत्त्वेन तादृशप्रतीत्य-निर्व्वाहात् इत्याह, 'वैशिष्ट्यविरहेऽपि घटत्व-पटत्वोभयत्वेनाभावस्य प्रत्यक्षसिद्धत्वादिति। ननु तथापि व्यासज्यवृत्तिनिरुक्तोभयत्वेन साध्यत्वे मूर्त्तत्वस्य व्यभिचारिता सम्भवति एकप्रतियोगिमत्यपि उभयाभावस्य प्रतियोगिसमानाधिकरणतया मूर्त्तत्वाधिकरणे मनसि उभयाभावस्य प्रतियोगिव्यधिकरणत्वाभावात् हेतुमति प्रति-योगिव्यधिकरणस्यैव च साध्याभावस्य व्यभिचारत्वात् व्यभिचार-लक्षणेऽपि प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यपर्य्यन्तानिवे-शादित्याशङ्कां निरस्यति, 'न च तत्रेत्यादिना, 'व्याप्तिरेव' व्याप्ति-रिष्टैव, 'तथात्वेऽपीति मूर्त्तत्वस्य मनसि सत्त्वेऽपीत्यर्थः, 'उभयत्वेनेति उभयत्वविशिष्टवत्ताया मनस्यसत्त्वादित्यर्थः, तथाच तत्र उभयत्व-विशिष्टवैशिष्ट्यानुमितेर्भ्रमतया तत्प्रयोजकहेतोर्न सद्धेतुत्वस्वीका-रसम्भवः। अतएव व्यभिचारलक्षणेऽपि प्रतियोगितावच्छेदकाव-च्छिन्नवैयधिकरण्यपर्य्यन्तमेव निवेश्यमिति भावः। एकाधिकरणे उभयत्वविशिष्टाभावसत्त्वे मानमाह, 'नात्रोभयमिति, अत्रोभय-मितिप्रतीत्यभावो न हेतुतयोक्तः तदुभयत्वेनैकस्य सत्त्वोपगमेऽपि उभयत्राधिकरणवृत्तितायास्तादृशप्रतीतिविषयतया एकस्मिन्नधि-करणवृत्तित्वाभावे तादृशप्रतीतेर्भ्रमत्वस्यावश्यकत्वात् तादृशप्रमा-विरहोपपत्तेः।

---

अनुमानदीधितिः।

अत्यन्तपदस्यात्यन्ताभावत्वनिरूपकप्रतियोग्यसामा-

नाधिकरण्यस्य अत्यन्ताभावत्वनिरूपकप्रतियोगितायाश्च लाभाय अन्यथा सर्व्वस्यैवाभावस्य स्वसमानाधिकरणाभावान्तरभिन्नत्वात्तद्भेदस्य स्वरूपानतिरिक्तत्वात् प्रतियोग्यसामानाधिकरण्यस्यैव दुर्ल्लभत्वापत्तेः सर्व्वेषामेवाभावानां हेतुसमानाधिकरणात्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणाभावान्तरात्मकस्य स्वभेदस्य प्रतियोगित्वादभावसाध्यकाव्याप्तेश्चेति सम्प्रदायविदः ।

---

गादाधरी विवृतिः ।

ननु प्रतियोग्यसमानाधिकरण्यस्याभावविशेषणत्वे लक्षणेऽत्यन्तपदवैयर्थ्यं धूमाद्यधिकरणनिष्ठवह्न्यादिभेदस्य प्रतियोगिसमानाधिकरत्वेनैव साध्यतावच्छेदकस्य तत्प्रतियोगितावच्छेदकताया अकिञ्चित्करत्वादित्याशङ्कया साम्प्रदायिकोपदर्शितमत्यन्तपदप्रयोजनमाह, 'अत्यन्तपदञ्चेति, 'अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यस्येति, 'लाभायेत्यग्रिमेण सम्बन्धः, एवं यस्य प्रतियोगिनोऽत्यन्ताभावस्तादृशप्रतियोग्यसामानाधिकरण्यपर्य्यन्तस्याभावविशेषणत्वलाभायेत्यर्थः. 'अत्यन्ताभावत्वनिरूपकप्रतियोगिताया इति प्रतियोगितानवच्छेदकेत्यत्र या प्रतियोगिता निविष्टा तत्रात्यन्ताभावत्वरूपानुयोगितानिरूपकत्वविशेषणस्य च लाभायेत्यर्थः । क्रमेण व्यावृत्तिमाह, 'अन्यथेति,

'सर्व्वस्यैभावस्येति हेतुसमानाधिकरणाभावत्वेनोपादेयस्य सर्व्वस्य गोत्वाद्यभावस्येत्यर्थः, 'स्वसमानाधिकरणाभावान्तरभिन्नत्वात्' स्वं यस्य समानाधिकरणं तादृशघटत्वाद्यभावभेदवत्त्वादित्यर्थः, 'स्वरूपानतिरिक्तत्वात्' गोत्वाद्यभावरूपाधिकरणस्वरूपत्वात्, अभावाधिकरणकाभावप्रतियोगिकाभावस्याधिकरणभूताभावरूपतेति सिद्धान्तादितिभावः। 'प्रतियोग्यसमानाधिकरणाभावस्य दुर्लभत्वापत्तेरिति गोत्वाद्यभावानामत्यन्ताभावत्वनिरूपकगोत्वादिरूपप्रतियोग्यसमानाधिकरणत्वेऽपि स्वनिष्ठभेदत्वनिरूपकघटत्वाद्यभावरूपप्रतियोगिसमानाधिकरणत्वनियमादिति भावः। न च भावस्वरूपस्यैवाभावस्य तादृशत्वं सुलभमितिवाच्यम्। तस्यापि स्वसमानाधिकरणभेदभिन्नत्वेन तद्दोषतादवस्थ्यात्, भेदभेदस्यानवस्थाभयेनाधिकरणस्वरूपताङ्गीकारात् (१)। प्रतियोग्यसामानाधिकरण्ये सम्बन्धविशेषानिवेशे सर्व्वत्रैव तादृशाभावाप्रसिद्धेः प्रतियोगितावच्छेदकसम्बन्धस्य साध्यतावच्छेदकसम्बन्धस्य वा तत्र निवेशे विशेषणताविशेषसम्बन्धेन यत्र साध्यता तत्र तदप्रसिद्धिर्द्रष्टव्या (२)

---

(१) 'न चेत्यादिरङ्गीकारादित्यन्तः पाठोबहुषु आदर्शपुस्तकेषु नास्ति।

(२) प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यनिवेशे सर्व्वत्र न तादृशाभावाप्रसिद्धिः किन्तु विशेषणताविशेषेण साध्यकस्थले, तन्मते अभावे साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वात् साध्यतावच्छेदकसम्बन्धस्य तत्र निवेशे विशेषणताविशेषसम्बन्धेन यत्र साध्यता तत्र तदप्रसिद्धिर्द्रष्टव्येति पा०। तदप्रसिद्धिर्द्रष्टव्या इत्यनन्तरम् अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यनिवेशेऽपि इति सन्दर्भात् पूर्व्वं 'प्रतियोगितानवच्छेदकेत्यत्र प्रतियोगितायाम् अत्यन्ताभावत्वनिरूपकत्वविवक्षाप्रयोजनमाह, 'हेतुसमानाधिकरणेति, तथाच

अत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यनिवेशेऽपि सर्व्वेषामेवाभावानाम् किञ्चिद्विशिष्ट(१)त्वाभावादिरूपप्रतियोगिसामानाधिकरण्यनियमात्तदसमानाधिकरणाप्रसिद्धिः यादृशप्रतियोगितेत्यादिना वक्ष्यमाणरीतेरनुसरणे तु प्रतियोगिन्यत्यन्ताभावत्वनिवेशवैयर्थ्यमत्रास्वरसवीजमेव । 'हेतुसमानाधिकरणेति हेतुसमानाधिकरणो योऽत्यन्ताभावत्वनिरूपकप्रतियोग्यसामानाधिकरण्यवान् गोत्वाभावादिर्घटत्वाभावादिरूपसाध्यस्य तन्निष्ठघटत्वाभावभेदात्मकस्य तस्य प्रतियोगित्वादित्यर्थः, 'अभावसाध्यकेति घटत्वाभावादिसाध्यकपटत्वादिसाधनेत्यर्थः । अत्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशेऽपि सम्बन्धान्तरावच्छिन्नसाध्यात्यन्ताभावप्रतियोगितावारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वविशेषणध्रौव्ये एतद्विशेषणमनर्थकं साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसामानाधिकरण्यं निवेश्य सम्बन्धान्तरावच्छिन्नाभाववारणेऽपि सर्व्वेष्वेवाभावेषु उक्तरीत्या अत्यन्ताभावत्वनिरूपकप्रतियोगिसामानाधिकरण्यस्यापि सत्त्वेन साध्यतावच्छेदकसम्बन्धेन प्रकृतप्रतियोगितावदसामानाधिकरण्यस्यैवाभावे निवेशनीयतया साध्यनिष्ठप्रतियोगिताश्रयासामानाधिकरण्यस्य सद्धेत्वधिकरणवृत्तित्वविशिष्टाभावेऽसत्त्वेनाव्याप्त्यप्रसक्तिरित्यस्वरसवीजम् ।

---

घटभिन्नं पटत्वादित्यादौ अत्यन्ताभावत्वनिरूपकप्रतियोग्यसमानाधिकरणजलत्वाद्यभावादौ घटभेदभेदस्य सत्त्वात् तस्याधिकरणस्वरूपत्वात् तत्प्रतियोगितावच्छेदकत्वं तादृशभेदत्वेऽस्तीत्यव्याप्तिः इत्यधिकः पाठः कुत्रचिदादर्शपुस्तके वर्त्तत इति ।

(१) पूर्व्वक्षणादिविशिष्टेति पा॰ ।

अनुमानदीधितिः ।

अथ यदा गोत्वं तदा गौरित्यत्रातिव्याप्तिः प्रलयस्य गोध्वंसवत्त्वेन गवात्यन्ताभावानधिकरणत्वात् संसर्गाभावमात्रोक्तावपि यदा स्पन्दस्तदा द्व्यणुकं यदा अदृष्टं तदा जन्यं ज्ञानं दुःखं वा यदा तस्यादृष्टं तदा तदीयं ज्ञानमित्यादावतिव्याप्तिः द्व्यणुकत्वादेर्द्व्यणुकादिशून्यखण्डप्रलयादिनिष्ठध्वंस-प्रागभावप्रतियोगितानवच्छेदकत्वात् न हि तयोः सामान्याभावत्ववादिमतेऽपि एकविशेषप्रागभावविशेषान्तरध्वंसवत्यपि समये सामान्यावच्छिन्नध्वंस-प्रागभावयोः सम्भव इति चेन्न, प्रतियोगिमत इव ध्वंसादिमतोऽपि कालस्यात्यन्ताभाववत्त्वेऽविरोधात् अन्यथा अत्यन्ताभावस्य कालमात्रावृत्तित्वप्रसङ्गात् । इयांस्तु विशेषो यदेकस्य देशभेदावच्छिन्नं तथात्वमपरस्य तु स्वरूपावच्छिन्नमिति देशे कालस्येव कालेऽपि देशस्यावच्छेदकत्वात् तच्छून्ये च काले तदभावस्य प्रतियोगिव्यधिकरणत्वात् ।

---

गादाधरी विवृतिः ।

सम्प्रदायानुमतात्यन्ताभावत्वनिरूपकप्रतियोगितानिवेशपक्षेऽतिव्याप्तिमाशङ्कते, 'अथेत्यादिना, 'यदा गोत्वमिति, कालिकसम्ब-

न्धेन गो-गोत्वयोः साध्य-हेतुभावलाभाय गोमानयं गोत्वादित्यादिप्रतिज्ञा-हेतू अनभिधाय कालिकसम्बन्धावच्छिन्नवृत्तिबोधकदाप्रत्ययघटितोदाहरणाभिधानम्, एवमग्रेऽपि, 'प्रलयस्येति, व्यभिचारनिरूपकहेत्वधिकरणस्येत्यादिः, ध्वंसवत्त्वेनात्यन्ताभावानधिकरणत्वादिति प्राचामनुमतं ध्वंस-प्रागभावयोरत्यन्ताभावविरोधित्वमादृत्य एतदेवाग्रे निराकृत्य समाधेयम्। अथ कालिकसम्बन्धेन ध्वंसादिमत्यपि कालेऽत्यन्ताभाववृत्तावविरोधः महाकालादौ समवायादिसम्बन्धावच्छिन्नरूपात्यन्ताभावस्य सर्व्वानुमतत्वात्। न च कालिकसम्बन्धावच्छिन्नगवात्यन्ताभावस्य तत्सम्बन्धावच्छिन्नगोध्वंसाद्यभावरूपताया अत्यन्ताभावस्य त्रितयप्रतियोगिकत्वमङ्गीकुर्व्वाणैः प्राचीनैरुपगमात् कालिकसम्बन्धरूपप्रतियोगितावच्छेदकसम्बन्धेन गोध्वंसवति तत्सम्बन्धावच्छिन्नगवात्यन्ताभावस्य वृत्तिर्न तेषामनुमतेति वाच्यम्। एवमपि कालिकसम्बन्धेन प्रतियोगिमत्यपि तत्सम्बन्धावच्छिन्नगवात्यन्ताभावस्य कालिकसम्बन्धेन वृत्तावविरोधात् तेन सम्बन्धेन प्रलये वर्त्तमानमत्यन्ताभावमादायातिव्याप्तिवारणसम्भवात् अभावस्य सम्बन्धविशेषनिवेशे प्रयोजनाभावात्। न च प्रतियोग्यसामानाधिकरण्यविशेषणाघटितापि व्याप्तिरनुमित्यौपयिकी तद्विशेषणानुपस्थितिदशायामप्यनुमितेरानुभविकताया वक्ष्यमाणत्वात् तत्र चाभावस्य सम्बन्धविशेषोऽवश्यमेव प्रवेश्यः अन्यथा हेतुमति कालिकादिसम्बन्धेन वर्त्तमानं साध्याभावमादायाव्याप्तेरिति तादृशव्याप्तेरेव उक्तस्थले प्रमाप्रसङ्गपरोऽयं ग्रन्थ इति वाच्यम्। यत्र हेतु-

मति साध्याभावः कालिकादिसम्बन्धेन वर्त्तते तत्र प्रतियोग्यसामा-
नाधिकरण्यघटितव्याप्तेरेव सद्धेतुतानिर्व्वाहात् प्रतियोग्यसामाना-
धिकरण्यागर्भव्याप्तिग्रहस्य तत्र भ्रमत्वोपगमे क्षतिविरहात् तादृश-
व्याप्तेरप्यभावस्य सम्बन्धविशेषाप्रवेशात्। मैवं, प्रतियोग्यसामानाधि-
करण्यानुपस्थितिदशायां सत्तावान् द्रव्यत्वादित्यादावप्यभ्रान्तस्या-
नुमितिरनुभवसिद्धा तदनुरोधेन भावसाध्यके दैशिकविशेषणता-
सम्बन्धेन हेतुमद्वृत्तित्वगर्भाया अपि व्याप्तेरनुमितिप्रयोजकता
वाच्या तथा सति तादृशव्याप्तिप्रमात उक्तस्थलेऽनुमितिप्रसङ्गपरतया
एतद्ग्रन्थस्य सामञ्जस्यात्। न च प्रतियोग्यसामानाधिकरण्यगर्भ-
व्याप्तावभावस्य सम्बन्धविशेषानिवेशात् अभावीयसम्बन्धविशेषा-
गर्भप्रतियोग्यसामानाधिकरण्यगर्भव्यभिचारग्रहविरोधित्वेनैव प्रति-
योग्यसामानाधिकरण्यगर्भ-तदगर्भव्याप्ती अनुगमय्य तयोरनुमित्यौ-
पयिकताया वक्तव्यतया अभावीयसम्बन्धविशेषघटितव्याप्तिग्रहस्य
तादृशव्यभिचारग्रहाप्रतिबन्धकतया न तादृशव्याप्तेरनुमित्युपयो-
गितानिर्व्वाह इति वाच्यम्। तादृशव्याप्तिसंग्रहायैवाभावीय-
सम्बन्धविशेषघटित-प्रतियोग्यसामानाधिकरण्यघटितव्यभिचारग्रह-
विरोधित्वेन व्याप्तीनामनुगमनीयत्वात् तावताप्यभावीयसम्बन्ध-
विशेषघटितप्रतियोग्यसामानाधिकरण्यघटितव्याप्तेः संग्रहसम्भ-
वात् एवं सत्यव्यावर्त्तकाभावीयसम्बन्धविशेषघटितप्रतियोग्यसामा-
नाधिकरण्यघटितव्याप्तिज्ञानादप्यनुमितिः स्यादिति चेदिष्टमेवै-
तत्, एवं सति प्रतियोग्यसामानाधिकरण्यगर्भव्याप्तिप्रमातोऽ-
प्युक्तस्थलेऽनुमितिप्रसङ्गो दुर्व्वार इति चेत् का क्षतिर-

स्माकं (१)। वस्तुतस्तु दीधितिकृता स्वयं निष्कर्षणीये हेतुमति प्रतियोग्यनधिकरणत्वनिवेशकल्पे प्रतियोग्यसामानाधिकरण्यघटितव्याप्यभावभावीयसम्बन्धविशेषनिवेशस्य निष्प्रयोजनत्वेऽपि प्रतियोग्यसामानाधिकरण्यविशिष्टहेतुमद्वृत्तितागर्भयथाश्रुतव्याप्तौ तदीयसम्बन्धविशेषनिवेशनमावश्यकम् अन्यथा संयोगि द्रव्यत्वादित्यादौ प्रतियोग्यनधिकरणगुणादिवृत्तित्वविशिष्टस्यापि संयोगाद्यभावस्य कालिकसम्बन्धेन हेत्वधिकरणकालवृत्तितया अव्याप्तिप्रसङ्गात्, एकाधिकरणवृत्तित्वविशिष्टस्याप्यन्यसम्बन्धेनाधिकरणान्तरवृत्तित्वात् प्रतियोगिसामानाधिकरण्याभावनिवेशकल्पेऽपि तद्विशिष्टस्य संयोगाद्यभावस्य कालिकसम्बन्धेन कालवृत्तित्वात् तत्कल्पेऽप्यव्याप्तेरावश्यकत्वात्। न च प्रतियोगिसामानाधिकरण्यविशिष्टस्य तस्य कालवृत्तित्वे प्रतियोगिसामानाधिकरण्याभावविशिष्टस्य न तद्वृत्तित्वसम्भवः भावाभावविशिष्टस्य एकाधिकरणवृत्तित्वे प्रतियोगिसामानाधिकरण्याभावविशिष्टसंयोगाद्यभावस्य दैशिकविशेषणतयापि द्रव्यवृत्तित्वप्रसङ्गादिति वाच्यम्। विरोधिनोर्भावाभावयोः कालिकसम्बन्धेन एकाधिकरणवृत्तितावद्भावाभावविशिष्टस्यापि कालिकसम्बन्धेन एकत्र वृत्तौ विरोधाभावात्। यद्यप्यभावस्य दैशिकविशेषणतानिवेशे अभावसाध्यके व्यभिचारिणि

---

(१) इष्टमेवैतत् इति पाठात् अनन्तरं 'वस्तुतस्तु इति पाठात् पूर्वं 'न चैवं सति प्रतियोग्यसामानाधिकरण्यगर्भाभावीयसम्बन्धघटितव्याप्तेः भ्रमातोऽप्युक्तस्थलेऽनुमितिप्रसङ्गो दुर्वार इति वाच्यम्। तादृशव्याप्तिज्ञानादनुमित्यापादनस्यापि इष्टत्वात् इत्यधिकः पाठः कुत्रचिदादर्शपुस्तके वर्त्तते।

भावस्य दैशिकविशेषणतानभ्युपगमेऽतिव्याप्तिः अभावसाध्यके साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिवेशे समवायसम्बन्धावच्छिन्नजात्यभावसाध्यकजातित्वादिहेतावव्याप्तिः जात्यादिरूपे हेतुमति तादृशेन समवायेन सम्बन्धेन वृत्तेरप्रसिद्धेः, तथापि साध्यनिरूपितप्रतियोगितावच्छेदकातिरिक्तसम्बन्धेन या साध्याभावस्य वृत्तिस्तदन्यहेतुमद्वृत्तेः प्रकृतप्रतियोगितानिरूपितानुयोगितावच्छेदकसम्बन्धेन हेतुमति वृत्तेर्वा अभावविशेषणत्वोपगमान्न दोषः उक्तस्थले हेतुमति काले कालविशेषवृत्तित्वविशिष्टनित्यस्यात्यन्ताभावप्रसिद्ध्या (१) अतिव्याप्तिसङ्गतिः। अत्यन्ताभावत्वघटकनित्यत्वांशं परित्यज्य ध्वंससाधारणं संसर्गाभावत्वं निवेश्य महाप्रलये गोत्वरूपसामान्यधर्म्मावच्छिन्नप्रतियोगिताकध्वंसोपगन्तृमते ध्वंसमादाय उक्तस्थलातिव्याप्तिः शक्यते वारयितुमित्याशङ्कायामाह, 'संसर्गाभावेति, दैशिकविशेषणतयापि ध्वंसस्य कालवृत्तित्वमित्याशयेन उक्ताशङ्कासङ्गतिः, अन्यथा अभावस्य तादृशसम्बन्धेन वृत्तित्वनिवेशेऽत्यन्ताभावमिव ध्वंसमप्यादायातिव्याप्तेर्दुर्व्वारत्वात्। न च प्रतियोग्यधिकरणमहाकाले गोध्वंसस्य दैशिकविशेषणतासत्त्वेऽपि प्रतियोग्यनधिकरणे प्रलये तस्य तादृशसम्बन्धोऽप्रामाणिक इति वाच्यम्। यदुपाधिविशिष्टस्य प्रतियोग्यधिकरणत्वं तदन्योपाधिविशिष्टस्यैव महाकालस्य तदभावाधिकरणतया महाकालस्य दैशिकविशेषणतया ध्वंसाधिकरणत्वे प्रलयात्मकोपाधेरपि तादृश-

(१) पूर्व्वक्षणवृत्तित्वविशिष्टघटत्वात्यन्ताभावप्रसिद्धेरित्यर्थः।

सम्बन्धेन तदाधारताया आवश्यकत्वात् अन्यथा प्रलये गौर्नास्तीति व्यवहारानुपपत्तेः (१)। 'यदा स्पन्द इति, अत्र व्यभिचारनिरूपकाधिकरणं खण्डप्रलयः, जन्यद्रव्यानधिकरणे तस्मिन् द्व्यणुकासत्त्वात् पुनर्द्व्यणुकोत्पत्त्याद्यनुरोधेन परमाणूनां स्पन्दस्वीकारस्यावश्यकत्वात्, तथाच हेत्वधिकरणे तत्र द्व्यणुकसामान्यध्वंसप्रागभावयोरप्यसत्त्वादतिव्याप्तिरिति भावः (२)। द्व्यणुकनाशानुगुणक्रियाया उत्तरसंयोगनाश्याया अधिकरणे चरमपरमाणुसंयोगनाशरूपमहाप्रलयपूर्व्ववर्त्तीयक्षणे द्व्यणुकसामान्यध्वंससत्त्वादत्राप्यतिव्याप्तिर्न विचारसहेत्यतः 'यदादृष्टमिति, ज्ञानत्वमात्रेण साध्यतायां प्रलये ईश्वरज्ञानसत्त्वादयं सद्धेतुरेव इत्यतः 'जन्यमिति, नित्यसुखाभिव्यक्तिर्मुक्तिरितिमते खण्डप्रलयेऽपि मुक्तात्मनि जन्यज्ञानसत्त्वात् सद्धेतुत्वं सम्भवतीत्यतः 'दुःखं वेति, जन्यमात्रं प्रत्यदृष्टस्य हेतुतया महाप्रलयाव्यवहितप्राक्क्षणेऽपि तज्जनकीभूतस्यादृष्टस्यावश्यकत्वमिति तदा जन्यज्ञानत्व-दुःखत्वाद्य-

---

(१) अथवा दीधितिकृन्निष्कर्षणीयप्रतियोगिवैयधिकरण्यकत्वाभिप्रायेणेदं तत्कल्पे प्रयोजनाभावात् अभावे वृत्तिविशेषानिवेशात्। नचाभावे वृत्तिनिवेशे कालिकसम्बन्धेन गवात्यन्ताभावस्यापि प्रलयावृत्तेः संसर्गाभावमात्रपरत्वोक्तिरिति वाच्यम्। प्रतियोगितावच्छेदककालिकसम्बन्धेन तत्प्रतियोगिगोध्वंसस्य हेत्वधिकरणेऽबाधात् गवात्यन्ताभावस्य प्रतियोगिव्यधिकरणत्वाभावात् ध्वंसस्य तत्तत्प्रतियोगिनोऽत्यन्ताभावस्य प्रतियोगितावच्छेदकदैशिकविशेषणतासम्बन्धेन कालेऽसत्त्वात् प्रतियोगिवैयधिकरण्यमक्षतमेव। इत्यधिकः पाठः कुत्रचिदादर्शपुस्तके वर्त्तते।

(२) इत्यवधेयमिति पा०।

वच्छिन्नध्वंससत्त्वान्नोपदर्शितस्थलयोरतिव्याप्तिः सम्भवतीत्यतः स्थलान्तरमाह, 'यदा तस्येति, यदात्मसमवेतमदृष्टं न महाप्रलयजनकं स एव तत्पदेन विवक्षितः व्यभिचारश्चात्र खण्डप्रलये सुषुप्त्यादौ च बोध्यः। खण्डप्रलयनिष्ठद्व्यणुकादिध्वंसस्य द्व्यणुकत्वादिरूपसामान्यधर्म्मावच्छिन्नप्रतियोगिताकत्वासम्भवं व्युत्पादयति, 'न हीत्यादिना, 'तयोः' ध्वंस-प्रागभावयोः, 'सामान्याभावत्ववादिमतेऽपि' सामान्यधर्म्मावच्छिन्नप्रतियोगिताकत्ववादिमतेऽपि, ध्वंसप्रागभावयोरत्यन्ताभावविरधित्वमते न तयोस्तथात्वमित्येतत्सूचयितुं 'मतेऽपीति, 'एकविशेषेति एकविशेषप्रागभाववति न सामान्यावच्छिन्नध्वंसस्य विशेषान्तरध्वंसवति च न सामान्यधर्म्मावच्छिन्नप्रागभावस्य सम्भव इत्यर्थः, अन्यूनानतिरिक्तवृत्तिधर्म्मस्यैवावच्छेदकतया तत्कालीनध्वंसादिप्रतियोगिताशून्यानागतादिपदार्थसाधारणधर्म्मस्य तादृशध्वंसादिप्रतियोगितावच्छेदत्वासम्भवादिति भावः। यद्यप्येवं महाप्रलयवृत्तयोऽपि गोध्वंसाः प्रत्येकमेकैकगोव्यक्तिमात्रप्रतियोगिका इति न कस्यापि ध्वंसस्य प्रतियोगितायाः समनियतं गोत्वं, तथापि चरमगोध्वंसस्य यावद्गोप्रतियोगिकत्वोपगमे तत्प्रतियोगितावच्छेदकत्वं गोत्वस्य सम्भवतीत्यभिप्रायेण संसर्गाभावत्वनिवेशे पूर्व्वोक्तस्थलमुपेक्ष्य द्व्यणुकादिसाध्यकस्पन्दादिहेतुकस्थलेऽतिव्याप्तिरभिहिता। वस्तुतस्तु ध्वंस प्रागभावयोर्व्यधिकरणप्रतियोगिकत्वविरहाच्चरमगोध्वंसस्यापि यावद्गोप्रतियोगिकत्वं न सम्भवतीति ध्येयम्। विरोधिनः प्रतियोगिनोऽधिकरणकाल एव चेदभावोवर्त्तते तदा सुतरां ध्वंस-प्रागभाववति कालेऽसौवर्त्तते इति

सूचनाय 'प्रतियोगिमत इवेति दृष्टान्तः। 'विरोधाभावात्' (१) बाधकाभावात्, तथाच तत्तद्देशत्वधिकरणे प्रलयादौ गोत्वाद्यवच्छिन्नाभावसत्त्वान्नोक्तस्थलेष्वतिव्याप्तिरिति भावः। न च प्रलये गोत्वाद्यवच्छिन्नाभावोऽप्रामाणिकः प्रत्यक्षायोगात्, अनुमानस्याप्रयोजकत्वादिति वाच्यम्। प्रलये गौर्नास्तीत्यादिशब्दस्यैव प्रमाणत्वात्, नहि तादृशवाक्यस्याप्रामाण्यं कश्चिदुपैति। न च ध्वंसादिरेव तत्र नञर्थोनात्यन्ताभाव इति वाच्यम्। अन्वयितावच्छेदकसमानाधिकरणप्रतियोगिताकाभावमात्रस्य नञा प्रतिपादनेऽतिप्रसङ्गात्। तदवच्छिन्नप्रतियोगिताकाभावबोधकताया एव तस्य व्युत्पन्नतया अत्यन्ताभावमात्रस्य सामान्यधर्म्मावच्छिन्नप्रतियोगिताकत्वमते ध्वंसादेर्नञा प्रतिपादनासम्भवात्। 'अन्यथा' प्रतियोगिमति 'ध्वंसप्रागभाववति च काले कालिकसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यावृत्तौ, 'अत्यन्ताभावस्य' तादृशात्यन्ताभावस्य, 'कालमात्रावृत्तित्वेति, दैशिकविशेषणतयेत्यादिः। ननु ध्वंस-प्रागभाववति अत्यन्ताभाववृत्त्या तस्य तदविरोधितावत्प्रतियोगिमति तद्वृत्त्या तस्य प्रतियोग्यविरोधिताप्यापाद्यताविशेषादित्यत आह, 'इयांस्त्विति, 'एकस्य' प्रतियोगिमतः कालस्य, 'देशभेदावच्छिन्नं' प्रतियोग्यनवच्छेदकदेशावच्छिन्नं, 'तथात्वं' दैशिकसम्बन्धेन कालिकसम्बन्धावच्छिन्नाभाववत्त्वं, तथाच प्रतियोग्यभावयोरेका-

(१) 'अविरोधात्' इत्यत्र 'विरोधाभावादिति कस्यचित् दीधितिपुस्तकस्य पाठमनुसृत्य तादृशपाठो धृतो भट्टाचार्य्यैः।

वच्छेदेन एकत्रावर्त्तमानत्वरूपविरोधित्वं तावताप्यक्षतमेवेति भावः। 'अपरस्य' ध्वंसादिमतः, 'स्वरूपावच्छिन्नं' ध्वंसाद्यधिकरणतावच्छेदकरूपावच्छिन्नं, 'तथात्वमित्यनुषज्यते, तथाच एकावच्छेदनैकत्र वर्त्तमानतया ध्वंसाद्यविरोधित्वमत्यन्ताभावस्येति भावः। ननु काले वृत्तौ देशस्यावच्छेदकत्वे किं मानमत आह, 'देशे कालस्येवेति, यथा देशे दैशिकसम्बन्धावच्छिन्नाभावस्य वृत्तौ कालस्यावच्छेदकत्वं इदानीमत्र गौर्नास्तीत्यादिप्रतीतिबलात् तथा काले कालिकसम्बन्धावच्छिन्नाभाववृत्तावपि देशविशेषस्यावच्छेदकत्वं तथाविधप्रतीतिबलादेव तादृशप्रतीतेः कालावच्छेदेन देशवृत्तिर्देशावच्छेदेन वा कालवृत्तिर्विषय इत्यत्र विनिगमकाभावात् अवच्छेदकत्वाधिकरणत्वयोरेव सप्तम्यर्थत्वात् इति भावः। प्रतियोगिमत्यपि काले गवात्यन्ताभावस्य वृत्तौ तस्यासमानाधिकरणान्तेन वारणात् कथं तमादाय उक्तातिव्याप्तिर्वार्थ्यते इत्यत आह, 'तच्छून्ये चेति प्रतियोगिशून्ये प्रलयादावित्यर्थः, 'तदभावस्य' गवात्यन्ताभावस्य, 'प्रतियोगिव्यधिकरणत्वात्' प्रतियोगिसामानाधिकरण्याभाववत्त्वात्, सामानाधिकरण्यस्याव्याप्यवृत्तितामत एव प्रतियोगिसामानाधिकरण्याभावस्याभावविशेषणत्वात् अन्यथा संयोगि सत्त्वादित्यादावेवातिव्याप्तिः तस्य व्याप्यवृत्तितापक्षे च प्रतियोग्यनधिकरणवृत्तित्वस्यैव निवेशयितव्यतया प्रलयादिवृत्तिगवात्यन्ताभावस्यान्यदा प्रतियोगिसमानाधिकरणत्वेऽपि लक्षणघटकत्वाव्याघातादिति भावः।

दीधितिः ।

न च संसर्गाभावविशेषोऽत्यन्ताभावः संसर्गाभावत्वञ्च संसर्गारोपजन्यप्रतीतिविषयाभावत्वरूपं जन्यताघटकनियमघटितमिति वाच्यम् । तद्वदन्यावृत्तित्वरूपनियमस्य तत्र घटकत्वात्, एवं नियमान्तरस्यात्र प्रवेशेऽपि न क्षतिरित्याहुः । वक्ष्यते च नियमाघटितमेव संसर्गाभावादिलक्षणम् अनुपदमेव च विवेचयिष्यते संसर्गाभावत्वप्रवेशे प्रयोजनविरहोऽव्याप्तिश्च ।

---

गादाधरी विवृतिः ।

संसर्गाभावत्व-तद्घटितात्यन्ताभावत्वयोर्व्याप्तिघटितत्वेनानवस्थामाशङ्कते, 'न चेति, 'संसर्गाभावविशेषः' सदातनसंसर्गाभावः, 'संसर्गारोपः' तादात्म्यातिरिक्तसम्बन्धेन प्रतियोग्यारोपः, 'तद्वदन्यावृत्तित्वेति स्वाव्यवहितपूर्व्वक्षणावच्छेदेन तद्वतोऽन्यस्मिन् वर्त्तते यद्यत्तदन्यत्वेत्यर्थः, 'तत्र' जन्यत्वे, षष्ठ्यर्थे सप्तमी 'नियमान्तरस्य' विशिष्टधीव्यावृत्तविशिष्टधीनियामकत्वरूपसम्बन्धत्वघटकनियमस्य, 'अत्र' संसर्गाभावत्वशरीरे, 'न क्षतिरिति, तद्वदन्यावृत्तित्वरूपनियमस्यैव तत्र निवेशनीयत्वादिति भावः । स्वमते नियमानन्तर्भावस्यानुपदं वक्ष्यमाणत्वादाहुरित्युक्तम् । 'नियमाघटितमिति, आरोपस्याभावबुद्धि-

हेतुताया निर्युक्तिकत्वात् तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्यैव संसर्गाभावत्वरूपत्वादिति भावः। 'प्रयोजनविरह इति, साध्यतावच्छेदकसम्बन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तादृशप्रतियोगितानवच्छेदकत्वस्य निवेशनीयतया अन्योन्याभावत्वनिरूपकप्रतियोगितामादाय दोषाप्रसक्तिरिति भावः। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशकत्वमभिप्रेत्याह, 'अव्याप्तिश्चेति, तन्मते सम्बन्धान्तरावच्छिन्नसाध्याभावमादाय दोषवारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताया एव निवेशनीयतया तादात्म्यसम्बन्धेन यत्र साध्यता तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नसंसर्गाभावप्रतियोगित्वाप्रसिद्ध्या अव्याप्तिरप्यापाद्येतेत्यर्थः।

---

दीधितिः।

अथ ज्ञानवान् द्रव्यत्वात् विशेषगुणवान् मनोऽन्यद्रव्यत्वात् जातिमान् भावत्वादित्यादौ समवायेन ज्ञानादेः साध्यतायामतिव्याप्तिः साध्यशून्यानामपि हेतुमतां विषयत्व-विशेषणत्वैकार्थसमवायैः साध्यवत्त्वादिति चेन्नैवं, प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनो यदधिकरणं सम्बन्धि वा तद्वृत्तित्वाभावस्योक्तत्वात् भवति चैवमन्योन्याभावोऽपि प्रतियोग्यसमानाधिकरणः तद्विशिष्टस्य च हेत्वधिकरणवृत्तित्वं वाच्यं

**तेन नाव्याप्यवृत्तिसाध्यकासंग्रहः, तद्वृत्तिभिन्नत्वन्तु नार्थः अव्याप्यवृत्तिसाध्यकव्यभिचारिण्यतिप्रसङ्गात् ।**

---

### गदाधरी विवृतिः ।

ननु विषयतया वृत्त्यनियामकत्वे प्रतियोगिवैयधिकरण्यस्थले प्रतियोगिसम्बन्धित्वानिवेशपक्षे पूर्व्वस्थलीयातिव्याप्त्यसङ्गतिरित्यत आह, 'विशेषेति, पृथिव्यादिचतुष्के रूप-रस-गन्ध-स्पर्श-स्नेह-सांसिद्धिकद्रवत्वान्यतमसत्त्वात् आत्माकाशयोर्बुद्ध्यादिशब्दान्यतमसत्त्वात् व्यभिचारनिरूपकाधिकरणत्वं दिक्कालयोरेव कालिक-दैशिकविशेषणतामादायातिव्याप्तिशङ्का इत्याशयः । दिगुपाधीनां दिशि वृत्त्यवच्छेदकत्वमेव न त्वधिकरणत्वमिति मते मनसो-मूर्त्तत्वेऽपि न दैशिकविशेषणतया अधिकरणत्वमिति, द्रव्यत्व-मात्रस्य हेतुत्वे मनोरूपहेत्वधिकरण एव साध्याभावः प्रतियोगि-व्यधिकरण इति नातिव्याप्तिसम्भव इति 'मनोऽन्येति । ननु दिक्कालौ नेश्वरादतिरिच्येत इति मते (१) मनोन्यद्रव्यत्वं सद्धेतुरेव इत्यतः स्थलान्तरमाह, 'जातीति, (२) 'साध्यशून्यानामपीति, साध्यताव-च्छेदकसम्बन्धेनेत्यादिः, 'एवम्' अधिकरणत्वस्थले सम्बन्धित्व-निवेशे, 'अन्योन्याभावोऽपीति, तथाच न तादात्म्यसम्बन्धेन साध्यतायामव्याप्तिरिति भावः । 'तद्विशिष्टस्य' प्रतियोग्यसामाना-धिकरण्यावच्छिन्नस्य, 'तेनेति, कपिसंयोगि एतत्त्वादित्यादौ

---

(१) हेत्वधिकरणदिक्कालयोरीश्वरानतिरिक्तत्वमत इति पा० ।

(२) इत्यतो दूषणान्तरमाह, 'जातिमानितीति पा० ।

कपिसंयोगादिरूपसाध्याभावस्य गुणादौ प्रतियोगिसामानाधिकरण्याभाववत्त्वेऽपि हेत्वधिकरणीभूतवृक्षादेर्न कपिसंयोगसामानाधिकरण्याभावविशिष्टकपिसंयोगाभाववत्त्वं यत्र सामानाधिकरण्यविशिष्टवत्त्वं तत्र तदभावविशिष्टाधिकरणत्वाप्रत्ययात्। अतः साध्याभावो न लक्षणघटक इति नाव्याप्तिरिति भावः। हेत्वधिकरणावच्छेदेन प्रतियोगिसामानाधिकरण्याभावं निवेश्याव्याप्तिवारणस्य सुकरत्वेऽपि मूलोपात्तहेतुसामानाधिकरण्याऽंशनिवेशवैयर्थ्यभिया न तथा विवक्षितं, सार्व्वभौमेण शङ्कितं (१) प्रतियोग्यसामानाधिकरण्यावच्छेदकीभूताधिकरणावच्छिन्नहेतुसामानाधिकरण्यस्याभावविशेषणत्वमुपेक्ष्य उपाध्यायमते प्रतियोग्यसमानाधिकरणत्वरूपविशेषणवैशिष्ट्यावच्छेदेन हेतुसामानाधिकरण्यरूपविशेषणवैशिष्ट्यनिवेश एव लाघवमित्यालोच्य तदनुयायिना दीधितिकारेण प्रतियोग्यसमानाधिकरण्यावच्छिन्नहेतुसामान्याधिकरण्यं निवेशितं यथाश्रुतमूललभ्योऽप्ययमेवार्थः, प्रतियोग्यसामानाधिकरण्य--हेतुसामानाधिकरण्ययोरुद्देश्य तावच्छेदक-विधेयभावस्य विवक्षितत्वात् उद्देश्यतावच्छेदक-विधेययोरवच्छेद्यावच्छेदकभावलाभस्य च व्युत्पत्तिसिद्धत्वात् प्रतियोग्यसामानाधिकरण्यस्य हेतुसामानाधिकरण्यावच्छेदकत्वे प्रतियोग्यसामानाधिकरण्यरूपहेतुतावच्छेदकावच्छिन्नसंयोगाभावादेः सत्तादिव्याप्यत्वप्रसङ्गः सत्तादिसामानाधिकरण्यव्याप्यतावच्छेदकरूपवत्त्वस्य सत्तादिव्याप्यत्वात् इति सार्व्वभौमोक्तदूषणं पुनरेत-

(१) आहतमिति पा०।

ष्मते निरवकाशं तादृशव्याप्तावनेन पारिभाषिकस्यैवाच्छेदकत्वस्य विवक्षितत्वात् तादृशस्य च तथाविधहेतुतावच्छेदकव्यावर्त्तकत्वात् । अन्यथा विषयितासम्बन्धेन घटत्वाद्यवच्छिन्नस्य ज्ञानत्वादिव्याप्यताया दुर्व्वारत्वात् तादृशसम्बन्धेन ज्ञानत्वादिसामानाधिकरण्ये ज्ञानविषयितारूपे घटत्वादेरवच्छेदकत्वात् । नन्वव्याप्यवृत्तिसाध्यकाव्याप्तिवारणाय प्रतियोगिसमानाधिकरणभिन्नत्वरूपमेव निवेश्यतां किमुक्तविवक्षया गुणादौ प्रतियोगिसामानाधिकरण्याभाववतोऽपि कपिसंयोगाभावादेः प्रतियोगिसमानाधिकरणभिन्नत्वविरहात् भेदस्याव्याप्यवृत्तित्वानुपगमात् इत्यत आह, 'तद्वृत्तीति प्रतियोगिमद्वृत्तीत्यर्थः, 'नार्थः' न प्रतियोग्यसमानाधिकरणपदेन विवक्षितः, (१) 'अव्याप्यवृत्तीति संयोगि सत्त्वादित्यादावित्यर्थः, 'अतिप्रसङ्गादिति, संयोगादिरूपसाध्याभावस्य द्रव्यादौ प्रतियोगिसमानाधिकरणतया तद्भिन्नत्वविरहेण लक्षणाघटकत्वादिति भावः ।

दीधितिः ।

अत्र च सामानाधिकरण्यवतो न तदभाववत्त्वं प्रतीतेरन्यथैवोपपादितत्वादित्यस्वरसात् प्रतियोगिवैयधिकरण्येत्यादिविशेषणं वक्ष्यति तच्च हेत्वधिकरणे बोध्यं प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यभावेति पुनरभावान्तार्थनिष्कर्षः ।

(१) विवक्षयितुं शक्यः इति पा॰ ।

## गादाधरी विवृतिः ।

अत्र सामानाधिकरण्यस्याव्याप्यवृत्तितायाः प्राक् स्वयं दूषितत्वात् प्रतियोगिसामानाधिकरण्यात्यन्ताभावनिवेशपक्षेऽप्यतिव्याप्तिवारणमशक्यमिति तादृशानुपपत्तेरेव 'यद्वेत्यादिकल्पान्तरानुसरणवीजतया व्याचष्टे, 'अत्र चेति प्रतियोग्यसामानाधिकरण्यनिवेशकल्पे चेत्यर्थः, 'इत्यस्वरसात्' इत्यनेनान्वयः, 'प्रतीतेः' संयोगाभावे गुणे न संयोगसामानाधिकरण्यमित्यादिप्रतीतेः, 'अन्यथा' गुणादिनिष्ठसामानाधिकरण्यावच्छेदकत्वाद्यभावविषयकतया। कपिसंयोगि एतत्त्वादित्यादावपि कपिसंयोगादिरूपसाध्याभावः प्रतियोगिवैयधिकरण्यावच्छेदकगुणादिवृत्तित्वाद्यवच्छिन्नतया लक्षणघटक एव इत्यव्याप्तिरत आह, 'तच्चेति प्रतियोगिवैयधिकरण्यावच्छेदकावच्छिन्नत्वञ्चेत्यर्थः, 'हेत्वधिकरणे' हेत्वधिकरणनिरूपितं, एतत्कल्पे च पृथक्हेतुसामानाधिकरण्यं न निवेश्यमेवेति भावः। एवञ्च हेत्वधिकरणनिरूपितप्रतियोग्यनधिकरणवृत्तित्वमेवाभावे विशेषणं देयं न तु तदवच्छेदकावच्छिन्नत्वमप्यनतिप्रयोजनकत्वात्, वृत्तौ प्रतियोग्यनधिकरणनिरूपितत्व-हेत्वधिकरणनिरूपितत्वयोर्निवेशापेक्षया तत्र हेत्वधिकरणनिरूपितत्वमात्रस्य हेत्वधिकरणे च प्रतियोग्यनधिकरणत्वस्य निवेशे लाघवमित्यालोच्य तथैव निष्कर्षयति, 'प्रतियोग्यनधिकरणीभूतेति प्रतियोगितावच्छेदकावच्छिन्नानधिकरणेत्यर्थः, तेन नोपदर्शितातिव्याप्तिः।

दीधितिः ।

ननु प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचित्तत्सामान्यस्य प्रतियोगितावच्छेदकयत्किञ्चिदवच्छिन्नस्य वा अनधिकरणमुक्तम्, आद्ये अव्याप्यवृत्तिसाध्यकाव्याप्तिः एकप्रतियोग्यधिकरणस्यापि तद्व्यक्त्यन्तरानधिकरणत्वात्। द्वितीये संयोगसामान्याभाववान् द्रव्यत्वाभाववान् वा सत्त्वादित्यादावतिव्याप्तिः साध्याभाववतो द्रव्यस्य तत्प्रतियोगिसंयोगविशेषभाववत्त्वात् नित्यत्वादिविशिष्टद्रव्यत्वाभावात्मकतत्प्रतियोगिनोऽधिकरणत्वाच्च स्वाभावाभावात्मकस्य विशिष्टस्यापि द्रव्यत्वस्य द्रव्यत्वानतिरेकात्। तृतीये कपिसंयोगाभाववान् आत्मत्वादित्यादावव्याप्तिः साध्याभावानां कपिसंयोगानां गुणानामधिकरणस्यात्मनस्तत्प्रतियोगितावच्छेदकगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वात्। मैवम्। यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तदनवच्छेदकत्वस्योक्तत्वात्।

---

गादाधरी विवृतिः ।

'यस्य कस्य चिदित्यादिषष्ठ्यन्तानां अनधिकरणत्वमित्यनेनान्वयः, 'प्रतियोगितावच्छेदकावच्छिन्नस्य यस्य कस्यचिदन-

धिकरणत्वं' स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणप्रतियोगिकभेदमात्रं, 'तत्सामान्यस्यानधिकरणत्वं' स्वप्रतियोगितावच्छेदकत्वेनानुगतीकृतप्रतियोगितावच्छेदकावच्छिन्नाधिकरणत्वावच्छिन्नप्रतियोगिताकभेदः, 'प्रतियोगितावच्छेदकयत्किञ्चिदिति प्रतियोगितावच्छेदकं तत्तद्व्यक्तित्वेन निवेश्य तदवच्छिन्नाधिकरणत्वावच्छिन्नभेदो वा विवक्षित इत्यर्थः, नव्यमते संयोगसामान्याभावस्य केवलान्वयितया तत्र साध्ये सत्तादिः सद्धेतुरेव इत्यतः 'द्रव्यत्वाभाववान् वेति, 'तत्प्रतियोगीति संयोगरूपसाध्याभावप्रतियोगीत्यर्थः, तत्तत्संयोगत्वाद्यवच्छिन्नाभावाभावस्य तत्तत्संयोगादेः संयोगसामान्यानतिरिक्तत्वादिति भावः। द्रव्यत्वरूपाभावस्य एकव्यक्तितया विशिष्टाभावरूपप्रतियोगिसामानाधिकरण्यं न घटत इत्यतस्तस्य किञ्चिद्विशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यमाह, 'नित्यत्वादीति, आदिना जन्यत्वादिपरिग्रहः। ननु विशिष्टाभावो विशिष्टस्यैव द्रव्यत्वस्य प्रतियोगी न तु शुद्धस्य तस्येति कथं शुद्धस्य द्रव्यत्वस्य प्रतियोगिवैयधिकरण्यानुपपत्तिरित्यत आह, 'स्वाभावेति। न च सर्व्वस्यैवाभावस्य पूर्व्वक्षणादिवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धया नातिव्याप्तिसम्भव इति वाच्यम्। प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशपक्षेऽसम्भवस्य साध्यतावच्छेदकसम्बन्धेन तद्वैयधिकरण्यनिवेशपक्षे च स्वरूपसम्बन्धावच्छिन्नसाध्यकस्थले साध्यतावच्छेदकसम्बन्धेन सर्व्वेषामेवाभावानां प्रतियोगिसमानाधि-

करणतया अव्याप्तेश्च प्रसक्त्या यत्सम्बन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतः तत्सम्बन्धावच्छिन्नतदभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व-साध्यतावच्छेदकधर्म्मावच्छिन्नत्वोभयाभाव एव विवक्षणीयः, एवञ्च उक्तस्थले स्वरूपसम्बन्धेन प्रतियोग्यनधिकरणत्वाप्रसिद्धावपि संयोगादिसम्बन्धेन घटाद्यभावीयप्रतियोग्यनधिकरणीभूतहेतुमन्निष्टघटाद्यभावीयप्रतियोगितासु स्वरूपसम्बन्धावच्छिन्नत्व-द्रव्यत्वाभावत्वाद्यवच्छिन्नत्वोभयाभाववत्त्वस्याक्षतत्वादतिव्याप्तिरित्यभिप्रायात् ।

यद्यपि वृक्षादेः स्वसमवेतकपिसंयोगसामान्यस्वरूपाभावप्रतियोगिनः समवेतसामान्याभावस्य द्रव्यमात्रसमवेताभावस्य चानधिकरणत्वात् वृक्षत्वादेरपि हेतुतायामव्याप्तिः सम्भवत्येव, तथापि सत्ता-द्रवत्वयोरेव समवेताभाव-द्रव्यमात्रसमवेताभावयोरभावत्वं न तु कपिसंयोगाद्यात्मकसमवेतमात्रस्य तथात्वं गौरवादित्याशयः, (१) आत्मनि च संयोगसामान्याभावस्य सर्व्वमतसिद्धत्वविरहात् 'कपीति, जन्यद्रव्यवृत्तिहेतुके हेत्वधिकरणजन्यद्रव्ये गुणसामान्याभावस्याप्युत्पत्तिकालावच्छेदेन स्वमते सत्त्वात् तत्र तादृशप्रतियोगिवैयधिकरण्यं न घटते अत आत्मत्वहेतुकानुसरणम् । गुणसामान्याभावत्वस्य कपिसंयोगस्वरूपाभावस्य प्रतियोगितावच्छेदकत्वं स्फुटीकर्त्तुं कपिसंयोगानां गुणत्वकीर्त्तनम् । 'तत्प्रतियोगितावच्छेदकेति, तथाच तादृशाभावा-

(१) यद्यपीत्यादिः इत्याशय इत्यन्तः पाठः केषुचिदादर्शपुस्तकेषु नास्ति ।

अपि यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणा-
एवेति तत्प्रतियोगितावच्छेदकत्वात् कपिसंयोगाभावत्वस्याव्याप्ति-
रिति भावः। 'यादृशेति यद्रूपप्रतियोगितावच्छेदकावच्छिन्नाधि-
करणत्वावच्छिन्नभेदवत्त्वमित्यर्थः, कपिसंयोगि एतत्त्वादित्यादौ
यत्किञ्चित्कपिसंयोगादिव्यक्त्यनधिकरणत्वेऽपि हेतुमतः कपि-
संयोगत्वावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नाधिकरणसामान्य--
भेदवत्त्वासम्भवात्(१) यत्पदेन तादृशी प्रतियोगितोपादातुं न शक्यत-
इति नाव्याप्तिः। द्रव्यत्वाभाववान् सत्त्वादित्यादौ हेतुमतो द्रव्यादेः
विशिष्टद्रव्यत्वाद्यभावरूपप्रतियोग्यधिकरणत्वेऽपि द्रव्यत्वाभावत्वा-
वच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नानधिकरणत्वात्
तस्य लक्षणघटकतेति नातिव्याप्तिः। कपिसंयोगाभाववान् आत्म-
त्वादित्यादौ च कपिसंयोगाभावत्वावच्छिन्ना या प्रतियोगिता तद-
वच्छेदकावच्छिन्नाधिकरणमेव हेतुमत् किन्तु गुणसामान्याभाव-
त्वावच्छिन्ना या प्रतियोगिता तदवच्छेदकावच्छिन्नानधिकरणमेव
तदनवच्छेदकमेव साध्यतावच्छेदकमिति नाव्याप्तिरिति भावः।
न चैवं घटत्वाद्यवच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं
धूमवत् तादृशप्रतियोगितानवच्छेदकञ्च वह्नित्वमित्याद्याकारकस्या-
भावकूटावगाहिनः समूहालम्बनज्ञानस्यैवानुमितिहेतुतया विशि-
ष्टपरामर्शस्यानुमितिहेतुत्वमनुपपन्नम् अभावकूटघटिततया व्याप्ते-
र्दुर्ज्ञेयतापत्तिश्चेति वाच्यम्। हेतुमन्निष्ठभेदप्रतियोगितायां स्वाव-

---

(१) कपिसंयोगत्वावच्छिन्नाधिकरणसामान्यभेदवत्त्वासम्भवादिति पा०।

च्छेदकावच्छिन्नवत्त्वसम्बन्धेनावच्छेदिका या प्रतियोगिता तदनव-च्छेदकत्वस्य एकसामान्याभावरूपस्य निवेशे तात्पर्य्यात्, तादृश-भेदप्रतियोगितायां स्वावच्छिन्नवत्त्वसम्बन्धेनानवच्छेदकत्वस्य साध्य-तावच्छेदकविशेषणतयैव सर्व्वसामञ्जस्येऽपि यथासन्निवेशे न वैयर्थ्यं, तथाविधसम्बन्धेन तादृशभेदप्रतियोगितानवच्छेदकसाध्य-तावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पुनर-न्योन्याभावघटितलक्षणनिष्कृष्टार्थो बोध्यः ।

दीधितिः ।

अत्र च ग्राह्यसामानाधिकरण्ये हेतोर्यादृशः सम्बन्धः प्रविष्टस्तेन सम्बन्धेन यो हेतुमान् तत्र वर्त्त-मानत्वमभावस्य साध्यस्य च यादृशः सम्बन्धः प्रविष्ट-स्तत्सम्बन्धावच्छिन्नायाश्च प्रतियोगिताया अनवच्छेद-कत्वं बोध्यं तेन धूमसमवायिनिष्ठाभावस्य संयोगाव-च्छिन्नप्रतियोगिताया धूमसंयोगिनिष्ठाभास्य च सम-वायावच्छिन्नप्रतियोगिताया अवच्छेदकत्वेऽपि वह्नि-त्वस्य न क्षतिः । यद्वा साध्यतावच्छेदकसम्बन्धेन प्रति-योग्यसम्बन्धित्वं हेतुमतो वक्तव्यम् । तथाच सम्बन्ध-भेदेन प्रतियोगिता न विशेषणीया ।

गादाधरी विवृतिः ।

सम्बन्धसामान्येन हेतुमत्त्वनिवेशेऽव्याप्तेर्वक्ष्यमाणत्वात् सम्बन्ध-

विशेषेण हेतुमत्त्वं प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वानिवेशे चासम्भवस्य वाच्यतया तत्र तच्च निवेशयति, 'अत्र चेति, 'ग्राह्य-सामानाधिकरण्ये' अनुमितिकारणीभूतग्रहविषयहेतुनिष्ठसामानाधिकरण्यशरीरे, 'साध्यस्य चेति, अत्रापि 'ग्राह्यसामानाधिकरण्य इति 'प्रविष्ट इति चानुषज्यते, तथाच तत्सम्बन्धेन हेतुमति वर्त्तते योऽभावस्तदीयतत्सम्बन्धावच्छिन्नप्रतियोगितानवच्छेदको यो धर्म्मस्तदवच्छिन्नस्य तेन साध्यतावच्छेदकसम्बन्धेनाधिकरणे तेन हेतुतावच्छेदकसम्बन्धेन वर्त्तमानत्वं तादृशसाध्यतावच्छेदकसम्बन्धेन साध्यानुमितिप्रयोजकमित्यर्थः, व्यापकताघटकसाध्यीयसम्बन्धेन साध्याधिकरणे तादृशसाधनीयसम्बन्धेन साधनस्यावर्त्तमानत्वग्रहदशायामनुमितिवारणाय सामानाधिकरण्यशरीरे सम्बन्धविशेषनिवेशनम्। वस्तुतस्तु विरुद्धत्वेन गृह्यमाणधर्म्मवत्ताज्ञानस्यानुमिताविव प्रतिबन्धकताया वक्ष्यमाणतया सामानाधिकरण्यशरीरे सम्बन्धविशेषानिवेशेऽपि न क्षतिः, सामानाधिकरण्यावगाहितायाः प्रयोजकत्वञ्च विशिष्टपरामर्शनिर्व्वाहाय उपेयते पर्व्वतीयधूमव्यापको वह्निरिति व्यापकतापरामर्शहेतुताया दूषितत्वाच्च। न च स्वव्यापकसाध्यकहेतुमानित्याकारकः सामानाधिकरण्यानवगाहिविशिष्टपरामर्श एव हेतुरास्तामिति वाच्यम्। बहुव्रीह्यर्थस्य सामानाधिकरण्यपर्य्यवसितत्वादित्यवधेयम्। प्रतियोगिवैयधिकरण्यशरीरे प्रतियोगितावच्छेदकसम्बन्धस्थाने साध्यतावच्छेदकसम्बन्धनिवेशन एव साध्यतावच्छेदकसम्बन्धेन साध्यवद्वत्वधिकरणनिष्ठसम्बन्धान्तरावच्छिन्नसाध्याभावमा-

दाय दूषणस्यापि निराकरणसम्भवे प्रतियोगितायां साध्यतावच्छे-दकसम्बन्धावच्छिन्नत्वनिवेशनमफलम् इत्याशयेनाह, 'यद्वेत्यादि। तादात्म्यसम्बन्धेन व्यापकतानिर्व्वाहाय, 'प्रतियोग्यनधिकरणत्व-मनुक्ता प्रतियोग्यसम्बन्धित्वमभिहितम्।

---

दीधितिः।

एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवे-शनीयं न त्वधिकरणत्वं, तथाच धर्म्मिणोऽपि व्याप्यत्वं व्यापकत्वञ्च निर्व्वहति, तथाहि तादात्म्येन सम्बन्धेन धूमवतः सम्बन्धिनि महानसे वर्त्तमानो योऽन्योन्या-भावस्तस्य तादात्म्यसम्बन्धावच्छिन्ना या प्रतियोगिता तदनवच्छेदकवह्निमत्त्वावच्छिन्नस्य वह्निमतस्तादात्म्येन सम्बन्धिनि महानसे धूमवतस्तादात्म्येन सम्बन्धि-त्वम्। एवं धर्म्मिणोधर्म्मव्याप्यत्व-व्यापकत्वे बोध्ये। अतएव जलादीनां पृथिवीत्वाभावव्याप्यत्वं तत्र तत्रोक्तं सङ्गच्छते। यथा च यादृशेन सम्बन्धेन हेतोर्व्याप्यता गृहीता तादृशेन सम्बन्धेन तस्य पक्षविशिष्टज्ञाने (१) यादृशेन सम्बन्धेन च साध्यस्य व्यापकत्वमवगतं तादृशेनैव साध्य-पक्षयोर्विशिष्टानुमितिः तेन न धूमा-

---

(१) पक्षविशिष्टत्वज्ञान इति पा०।

वयवे संयोगेन न वा समवायेन पर्व्वते वह्निधीः, तथैवावगतव्यापकताघटकसम्बन्धेन व्यापकस्याभावग्रहे गृहीतव्याप्यताघटकसम्बन्धेन व्याप्यस्याभावः सिध्यतीति कथमन्यथा समवायेन वह्निविरहिणि महानसे संयोगेन, संयोगेन वा वह्निविरहिणि स्वावयवे धूमः समवायेन न निवर्त्तते, निवर्त्तते च संयोगेन वह्निविरहिणि स्वावयवे संयोगेनेति नियम उपपद्यते, तथा च तादात्म्यसम्बन्धेन जलादीनां व्याप्यत्वग्रहाद्व्यापकनिवृत्त्या तादात्म्येनैव तेषामभावः सिध्यति स एव चान्योन्याभावः। इत्थमेव च तादात्म्याद्वृक्ष-शिंशपयोर्व्याप्तिनिश्चय इति सङ्गच्छते।

---

गादाधरी विवृतिः।

ननु प्रतियोगिवैयधिकरण्ये सम्बन्धित्वनिवेशे तादात्म्यसम्बन्धेन व्यापकतानिर्व्वाहेऽपि तादृशव्यापकताघटितव्याप्तिर्न निर्व्वहति तादृशसाध्यतावच्छेदकसम्बन्धेन साध्याधिकरणाप्रसिद्ध्या तद्घटितसाध्यसामानाधिकरण्यस्याप्रसिद्धेरित्यत आह, 'एवं स्थित' इति प्रतियोगिवैयधिकरण्यशरीरे सम्बन्धित्वनिवेशे स्थिते सतीत्यर्थः, 'सम्बन्धित्वं निवेशनीयमिति, तथाच साध्यसामानाधिकरण्यं साध्यसम्बन्धिसम्बन्धित्वम्, अभावस्य हेतुसामानाधिक-

रत्वमपि हेतुसम्बन्धिसम्बन्धित्वं आदिना ग्राह्यं, तदेव धर्म्मिणो-
धूमवदादेर्वह्निमदादेश्च, तदेव दर्शयति, 'तथा हीत्यादि,
'तादात्म्यसम्बन्धावच्छिन्नेति पूर्व्वकल्पाभिप्रायेण, धूमवद्वह्नि-
मतोर्व्याप्तिमुक्ता धर्म्मिणो धूमवदादेर्वह्न्यादिरूपधर्म्मव्याप्यत्वं
वह्निमदादिरूपधर्म्मिणश्च धूमादिरूपधर्म्मव्यापकत्वञ्चाह, 'एव-
मिति, 'अतएव' तादात्म्यसम्बन्धेन व्याप्तिव्यवस्थापनादेव,
'तत्र तत्रोक्तमिति पृथिवीत्वेनेतरभेदसाधनायेत्यादिः, 'सङ्गच्छत-
इति, अन्यथा जलादीनां संयोगादिना पृथिव्यादिवृत्तितया
व्यभिचारेण पृथिवीत्वाभावाव्याप्यतया समवायेनाव्यभिचारेऽपि
तेन सम्बन्धेन व्याप्तेर्जलादिभेदसाधनानुपयोगितया च तदुक्त्य-
सङ्गतेरिति भावः। पृथिवीत्वाभावस्य स्वरूपसम्बन्धावच्छिन्ना-
भावेन पृथिवीत्वस्वरूपेणैव जलादिभेदः सिद्ध्यतीति न तु
तस्य कालिकादिसम्बन्धावच्छिन्नाभावेनेत्यत्र पृथिवीत्वेन व्याप्यस्य
जलादेरन्योन्याभाव एव सिद्ध्यति न त्वत्यन्ताभाव इत्यत्र वा किं
नियामकं इत्याकाङ्क्षायां व्यतिरेकिणि तत्सम्बन्धघटितव्यापक-
त्वेन गृह्यमाणस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकादेवाभावा-
द्धेतोर्येन सम्बन्धेन यस्य व्याप्यता गृहीता तत्सम्बन्धावच्छिन्न-
प्रतियोगिताक एव तदभावः सिद्ध्यतीति समाधास्यमानः
अन्वयिनि व्याप्यताघटकसम्बन्धेन व्याप्यवत्त्वज्ञानात् व्यापक-
ताघटकसम्बन्धेनैव व्यापकं सिध्यतीति नियमं दृष्टान्तविधया
दर्शयति, 'यथा चेति, 'तादृशेन' तादृशेनैव, 'पक्षविशिष्टज्ञाने'
पक्षधर्म्मिकवैशिष्ट्यज्ञाने, 'विशिष्टानुमितिः' वैशिष्ट्यविषयकानु-

मितिः। व्याप्यताघटकेनैव सम्बन्धेन व्याप्यवत्त्वज्ञानं हेतुरिति नियमस्य व्यापकताघटकेनैव सम्बन्धेन व्यापकस्यानुमितिरिति नियमस्य च क्रमेण प्रयोजनमाह, 'तेनेति, अनवतीर्णबाधस्या-भ्रान्तस्येति शेषः, 'धूमावयवे न वह्निधीरित्यन्वयः, तस्य समवायेन वह्निव्याप्यधूमवत्त्वेऽपि व्याप्यताघटकेन संयोगेन तद्वत्त्वाभावादिति भावः। 'न वा समवायेनेति, पर्व्वतवृत्तिहेतुं प्रति समवायेन वह्नेरव्यापकत्वादिति भावः। प्रकृतोपयुक्तनियमद्वयमाह, 'तथै-वेति, 'सम्बन्धेन' सम्बन्धेनैव, एतन्नियमद्वयस्य प्रयोजनान्तरानु-रोधेनाप्यावश्यकत्वमिति दर्शयति, 'कथमन्यथेति, अन्यथा तादृश-नियमानभ्युपगमे, 'इति नियमः कथमुपपद्यत इत्यन्वयः। 'महा-नसे संयोगेन धूमो न निवर्त्तते' इत्यन्वयः, महानसधर्म्मिकसिद्धि-विषयसंयोगसम्बन्धावच्छिन्ननिवृत्तिप्रतियोगी नेत्यर्थः, 'निवर्त्तते च धूम इत्यनुषज्यते, प्रकृतमाह, 'तथा चेति, व्याप्यत्वग्रहात् स्वरूप-सम्बन्धावच्छिन्नपृथिवीत्वाभावनिष्ठव्यापकतानिरूपितव्याप्यताग्र-हात्, 'व्यापकनिवृत्त्या' स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकेनैव पृथिवीत्वाभावाभावेन, 'तेषां' जलादीनाम्। नन्वेतावतात्यन्ताभाव-सिद्धिः कथं निराकृतेत्यत आह, 'स एव चेति, 'स चान्योन्याभाव एवेति योजना, तादात्म्यसम्बन्धावच्छिन्नाभावः अन्योन्याभाव-एव नात्यन्ताभाव इत्यर्थः, अतो नेतरात्यन्ताभावसिद्धिरिति भावः। तादात्म्यसम्बन्धेन व्याप्तौ प्राचीनसम्मतिमाह, 'इत्यमेव चेति तादात्म्यसम्बन्धेन व्याप्तिस्वीकारेणैव, 'इति' ग्रन्थः, 'सङ्गच्छते' इत्यन्वयः।

दीधितिः।

अतएव गोत्वत्वाद्यग्रहदशायां यत्र सास्नादिः सा गौरिति तादात्म्येन गोव्यापकत्वग्रहे सास्नादिना तादात्म्येन गौः, तादात्म्येन गोर्व्यतिरेकाच्च सास्नादिव्यतिरेकः सिध्यति, एवञ्च संयोगेन गगनादेरपि द्रव्यत्वव्याप्यत्वं वृत्त्यनियामकसंयोगमात्रस्याभावप्रतियोगितावच्छेदकसम्बन्धरूपत्वे साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धित्वाभिधाने वा पृथिवीत्वादिव्यापकत्वमपि, तदभाववतोऽपि पृथिव्यादेः संयोगेन तत्सम्बन्धित्वात् सिद्धिरपि तस्य तथैव, न तु वृत्तिनियामकसम्बन्धेन, तेनासम्बन्धित्वादव्यापकत्वाच्च, व्यक्तीभविष्यति चैतदुपरिष्टात्।

---

गादाधरी विवृतिः।

ननु तादात्म्यसम्बन्धेन व्याप्त्यनभ्युपगमे का क्षतिः पृथिव्यां जलादिभेदसिद्धेर्जलादिभेदाभावव्यापकीभूताभावप्रतियोगित्वेन पृथिवीत्वज्ञानादेव सम्भवात् पृथिव्येकदेशे जलादिभेदप्रसिद्ध्या तादृशव्याप्तिग्रहसम्भवस्य व्यतिरेकिणि वक्ष्यमाणत्वात् तादात्म्यसम्बन्धेन धर्म्मिणोऽनुमितेरनुभवसिद्धत्वे धर्म्मितादात्म्यनिष्ठव्यापकताज्ञानस्यैव तद्धेतुतायाः स्वीकरणीयत्वात् असति प्रतिबन्धकी

तत्तादात्म्यविधेयकानुमितौ तादात्म्यसम्बन्धेन तस्यापि विधेयत्वोपगमे क्षतिविरहादित्यत आह, 'अतएवेति तादात्म्येन व्याप्तिस्वीकारादेव, 'गोत्वत्वाद्यग्रहदशायां गौः सिध्यतीत्यन्वयः, अन्यथा तत्र गोत्वत्वरूपसाध्यतावच्छेदकानुपस्थितौ गोत्वसाध्यकानुमित्यौपयिकव्याप्तेर्दुर्ग्रहतया गोत्वसाध्यकानुमितेः गोतादात्म्यस्यापि गोत्वरूपतया तन्निष्ठव्यापकताया अपि गोत्वत्वोपस्थितिमन्तरेण दुर्ग्रहतया गोतादात्म्यधर्म्मिकव्यापकताज्ञानाधीनतादात्म्यसंसर्गकगवानुमितेश्चासम्भवेन अयं गौरित्याकारकानुमितेरनुभवसिद्धाया अपलापप्रसङ्गादिति भावः। यद्यपि गोत्वत्वं धर्म्मितावच्छेदकीकृत्य व्यापकतावच्छेदकत्वावगाहिग्रह एव गोत्वेन गोसाध्यकानुमितावपि हेतुर्व्वाच्यः निर्धर्म्मितावच्छेदककव्यापकतावच्छेदकत्वग्रहस्य व्यभिचारज्ञानाप्रतिबध्यतया अनुमित्यजनकत्वात् इति तादात्म्येन गोत्वावच्छिन्नसाध्यकानुमितिरपि गोत्वत्वाद्यनुपस्थितिदशायां न सम्भवति, तथापि वक्ष्यमाणप्रतियोगिताधर्म्मिकोभयाभावघटितलक्षणाभिप्रायेणेदमभिहितम्। न च जातेरपि समवायेनैव स्वरूपतः प्रकारतया अभावप्रतियोगितया भासमानेऽवच्छेद्यत्वे निरूपितत्वसम्बन्धेन स्वरूपतः प्रकारत्वं नोपपद्यत इति वाच्यम्। स्वरूपतो गोत्वादिप्रकारकज्ञानस्य गोत्वादिप्रकारकत्वेनानुव्यवसाये व्यवसायानुल्लिखितगोत्वत्वादेर्गोत्वांशे प्रकारत्वासम्भवेन उक्तनियमस्यैवासिद्धेः। तन्मते स्वरूपतः साध्यतावच्छेदकप्रकारिकायामनुमितौ स्वरूपतः साध्यतावच्छेदकप्रकारकस्य साधनवन्निष्ठाभावप्रतियोगितात्वावच्छेदेन साध्यतावच्छेदक-

रूपावच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वोभयाभावावगाहिज्ञानस्य हेतुतया तत्र गोत्वत्वज्ञानानपेक्षणेनानुपपत्त्यभावात्।

परे तु एतदस्वरसेनैवाह, 'आदीति, आदिना पक्षधर्मतासंग्रहः, तथाच गवेतरावृत्तित्वादिरूपव्याप्तेः साधनव्यापकताग्रहधर्मितावच्छेदकतया उपस्थितिध्रौव्येऽपि तद्विशिष्टस्य यत्र न पक्षधर्मताधीस्तत्रैवायं गौरित्यनुमितेर्गोविधेयकत्वमावश्यकमिति तदनुरोधेनैव तादात्म्येन व्यापकत्वं वाच्यम् इत्याशय इत्याहुः।

अन्ये तु ननु अयं गौरित्यनुमितिर्गवेतरावृत्तित्वरूपायाः शुद्धगोत्वनिरूपितव्याप्तेर्ज्ञानान्निरवच्छिन्नगोत्वसाध्यिकैव समवायेन भविष्यति साध्यवदन्यवृत्तित्वरूपाया अपि व्याप्तेरनुमितिहेतुत्वस्याग्रे वाच्यत्वादतस्तादृशानुमित्यनुरोधाद्धर्म्मिणो व्यापकत्वस्वीकारोऽनुचित इत्यत उक्तं 'गोत्वत्वेति, 'गोत्वत्वं' गवेतरावृत्तित्वं, तथाच गवेतरावृत्तित्वरूपाया गोत्वव्याप्तेरज्ञानदशायामुत्पन्नायाः अयं गौरित्यनुमितेर्गोत्वविधेयकत्वासम्भवाद्गोविधेयकत्वमेवेति तदनुरोधात् अवश्यं धर्म्मिणो व्यापकत्वं वाच्यमिति भाव इत्याहुः (१)।

ईदृशयुक्त्या तादात्म्येन व्यापकतासिद्धिवद्गोत्वत्वाद्यग्रहदशायां यत्र गौस्तत्र सास्नादिरिति व्याप्तिग्रहाधीनगवादिहेतुकसास्नादिसिद्ध्यनुरोधात् तत्सम्बन्धेन व्याप्यतासिद्धिरपि द्रष्टव्या।

---

(१) परेत्वित्यादिः इत्याहुरित्यन्तः अन्येत्वित्यादिः इत्याहुरित्यन्तश्च पाठः केषु चिदादर्शपुस्तकेषु नास्ति।

केचित्तु ननु तादात्म्यसम्बन्धेन व्यापकत्वानुपगमेऽपि गवान्या-समवेतत्वरूपव्याप्तिज्ञानादेव गोत्वादिविधेयकानुमितिर्निष्प्रत्यू-हैव तथा सति (१) अयं गौरित्याकारकतापि अनुमितेर्निर्व्वहति स्वरूपतो गोत्वावगाहिनो गवान्यावृत्तित्वज्ञानात् स्वरूपत एव गोत्व-विषयिन्या अनुमितेरेवौचित्यात्। न चानवच्छिन्नविधेयताया-अक्लृप्तत्वात् तादात्म्यसम्बन्धेन गोरेव तत्र विधेयत्वमुचितम् अयं गौरित्यादिवाक्यजन्यबोधे तादात्म्यसम्बन्धावच्छिन्नगवादिविधेय-तायाः क्लृप्तत्वादिति वाच्यम्। अयं गौरित्याकारके इदन्त्वाव-च्छिन्नविशेष्यकगोत्वादिप्रकारकप्रत्यक्षे या गोत्वादिप्रकारता तस्या एव विधेयतात्वोपगमे अनुमितौ तत्कल्पने अतिरिक्त-विषयताकल्पनाभावात्, अस्तु वा गवान्यावृत्तित्वरूपव्याप्ति-ज्ञानादेव तादात्म्येन गवानुमितिः किं तादात्म्येन व्यापकतये-त्याद्याशङ्कानिराचिकीर्षयोक्तं 'गोत्वत्वाद्यग्रहदशायामिति गवे-तरावृत्तित्वस्य हेतुभूतसाध्यादावग्रहदशायामित्यर्थऽत्याहुः। तन्न, गवेतरावृत्तित्वमात्रस्य गोत्वत्वशब्दार्थताविरहेण उदाहरताया-दुर्व्वारत्वात्, गोत्वत्वपदं तद्वृत्तिधर्म्मपरमिति तु न सम्यक्-गोत्वत्वस्य विशिष्टगोवृत्तित्वरूपस्य स्वरूपतो भानासम्भवेन तद्-भानदशायां तद्वृत्तिधर्म्मभानस्यावश्यकत्वात्।

अपरे तु गोत्वत्वाद्यग्रहदशायामपि गौः सिध्यतीत्यन्वयः, यदा गोत्वमनुमितौ न भासते तदा तत्र गौर्भासते इत्यर्थः, स्वरूपतो-गोत्वादिप्रकारिका गवाद्यनुमितिर्भवतीति यावत्, तादात्म्येन

(१) तावतैवेति पा०।

व्यापकतानुपगमे गोत्वस्यैव सास्नादिलिङ्गकानुमितौ भानस्योप-गन्तव्यतया विधेयतायाश्चावच्छिन्नत्वनियमेन स्वरूपतो गोत्व-प्रकारकानुमितेरनुभवसिद्धाया अनुपपत्तिरित्युपष्टम्भसङ्गतिरिति प्राहुः (१)।

अन्ये तु गोत्वत्वाद्यग्रहदशायामपि स्वरूपतोभासमानगोत्वा-वच्छिन्ने हेतुमन्निष्ठान्योन्याभावप्रतियोगितानिरूपित-तादात्म्य-सम्बन्धावच्छिन्नावच्छेदकत्वाभावरूपान्योन्याभावघटिततादात्म्यस-म्बन्धावच्छिन्नव्यापकताज्ञानात् तादात्म्येन स्वरूपतो गोत्वप्रका-रिकानुमितिः सम्भवत्येव, एकरूपेणावच्छेदकेऽपि अवच्छेदकता-नवच्छेदकरूपेण अवच्छेदकत्वाभावं स्वीकृत्यैवान्योन्याभावघटित-लक्षणस्य ग्रन्थकृता 'यत् यद्रूपावच्छिन्नमित्यादिना परिष्करणीय-त्वात् तदभिप्रायेणैव तत्सङ्गतेः, केवलान्वयिग्रन्थे च प्रतियोगिनि प्रतियोगितानवच्छेदकरूपेण प्रतियोगित्वाभावस्येवावच्छेदकेऽप्यव-च्छेदकतानवच्छेदकरूपेणावच्छेदकत्वाभावस्याप्रामाणिकतया व्या-पकताज्ञाने साध्यतावच्छेदकस्य स्वरूपतो भानं न सम्भवतीत्यभि-प्रायेण व्यापकताज्ञानहेतुतामते स्वरूपतो ज्ञानत्वादिप्रकारकानु-मित्यनुपपत्तेर्वक्ष्यमाणतया न पूर्व्वापरग्रन्थविरोध-इत्याहुः।

यत्तु अनवच्छेदकांशे तादात्म्यसम्बन्धेन स्वरूपतः साध्यता-वच्छेदकप्रकारकज्ञानादनवच्छेदकत्वांशे आधेयतासम्बन्धेन स्वरू-पतस्तत्प्रकारकज्ञानाद्वा स्वरूपतस्तत्प्रकारिका अनुमितिरित्युप-गमेन गोत्वत्वाद्यग्रहदशायामपि तादात्म्यसम्बन्धेन व्यापकता-

(१) अपरेत्वित्यादिः प्राहुरित्यन्तः पाठः कस्मिंश्चिदादर्शपुस्तके नास्ति।

ज्ञानादनुमितिनिर्व्वहतीति नोक्तानुपपत्तिरिति, तदसत्, अयं गौरित्यादिज्ञानानुव्यवसाये स्वरूपतो गोत्वादिविशेषितप्रकारिता-प्रकारेण ज्ञानभानात् समवायातिरिक्तेन निरूपितत्वसम्बन्धेन गोत्वादेः स्वरूपतः प्रकारताया आवश्यकत्वेऽपि समवाय-निरूपितत्वोभयातिरिक्तेनापरसम्बन्धेन (१) स्वरूपतः प्रकारताया-अप्रामाणिकत्वात् (२)। अन्यथा व्यापकताज्ञानहेतुतामते स्वरू-पतो ज्ञानत्वादेर्विधेयतावच्छेदकत्वानुपपत्त्या केवलान्वयिग्रन्थे तज्ज्ञानस्यानुमितिहेतुताखण्डनं दीधितिकृतां विरुध्येत उक्त-क्रमेणैव तन्निर्व्वाहात् गोत्वानवच्छिन्नत्वप्रकारकप्रतियोगिता-ज्ञाने अवच्छेद्यतायां निरूपितत्वसम्बन्धेन स्वरूपतो गोत्व-प्रकारकत्वं दीधितिकारस्यासम्मतमेव तथा सत्यपि अग्रिमग्रन्थ-विरोधात् इत्यवधेयम्। व्यापकाभावात् व्याप्याभावसिद्धावपि क्वचित् तादात्म्यसम्बन्धघटितव्यापकताया एव ज्ञानमपेक्षितम् इत्याह, 'गोर्व्यतिरेकाच्चेति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिता-कात् तादात्म्यसम्बन्धघटितव्यापकतावच्छेदकगोत्वावच्छिन्नस्य भेद-

---

(१) समवायातिरिक्तेनापरसम्बन्धेनेति पा०।

(२) "न चावच्छेद्यत्वांशे निरूपितत्वसम्बन्धेन जातेः स्वरूपतः प्रकारत्वं दीधितिकृतामननुमतं तथा सति व्यापकताज्ञानहेतुतामते स्वरूपतो ज्ञानत्वादे-र्विधेयतावच्छेदकत्वानुपपत्त्या केवलान्वयिग्रन्थे तज्ज्ञानस्यानुमितिहेतुताखण्डनं तेषां विरुध्येत उक्तक्रमेणैव तन्निर्व्वाहात् तथाच प्रतियोगिताधर्म्मिकोभयाभाव-घटितलक्षणाभिप्रायकतयापि नैतद्ग्रन्थसङ्गतिरिति वाच्यम्। प्रकारित्वांश इव अवच्छेदकत्वांशेऽपि निरूपितत्वसम्बन्धेन जातेः स्वरूपतः प्रकारत्वाभिप्रायेणैतद्-ग्रन्थसङ्गमनात्, तस्याप्रामाणिकत्वाभिप्रायेण व्यापकताज्ञानहेतुतासङ्गतिः" इत्य-धिकः पाठः पुस्तकान्तरे वर्त्तते।

रूपाभावादित्यर्थः, समवायसम्बन्धावच्छिन्नगोत्वत्वाद्यवच्छिन्ना-भावसाधनत्वेऽपि तत्प्रतियोगितावच्छेदकगोत्वत्वाद्यग्रहदशायां तदभावस्य ज्ञानासम्भवेन ततः साध्याभावसिद्ध्यसम्भवात् इति भावः (१)। 'एवञ्च' अधिकरणतादिस्थाने सम्बन्धित्वनिवेशने च, 'गगनादेरपीति, तस्याधिकरणाप्रसिद्धावपि संयोगेन तत्सम्बन्धि-वृत्तित्वस्याभावे तत्र च साध्यवत्सम्बन्धित्वस्य प्रसिद्ध्या यथोक्त-व्याप्तिसत्त्वादिति भावः। वृत्त्यनियामकसंयोगव्यावृत्तरूपेण संयोगस्याभावप्रतियोगितावच्छेदकसम्बन्धत्वे साध्यतावच्छेदक-सम्बन्धस्य गगनीयसंयोगस्याभावप्रतियोगितानवच्छेदकतया प्रति-योगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशकल्पे तथा-विधप्रतियोगित्वाप्रसिद्ध्या संयोगेन गगनस्य व्यापकता न निर्वह-तीत्यत उक्तं 'वृत्त्यनियामकसंयोगमात्रस्येति तादृशसंयोगसाधारण-संयोगत्वावच्छिन्नस्येत्यर्थः, 'यद्देत्याद्युक्तकल्पे वृत्त्यनियामकसंयोग-साधारणरूपेण तादृशसम्बन्धत्वविरहेऽपि न क्षतिः तन्मते प्रतियोगि-तायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशादित्याशयेनाह, 'साध्यतावच्छेदकसम्बन्धेनेति, पृथिवीत्वादिव्यापकत्वमपीत्यत्र 'संयोगेन गगनादेरित्यनुषज्यते। ननु प्रतियोगितायां साध्यताव-च्छेदकसम्बन्धावच्छिन्नत्वानिवेशे पृथिव्यादिनिष्ठसमवायादिसम्ब-न्धावच्छिन्नाभावप्रतियोगितया गगनादेर्न पृथिवीत्वादिव्यापकता-सम्भव इत्यत आह, 'तदभाववतोऽपीति समवायादिना साध्या-

(१) व्यापकाभावादित्यादिः इति भाव इत्यन्तः पाठः बहुषु आदर्शपुस्तकेषु नास्ति।

भाववतोऽपीत्यर्थः, 'तत्सम्बन्धित्वात्,' गगनादिसम्बन्धित्वात्, तथाच तादृशगगनाद्यभावो न साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमन्निष्ठ इत्यभावान्तरमादाय लक्षणसत्त्वं निष्प्रत्यूहमेवेति भावः। ननु संयोगेन गगनस्य व्यापकत्वे बाधानवतारदशायाम् अभ्रान्तस्य वृत्तिनियामकसंयोगेनैव कथं न गगनानुमितिरित्यत आह, 'सिद्धिरपीति, 'तथैव' वृत्त्यनियामकसंयोगेनैव, 'तेनासम्बन्धित्वादिति, तथाच तत्सम्बन्धावगाहनेऽनुमितेर्भ्रमतया तत्र भ्रमात्मकपरामर्शस्यापेक्षितत्वादिति भावः। यद्रूपावच्छिन्नयत्सम्बन्धस्य व्यापकताघटकत्वं तद्रूपावच्छिन्नतत्सम्बन्धेनैवानुमितिरिति नियमाभिप्रायेण दोषान्तरमाह, 'अव्यापकत्वाच्चेति वृत्त्यनियामकेनैव सम्बन्धेन गगनाभावस्य प्रतियोगिसमानाधिकरणतया वृत्तिनियामकसंयोगेन प्रतियोगिव्यधिकरणाभावप्रतियोगिताया गगने सत्त्वेन तत्सम्बन्धस्य व्यापकत्वाघटकत्वादित्यर्थः, तथाच व्यापकत्वाघटकस्य सम्बन्धस्यानुमितावभानान्न तेनानुमितिप्रसङ्ग इति भावः। ननु वृत्तिनियामकसंयोगेन गगनादिसम्बन्धिनोऽप्रसिद्धया कथं तेन सम्बन्धेन गगनाद्यभावस्य प्रतियोगिवैयधिकरण्यमित्यत आह, 'व्यक्तीभविष्यतीति, वक्ष्यमाणोभयाभावघटितप्रतियोगिवैयधिकरण्यं तत्रापि सुलभमेवेति भावः।

---

दीधितिः।

नन्वष्टद्रव्यातिरिक्तद्रव्यात्मककालमात्रवृत्तिधर्म्मस्य

विशेषणताविशेषेणाव्याप्यवृत्ति किमपि व्यापकं न स्यात् स्वावच्छेदकसम्बन्धेन प्रतियोगिनोऽसम्बन्धिनि काले वर्त्तमानस्याभावस्य प्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वस्य तेन सम्बन्धेन यत्प्रतियोगिसम्बन्धि तदन्यत्वस्य च कालेऽसम्भवात् ।

---

गादाधरी विवृतिः ।

कालिकविशेषणतया घटादिसाध्यके महाकालत्वादिहेतौ अप्रसिद्धिनिबन्धनाव्याप्तिमाशङ्कते, 'नन्वित्यादिना, क्रियात्मकखण्डकालमात्रवृत्त्येतत्कालत्वादिहेतुकस्थलेऽतीतानागतघटादिव्यक्तीनां तत्तद्व्यक्तित्वावच्छिन्नतादृशसम्बन्धावच्छिन्नाभाव एव हेतुमति प्रतियोगिव्यधिकरणः प्रसिद्ध इति नाव्याप्तिरतः 'अष्टद्रव्यातिरिक्तद्रव्यात्मकेति, जन्यमात्रस्य कालोपाधितामते द्रव्यात्मकस्यापि खण्डकालस्य सम्भवान्न महाकालपर्य्यन्तलाभ इत्यतः अतिरिक्तान्तम्, क्रियात्मककालमात्रवृत्तिहेतुके तत्तत्क्रियाद्यवृत्तिघटाद्यभावमादाय लक्षणसत्त्वात् अतः 'द्रव्यात्मकेति । यद्यपि गगन-दिगात्म-मनसां नित्यतया खण्डकालत्वासम्भवेन चतुर्द्रव्यातिरिक्तेत्युक्तावपि महाकाललाभस्तथापि यत्किञ्चिच्चतुर्द्रव्यातिरिक्तत्वस्य पृथिव्यादावपि सत्त्वात् पृथिव्यादिचतुष्टयातिरिक्तत्वस्य विशिष्याभिधान एव तल्लाभः, तान्त्रिकैर्महाकालस्यैवाष्टद्रव्यातिरिक्तद्रव्यपदेनाभिधानात्तथाभिधाने विशिष्यानभिधानेऽपि नान्यपरत्वशङ्केति तथैवाभिहितम् । खण्डकालसाधारण-

महाकालवृत्तेर्हेतुत्वे खण्डकालरूपहेत्वधिकरण एव लक्षणघट-कोक्ताभावप्रसिद्धिरिति 'कालमात्रवृत्तीत्यत्र 'मात्रपदं, समवाया-दिना कस्यचित् साध्यत्वे समवायादिना घटाद्यभाव एव महा-काले तेन सम्बन्धेन प्रतियोगिव्यधिकरणः प्रसिध्यतीत्यतः 'विशेषण-ताविशेषेणेति कालिकविशेषणतयेत्यर्थः, व्याप्यवृत्तिसाध्यके प्रति-योगिवैयधिकरण्यस्यैवानुमितिजनकज्ञानेऽनुपादानात् केवलान्व-यिनित्यवाच्यत्वादिसाध्यके नाव्याप्तिसम्भव इत्यतः 'अव्याप्यवृत्तीति, कालिकसम्बन्धेनाव्याप्यवृत्तित्वञ्च व्यतिरेकिमात्रस्यैव केवलान्वयि-नोऽप्यनित्यस्य विश्वविषयकजन्यज्ञानविषयत्वादेर्बोध्यम्, एतत्सर्व्वं वस्तुव्याप्त्यभिप्रायेणाभिहितम्। महाकालान्यवृत्तिहेतुकेऽन्यसम्ब-न्धेन साध्यतायाञ्च हेतुमति सर्व्वत्र साध्यतावच्छेदकसम्बन्धेन वृत्ति-मन्मात्रस्यैव तेन सम्बन्धेन वृत्तिभ्रमदशायां व्याप्यवृत्तिसाध्यकेऽपि साध्यस्य हेतुमत्यव्याप्यवृत्तित्वभ्रमदशायाम् अनुपपत्तिर्द्रष्टव्या (१)। स्वावच्छेदकसम्बन्धेन स्वावच्छेदकविशिष्टानधिकरणवृत्त्यभावीय-साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानिवेशकल्पे तादृश-प्रतियोगित्वाप्रसिद्ध्यभिधानेनाव्याप्तिं स्फुटीकरोति, 'स्वावच्छेद-केति, 'स्वं' प्रतियोगित्वं, 'काले' महाकाले, 'तत्सम्बन्धावच्छिन्नत्वस्य' कालिकसम्बन्धावच्छिन्नत्वस्य, 'असम्भवादिति योजना, कालिक-

(१) महाकालान्यवृत्तिहेतुकेऽन्यसम्बन्धेन साध्यतायाञ्च हेतुमति सर्व्वत्र साध्यतावच्छेदकसम्बन्धेन वृत्तिमन्मात्रस्यैव तेन सम्बन्धेन भ्रमदशायां अनुमिति-जनकज्ञानानुपपत्तिर्द्रष्टव्या, एवं कालिकसम्बन्धेन व्याप्यवृत्तित्वभ्रमदशायां प्रति-योगिवैयधिकरण्याघटितायाः प्रतियोगिवैयधिकरण्यघटितायाश्च व्यापकताया-दुपहत्वात् महाकालत्वादिहेतुकानुमित्यनुपपत्तिरपीति पा०।

सम्बन्धेन वृत्तिमन्मात्रस्यैव महाकाले वृत्तेरवृत्तेश्च तेन सम्बन्धेन सम्बन्धिनोऽप्रसिद्ध्या कस्यापि कालिकसम्बन्धावच्छिन्नाभावस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमद्वृत्तित्वासम्भवेन समवायादिसम्बन्धावच्छिन्नघटाद्यभावस्यैव तथात्वात् तत्प्रतियोगितायाः समवायादिसम्बन्धेनैवावच्छिन्नत्वादिति भावः । साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमद्वृत्त्यभावीयसम्बन्धविशेषावच्छिन्नत्वाविशेषितप्रतियोगितानिवेशकल्पेऽपि तादृशसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमत एवाप्रसिद्ध्या अव्याप्तिरित्याह (१) 'तेनेति, 'तेन सम्बन्धेन' कालिकसम्बन्धेन, गगनाद्यभावप्रतियोगिनस्तेन सम्बन्धेन सम्बन्धिरूपप्रतियोग्यप्रसिद्ध्या तेन सम्बन्धेन प्रतियोग्यसम्बन्धित्वाप्रसिद्धिं स्फुटीकर्त्तुं प्रतियोग्यसम्बन्धित्वस्येत्यनभिधाय यत्प्रतियोगिसम्बन्धि तदन्यत्वस्येत्यसमासेनाभिधानम् । अथ कालिकसम्बन्धेन महाकालान्यवृत्तित्वविशिष्टस्य तत्सम्बन्धावच्छिन्नाभाव एव महाकाले प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणः प्रसिद्धस्तमादायैव च लक्षणसमन्वयसम्भवात् कथमव्याप्त्यभिधानं, न हि महाकालान्यवृत्तित्वविशिष्टघटादिनिरूपितः कालिकोऽपि सम्बन्धो महाकाले सम्भवति, तद्धर्म्मिवृत्तित्वविशिष्टनिरूपितसम्बन्धानुयोगितायास्तद्धर्म्मिनियतत्वात्, अन्यथा सत्तादिमति गुणादौ द्रव्यादिवृत्तित्वविशिष्टसत्ताद्यभावप्रत्ययानुपपत्तेः । न चैवं ह्रदादिवृत्तित्वविशिष्टवह्न्यभावादेर्विषयि-

---

(१) तादृशसम्बन्धेन प्रतियोग्यसम्बन्धिहेतुमतोऽप्रसिद्धिनिबन्धनाव्याप्तिमाहेति पा० ।

तया सम्बन्धित्वम् ज्ञाने न स्यात् ज्ञानस्य ह्रदादिवृत्तित्वानिरूपकत्वादिति ह्रदो वह्निमानित्यादौ तादृशविशिष्टस्य बाधादिरूपस्य हेत्वाभासत्वं न स्यात् ज्ञाननिष्ठविषयितया यादृशविशिष्टवत्त्वम् अनुमितिप्रतिबन्धकतावच्छेदकं तादृशविशिष्टस्यैव तथात्वात्। यदि च तत्सम्बन्धेन तद्धर्मिसम्बन्धित्वविशिष्टनिरूपितस्तादृशसम्बन्धो विशेषणकोटिविशिष्टतद्धर्मिनियत इति सम्बन्धान्तरेण ह्रदादिवृत्तित्वविशिष्टनिरूपितविषयितासम्बन्धो ज्ञाने सम्भवत्येवेत्युच्यते तदापि इच्छादिविषयत्वविशिष्टघटादिनिरूपितविषयितासम्बन्धस्य ज्ञानेऽसम्भवात् इच्छाविषयत्वाभावादिसाध्यकघटादिपक्षकस्थले तादृशविशिष्टस्य बाधादिरूपस्य हेत्वाभासत्वानुपपत्तिर्दुर्व्वारैवेति वाच्यम्। विशिष्टनिरूपितविषयितातिरिक्तसम्बन्धस्यैव विशेषणीभूतसम्बन्धितानिरूपकाधिकरणत्वनियतत्वोपगमात् तद्धर्मविशिष्टतन्निरूपितविषयितायां तदंशे तद्धर्मप्रकारकत्वमात्रस्यापेक्षितत्वादिच्छाविषयो घट इत्यादिज्ञाने इच्छाविषयत्वविशिष्टघटादिनिरूपितविषयितासत्त्वे बाधकाभावात्। न च महाकाले महाकालान्यवृत्तित्वविशिष्टघटाद्यधिकरणत्वानुपगमे तस्य विश्वाधारत्वव्याघात इति शङ्कनीयं, तादृशविशिष्टनिरूपिताधिकरणताविशेषस्य महाकालेऽसत्त्वेऽपि घटादेर्घटत्वाद्यवच्छिन्ननिरूपिताधिकरणतासत्त्वेनैव सर्व्वाधारत्वोपपत्तेः।

परे तु महानसीयवह्नित्व-वह्नि-घटोभयत्वावच्छिन्नप्रतियोगिताकस्य धूमसमानाधिकरणाभावस्य प्रतियोगितावच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यव्याप्तिभिया अवश्यं साध्यतावच्छेदकाघटको यः साध्य-

वृत्तिधर्म्मस्तदनवच्छिन्नैव हेतुसमानाधिकरणाभावस्य प्रतियोगिता लक्षणे निवेशनीया प्रत्येकमुभयत्र पर्य्याप्तिसम्बन्धेनावृत्तिधर्म्मस्य तादृशसम्बन्धेन उभयत्र सत्त्वासम्भवेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणभिन्नत्वस्य निवेशायोगादेवञ्च प्रकृते महाकालान्यत्वविशिष्टघटत्वाद्यवच्छिन्नप्रतियोगितायाः साध्यतावच्छेदकाघटकेन महाकालान्यत्ववैशिष्ट्यरूपसाध्यनिष्ठधर्म्मेणावच्छिन्नत्वात् तादृशप्रतियोगिताकाभावमादाय न प्रतियोगिव्यधिकरणाभावप्रसिद्धिसम्भवोऽपीति ध्येयम् ।

अन्ये तु यादृशप्रतियोगितावच्छेदकविशिष्टस्यानधिकरणत्वं हेतुमत इत्यत्रावच्छेदकवैशिष्ट्यमवश्यं साध्यतावच्छेदकताघटकसम्बन्धेन वाच्यम् अन्यथा तप्तायःपिण्डस्यापि कालिकसम्बन्धेन यद्धूमत्वविशिष्टं वह्न्यादिकं संयोगेन तदधिकरणतया धूमवान् वह्नेरित्यादावतिव्याप्त्यापत्तेः । इत्थञ्च समवायेन घटत्वादिविशिष्टस्य कालिकसम्बन्धेन यत्र साध्यता तत्र महाकालान्यत्वविशिष्टघटत्वाद्यवच्छिन्नाभावस्य साध्यतावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नमप्रसिद्धं विशिष्टनिरूपितसमवायानभ्युपगमात् अतस्तादृशाभावमादाय न प्रसिद्धिसम्भव इति ध्येयम् ।

अत्र केचित् कालिकसम्बन्धेनाधारता महाकालस्यैव न तु सूर्य्यक्रियादेः, इदानीं घटः तदानीं घट इत्यादिप्रतीत्या क्रियादिरूपकालोपाधीनां महाकालनिष्ठाधारतावच्छेदकत्वस्यैवावगाहनात् अतएव तेषां कालविशेषणतया कालोपाधि-

त्वप्रवादः (१), तादृशप्रतीत्या क्रियादावेव घटाद्याधारत्वावगाहित्वोपगमे तादृशप्रतीतीनां अनुगताधारत्वावगाहित्वानुभवविरोधात् कालत्वेनाखण्डोपाधीनां सर्व्वेषां क्रियादीनामनुगमेन तादृशानुभवोपपादने महाकालस्यैवाप्रामाणिकतापत्तेरिति प्राचीनमताभिप्रायेणेयं अव्याप्त्याशङ्का, तथाच कालिकसम्बन्धेन महाकालान्यवृत्तित्वस्यैवाप्रसिद्ध्या तद्विशिष्टघटाद्यभावमादाय लक्षणगमनाप्रसक्तेः। न च क्रियादेः कालत्वानभ्युपगन्तृमताभिप्रायेण चेदयं ग्रन्थस्तदा अष्टद्रव्यातिरिक्तद्रव्यात्मकताया अव्यावर्त्तकतया अभिधानासङ्गतिरिति वाच्यम्। तादृशद्रव्यात्मक एव काल इति मतविशेषसूचनार्थकतया तत्सङ्गतेः, तस्मात्वृत्तित्वञ्च हेतोर्लक्ष्यतासम्पादकत्वेनाभिहितं इतरवृत्तेर्व्यभिचारित्वात्। अथवा भवतु कालोपाधिरपि कालिकसम्बन्धेनाधिकरणं, तदधिकरणत्वसाधकस्य इदानीं घटः तदानीं घट इत्यादिः प्रत्ययो व्यवहारश्च तस्य चाननुगतोपाधिमात्रविषयकत्वेऽनुगताधारत्वावगाहित्वानुपपत्त्या क्रियादिरूपोपाधिविशिष्टमहाकालस्य घटाद्याधारत्वावगाहित्वमावश्यकं विशिष्टे घटाद्याधारत्वावगाहित्वे विशिष्टान्तर्भूतविशेषणेऽपि तदवगाहित्वमावश्यकमिति खण्डकालस्य कालिकसम्बन्धेनाधारताप्रसिद्धिः। एवञ्च इदानीं महाकाहान्यत्वविशिष्टो घट इति प्रत्ययादिः खण्डकाले विशिष्टाधिकरणतायां मानं न त्वन्य इति तत्र तत्साधकप्रत्ययबलादेव महाकालान्यवृत्तित्वानिरूपकस्यापि महाकालस्य

(१) न तु वस्तुगत्या तेषां कालत्वमिति शेषः।

विशिष्टाधारत्वसिद्धिर्दुर्व्वारैव, तथाच महाकाले विशिष्टघटाभावोऽपि विशिष्टप्रतियोगिसमानाधिकरणः तादृशप्रतीत्यनभ्युपगमे खण्डकालेऽपि न प्रतियोग्यधिकरणत्वप्रसिद्धिरित्युक्तस्थलेऽव्याप्तिवारणमशक्यमित्याहुः।

अन्ये तु कालिकः सम्बन्धः स्वरूपानतिरिक्तः, तथाच खण्डकालानुयोगिकतादृशसम्बन्धानां तत्तत्स्वरूपानामनुगमकसम्बन्धतावच्छेदकाभावेन प्रत्येकमेव सम्बन्धता तथाच महाकालस्वरूपसम्बन्धेनैव घटादेर्महाकालत्वादिव्यापकता वाच्येति दुरुद्धरैवाव्याप्तिः तादृशसम्बन्धेन महाकालान्यवृत्तित्वस्याप्रसिद्धेरिति वदन्ति। तदसत्, स्वरूपानां प्रातिस्विकरूपेण सम्बन्धत्वे यत्किञ्चित्खण्डकालस्वरूपसम्बन्धेन साध्यतायां तादृशखण्डकालमात्रवृत्तिहेतुके प्रतियोगिव्यधिकरणाभावाप्रसिद्धिसम्भवान्महाकालमात्रवृत्तिहेतुकानुधावनस्य निर्वीजतापातात्।

परे तु साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तावेव प्रतियोगितावच्छेदकविशिष्टवैयधिकरण्यनिवेशः, न तु साध्यतावच्छेदकोपलक्षितसाध्यवैशिष्ट्यविषयकानुमित्यौपयिकव्याप्तौ, अन्यथा महाकाले पृथिव्यादिवृत्तित्वोपलक्षितजात्यनुमानानुपपत्तेः, साध्यतावच्छेदके प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणत्वविशिष्टाभावप्रतियोगितावच्छेदकत्वसत्त्वादित्यञ्च साध्यतावच्छेदकोपलक्षितस्य यत्र साध्यता तत्रैवाव्याप्तिशङ्कापरोऽयं ग्रन्थः, तत्र यथाश्रुतप्रतियोगिवैयधिकरण्यस्यैव निवेशेन महाकालान्यवृत्तित्वविशिष्टघटाद्यभावस्यापि लक्षणा-

घटकत्वादित्याहुः। तदपि न साधु, अग्रिमसिद्धान्ते विशिष्टान्त-पदोपादान-तद्व्यावृत्तिप्रदर्शनादिविरोधात्।

---

दीधितिः।

न च तादृशसम्बन्धेन हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यवृत्तिप्रतियोगितावच्छेदकविशिष्टप्रतियोगिसामान्यकत्वमेव वक्तव्यं तथा चावृत्तिगगनाद्यभावद्वारिकैव तत्सिद्धिः सत्ताद्यधिकरणकर्म्मादौ समवायेन ज्ञानसामान्यस्य संयोगसामान्यस्य चावृत्तेर्नातिप्रसङ्गः। भूतत्व-मूर्त्तत्वोभयत्वविशिष्ट-गुणकर्म्मान्यत्वविशिष्टसत्तात्वविशिष्टसत्तादिकन्तु न मनोगुणादिवृत्ति संयोगसामान्यन्तु न किञ्चिद्द्रव्यावृत्तीति वाच्यम्। विशिष्टस्यानतिरिक्तत्वात् समवायेन जातेः साध्यत्वे मेयत्वादावतिव्याप्तिः जातिमन्निष्ठतादृशाभावप्रतियोगिताया जातित्वेनानवच्छेदात् जातिशून्ये च तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः संयोगादिसाध्यकगुण--कर्म्मान्यत्वादौ चातिव्याप्तिः अद्रव्ये हेतुमति तादृशसम्बन्धेन वृत्तेरप्रसिद्धेः द्रव्ये च संयोगादेरपि वृत्तेः।

---

गादाधरी विवृतिः।

'तादृशसम्बन्धेन' प्रतियोगितावच्छेदकसम्बन्धेन, साध्यता-

वच्छेदकसम्बन्धेन वा, 'वक्तव्यं' अभावविशेषणतया अभावपूर्व्वप्रतीकेन विवक्षणीयं, 'गगनाद्यभावद्वारिकैवति, तत्प्रतियोगिनः कालिकसम्बन्धेनाधिकरणाप्रसिद्धा तदनधिकरणाप्रसिद्धावपि वृत्तिमति प्रसिद्धायाः कालिकसम्बन्धेन महाकालवृत्तितया अभावस्य तत्र प्रसिद्धत्वादिति भावः। ज्ञानवान् सत्त्वात् संयोगि सत्त्वादित्यत्र क्रमेण सम्बन्धविशेषनिवेशन-यत्किञ्चित्पदोपादानयोर्व्यावृत्तिमाह, 'सत्ताद्यधिकरणेति, सम्बन्धविशेषानुपादाने कर्म्मादौ समवायेन ज्ञानाभावप्रतियोगिनोऽवृत्तावपि विषयतासम्बन्धेन वृत्तेस्तादृशाभावो न लक्षणघटकः स्यात्, यत्किञ्चित्पदानुपादाने कर्म्मादौ संयोगाभावप्रतियोगिनोऽसत्त्वेऽपि हेत्वधिकरणद्रव्यवृत्तितया हेत्वधिकरणवृत्तित्वसामान्याभाववत्त्वासम्भवात् सोऽपि न तथा स्यात् इत्यभावान्तरमादायातिव्याप्तिप्रसक्तिरिति भावः। यद्यपि यत्किञ्चित्पदस्य व्यावृत्तिर्ज्ञानसाध्यकेऽपि सम्भवति ज्ञानस्यापि समवायेनाव्याप्यवृत्तितया तत्साध्यकेऽपि प्रतियोगिवैयधिकरण्यनिवेशनस्यावश्यकत्वात्, तथापि प्रसिद्धाव्याप्यवृत्तिसाध्यके व्यभिचारिणि संयोगि सत्त्वादित्यत्र तदनुक्तौ तत्र व्यावृत्तिर्न सम्भवति इति शङ्का स्यात् तन्निराकरणाय तत्र तत्प्रदर्शनम्।

केचित्तु संयोगसाध्यके आदिपदग्राह्यगुणान्यत्वविशिष्टसत्त्वहेतुके साध्यतावच्छेदकसम्बन्धस्यैव व्यावृत्तिप्रदर्शनपरं 'संयोगसामान्यस्य चेत्यपि, विषयताया वृत्त्यनियामकत्वे प्रतियोगिवैयधिकरणे सम्बन्धित्वानिवेशपक्षे पूर्व्वस्थलीयव्यावृत्त्यसङ्गतेरित्यस्वरसा-

देतदनुधावनं, संयोगाभावस्य कालिकसम्बन्धेनैव सर्व्वत्र कर्म्मणि प्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्तिप्रसक्तिरिति वदन्ति। तदसत्, उक्तास्वरसेन पूर्व्वमपि ज्ञानसाध्यकं परित्यज्य स्थलान्तरानुसरणादत्र निर्वीजतादृशस्थलपरित्यागे सन्दर्भविरोधात् आदिपदेन च हेतोः साध्यस्य च विशेषशब्देन उपादानस्यायुक्तत्वाच्च।

प्रतियोगितावच्छेदकविशिष्टत्वोपादानस्य पूर्व्वोक्तस्थल एव व्यावृत्तिं स्मारयति, 'भूतलेति। यद्यपि पूर्व्वं विशिष्टसाध्यकेऽतिव्याप्तिप्रदर्शनोत्तरं विशिष्टस्यातिरिक्ततापक्षे तदसङ्गतेरस्वरसादुभयसाध्यकेऽतिव्याप्तिर्दर्शिता, तथापि द्वन्द्वेऽल्पाच्तरपूर्व्वनिपातनियमात् उभयत्वविशिष्टान्तस्य प्रागभिधानं, अत्र च पूर्व्वस्थले द्वित्वाद्यवच्छिन्नप्रतियोगितया व्यासज्यवृत्तित्वोपगमेऽतिव्याप्तिर्न भवतीत्यस्वरसेन द्वितीयस्थलातिव्याप्त्यवतारणम् पूर्व्वाभिप्रायविरोधात् अनुपादेयम्। 'न मनोगुणादिवृत्तीति, विशेष्ये शुद्धे तद्वृत्तित्वसत्त्वेऽपि विशिष्टे तद्वृत्तित्वाभावोऽचत एव एकरूपावच्छिन्न एव तत्तदभावयोर्विरोधेनावृत्तेरित्यभिमानः। न चैवं विशिष्टान्तानुपादानेऽपि सत्तादौ विशिष्टसत्तात्वादिना गुणाद्यवृत्तित्वसत्त्वेन विशिष्टसत्ताद्यभावस्य लक्षणघटकतया अतिव्याप्त्यप्रसक्तेर्न विशिष्टान्तव्यावृत्तिसम्भव इति वाच्यम्। प्रतियोगिनि किञ्चिद्रूपावच्छिन्ने हेत्वधिकरणयत्किञ्चिद्वृत्तित्वसत्त्वेनाभावस्य लक्षणघटकत्वे सत्तावान् द्रव्यत्वादित्यादावपि सत्तात्वाद्यवच्छिन्नाभावस्य लक्षणघटकताप्रसक्त्या अव्याप्त्यापत्तेः हेत्वधिकरणावृत्तित्वस्य तद्वृत्तिभिन्नत्वरूपस्यैव निवेशनीयतया विशिष्टसत्तावान् जाते-

रित्यादौ विशिष्टसत्ताद्यभावस्य लक्षणघटकत्वानिर्व्वाहेण अति-व्याप्तिप्रसक्तेः, प्रतियोगितावच्छेदकविशिष्टत्वोपादाने प्रतियोगि-तावच्छेदकविशिष्टत्वावच्छेदेन हेत्वधिकरणनिरूपितवृत्तित्वात्य-न्ताभावस्यैव निवेशनीयतया विशिष्टसत्ताद्यभावस्य लक्षणघटकता-निर्व्वाहेणातिव्याप्तिवारणं सम्भवतीति व्यावृत्तिसङ्गतिः। सामान्य-पदप्रयोजनमाह, 'संयोगसामान्यञ्चेति, संयोगि द्रव्यत्वादित्यादौ संयोगत्वावच्छिन्नाभावप्रतियोगिनि यत्किञ्चित्संयोगव्यक्तौ हेत्वधि-करणयत्किञ्चिद्घटादिव्यक्त्यवृत्तित्वसत्त्वेऽपि तत्प्रतियोगिसामान्ये तदसत्त्वेन तादृशाभावस्य लक्षणाघटकतया नाव्याप्तिरित्यर्थः। तद्वति रूपान्तरावच्छेदेनापि तदभावोऽप्रामाणिकः (१) इत्याशयेन दूषयति, 'विशिष्टस्यानतिरिक्तत्वादिति, तथाच उभयत्वादिविशि-ष्टस्यापि मूर्त्तत्वादेः शुद्धमूर्त्तत्वाद्यनतिरिक्ततया मूर्त्तत्वादिवृत्तेर्मनो-वृत्तित्वादेरभावस्य उभयत्वादिविशिष्टेऽपि तस्मिन्नसम्भवात् भूत-त्व-मूर्त्तत्वोभयवान् मूर्त्तत्वादित्यादावतिव्याप्तिर्विशिष्टान्तोपादा-नेऽपि दुर्व्वारैवेति भावः। न च भूतत्व-मूर्त्तत्वोभयं न मनसि गुणाद्यन्यत्वविशिष्टसत्ता न गुणे इत्यादिसर्व्वानुभवसिद्धप्रतीतिबला-द्वित्वविशिष्टसत्तात्वावच्छिन्ने मनोगुणादिवृत्तित्वाभावसिद्धेरावश्य-कत्वान्नातिव्याप्तिरिति वाच्यम्। तादृशप्रतीत्या मनोगुणाद्य-धिकरणकद्वित्वविशिष्टत्वावच्छिन्नाभावस्यैवावगाहनात् जातौ न किञ्चित् समवैतीति निश्चयदशायां जातौ न भूतत्व-मूर्त्तत्वोभयं न

(१) विशेष्यवृत्तेर्विशिष्टानुयोगिकाभावोऽप्रमाणिक इति पा०।

विशिष्टसत्तेति प्रतीतिवत् मनसि गुणे च न किञ्चित् समवैतीति भ्रमदशायामपि तादृशप्रतीतेरानुभविकतया मणोगुणादिसमवेतत्वाभावस्य तद्विषयत्वासम्भवेन मनोगुणाद्यधिकरणकाभावस्य तद्विषयताया आवश्यकत्वात् तादृशभ्रमाभावकालीनतथाकारप्रतीतावपि तस्यैव विषयत्वौचित्यात् अन्यथा कल्पनागौरवापातात्, भूतत्व-मूर्त्तत्वोभयं न मनोवृत्ति गुणान्यत्वविशिष्टसत्ता न गुणवृत्तिरित्यादिप्रत्ययाश्च तादृशोभयत्वविशिष्टसत्तात्वादौ मनोगुणादिवृत्तितावच्छेदकत्वाभावं मनोगुणादिवृत्तित्वे तादृशोभयत्वविशिष्टसत्तात्वावच्छेद्यत्वाभावं वा अवगाहन्ते तत्र तादृशाभावस्य क्लृप्तत्वात्। न च यत्किञ्चिद्वेत्वधिकरणवृत्तितानवच्छेदकस्वप्रतियोगितावच्छेदककत्वमेव विवक्षणीयम् उभयत्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकोभयत्वादेश्च मनोवृत्तितानवच्छेदकत्वात्तादृशाभावसंग्रहेण नातिव्याप्तिरिति वाच्यम्। गुणान्यत्वविशिष्टसत्ताद्यभावप्रतियोगितावच्छेदकस्य वैशिष्ट्यसहितसत्तात्वस्य गुणादिवृत्तितावच्छेदकशुद्धसत्तात्वाद्यनतिरिक्ततया तदनवच्छेदकत्वासम्भवेन उक्तविवक्षयापि तादृशाभावसंग्रहासम्भवात्। यदभावीयप्रतियोगितावच्छेदकतायां यत्किञ्चिद्वेत्वधिकरणवृत्तितावच्छेदकत्वपर्य्याप्त्यवच्छेदकावच्छिन्नपर्य्याप्तताविरहस्तादृशाभावनिवेशे दर्शितातिव्याप्तिपरीहारश्च सम्भवतीत्याशङ्क्य दूषणान्तरमाह, 'समवायेनेति, 'जातिमन्निष्ठतादृशाभावेति, जातिमन्निष्ठो यो घटत्वाद्यभावस्तस्यैव पटाद्यसमवेतप्रतियोगिकत्वेन तादृशत्वात् तत्प्रतियोगितायां जातित्वस्यानवच्छेदकत्वादिति भावः। जाति-

मदवृत्तेर्जातित्वावच्छिन्नाभावस्य तादृशत्वं न सम्भवति इति स्फुटयति, 'जातिशून्ये चेति, 'तादृशसम्बन्धेन' समवायेन, 'अप्रसिद्धेरिति, तथाच जातिमदवृत्तिर्योऽभावस्तत्प्रतियोगिसामान्ये हेतुमद्यत्किञ्चित्पदेन जातिशून्यमेवोपादायावृत्तित्वान्तं घटनीयं तच्च न सम्भवति प्रतियोग्यप्रसिद्ध्या तदप्रसिद्धेरिति नासौ लक्षणघटकइति भावः। जातेर्व्याप्यवृत्तितया तत्साध्यके प्रतियोगिवैयधिकरण्यविशेषणस्य प्रयोजनविरहेणानिवेशेन नोक्तदोषावकाश इत्यव्याप्यवृत्तिसाध्यक एवातिव्याप्तिमाह, 'संयोगादीति, 'अतिव्याप्तिरिति, संयोगत्वावच्छिन्नाभावस्य हेत्वधिकरणयत्किञ्चिद्व्यक्त्यसमवेतप्रतियोगिसामान्यकत्वासम्भवेन लक्षणाघटकत्वादिति भावः। तदसम्भवमेव स्फुटयति, 'अद्रव्य इति सामान्यादावित्यर्थः, 'अप्रसिद्धेरिति, तथाच यत्किञ्चिद्व्यक्तीत्यत्वेन न सामान्याद्युपादानसम्भव इति भावः। 'द्रव्य इति, तथाच द्रव्यमपि यत्किञ्चिद्व्यक्तिपदेनोपादाय न तादृशाभावस्य तथात्वं शक्योपपादनमिति भावः।

---

दीधितिः ।

मैवं साध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभावस्य विवक्षितत्वात्। धूमसंयोगे वह्न्यधिकरणायोगोलकानुयोगिकत्वस्य चैत्रान्यत्वविशिष्टैतद्दण्डसंयोगे एतद्दण्डाधिकरचैत्रानुयोगिक-

त्वस्य गुणकर्म्मान्यत्वविशिष्टसत्तासमवाये च जात्यधिकरणगुणानुयोगिकत्वस्य विरहान्नातिप्रसङ्गः ।

---

गादाधरी विवृतिः ।

'साध्यतावच्छेदकसम्बन्धसामान्ये उभयाभावस्य विवक्षितत्वात्' इति योजना । तथाच स्वप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्व-हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वसामान्योभयाभाववत्साध्यतावच्छेदकसम्बन्धसामान्यकत्वमभावे, स्वप्रतियोगितावच्छेदकेत्यत्र स्वावच्छेदकत्वं प्रक्षिप्य तादृशाभाववत्सम्बन्धसामान्यकत्वं प्रतियोगितायां वा विशेषणं देयमिति भावः । जलादिसंयोगे वह्निप्रतियोगिकत्व-धूमवदनुयोगिकत्वोभयाभावसत्त्वेऽपि साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गततत्तद्धूमाधिकरणानुयोगिकवह्निसंयोगे वह्निप्रतियोगिकत्व-तत्तदधिकरणानुयोगिकत्वोभयाभावासत्त्वान्न वह्न्यभावस्य लक्षणघटकत्वमिति घटाद्यभावमादाय वह्निमान् धूमादित्यत्र लक्षणसमन्वयः । घटवान् महाकालत्वादित्यादौ पुनरवृत्तिगगनादेरभाव एव लक्षणघटकः कालिकसम्बन्धसामान्ये तत्प्रतियोगिगगनादिप्रतियोगिकत्वाभावेनोभयाभावसौलभ्यात् हेत्वधिकरणानुयोगिकसाध्यतावच्छेदकसम्बन्धसामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वाभावनिवेशे जातिमान् मेयत्वादित्यादावुक्तातिव्याप्तिवारणमशक्यं सामान्याद्यनुयोगिकसमवायाप्रसिद्धेः जात्यादिमदनुयोगिकसमवाये च जात्यादिप्रतियोगिकत्वसत्त्वेन जातित्वाद्यवच्छिन्नाभावस्य प्रति-

योगिव्यधिकरणत्वानुपपत्तेः, निरुक्तप्रतियोगिप्रतियोगिकसाध्य-ताध्यतावच्छेदकसम्बन्धसामान्ये हेत्वधिकरणीभूतयत्किञ्चिदग्रत्य-नुयोगिकत्वाभावनिवेशे घटवान् महाकालत्वादित्यादावव्याप्ति-वारणमशक्यं गगनत्वादिविशिष्टप्रतियोगिककालिकसम्बन्धा-प्रसिद्धा गगनाभावस्यापि प्रतियोगिव्यधिकरणत्वानुपपत्तेरि-त्युभयाभावानुधावनम्। यत्किञ्चित्पदप्रयोजनमाह, 'धूमसंयोग-इति, 'अयोगोलकानुयोगिकत्वस्येति, 'विरहान्नातिप्रसङ्ग इत्य-ग्रेतनेनान्वयः, साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतधूमसंयोगि धूमप्रतियोगिकत्व-वह्निमदनुयोगिकत्वयोरुभयोरेव सत्त्वेन तत्सा-मान्योभयाभावस्य तत्र सत्त्वात् यत्किञ्चित्पदानुपादाने धूमवान् वह्नेरित्यत्रातिव्याप्तिः स्यात्। हेत्वधिकरणस्य च हेतुमत्त्वेन न निवेशः किन्तु तद्व्यक्तित्वेन यत्किञ्चिदेकहेतुमद्व्यक्तेर्निवेश-इत्येतल्लाभार्थकतदुपादाने पुनर्हेत्वधिकरणायोगोलकानुयोगिक-त्वस्य धूमसंयोगि अभावादन्यसंयोगि च धूमप्रतियोगिकत्वस्या-भावात् संयोगसामान्यस्यैवोभयाभाववत्त्वात् धूमत्वावच्छिन्ना-भावोऽपि लक्षणघटक इति नातिप्रसङ्ग इत्यर्थः। प्रतियोगि-तावच्छेदकविशिष्टार्थकनिरुक्तपदोपादानप्रयोजनं संयोगेन चैत्रा-न्यत्वविशिष्टैतद्दण्डत्वेन चैत्रनिष्ठदण्डसाध्यके एतद्दण्डहेतौ सम-वायेन विशिष्टसत्तादिसाध्यके जातिरूपहेतौ चातिव्याप्तिवारण-रूपं दर्शयति, 'चैत्रान्यत्वेति, निरुक्तपदानुपादाने संयोगसामान्या-न्तर्गतचैत्रनिष्ठैतद्दण्डसंयोगि हेत्वधिकरणचैत्रानुयोगिकत्व-चैत्रान्य-त्वविशिष्टैतद्दण्डाभावप्रतियोग्येतद्दण्डप्रतियोगिकत्वयोः समवाय-

सामान्यान्तर्गतगुणाद्यनुयोगिकसत्तासमवाये च हेत्वधिकरणगुणा-नुयोगिकत्व-विशिष्टसत्ताभावप्रतियोगिसत्ताप्रतियोगिकत्वयोर्द्वयो-रेव सत्त्वेन तादृशाभावस्य लक्षणघटकता न स्यादिति प्रसक्तातिप्रसक्तेस्तदुपादानान्नावकाशः चैत्रे गुणादौ च संयोगेन समवायेन च विशिष्टदण्ड-विशिष्टसत्तावैशिष्ट्याप्रत्ययात्तदनुयोगिकसंयोग-समवाययोर्विशिष्टदण्ड-सत्तात्वावच्छिन्नप्रतियोगिताकत्वानभ्युपगमेनान्यानुयोगिकयोश्च तयोश्चैत्र-गुणाद्यनुयोगिकत्वाभावेनोभयाभावस्याक्षततया विशिष्टसाध्याभावस्यापि लक्षणघटकत्वादित्यर्थः। अथात्र संयोगेन घटादौ साध्ये घटत्वादिहेतावतिव्याप्तिः संयोगसामान्यान्तर्गतघट-पटादिसंयोगे घटाद्यनुयोगिकत्व-घटादिप्रतियोगिकत्वोभयसत्त्वेन घटादिनिष्ठघटाद्यभावस्य लक्षणाघटकत्वात्। न च स्वस्मिन् संयोगेन स्वविशिष्टबुद्ध्यनुदयादन्यत्र घटविशिष्टबुद्धिमात्रनियामके घटसंयोगे घटप्रतियोगिकत्वमात्रं घटेऽन्यविशिष्टबुद्धिमात्रनियामकसंयोगे च तदनुयोगिकत्वमात्रमिति व्यभिचारनिरूपकघटानुयोगिकत्व-तत्प्रतिकत्वोभयं न कुत्रापि संयोगेऽस्ति। न हि समवायेन संयोगाधिकरणत्वमेव संयोगानुयोगित्वं येन घटसमवेतसंयोगमात्रस्यैव घटानुयोगिकत्वं स्यात्, तथा सति-तत्सम्बन्धानुयोगिताया एव तद्विशिष्टबुद्धिविषयताप्रयोजकत्वेन स्वस्मिन्नपि स्वविशिष्टबुद्ध्यापत्तेर्दुर्व्वारत्वात् किन्तु सम्बन्धान्तरमेवेति वाच्यम्। येन सम्बन्धेन घटेऽन्यविशिष्टधीस्तेनैव सम्बन्धेनान्यत्र घटविशिष्टबुद्धिजननादेकत्रैव संयोगे घटानुयोगिकत्व-घटप्रतियोगिकत्वयोरावश्यकत्वात् यस्मिन् सम्बन्धे यत्प्रतियोगिकत्वविशिष्टे यदनु-

योगिकत्वं तत्सम्बन्धेन तस्यैव तत्र विशिष्टप्रमितेः स्वप्रति-योगिकत्वविशिष्टे च संयोगे स्वानुयोगिकत्वानुपगमेन स्वस्मिंस्तेन सम्बन्धेन स्वविशिष्टप्रमापत्त्यनवकाशादिति चेन्न, संयोगेनाधि-करणांशे आधेयस्यैव विशिष्टधीर्जन्यते न तु आधेयांशे आधारस्य च, आधाराधेयभावानापन्नयोर्वृत्त्यनियामकसंयोगिनोः संयोगेन विशिष्टबुद्धेरप्रामाणिकत्वात्, आधेयत्वानुपस्थितिकालीने भूतले घट इत्यादिप्रत्यये घटाद्यंशे भूतलादेः प्रकारत्वेऽपि आधेयताया-एव संसर्गतोपगमात् न तु संयोगमात्रस्य, एवं सति वृत्त्य-नियामकस्य गगनादिसंयोगस्य सम्बन्धत्वानुपपत्तिर्विशिष्टबुद्धि-नियामकस्यैव तथात्वादिति चेत्, का क्षतिः, एवञ्च येन संयोगेन अन्यत्र घटविशिष्टबुद्धिर्जन्यते घटस्य तत्संयोगाश्रया-नाधारत्वेन घटेन तेनऽन्यविशिष्टबुद्धिर्जन्यते इति संयोगमात्र-एव तत्प्रतियोगिकत्व-तदनुयोगिकत्वोभयाभावस्याक्षतत्वात् । अथ यस्य घटस्याधोऽवस्थितपटे येन संयोगेन विशिष्टबुद्धिर्जनिता तेनैव च संयोगेन पटेन समं परिवृत्य स्थापिते तद्घटे पटविशिष्ट-बुद्धिरपि जन्यते तत्र संयोगे घटप्रतियोगिकत्व घटानुयोगिकत्वो-भयस्यावश्यकतया संयोगेन घटसाध्यके तद्घट-तत्पटान्यतरत्वादा-वतिव्याप्तिदुर्व्वारैवेति चेदेवं सति साध्यतावच्छेदकसम्बन्धानु-योगितासामान्ये निरुक्तप्रतियोगिप्रतियोगिकत्वविशिष्टसम्बन्ध-निरूपितत्व--हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठत्वोभयाभाव एव विवक्षणीयः, स्वस्मिन् स्वविशिष्टबुद्ध्यनुदयेन स्वप्रतियोगिकत्ववि-शिष्टसंयोगनिरूपितत्वस्य स्वनिष्ठानुयोगितायामसत्त्वात् संयोगी-

यानुयोगितासामान्ये घटप्रतियोगिकत्वविशिष्टनिरूपितत्व-तद्-घटनिष्ठत्वोभयाभावोऽचत एवेति, एवञ्च यदत्र कल्पे समवायैक्य-मतेऽतिव्याप्तिमुद्भावयिष्यति तद्यथाश्रुताभिप्रायेणेत्यवधेयम् ।

अथ द्रव्यत्वादिकं प्रति पर्य्याप्तिसम्बन्धेन द्वित्वादेर्व्यापकत्वा-पत्तिः हेतुमत एकैकद्रव्यस्य पर्य्याप्तिसम्बन्धेन द्वित्वाद्यनधिकरणत्वे-ऽपि द्वित्वादिपर्य्याप्तौ हेत्वधिकरणतद्व्यक्त्यनुयोगिकत्वाभावासत्त्वा-दिति द्रव्यत्वादिना पर्य्याप्तिसम्बन्धेन गगनादौ द्वित्वाद्यनुमाना-पत्तिरिति चेन्न, उद्देश्यतावच्छेदकानतिरिक्तवृत्तित्वाविशेषित-पर्य्याप्तेः क्वचिदपि सम्बन्धत्वानभ्युपगमेन तादृशपर्य्याप्तिसंसर्गका-नुमितेरापादनासम्भवात् । गगनत्वाद्यनतिरिक्तवृत्तित्वविशेषित-पर्य्याप्तेर्द्वित्वादिप्रतियोगिकत्वाभावात् द्वित्वादिनिष्ठव्यापकत्वाघट-कतया तादृशसम्बन्धेनापि तदनुमानापत्त्यनवकाशात् ।

यत्तु हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वस्थाने हेतु-मत्त्वपर्य्याप्त्यवच्छेदकयत्किञ्चिद्धर्म्मावच्छिन्नानुयोगिताकत्वं निवेश्य द्वित्वादिपर्य्याप्तौ च द्रव्यत्वादिपर्य्याप्त्यवच्छेदकीभूता ये एकैकमा-त्रवृत्तिधर्म्मास्तदवच्छिन्नानुयोगिकत्वविरहान्न तेन सम्बन्धेन द्वित्वा-देर्द्रव्यत्वादिरूपप्रत्येकपर्य्याप्तधर्म्मव्यापकतापत्तिः, हेतुमद्वृत्तियत्-किञ्चिद्धर्म्मावच्छिन्नानुयोगिताकत्वनिवेशे इमे बहवस्त्रित्वादित्यादौ पर्य्याप्तिसम्बन्धेन हेतु-साध्यभावेऽव्याप्तिश्च हेतुमदेकमात्रवृत्ति-धर्म्मावच्छिन्नानुयोगिताकत्वस्य बहुत्वादिपर्य्याप्तावसत्त्वेन तादृश-साध्याभावे निरुक्तप्रतियोगिवैयधिकरण्यस्य दुर्व्वारत्वात् । अतो हेतुमत्त्वपर्य्याप्त्यवच्छेदकयत्किञ्चिद्धर्म्मनिवेश इति, तन्न मनोरमं,

एतादृशरीत्या उक्तकल्पपरिष्कारेऽपि प्रतियोगिमद्भेदे हेतु-पर्य्याप्त्यवच्छेदकावच्छिन्नानुयोगिताकत्वस्याग्रिमकल्पे विवक्षणे इदमाकाशं आकाश-घटोभयत्वादित्यादावतिव्याप्तेर्दुर्व्वारत्वात् आकाशत्वाद्यवच्छिन्नभेदस्य दर्शितहेतुपर्य्याप्त्यवच्छेदकतदुभय-वृत्तिधर्म्मावच्छिन्नेऽसत्त्वात् प्रतियोगिवृत्तिधर्म्मस्य भेदाधिकरणता-नवच्छेदकत्वात्। न च व्यासज्यवृत्तिधर्म्मसाध्यके ईदृशी रीति-रुपादेया नान्यत्रेति वाच्यम्। आकाशत्वादेराकाश-घटादौ व्यासज्य-वृत्तित्वभ्रमदशायां तदवच्छिन्नभेदस्य प्रत्येकं हेत्वधिकरणवृत्तित्व-ग्रहेऽपि आकाश-घटोभयत्वादिहेतुना आकाशत्वाद्यनुमित्युत्पत्त्या तन्निर्व्वाहाय तत्रापि साधनपर्य्याप्त्यवच्छेदकावच्छिन्नाधिकरण-ताकप्रतियोगिमद्भेदघटितव्याप्तिज्ञानहेतुताया वाच्यतया तन्ना-म्यनुमित्यौपयिकव्याप्तिप्रसङ्गापत्तेः तस्माद्वह्नित्वादिसाध्यकं द्रव्य-त्वाकाशत्वादिकं सद्धेतुरेव, इमे बहुवह्नित्वादित्यादावव्याप्ति-वारणाय च पर्य्याप्त्यतिरिक्तस्वरूपसम्बन्धेन प्रतियोग्यधिकरण-त्वावच्छिन्नभेद एव हेतुमति विवक्षणीयः न तु प्रतियोग्य-वच्छिन्नभेदः, प्रतियोगिमद्वृत्तिधर्म्मवत्त्वं वा, तेन प्रत्येकावृत्तिबहु-त्वाद्यवच्छिन्नभेदमादाय तदभावस्य न प्रतियोगिवैयधिकरण्यमित्येव सारम्। इदन्तु बोध्यं, साध्यतावच्छेदकावच्छिन्नाभावनिरूपित-त्वविशिष्टसाध्यवन्निष्ठतदधिकरणताभिन्नहेतुमन्निष्ठाधिकरणताकत्व-मेव 'प्रतियोगिव्यधिकरणहेतुसमानाधिकरणेति प्रतीकार्थः, महा-कालो घटवान् महाकालत्वादित्यादौ च नैतादृशविशेषणाक्रान्ता-भावासिद्धिः कालिकसम्बन्धावच्छिन्नपटाद्यभावस्यैव तथात्वात् हेतु-

मन्निष्ठतदधिकरणतायां साध्याभावाधिकरणताभिन्नत्वेन विशिष्ट-भेदसत्त्वादित्युभयाभावघटितप्रतियोगिवैयधिकरण्यानुधावनं दीधि-तिकृतामफलमेव, एवञ्च प्रतियोगिवैयधिकरण्यस्य यादृशप्रति-योगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इत्यादिक्रमेण निर्व्वचनेऽननुगमात् प्रतियोगितावच्छेदकत्वाभावकूटनिवेशे च व्याप्तिर्दुर्ज्ञेया इति दूषणमनवकाशमिति दिक्।

---

दीधितिः।

स्वरूपसम्बन्धेन गगनादेर्वृत्तिमत्त्वे तु निरुक्तप्रतियो-ग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्स-म्बन्धावच्छिन्नत्व-यद्धर्म्मावच्छिन्नत्वोभयाभावस्तेन सम्ब-न्धेन तद्धर्म्मावच्छिन्नस्य व्यापकत्वं बोध्यम्। समवाय-सम्बन्धेन मेयसामान्याभावस्य सामान्यादौ सत्त्वान्मेय-त्वादेरप्यभावप्रतियोगितावच्छेदकत्वं सुलभम्। अतएव समवायस्यैकत्वेन द्रव्यत्वादिप्रतियोगिकत्व-गुणाद्यनु-योगिकत्वोभयसत्त्वेऽपि द्रव्यं जातेरित्यादौ वह्नि-धूमो-भयवान् वह्नेरित्यादौ संयोगस्य द्वित्वावच्छिन्नप्रतियो-गिकत्वविरहेऽपि च नातिव्याप्तिरित्यपि वदन्ति।

---

गादाधरी विवृतिः।

ननु गगनादेरपि कालिकसम्बन्धेन कालवृत्तित्वमावश्यकम्

अन्यथा तेषां परमार्थसत्त्वानुपपत्तिः तस्य कालवृत्तितारूप-त्वात्, एवं कारणत्वानुपपत्तिश्च तस्य पूर्व्वकालवृत्तिताघटित-त्वात् अवृत्तित्वप्रवादश्च तत्र कालिकातिरिक्तसम्बन्धेनावृत्तित्व-परः, इत्यञ्च कालिकसम्बन्धसामान्ये गगनादिप्रतियोगिकत्व-महा-कालानुयोगिकत्वोभयाभावोऽपि दुर्लभ इति तदभावेऽपि प्रति-योगिवैयधिकरण्यं दुर्घटमतः कालिकसम्बन्धेन विश्वस्य वृत्ति-त्वपक्षे कल्पान्तरमाह, 'स्वरूपेति, यद्यपि गगनादेः कालिका-दिसम्बन्धेनासम्बद्धत्वेऽपि ईश्वरज्ञानं विषयितासम्बन्धेन घट-वन्नित्यज्ञानत्वादित्यादावव्याप्तिः पूर्व्वकल्पे दुर्निर्व्वारा वस्तुमात्र-स्यैव हेतुमति ईश्वरज्ञाने विषयितासम्बन्धेन सम्बद्धत्वात् तत्र तेन सम्बन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः, तथापि वृत्त्य-नियामकसम्बन्धेन व्यापकत्वानभ्युपगन्तॄणां तत्र तादृशाभावा-प्रसिद्धेरदोषतया कालिकसम्बन्धेन गगनादेर्वृत्तिमत्त्वपक्षे तेन सम्बन्धेन घटादिसाध्यकमहाकालत्वादावव्याप्तिरेव कल्पान्तरा-नुसरणवीजतयोपदर्शिता।

केचित्तु साध्यतावच्छेदकविशिष्टप्रतियोगिकत्वघटितत्वत्वा-वच्छिन्नाभावविवक्षणे घटवन्नित्यज्ञानत्वादित्यादौ नाव्याप्ति-प्रसङ्गः पटत्वादिविशिष्टनिरूपितायामीश्वरज्ञानानुयोगिकविष-यितायां साध्यतावच्छेदकघटत्वादिविशिष्टप्रतियोगिकत्वविरहात् उपदर्शितत्वत्वावच्छिन्नभावसत्त्वेन पटत्वावच्छिन्नाभावस्यैव लक्षण-घटकतया अव्याप्तिविरहात् पूर्व्वकल्पे न तत्र दोषः। न चोक्तत्वत्वावच्छिन्नाभावविवक्षणे महाकालो घटवान् काल-

परिमाणादित्यादावपि पटत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिक-रण्यसम्भवेनाव्याप्त्यप्रसक्त्या कल्पान्तरानुसरणासङ्गतिरिति वाच्यम् । महाकाल: प्रमेयवान् कालपरिमाणादित्यादौ दर्शितत्विावच्छिन्नाभावघटितस्यापि प्रतियोगिवैयधिकरण्यस्य प्रसिद्धसम्भवात् घटत्व-पटत्वाद्यवच्छिन्नप्रतियोगिताकस्य कालिकसम्बन्धस्य प्रमेयत्वरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिकतत्सम्बन्धानतिरिक्ततया घटत्व-पटत्वाद्यवच्छिन्नप्रतियोगिताकाभावे तादृशप्रतियोगिवैयधिकरण्यस्य दुर्घटत्वात् । न हि रूपभेदेन एकैकवस्तुन एव कालिकादिसम्बन्धभेद: प्रामाणिक:, इदानीं प्रमेयमिदानीं घट-इत्यादिप्रतीतेरेकसम्बन्धावगाहित्वेऽपि बाधकाभावात् । तथाच यत्र कालिकसम्बन्धे घटत्वाद्यवच्छिन्नप्रतियोगिकत्वं तत्र प्रमेयत्वाद्यवच्छिन्नप्रतियोगिकत्वं महाकालानुयोगिकत्वञ्चेति नोक्तत्वित्वावच्छिन्नाभाव इति, विषयिता च घटत्वावच्छिन्नप्रतियोगिका या ततोऽन्यैव प्रमेयत्वावच्छिन्नप्रतियोगिका, विषयितावैलक्षण्यमन्तरेण घट इत्यादिज्ञानानां प्रमेय इत्यादिज्ञानवैलक्षण्यानिर्व्वाहात् अत: प्रमेयवन्नित्यज्ञानत्वादित्यादौ घटत्वाद्यवच्छिन्नाभावस्य त्वित्वावच्छिन्नाभावघटितोक्तप्रतियोगिवैयधिकरण्यनिर्व्वाह: । न च प्रमेयसाध्यकस्य व्याप्यवृत्तिसाध्यकतया तत्स्थलीयव्याप्तौ प्रतियोगिवैयधिकरण्याप्रवेशात् प्रमेयवान् कालपरिमाणादित्यादौ नोक्ताप्रसिद्धिनिबन्धनाव्याप्त्यवकाश: अतएवोक्तं 'अव्याप्यवृत्ति किमपि व्यापकं न स्यादिति, तथाच कालिकविशेषणतया घटत्वावच्छिन्नसाध्यके दोषविरहात् कल्पान्तरानुसरणमनर्थकमेवेति

वाच्यम् । व्याप्यवृत्तिसाध्यकेऽपि साध्यस्य अव्याप्यवृत्तित्वभ्रमदशायामनुमितिनिर्व्वाहाय प्रतियोगिवैयधिकरण्यविषयकज्ञानस्य हेतुतायाः स्वीकरणीयतया तत्रापि प्रतियोगिवैयधिकरण्यप्रसिद्धेरावश्यकत्वात् अन्यथा प्रतियोगिवैयधिकरण्याघटितव्यापकताज्ञानस्य दुर्घटत्वात्, 'अव्याप्यवृत्ति किमपीत्यादेरपि अव्याप्यवृत्तित्वेन ज्ञातं किमपि व्यापकं न स्यादित्यर्थः । वस्तुतस्तु एतत्क्षणान्यक्षणवृत्तित्वविशिष्टप्रमेयवान् कालपरिमाणादित्यादेः कालिकाव्याप्यवृत्तितया तत्र प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकतया तत्रैवाप्रसिद्धिनिवन्धनाव्याप्तेः कल्पान्तरानुसरणं सङ्गतमित्याहुः । तच्चिन्त्यं, परमेश्वरज्ञानानुयोगिकप्रमेय-घटत्वावच्छिन्ननिरूपितविषयितायां साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतायां साध्यतावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य घटत्वाद्यवच्छिन्नप्रतियोगिकत्वस्य च सत्त्वेन प्रमेयवन्नित्यज्ञानत्वादित्यादौ घटत्वाद्यवच्छिन्नाभावे प्रतियोगिवैयधिकरण्यस्य दुर्घटतया अव्याप्तेरुक्तरीत्या वारणासम्भवात् । न च शुद्धप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वस्य त्वित्वावच्छिन्नाभावप्रतियोगितया विवक्षणात् प्रमेयघटत्वाद्यवच्छिन्ननिरूपितविषयितानिरूपकत्वस्य च घटत्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकघटत्वादिना शुद्धेनानवच्छिन्नत्वात् तादृशविषयितायामुक्तत्वित्वावच्छिन्नाभावोऽक्षत एवेति वाच्यम् । एवं सति परमेश्वरज्ञानस्य प्रमेयत्वादिसहितघटत्वावच्छिन्नविषयतामात्रेणैव तस्य सार्व्वज्ञनिर्व्वाहे शुद्धघटत्वाद्यवच्छिन्ननिरूपितविषयतायास्तत्र ज्ञानेऽप्रामाणिकतया शुद्धघटत्वाद्यवच्छिन्नसाध्यके

नित्यज्ञानत्वादिहेतौ शुद्धघटत्वाद्यवच्छिन्नाभावस्यापि प्रतियोगि-वैयधिकरण्यसत्त्वेनाव्याप्तेः ईश्वरज्ञानानुयोगिकविषयितासामान्ये शुद्धघटत्वाद्यवच्छिन्नप्रतियोगिकत्वविरहेण विषयितासामान्ये त्रित्वावच्छिन्नाभावस्याक्षतत्वात्। अस्तु वा ईश्वरज्ञानेऽपि शुद्धघट-त्वावच्छिन्नविषयिता तथापि तद्घटत्वावच्छिन्नसाध्यके प्रमेय-त्वसहिततद्घटत्वेनैव यज्ज्ञानं तद्घटं विषयीकरोति तादृशज्ञान-मात्रवृत्तिहेतुकस्थलेऽव्याप्तेर्दुरुद्धरत्वात् तद्घटविषयकेऽपि ज्ञाने तद्घटानधिकरणकालावच्छेदेन तद्घटत्वावच्छिन्नाभावसत्त्वात् तादृशाभावस्य च शुद्धतद्घटत्वरूपप्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिकत्वं तज्ज्ञानानुयोगिकविषयितायां नास्तीति तदोक्त-त्रित्वावच्छिन्नाभावसत्त्वेन प्रतियोगितावच्छेदकविशिष्टव्यधिकरण-त्वात्। 'स्वरूपसम्बन्धेन' कालिकसम्बन्धेन, 'निरुक्तप्रतियोग्यन-धिकरणेति प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदका-वच्छिन्नानधिकरणेत्यर्थः। एवञ्च स्वावच्छिन्नत्व-साध्यतावच्छेदक-सम्बन्धावच्छिन्नत्वोभयाभाववत्तादृशप्रतियोगितासामान्यको यो धर्म्मस्तदवच्छिन्नसामानाधिकरण्यं तद्धर्म्मावच्छिन्नानुमित्यौपयिक-व्याप्तिरिति पर्य्यवसितं, घटवान् महाकालत्वादित्यादौ समवाया-दिना घटाद्यभावीयप्रतियोगितैव प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिरूपिका प्रसिद्धा तादृशप्रतियोगितासा-मान्ये च कालिकसम्बन्धावच्छिन्नत्वाभावादेव निरुक्तोभयाभाव-वत्त्वमक्षतमिति लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ संयोगा-दिना घटाद्यभावप्रतियोगितायां समवायादिना धूमाद्यभाव-

प्रतियोगितायाञ्च धूमत्वाद्यवच्छिन्नत्व-साध्यतावच्छेदकसम्बन्धा-वच्छिन्नत्वोभयाभावसत्त्वेऽपि साध्यतावच्छेदकसम्बन्धेन साध्यताव-च्छेदकावच्छिन्नाभावप्रतियोगिताया अपि निरुक्तप्रतियोगिता-सामान्यान्तर्गतत्वेन तत्त्वोभयसत्त्वान्नातिव्याप्तिः, धूमादिसमा-नाधिकरणस्य समवायादिना वह्न्याद्यभावस्य संयोगादिना घटाद्यभावस्य च प्रतियोगितायां साध्यतावच्छेदकधर्म्मावच्छिन्न-त्व-तादृशसम्बन्धावच्छिन्नत्वयोरेकैकसत्त्वेऽपि एकैकाभावेन द्वित्वा-वच्छिन्नाभावसत्त्वात् लक्षणसमन्वयः। यद्यपि तादृशाभावीय-साध्यतावच्छेदकधर्म्मावच्छिन्नप्रतियोगितासामान्ये साध्यतावच्छेद-कसम्बन्धावच्छिन्नत्वमात्रस्याभावनिवेशेऽपि सामञ्जस्यं इदं वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वत्वाद्यवच्छिन्नभेदादिप्रतियोगितायां साध्य-तावच्छेदकसम्बन्धावच्छिन्नत्वविरहमादाय प्रमेयसामान्यसाध्यके संयोगेन जन्यत्वविशिष्टघटादिहेतौ साध्यतावच्छेदकावच्छिन्न-भेदस्य संयोग-समवाय-कालिकविशेषणतासम्बन्धावच्छिन्नतदव-च्छिन्नाभावस्य च हेतुमत्यसम्भवेऽपि विषयितासम्बन्धावच्छि-न्नतदवच्छिन्नाभावस्य नित्यज्ञानमात्रवृत्तिहेतौ च संयोगसम्बन्धा-वच्छिन्नतदवच्छिन्नाभावस्य तद्वति प्रसिद्ध्या तदीयसाध्यतावच्छेद-कावच्छिन्नप्रतियोगितायामुक्तसम्बन्धावच्छिन्नत्वस्य विरहमादाय लक्षणसमन्वयसम्भवात्। तथापि हेतुमति सर्व्वैरेव सम्बन्धैः साध्यं वर्त्तते न तु कस्यामपि तादृशाभावप्रतियोगितायां साध्यतावच्छेदकावच्छिन्नत्वमिति भ्रमदशायामप्यनुमितेरानु-भविकतया साध्यतावच्छेदकावच्छिन्नत्वेन तादृशाभावप्रति-

योगिताज्ञानासम्भवात् तद्विशेषितप्रतियोगिताधर्म्मिकसम्बन्ध-विशेषावच्छिन्नत्वाभावज्ञानस्यानुमितिहेतुत्वं न सम्भवतीत्यु-भयाभावानुसरणं। प्रमेयत्वाद्यवच्छिन्नसाध्यकस्थले साध्यताव-च्छेदकावच्छिन्नाभावाप्रसिद्ध्या तदवच्छिन्नत्वमप्यप्रसिद्धमिति शङ्कां परिहरति, 'समवायेति, यद्यपि विषयतादाविव तदवच्छिन्नत्व-प्रसिद्धिसम्भवस्तथापि विषयतादिनिष्ठतदवच्छेद्यतायाः प्रति-योगितानिष्ठाया अन्यूनानतिरिक्तवृत्त्यगुरुधर्म्मनिरूपितविलक्षणा-वच्छेद्यतायाश्च एकजातीयत्वस्याप्रामाणिकत्वेऽतिव्याप्तिभयेन प्रतियोगितायां यादृशमवच्छिन्नत्वं तस्यैव लक्षणे निवेशः कार्य्य-इत्यभिप्रायेण तादृशावच्छिन्नत्वस्यैवाप्रसिद्धिर्दर्शिता। ननु प्रति-योगिताधर्म्मिकोभयाभावघटितलक्षणे विषयितादिवृत्त्यनियाम-कसम्बन्धेन साध्यतायां सद्धेतावव्याप्तिः तादृशसम्बन्धस्य वृत्त्य-नियामकतया अभावप्रतियोगितानवच्छेदकत्वेन तत्सम्बन्धाव-च्छिन्नत्वस्याप्रसिद्धेः। न च तादृशसम्बन्धस्य प्रतियोगितानवच्छे-दकत्वेऽपि प्रतियोगितावच्छेदकतावच्छेदकतया अवच्छेदकतया-मेव तत्सम्बन्धावच्छिन्नत्वप्रसिद्धिः प्रतियोगित्व-तदवच्छेदकत्वनिष्ठा-वच्छिन्नत्वयोर्भिन्नत्वेऽपि एकजातीयतया तादृशानुगतरूपेणैव निवेशादिति वाच्यम्। तथा सति तादृशसम्बन्धेन साध्यतायां व्यभिचारिण्यतिव्याप्तेः प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयान्य-सम्बन्धावच्छिन्नप्रतियोगितायां तत्सम्बन्धावच्छिन्नत्वाभावेन तत्-सम्बन्धावच्छिन्नप्रतियोगित्वस्य चाप्रसिद्धत्वेन तादृशप्रतियोगिता-सामान्ये उभयाभावस्याक्षतत्वात् इति चेत्, मैवं, वृत्त्यनियामक-

सम्बन्धेन व्यापकतास्वीकारे ताद्दशसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वे प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकानधिकरणहेत्वधिकरणकाभावप्रतियोगितावच्छेदकतासामान्ये साध्यतावच्छेदकसम्बन्धावच्छिन्नत्व-ताद्दशरूपावच्छिन्नत्वोभयाभावस्य विवक्षणीयतया सामञ्जस्यात् तथाहि विषयितादिसम्बन्धेन साध्यतायां सद्धेतौ तत्सम्बन्धावच्छिन्नावच्छेदकताकसाध्यवदभावो न प्रतियोगितावच्छेदकताघटकसम्बन्धेन प्रतियोगितावच्छेदकानधिकरणहेत्वधिकरणक: अपि त्वन्यसम्बन्धेन साध्यादिमदभावस्तत्सम्बन्धेनान्याविच्छिन्नस्याभावो वा ताद्दश: तत्प्रतियोगितावच्छेदकतायाञ्च उभयाभावसत्त्वाल्लक्षणसमन्वय:, तत्सम्बन्धावच्छिन्नसाध्यके व्यभिचारिणि च ताद्दशसम्बन्धेन साध्यवदभावोऽपि ताद्दश इति तत्प्रतियोगितावच्छेदकतायामुभयसत्त्वेन नातिव्याप्ति: । वह्निमान् धूमादित्यादौ तु संयोगादिना घटादिमदभाव: समवायादिना वह्न्यादिमदभावश्च लक्षणघटकस्तत्प्रतियोगितावच्छेदकतायाञ्चोभयाभावसत्त्वाल्लक्षणसमन्वय:, धूमवान् वह्नेरित्यादौ तु साध्यतावच्छेदकसम्बन्धेन साध्यवतोऽभावोऽपि ताद्दश इति तत्प्रतियोगितावच्छेदकतायामुभयस्यैव सत्त्वान्नातिव्याप्ति: अन्यत्सर्व्वं स्वयमूह्यम् ।

पूर्व्वकल्पे दोषान्तरमपि दर्शयति, 'अतएवेति पूर्व्वकल्पं परित्यज्यैतत्कल्पावलम्बनादेवेत्यर्थ:, समवायस्य उभयवत्त्वे हेतु: 'एकत्वेनेति, 'उभयसत्त्वेऽपीत्यनेन द्रव्यत्वाभावे हेत्वधिकरणगुणादौ उभयाभावघटितप्रतियोगिवैयधिकरण्यासम्भव: सूचित: ।

'द्रव्यं जातिरित्यादाविति, 'नातिव्याप्तिरित्यग्रिमेणान्वयः। यद्यपि प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं प्रतियोगि-निरूपिततादृशसम्बन्धाननुयोगित्वम् अधिकरणतानिवेशे तादा-त्म्यसम्बन्धेन व्यभिचारिण्यतिव्याप्तेः तथाच समवायैक्यपक्षे गुणा-दावपि द्रव्यत्वप्रतियोगिकसमवायानुयोगिता निष्प्रत्यूहैवेति एतत्-कल्पेऽपि समवायेन द्रव्यत्वाभावस्य लक्षणघटकत्वानिर्व्वाहः तथापि स्वप्रतियोगिप्रतियोगिकत्वविशिष्टतादृशसम्बन्धनिरूपितविलक्षणा-नुयोगिताया एव निवेशनीयतया गुणादिनिष्ठसमवायानुयोगि-तायाश्च द्रव्यत्वीयत्वविशिष्टनिरूपितत्वेन न दोषः। वस्तुतस्तु प्रति-योगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यव-च्छिन्नभेदो हेतुमद्विषणम् एवञ्च प्रतियोगितावच्छेदकविशिष्ट-प्रतियोगिकत्वविशिष्टसम्बन्धानुयोगिन्येव भेदानभ्युपगमात् समवा-यैक्यमतेऽपि समवायेन द्रव्यत्वाद्यवच्छिन्नभेदस्य गुणादावक्षतत्वात् द्रव्यत्वाद्यभावस्य गुणादौ समवायेन प्रतियोगिवैयधिकरण्य-मव्याहतमेवेति। इदन्तु बोध्यं (१) समवाय-कालिकविशेषणता-द्युभयसम्बन्धेन यत्र द्रव्यत्वादेः साध्यता केवलसमवायेन द्रव्यत्वादे-र्हेतुता तत्र साध्यतावच्छेदकसम्बन्धसामान्यान्तर्गतगगनाद्यनु-योगिकसमवायादावुक्तोभयाभावासत्त्वेनातिव्याप्तिः समवायभेद-मतेऽपि दुर्व्वारा साध्यतावच्छेदकसम्बन्धतावच्छेदकरूपविशिष्ट-निरूपितानुयोगितासामान्ये निरुक्तप्रतियोगिप्रतियोगिकसम्ब-न्धनिरूपितत्व--हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठत्वोभयाभावस्य

(१) इदमवधेयमिति पा०।

विवक्षणेन तादृशदोषवारणे च निरुक्तप्रतियोगिप्रतियोगिक-सम्बन्धनिरूपितत्वस्थाने निरुक्तप्रतियोगिप्रतियोगिकत्वविशिष्ट-विशिष्टसम्बन्धनिरूपितत्वनिवेशेन द्रव्यं जातेरित्यादावतिव्याप्तिः शक्यते वारयितुमित्युक्तम् । इदन्त्ववधेयं स्वसमवायिसंयोगादिसम्ब-न्धेन यत्र लौहित्यादेः साध्यता तत्र सद्धेतौ उभयाभावघटितप्रति-योगिवैयधिकरण्यनिवेशपक्षे स्फटिकाद्यनुयोगिकजवादिसंयोगे लौहित्यादिनिरूपितपरम्परासम्बन्धघटके साक्षाल्लौहित्यप्रतियोगि-कत्वाभावेन हेतुमन्निष्ठसाध्याभावे प्रतियोगिवैयधिकरण्यं दुर्व्वारं साक्षात्परम्परासाधारणं प्रतियोगिप्रतियोगिकत्वञ्चानुगतं दुर्व्वचं तादृशस्य तस्य निवेशे अयोगोलकाद्यनुयोगिकवह्निसंयोगा-देरपि धूमादेः परम्परासम्बन्धघटकत्वसम्भवेन धूमादिप्रति-योगिकतया तन्निष्ठधूमाद्यभावेऽपि प्रतिवैयधिकरण्यानुपपत्तिः । न च तादृशसंयोगे संयोगत्वपुरस्कारेण साक्षाल्लौहित्यप्रति-योगिकत्वविरहेऽपि साध्यतावच्छेदकसम्बन्धतावच्छेदकस्वसमवायि-सयोगत्वपुरस्कारेण तत्प्रतियोगिकत्वं स्वीक्रियत इति वाच्यम् । मानाभावात् समवायस्य तत्प्रतियोगिकतयैव तद्घटितपरम्प-रायाः सम्बन्धतोपपत्तेः, किञ्चिद्रूपेणापि संयोगादेर्लौहित्यादि-प्रतियोगिकत्वेऽपि संयोगादिना किञ्चित्समवायिनिरूपितत्वविशि-ष्टसंयोगादिना वा साक्षात्सम्बन्धात्मकेन स्फटिकादौ लौहित्यादि-विशिष्टबुद्धेर्भ्रमत्वानुपपत्तेः प्रमात्वापत्तेश्च, यादृशसम्बन्धे यत्प्र-कारप्रतियोगिकत्व-यद्विशेष्यानुयोगिकत्वोभयाभावस्तादृशसम्बन्धेन तत्प्रकारक-तद्विशेष्यकज्ञानं भ्रम इति तल्लक्षणात् तज्ज्ञानान्य-

ज्ञानस्यैव तादृशसम्बन्धेन तदंशे प्रमात्वात् संयोगे च उभय-सत्त्वेन उभयाभावासत्त्वात् । न च सम्बन्धभेदेन व्यापकताभेदात् स्वसमवायिसंयोगादिरूपपरम्परासम्बन्धेन यत्र साध्यता तत्र पर-म्पराघटकविशेष्यांशे प्रतियोगिप्रतियोगिकत्वमुपेक्ष्य निरुक्तप्रति-योगिकपरम्परासम्बन्धघटकविशेषणसमवायादिमत्प्रतियोगिकत्व--स्यैवाभावो निवेशनीयः परम्परासम्बन्धावगाहिबुद्धावपीदृशरीत्या भ्रमलक्षणमूह्यमिति नानुपपत्तिरिति वाच्यम् । यत्र कालिक-सम्बन्धघटितसामानाधिकरण्यसम्बन्धेन घटादिकं साध्यं महा-कालवृत्तित्वादिकं हेतुस्तत्र कालिकसम्बन्धेन गगनादेरवृत्तित्व-पक्षे प्रतियोगिव्यधिकरणाभावाप्रसिद्धेर्दुर्व्वारत्वात् गगनादिनिरू-पितस्य तादृशसामानाधिकरण्यरूपपरम्परासम्बन्धघटकविशेषणां-शस्य कालिकसम्बन्धस्याप्रसिद्धेः विशेषणीभूतसम्बन्धं विशिष्या-निवेश्य निरुक्तप्रतियोगिप्रतियोगिकसम्बन्धत्वेन सम्बन्धं निवेश्य तद्वत्प्रतियोगिकत्वनिवेशे कालिकविशेषणतावत्समवेतत्वरूपपर-म्परासम्बन्धेन द्रव्यत्वादिसाध्यके द्रव्यवृत्तित्वादिहेतावतिव्याप्तिः तत्र साध्यतावच्छेदकपरम्परासम्बन्धघटकविशेष्यीभूतसमवेतत्वांशे व्यभिचारनिरूपकाधिकरणशब्दज्ञानानुयोगिकत्व-द्रव्यत्वप्रतियोगि-कसम्बन्धत्वावच्छिन्नद्रव्यत्वसमवायवद्गगनादिप्रतियोगिकत्वोभय--सत्त्वेन द्रव्यत्वाभावासंग्रहात्, हेत्वधिकरणानुयोगिकविशेष्यी-भूतसम्बन्धप्रतियोग्यनुयोगिकत्व-निरुक्तप्रतियोगिप्रतियोगिकत्वोभ-याभावस्य सम्बन्धघटकविशेषणांशे निवेशे स्वसमवायिसमवेत-त्वसम्बन्धेन जातिसाध्यक-मेयत्वादिहेतावतिव्याप्तिः तत्र तादृश-

सम्बन्धघटकविशेषणांशे तादृशसम्बन्धेन साध्याधिकरणरूपहेत्व-धिकरणव्यक्त्यनुयोगिकविशेष्यीभूतसम्बन्धप्रतियोग्यनुयोगिकत्वघ-टितोभयसत्त्वात् व्यभिचारनिरूपकाधिकरणहेत्वधिकरणानुयोगि-कविशेष्यीभूतसम्बन्धस्य चाप्रसिद्धेः साध्याभावस्य लक्षणाघट-कत्वादभावान्तरस्यैव लक्षणघटकत्वात् । न च परम्परासम्बन्ध-घटकविशेष्यांशे हेत्वधिकरणानुयोगिकत्व-परम्पराघटकविशेषणी-भूतसम्बन्धवन्निरूपितत्व-निरुक्तप्रतियोगिकसम्बन्धवन्निरूपितत्वानां त्रयाणामभावनिवेशान्न दोषः समवायिसमवेतत्वसम्बन्धेन जाति-साध्यकमेयत्वादौ कालिकविशेषणतावत्समवेतत्वसम्बन्धेन द्रव्य-त्वसाध्यक-द्रव्यवृत्तित्वे स्वसमवायिसंयोगसम्बन्धेन लौहित्यसाध्यक-जात्याद्यवच्छिन्नद्रव्यमात्रवृत्तिहेतुके व्यभिचारिणि साध्याभावमप-हाय त्रयाणामभावप्रतियोगित्वेन निवेशः एवञ्च कालिक-विशेषणतादिघटितसामानाधिकरण्यसम्बन्धेन घटसाध्यकमहा-कालवृत्तित्वादौ गगनाभावस्य संग्रहः गगनादिनिरूपितकालिक-सम्बन्धाप्रसिद्धावपि तन्निरूपिततादात्म्य-विषयितादिसम्बन्धवन्नि-रूपितत्वप्रसिद्ध्या त्रित्वावच्छिन्नाभावसौलभ्यादिति वाच्यम् । स्वीयकालिकसम्बन्धघटितसामानाधिकरण्यसम्बन्धेन जन्यज्ञानादेः साध्यत्वे व्यभिचारिणि कालवृत्तित्वादिहेतावतिव्याप्त्यापत्तेः । व्यभिचारनिरूपकाधिकरणप्रलयत्वादिनिष्ठायाम् उक्तसम्बन्ध-घटकाधेयतायां कालिकसम्बन्धवन्निरूपितत्व-साध्यीयविषयता-सम्बन्धवन्निरूपितत्वयोः सत्त्वेनाधेयतासामान्ये दर्शितत्रित्वावच्छि-न्नाभावासत्त्वेन साध्याभावस्य प्रतियोगिवैयधिकरण्यानिर्व्वाहात् ।

न च निरुक्तप्रतियोगिप्रतियोगिकाभावप्रतियोगितावच्छेदकसम्ब-न्धवन्निरूपितत्वं विवक्षणीयं तादात्म्यातिरिक्तवृत्त्यनियामक-सम्बन्धस्याभावप्रतियोगितानवच्छेदकतया तादात्म्यस्य तथात्वेऽपि विषयताया अतथात्वेन न दोष इति वाच्यम्। विषयतावत्-समवेतत्वसम्बन्धेन ज्ञानसाध्यके नित्यगुणादिसमवेतत्वहेतावव्याप्तेः प्रतियोगिताधर्म्मिकोभयाभावघटितलक्षणे च नियमनुपपत्तिः हेत्वधिकरणस्फटिकादिनिष्ठस्य समवायादिना प्रतियोगिव्यधि-करणस्याभावस्य समवायादिसम्बन्धावच्छिन्नप्रतियोगितायां स्वस-मवायिसंयोगादिरूपपरम्पराया अवच्छेदकत्वाभावेनोभयाभावा-क्षतेः। न च स्वसमवायिसमवायादिसम्बन्धेन घटरूपादिसाध्यके समवायादिना घटादिहेतावव्याप्तिः समवायिनिरूपितत्वविशिष्ट-स्वसमवायादिसम्बन्धावच्छिन्नायां हेतुमत्कपालादिनिष्ठसाध्या-भावप्रतियोगितायां स्वसमवायिसमवायरूपसाध्यतावच्छेदक-सम्बन्धावच्छिन्नत्वसत्त्वात्, न हि तत्र दर्शितप्रतियोगिताव-च्छेदकसम्बन्ध-साध्यतावच्छेदकसम्बन्धयोः शरीरवैलक्षण्यं किमपि शक्यते वक्तुं, स्वांशस्य सम्बन्धाप्रवेशात् (१) इतरांशस्याविशेषात्। इयांस्तु विशेषः दर्शितसाध्यतावच्छेदकसम्बन्धस्य संसर्गतया भाने प्रथमसमवायविषयता प्रकारतानिरूपिता द्वितीयसमवायविषयता विशेष्यतानिरूपिता उक्तप्रतियोगितावच्छेदकसम्बन्धस्य तथा भाने द्वितीयसमवायविषयतैव प्रकारता-विशेष्यतोभयनिरू-

(१) अन्यसम्बन्धस्यान्यसम्बन्धत्वाभावात् स्वत्वस्य परिचायकतामात्रार्थक-त्वादिति भावः।

पितेति सचानुपयुक्त एवेति वाच्यं। परम्परासम्बन्धावच्छिन्ना-भावस्य हि प्रतियोगितावच्छेदकसम्बन्धता परम्पराघटकयावद्वस्तुषु विशेष्य-विशेषणभावापन्नेषु पर्य्याप्ता, विशिष्टसाक्षात्-सम्बन्धावच्छिन्नाभावस्य तु तादृशसम्बन्धता विशेष्य-एव पर्य्याप्ता विशेषणन्तु सम्बन्धविधया अवच्छेदकतायामवच्छेदकत्वमेव न तु तदन्तर्भावेन सम्बन्धविधया प्रतियोगित्वावच्छेदक-त्वस्य पर्य्याप्तिः, ईदृशरीत्यैवाभाववैलक्षण्यनिर्व्वाहात् तथाच परम्परासम्बन्धेन यत्र साध्यता तत्र परम्पराघटकयावद्वस्तुषु पर्य्याप्तावच्छेदकताकत्वरूपं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् उक्तस्थले चाधिकरणविशेषणीभूतसमवायस्य प्रति-योगितावच्छेदकतायामेवावच्छेदकतया प्रतियोगितायां तदन्तर्भा-वेन पर्य्याप्तावच्छेदकताकत्वाभावान्नाव्याप्तिरिति दिक्। संयोग-त्वावच्छिन्नस्य द्वित्वावच्छिन्नप्रतियोगिकत्वविरहेऽपि वह्नि-धूमोभय-वान् वह्नेरित्यादौ नातिव्याप्तिरिति योजना, अयं भावः प्रत्येकं संयोगत्वावच्छिन्नस्य द्वित्वावच्छिन्नप्रतियोगिताकत्वविरहेण वह्नि-धूमोभयवान् धूमादित्यत्र संयोगसम्बन्धसामान्ये वह्नि-धूमोभयत्वा-वच्छिन्नप्रतियोगिताकत्व-हेत्वधिकरणानुयोगिकत्वोभयाभावसत्त्वात् तादृशोभयत्वावच्छिन्नाभावोऽपि संयोगेन प्रतियोगितावच्छेदकाव-च्छिन्नव्यधिकरणतया लक्षणघटक इत्यव्याप्तिः स्यादतः संयोगे-नोभयसाध्यकस्थले प्रतियोगितावच्छेदकावच्छिन्नत्वं परित्यज्य प्रतियोगिताश्रयप्रतियोगिकत्वमेव निवेशनीयं तथाच वह्नि-धूमोभयवान् वह्नेरित्यादावपि वह्नि-धूमोभयत्वावच्छिन्नाभावस्य

लक्षणाघटकतया पूर्व्वकल्पेऽतिव्याप्तिः स्यादिति। अथ साध्यतावच्छेदकादिभेदेन चेद्व्याप्तिपदार्थभेदस्तदैव प्रतियोगितावच्छेदकावच्छिन्नत्वपरित्यागः स्थलविशेषे सम्भवति तथाच साधनभेदेनापि तुल्ययुक्त्या तद्भेदात् धूमरूपहेतुक-वह्नि-धूमोभयात्मकसाध्यघटितव्याप्तिपदार्थप्रसिद्धिनिर्व्वाहाय तच्छरीरे प्रतियोगिताश्रयवैयधिकरण्यनिवेशनस्य वह्निहेतुक-तदुभयसाध्यकस्थले कथमतिव्याप्तिप्रसञ्जकत्वमिति चेत्, यथा संयोगसामान्ये द्वित्वावच्छिन्नप्रतियोगिकत्वाभावनिश्चयदशायामपि धूमेन वह्नि-धूमोभयानुमितिर्भवतीति प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकं च ज्ञानं धूमलिङ्गकताद्दशोभयानुमितिजनकमङ्गीक्रियते तथा ताद्दशनिश्चयदशायां सकलवह्निमतामेव धूमवत्त्वमिति भ्रान्तानां वह्निहेतुक-तदुभयानुमितिरप्यनुभवसिद्धेति, तत्रापि प्रतियोगिताश्रयप्रतियोगिकत्वघटितोभयाभावविषयकज्ञानमेवानुमितिजनकं वाच्यम् तथाच तद्धेतुक-तत्साध्यकानुमितिजनकज्ञानस्य प्रमात्वप्रसङ्ग इत्येवातिव्याप्तिपदार्थः, एवं वह्नि-धूमोभयत्वेनोभयं धूमव्यापकमिति वाक्याद्यथोक्तनिश्चयदशायां शाब्दबोधो जायते तथा वह्नि-धूमोभयत्वेन उभयं वह्निव्यापकमित्यनाप्तोक्तवाक्यादपि योग्यताभ्रमाच्छाब्दबोधः सर्व्वानुभवसिद्ध इति प्रतियोगिताश्रयप्रतियोगिकत्वमेव तत्र शाब्दधीविषयः स्वीकरणीयस्तथाच तद्विषयकधियः प्रमात्वेन ताद्दशवाक्यस्य प्रमाणतापत्तिरित्यपीति अतिप्रसङ्गपदार्थ इति शेषः। वह्नेरित्यत्र धूमादिति नातिव्याप्तिरित्यनन्तरमव्याप्तिर्व्वेति पाठम् केचित् कल्पयन्ति

यथासंख्येन च स्थलद्वयेऽतिव्याप्त्यव्याप्ती योजयन्ति, इदमत्रावधेयं घटद्वयवद्भूतलमित्यादौ द्वित्वोपलक्षितघटादिवैशिष्ट्यं तद्विशिष्ट-वैशिष्ट्यं वा भासते, आद्ये एकघटादिमत्यपि तत्प्रसङ्गः। न च द्वित्वोपलक्षितस्यापि व्यक्तिद्वयस्यैव वैशिष्ट्यद्वयं तत्र भासते इति नातिप्रसङ्ग इति वाच्यम्। एकस्मिन्नपि धर्म्मिणि भेदभ्रमेण द्वित्व-भ्रमात् तत्प्रकारकप्रतीतावुभयभानानियमात् तादृशबुद्धेर्द्वित्व-विशिष्टाभावज्ञानविरोधित्वानुपपत्तेश्च विशिष्टवैशिष्ट्यज्ञानस्यैव विशिष्टाभावबुद्धिविरोधित्वात्, द्वितीये संयोगसंसर्गकतादृशज्ञान-मात्रस्यैव भ्रमत्वापत्तिः संयोगरूपवैशिष्ट्ये द्वित्वावच्छिन्नप्रति-योगिकत्वविरहात् तस्मात् द्वित्वादिविशिष्टप्रतीतौ संयोगमात्रं न सम्बन्धः अपि तु द्वित्वावच्छिन्ननिरूपिताधिकरणतैव, अधि-करणता च पदार्थान्तरमधिकरणस्वरूपं वा उभयथैव निरूपक-भेदेऽपि निरूपकतावच्छेदकद्वित्वस्यैक्यात् तदैक्यमिति संयोगप्रति-योगितावच्छेदकत्ववत् न तत्प्रतियोगितावच्छेदकत्वस्य द्वित्वेऽनुप-पत्तिरित्यपेयम्. एवञ्च वह्नि-धूमोभयत्वावच्छिन्नसाध्यके संयोगा-वच्छिन्नाधिकरणताया एव साध्यतावच्छेदकसम्बन्धत्वं तत्र चोभय-त्वावच्छिन्नप्रतियोगिताकत्वसत्त्वान्नाव्याप्तिप्रसक्तिः अन्यथा द्वितीय-कल्पेऽपि प्रतियोगितावच्छेदकावच्छिन्ननिरूपितप्रतियोगिताव-च्छेदकसम्बन्धाननुयोगित्वनिवेशात् उभयत्वावच्छिन्नप्रतियोगिक-संयोगाप्रसिद्धा संयोगिनोभयत्वावच्छिन्नसाध्यके व्यभिचारिणि तत्सम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताया लक्षणा-घटकत्वेनातिव्याप्तिर्वज्रलेपत्वात्। वस्तुतस्तु पर्व्वतोवह्निमान् इत्या-

दावपि संयोगावच्छिन्नाधिकरणतैव सम्बन्धो न तु संयोगमात्रम् अन्यथा पर्व्वतो वह्निमानित्यत्रेव पर्व्वते वह्निरित्यत्रापि संयोग-मात्रस्यैव तथात्वापत्त्या अविशेषप्रसङ्गात्, तादृशप्रतीत्योर्विशेषाय प्रथमायां संयोगः द्वितीयायां तदवच्छिन्नाधेयता संसर्ग इत्युपेयतां, किं वा प्रथमायां संयोगावच्छिन्नाधारता द्वितीयायां संयोगस्तथेत्यत्र विनिगमकस्य दुर्ल्लभत्वात्। न च तादृशप्रत्यीत्योः संसर्गांशे अविल-क्षणत्वेऽपि विशेष्य-विशेषणभावभेदाद्वैलक्षण्योपपत्तिसम्भव इत्युभय-त्रैव संयोगमात्रस्य सम्बन्धतास्त्विति वाच्यम्। तावता पर्व्वतो-वह्निमान् वह्नौ पर्व्वत इत्यनयोः पर्व्वते वह्निः पर्व्वतवान् वह्नि-रित्यनयोश्च प्रतीत्योः विशेषानिर्व्वाहात्। न चैवं रूपवान् वह्नि-रित्यादावपि समवायावच्छिन्नाधारतैव सम्बन्धः स्यान्न तु सम-वायः उक्तयुक्तेरविशेषादिति वाच्यम्। समवायातिरिक्तसमवाया-वच्छिन्नाधारतानभ्युपगमात्। अथ समवायावच्छिन्नाधारतायाः समवायरूपत्वेऽपि समवायावच्छिन्नाधेयता अवश्यमतिरिक्ता स्वीकरणीया अन्यथा रूपवान् घटः घटे रूपमिति प्रतीत्योः संसर्गवैलक्षण्यानुपपत्तेः, तथाच समवायावच्छिन्नाधेयता आधा-रता वा अतिरिक्तेत्यत्र विनिगमकं दुर्ल्लभमिति समवायातिरिक्ता-धारतासिद्धिर्निष्प्रत्यूहैवेति चेन्न, घटानुयोगिकरूपप्रतियोगिक-सम्बन्धो रूपानुयोगिकघटप्रतियोगिकसम्बन्धश्च परस्परं विलक्षण-एव अन्यथा दर्शितस्थले संसर्गवैलक्षण्यानिर्व्वाहादिति सत्यं, तत्र चाधारानुयोगिकः सम्बन्ध एव समवाय इति परिभाषितः न त्वाधे-यानुयोगिकः सम्बन्धः, स त्वाधेयतेत्येव परिभाष्यते तत्र को विनिग-

मकानुयोगः । न चैवं संयोगिन्यपि संयोग एवाधारतास्तु सचानु-
योगितासम्बन्धेनाधारपदप्रवृत्तिनिमित्तमिति संयोगस्य द्विष्ठत्वे-
ऽपि नाधेये तद्व्यवहार इति वाच्यं । संयोगीयसमवायातिरिक्तायाः
आधेयव्यावृत्तानुयोगितायाः स्वीकारे तस्या एव संयोगिनिरू-
पिताधिकरणतात्वोपगमेनातिरिक्ताधारताया निष्प्रत्यूहत्वात् । न
च तत्र सं योगिप्रतियोगिकत्वं कल्पनीयमिति गौरवं, भवन्मतेऽपि
संयोगि तत्समवेतत्वातिरिक्तस्य तत्प्रतियोगिकत्वस्य कल्पनीय-
तया साम्यात् अन्यथा भूतलादेः स्वसमवेतघटादिसंयोगानु-
योगितया आधारतापत्तेः । एतेन संयोगिन्याधेयतापि संयोग-
एव प्रतियोगितासम्बन्धेन तस्याधेयपदप्रवृत्तिनिमित्ततया आधारे
न तद्व्यवहार इत्यपि निरस्तं । आधेयनिष्ठाधारव्यावृत्त-
पदार्थान्तरकल्पनाया आवश्यकत्वात्, आधाराधेययोः संयोगा-
नुयोगित्व-प्रतियोगित्वकल्पने विपरीतकल्पनाया अपि बाधका-
भावाच्चेति दिक्(१) ।

---

न चैवं संयोगिन्यपि संयोगएवाधारतास्तु स चानुयोगितासम्बन्धेनाधार-
पदप्रवृत्तिनिमित्तमिति समवायवत्संयोगस्यापि सम्बन्धत्वं दुर्व्वारं स च स्वानु-
योगिन्येव धर्म्मस्य विशिष्टप्रमानियामकः, अतः संयोगसंसर्गक-घटोभूतलवानित्या-
दिबुद्धेर्न प्रमात्वं भूतले घट इत्यादिबुद्धौ च स्वनिष्ठसंयोगप्रतियोगित्वं धर्म्मे धर्म्मि-
संसर्गतया भासत इति वाच्यम् । संयोगो धर्म्मी एव धर्म्मिणः संसर्गः धर्म्मी एव
तदनुयोगित्वं धर्म्मिणि तु तत्प्रतियोगित्वमिति भूतले घट इत्यादावेव संयोगस्य
सम्बन्धतया भानं घटवद्भूतलमित्यादौ तु स्वनिष्ठसंयोगप्रतियोगित्वं धर्म्मिणि
धर्म्मसम्बन्ध इत्यस्यापि सुवचत्वेन विनिगमनाविरहात् तस्मात् संयोगेन धर्म्मत्व-
धर्म्मित्वयोरेव धर्म्मि-धर्म्मिणोर्धर्म्मि-धर्म्मसम्बन्धयोः संयोगावच्छिन्नत्वेन सम्बन्धान्तरेण

एकानुयोगिकसंयोगद्वयप्रतियोगितायाः प्रत्येकमुभयत्वावच्छिन्नत्वविरहेऽपि तदुभयत्वेनोभयत्वावच्छिन्नत्वोपगमान्न संयोगिनोभयसाध्यकेऽव्याप्तिरित्यप्याहुः ।

तत्त्वचिन्तामणिदीधितिः ।

प्रतियोगित्वादिश्च स्वरूपसम्बन्धविशेषो न सम्बन्धत्वेन निविष्टः, सामानाधिकरण्येऽपि सम्बन्धः संयोगत्वादिनैव निविशते, दर्शितञ्च नियमाघटितमपि सम्बन्धत्वम् । अभावत्वञ्चेदमिह नास्तीदमिदं न भवतीतिप्रतीतिनियामकोभावाभावसाधारणः स्वरूपसम्बन्धविशेषः अतो नाभावसाध्यकव्यभिचारिण्यतिप्रसङ्गः । तदपि वा नोपादेयं प्रयोजनविरहात् विषयता-तत्त्वादिवत् प्रतियोगित्वाधिकरणत्व-तत्त्व-सम्बन्धत्वादयोऽप्यतिरिक्ता एव पदार्था इत्येकदेशिनः।

इति श्रीमहामहोपाध्याय-रघुनाथशिरोमणि-भट्टाचार्य्यविरचितायामनुमानचिन्तामणिदीधितौ सिद्धान्तलक्षणदीधितिः समाप्ता ।

---

धर्म-धर्मिभावाद्वैलक्षण्यं गुरुमते समवेत-समवायिनोरपि धर्म-धर्मिभाव एव विशिष्टधीविषयः तन्मतेऽतीन्द्रियतया समवायस्तु न तथेति मिश्राः। तत्र समवायस्य धर्मिमात्रनिष्ठतया तस्यैव धर्मितारूपत्वसम्भवेनातीन्द्रियसमवायस्यातिरिक्तस्य कल्पनागौरवं बोध्यमिति दिक् इत्यधिकः पाठः कस्मिंश्चिदादर्शपुस्तके वर्त्तते।

गदाधरी विवृतिः ।

प्रतियोगित्वावच्छेदकत्वादेः स्वरूपसम्बन्धरूपतया सम्बन्धत्वेन तन्निवेशे सम्बन्धत्वस्य नियमघटिततया अनवस्थेत्याशङ्कां निरस्यति, 'प्रतियोगित्वादिश्चेति, सम्बन्धविशेषोऽपि न सम्बन्धत्वेन लक्षणघटकः अपि तु प्रतियोगितात्वादिना कुत्रचित् सम्बन्धविधया स्वरूपत एवेत्यर्थः। ननु तत्सामानाधिकरण्यं तत्सम्बन्धिसम्बन्धित्वं तत्र च सम्बन्धत्वेनैव सम्बन्धनिवेश इत्याशङ्क्याह, 'सामानाधिकरण्येऽपीति, 'संयोगत्वादिनैवेति, साधनतावच्छेदकादिभेदेनेव सम्बन्धतावच्छेदकभेदेनापि व्याप्तिभेदस्येष्टत्वादिति भावः। साध्यसामानाधिकरण्यशरीरे साध्यवत्संयुक्तत्वादिरूपहेतोः सम्बन्धस्य प्रकारतया तस्यैव संयोगत्वादिना निवेशः, साध्यसम्बन्धस्य च धर्म्मांशे तत्संसर्गविधयैव लाघवेन निवेशात्तस्य स्वरूपत एव निवेशः सम्भवति जात्यतिरिक्तस्यापि संसर्गतया भाने स्वरूपतोऽपि तदुपगमादित्यवधेयम्। सम्बन्धत्वनिवेशेऽपि च न क्षतिरित्याह, 'दर्शितश्चेति, 'नियमाघटितमिति तत्प्रतियोगिकत्वविशेष एव तदीयसम्बत्वं न तु तदीयविशिष्टबुद्धिनियामकत्वं, अतीन्द्रियसम्बन्धे जनकत्वरूपनियामकत्वासम्भवात् विषयत्वरूपनियामकत्वनिवेश व्याप्तेरेवानन्तर्भावात् प्रमेयमात्रेऽतिप्रसङ्गाच्च। न च विशेष्यतान्यतत्प्रकारतानिरूपितविषयताया एव विवक्षणीयतया नातिप्रसङ्ग इति वाच्यम्। एवं सति संयोगादिना द्रव्यत्वादिभ्रमविषयतामादाय तस्यापि तत्सम्बन्धत्वापातात्। न च विषयतायां

प्रमाप्रतियोगिकत्वनिवेशान्नातिप्रसङ्ग इति वाच्यम्। प्रमात्वस्य तत्सम्बन्धानुयोगिविशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपतया सम्बन्धत्वघटितत्वात्, एवं तदनुयोगिकत्वविशेष एव तत्र तत्सम्बन्धत्वमिति भाव:। इत्थञ्च सामान्यत: सम्बन्धघटितसाध्यवत्सम्बद्धत्वरूपं सामानाधिकरण्यं साध्यवदनुयोगिकप्रतियोगित्वं प्रतियोगितासम्बन्धेन साध्यवदनुयोगिकवत्त्वं वा तच्च संयोगत्वादिना तद्घटितत्वात् साध्यवदनुयोगिकसंयोगप्रतियोगित्वादिरूपाल्लघुशरीरमिति तदेव व्याप्तिघटकं वाच्यम् अतिप्रसङ्गस्य व्यापकतायां विशिष्य सम्बन्धनिवेशेनैव वारणसम्भवात् हेतौ साध्यवदसंयुक्तत्वादिनिश्चयदशायां संयोगादिना पक्षे हेतुमत्तानिश्चयस्य साक्षादनुमितिप्रतिबन्धकताया अग्रे वक्तव्यतया ततोऽनुमित्यापत्त्यनवकाशादिति सूचितम्। अभावत्वञ्चेदिह भावभिन्नत्वं तदा प्रतियोगितायां साध्यतावच्छेदकधर्मावच्छिन्नत्वतादृशसम्बन्धावच्छिन्नत्वोभयाभावनिवेशपक्षे दैशिकविशेषणतया घटत्वाभावादिसाध्यके व्यभिचारिण्यतिव्याप्ति: तादृशसम्बन्धावच्छिन्नतदभावस्य घटत्वादिरूपतया भावभिन्ननिरूपितप्रतियोगितायां तत्सम्बन्धावच्छिन्नत्व-घटत्वाभावत्वावच्छिन्नत्वोभयाभावस्याक्षतत्वादित्याशङ्कां निरस्यति. 'अभावत्वञ्चेति, 'इदमिह नास्ति इदमिदं न भवतीति द्विविधप्रतीतिकथनेनाभावत्वस्य संसर्गाभावान्योन्याभावोभयसाधारण्ये प्रमाणमुपदर्शितं, तस्यान्योन्याभावसाधारण्यविरहे अभावान्तरप्रतियोगितासामान्ये तादात्म्यसम्बन्धावच्छिन्नत्वविरहेण तेन सम्बन्धेन साध्यतायां व्यभिचारि-

ण्यतिप्रसङ्गात्। 'भावाभावसाधारण इति, भावेनापि घटे घटत्वा-भावो नास्ति घटो न घटभिन्न इति प्रतीतिजननादिति भावः। तदवच्छिन्नेऽभावपदस्य रूढ़िशक्तिः परिभाषैव वा अतो न भावोऽभाव इत्यवयवव्युत्पत्त्या तद्धर्म्माप्रत्ययेऽपि न क्षतिः। 'स्वरूप-सम्बन्धविशेष इति अभावे तत्स्वरूपप्रतियोगिनिरूपितानुयोगित्वनामा सम्बन्धविशेष इत्यर्थः। न चाभावत्वस्य स्वरूपत्वेऽननुगमादनुगतप्रत्ययानुपपत्तिः, तदनुगमकरूपान्तराभ्युपगमात् पदार्थान्तरत्वेऽपि निरूपकभेदेन सम्बन्धान्तरवत्तद्भेदस्यावश्यकतया अनुगमकरूपान्तरापेक्षणात्। यत्तु प्रतियोगिनिरूपितसम्बन्धानामननुगमेऽपि प्रतियोगिधर्म्मितावच्छेदकस्य नञ्पदप्रवृत्तिनिमित्ताखण्डधर्म्मान्तरस्य सत्त्वाद्घटो नास्ति पटो नास्तीत्याद्यनुगतप्रतीतिनिर्व्वाह इति, तन्न साधीयः, घटादौ पटाद्यभावादेः कालिकसम्बन्धस्यापि स्वरूपतया तत्संसर्गकप्रतीतितो घटाभावो नास्तीत्याद्यनुयोगितासंसर्गकप्रतीतिवैलक्षण्याय संसर्गतावैलक्षण्यस्यावश्यकतया संसर्गतावच्छेदकधर्म्मविशेषस्वीकारस्य तन्निर्व्वाहकस्यावश्यकत्वात्. तेनानुगतीकृतानुयोगिताया एव संसर्गतावद्धर्म्मितावच्छेदकताया अपि सम्भवेनाभावनिष्ठाखण्डधर्म्मान्तरे मानाभावात् नञ्पदप्रवृत्तिनिमित्ततायाः अपि तस्या एवोपगमात्। अथ नास्तीत्यादावनुयोगितारूपसम्बन्धविशेषप्रकारेणाभावभानोपगमे तदंश एव स्वनिरूपितत्वसम्बन्धेन प्रतियोगिनः प्रकारत्वसम्भवादभावांशे तत्सम्बन्धेन प्रतियोगिनो भाने मानाभावादनुयोगितायाः सम्बन्धत्व-

मेव न सिद्धेदिति चेन्न, मण्याद्यभावस्य दाहादिहेतुतायां मण्यादि-रूपप्रतियोग्यवच्छिन्नानुयोगिताविशेषस्यावच्छेदकत्वापेक्षया अनु-योगितासम्बन्धेन मण्यादेस्तथात्वे लाघवेन तत्सम्बन्धतासिद्धेः। न चोभयात्वावच्छिन्नाभावादिवारणाय मणित्वाद्यवच्छिन्ननिरू-पितानुयोगिता मण्यादेः सम्बन्धो वाच्यः तथाच तादृशानुयोगि-ताया आश्रयतासम्बन्धेनावच्छेदकत्वेऽपि न गौरवमिति वाच्यम्। उभयत्वाद्यवच्छिन्ननिरूपितानुयोगितायाः मणित्वादिविशिष्ट-सम्बन्धताविरहात्शु द्धानुयोगितासम्बन्धेनैव मणित्वादिविशिष्टस्य उभयत्वाद्यवच्छिन्नाभावव्यावर्त्तकतासम्भवेन तादृशानुयोगितात्वेन सम्बन्धत्वानुपगमात्। न च तादृशस्य विशिष्टमणित्वाद्यवच्छिन्ना-भावव्यावर्त्तकता न सम्भवति विशिष्टमणित्वाद्यवच्छिन्ननिरूपिता-नुयोगितायामप्यधिकन्त्वित्यादिन्यायेन माणित्वादिविशिष्टनिरू-पितत्वसत्त्वेन तस्या अपि तत्सम्बन्धत्वादिति वाच्यम्। कारणता-वच्छेदकतापर्य्याप्त्यधिकरणपरिसमाप्तप्रतियोगिताकसम्बन्धिन एव कारणतया मणिर्नास्तीत्याद्याकारकशुद्धमणित्वाद्यवच्छिन्नप्रकार-कप्रतीत्यविषयविशेषणान्तरसहितमणित्वाद्यवच्छिन्नाभावनिष्ठता-दृशमणित्वाद्यवच्छिन्ननिरूपितसम्बन्धे च शुद्धमणित्वादिविशिष्ट-परिसमाप्तप्रतियोगिताकत्वविरहेण तादृशाभावव्यावर्त्तनसम्भवात्। एतेन विशिष्टमणित्वाद्यवच्छिन्नाभाववारणाय शुद्धमणित्वाद्यव-च्छिन्नप्रतियोगिताकत्वेन हेतुता वाच्या शुद्धमणित्वाद्यवच्छिन्नत्वञ्च मणित्वान्यधर्म्मानवच्छिन्नत्वं तदपि यदि तादृशधर्म्मावच्छेद्य-त्वत्वावच्छिन्नाभावस्तदा किञ्चिद्विशिष्टतादृशावच्छेद्यत्वत्वावच्छि-

न्ताभावमादायातिप्रसङ्ग इति शुद्धताद्दशावच्छेद्यत्वत्वावच्छिन्नाभाव-एव निवेशनीयः शुद्धताद्दशावच्छेद्यत्वत्वावच्छिन्नत्वमपि तदति-रिक्तानवच्छिन्नत्वमिति विशेषणानवस्थाप्रसङ्ग इत्यपि परास्तं, इत्यलमप्रस्तुताधिकजल्पनया। यदि चान्योन्याभावात्यन्ताभाव-साधारणमभावत्वं नैकं प्रमाणाभावात् अतएव संसर्गाभावोऽन्यो-न्याभावश्च नञर्थ इत्यनेन तयोः पृथगेव नञर्थत्वमुक्तं, तथाच संसर्गाभावप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वस्यान्योन्या-भावप्रतियोगितायां संसर्गावच्छिन्नत्वस्याभावादुभयाभाववत्प्रति-योगितागर्भलक्षणातिव्याप्तिरित्यत आह, 'तदपि वेति, 'तदपि' ताद्दशाभावत्वमपि, 'नोपादेयं' हेतुसमानाधिकरणांशे विशेषण-तया न निवेशनीयं, 'प्रयोजनाभावादिति, (१) स्वावच्छेदक-विशिष्टानधिकरणहेतुमन्निष्ठत्वमात्रपुरस्कारेणाभावं निवेश्य तदीयत्वेन प्रतियोगितानिवेशादेव सर्व्वसामञ्जस्यादिति भावः। प्रसङ्गात् प्रतियोगित्वादीनां पदार्थान्तरत्वं व्यवस्थापयति, 'विषय-तेति, 'तत्त्वं' विषयतात्वं, प्राचीनैकदेशिभिर्विषयताया अतिरिक्त-पदार्थत्वोपगमात् दृष्टान्तत्वेन तदुपन्यासः, यथा विषयताया विषयरूपत्वे द्रव्यत्वावच्छिन्नघटादिविषयकज्ञानात् घटत्वावच्छिन्न-तद्विषयकज्ञानस्य वैलक्षण्यविरहादवैलक्षण्यापत्तिः, न च द्रव्यत्व-घटत्वयोरपि तत्र विषयतया तद्वैलक्षण्यादेव वैलक्षण्यमिति वाच्यं। तावतापि द्रव्यत्वेन घटविषयकाद्घटत्वेन च पटविषय-

(१) प्रयोजनविरहादित्यत्र प्रयोजनाभावादिति कुत्रचित् दीधीतिपुस्तक-पाठो वर्त्तते तमनुसृत्यैव प्रयोजनाभावादिति पाठ उद्धृतो भट्टाचार्य्येणेत्यनुमीयते।

काज्ज्ञानाद्‌घटत्वेन घटं द्रव्यत्वेन पटमवगाहमानस्य ज्ञानस्य वैलक्षण्योपपादानस्याशक्यत्वात्, ज्ञानस्वरूपत्वे घट-पटावित्यादि-समूहालम्बनीयघट-पटादिनिष्ठविषयतानामभिन्नतापत्त्या तादृश-ज्ञानस्य पटत्वाद्यवच्छिन्नघटादिनिष्ठविषयताशालितया भ्रमत्वा-पत्तिः ज्ञान-विषयोभयरूपत्वे च जातिमान् घट इत्यादिज्ञानीय-घटत्वादिविषयतायाद्वैविध्यानुपपत्तिः ज्ञान-विषययोरतथात्वा-दिति जातिमानित्याद्याकारकैकविधघटत्वादिविषयताशालि-ज्ञानात्तादृशबुद्धेर्विलक्षणाकारकता न स्यात् इत्यादियुक्त्या विषयताया विषयभेदभिन्नविषयतानामनुगमकतया च विषय-तात्वस्यातिरिक्ततासिद्धिस्तथा प्रतियोगितायाः प्रतियोगिस्वरूपत्वे घटादिनिष्ठानां घटत्व-द्रव्यत्वादिरूपविभिन्नधर्म्मावच्छिन्नप्रति-योगितानां संयोग-समवायादिरूपविभिन्नसम्बन्धावच्छिन्नानाञ्च प्रतियोगितानामवैलक्षण्येनाभाववैलक्षण्यानुपपत्तिः तथाच पटादि-मत्यपि घटत्वावच्छिन्नप्रतियोगित्वाभिन्नघटादिस्वरूपद्रव्यत्वाव-च्छिन्नप्रतियोगितानिरूपकाभावमादाय द्रव्यन्नास्तीत्यादिप्रतीत्या-पत्तिः, एवं घटसमवायवत्यपि संयोगावच्छिन्नप्रतियोगित्वाभि-न्नघटरूपसमवायावच्छिन्नप्रतियोगितानिरूपकमभावमादाय सम-वायेन घटोनास्तीत्यादिप्रतीत्यापत्तिः प्रतियोगितावच्छेदक-रूपत्वेप्येष दोषः (२)। अभावस्वरूपत्वे घटाद्यभावीयघटत्वा-द्यवच्छिन्नप्रतियोगित्व - किञ्चिद्विशिष्टघटाभावाभावत्वाद्यवच्छिन्न-

(१) तथाचेत्यादिः एष दोष इत्यन्तः पाठो बहुष्वादर्शपुस्तकेषु नास्ति।

प्रतियोगितानामवैलक्षण्यापत्तिः घटत्वादेः प्रतियोगित्वन्यूनवृत्तितया तदवच्छेदकत्वानुपपत्तिः घटाद्यभावस्य पटादिसाधारण्येन पटादावपि तत्प्रतियोगितापत्तिश्च इत्यादियुक्त्या प्रतियोगित्वमप्यतिरिक्तं सिद्ध्यति, एवमधिकरणत्वं नाधिकरणस्वरूपमाधेयस्वरूपं वा भूतले घटसंयोगदशायामिव परम्परासंयुक्तभूतलसत्त्वदशायामपि इदानीं भूतलं घटवदितिप्रत्ययप्रसङ्गात् । संयोगरूपत्वे आधेयत्वस्य तुल्ययुक्त्या तद्रूपतया आधारत्वाधेयत्वयोरभेदप्रसङ्गेन वैपरीत्येनाधाराधेयभावप्रत्ययप्रसङ्गादिति तदप्यतिरिक्तपदार्थः, सम्बन्धत्वमपि क्लृप्तपदार्थान्तर्भावेन दुर्वचमिति पदार्थान्तरमेवेति भावः । आदिपदादभावत्वादिपरिग्रहः, इदन्तु बोध्यं, अभावत्वं प्रतियोगित्वान्नातिरिच्यते तदभावस्य तत्प्रतियोत्वनियमात् । न चैवं घटादेर्घटादिभेदाभावत्वापत्त्या घटादिमति भूतले घटभेदो नास्तीत्यादिप्रतीत्यापत्तिरिति वाच्यं । संसर्गावच्छिन्नप्रतियोगितायामेवाभावाभावत्वरूपतोपगमात् घटादिभेदस्य घटत्वात्यन्ताभावसमनियतत्वेन तदभिन्नतया घटत्वादौ तदीयसंसर्गावच्छिन्नप्रतियोगितासत्वात् तेनैव तदभावप्रत्ययात् । न चैवमपि घटभेदादेर्घटत्वाद्यभावत्वानुपपत्तिस्तद्‌प्रतियोगित्वादिति वाच्यं । अत्यन्ताभावत्वात्मकानुयोगिताविशेषस्यैव प्रतियोगितानतिरिक्तत्वोपगमादिति ।

इति महामहोपाध्याय-श्रीगदाधरभट्टाचार्य्यविरचितायामनुमानदीधितिविवृतौ सिद्धान्तलक्षणदीधितिविवृतिः समाप्ता ।

---

अनुमानदीधितिः ।

**नन्ववच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः सम्भवति च लघौ धर्म्मे गुरौ तदभावात् प्रमेयधूमत्व-कम्बुग्रीवादिमत्त्व-घ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिण्यतिप्रसङ्गात् ।**

---

अवच्छेदकत्वनिरुक्तिदीधितिविवृतिः ।

प्रतियोगितानवच्छेदकेत्यत्र पारिभाषिकावच्छेदकत्वं निवेशयितुं अवच्छेदकपदस्य प्रसिद्धावच्छेदकत्वपदार्थपरतां (१) आक्षिपति, 'नन्वित्यादिना, 'इह' एतल्लक्षणे, घटकत्वं सप्तम्यर्थः, तथाच घटत्वेन घटोऽभावप्रतियोगीत्यादिप्रतीतिसाक्षिकोयो-घटादिनिष्ठप्रतियोगितया सह घटत्वादेरवच्छेद्यावच्छेदकभाव-रूपः स्वरूपानतिरिक्तः पदार्थान्तरात्मको वा सम्बन्धविशेषः स-इह लक्षणेऽशक्यनिवेश इत्यर्थः, स्वरूपसम्बन्धविशेषात्मकावच्छेदक-त्वाभावघटितं निरुक्तरूपं न व्याप्तिस्वरूपमिति यावत्, 'तेन रूपेण साध्यतायां व्यभिचारिण्यतिव्याप्तेः' (२) इत्यग्रिमसत्रैव हेतुः, प्रमेयधूमत्वाद्यवच्छिन्नसाध्यकव्यभिचारिसाधारण्यादिति तदर्थः, 'प्रमेयधूमत्वेत्यादिकं 'अतथात्वेनेत्यन्तं तत्र हेतुः, स्वसमानाधिकरणा-

---

(१) स्वरूपसम्बन्धरूपावच्छेदकत्वपरतां इति पा० ।

(२) व्यभिचारिण्यतिप्रसङ्गादित्यत्र व्यभिचारिण्यतिव्याप्तेरिति कस्यचि-द्दीधितिपुस्तकस्य पाठमनुसृत्य ईदृशः पाठोऽत्रतो गदाधरेणेत्यनुमीयत इति ।

भावप्रतियोगितानिरूपिततादृशावच्छेदकत्वाभाववत्तादृशसाध्यता-वच्छेदकत्वेनेति तदर्थः, सम्भवत्तादृशप्रतियोगितावच्छेदकताक-धर्म्मापेक्षया गुरुत्वं प्रमेयधूमत्वादेस्तादृशप्रतियोगितावच्छेकत्वा-भावसाधकं, तस्य तत्साधकत्वोपष्टम्भकव्याप्तिमाह, 'सम्भवतीति तस्मिन्निति पूरणीयं, तथाच लघुधर्म्मे तादृशावच्छेदकत्वस्य सम्भवे इत्यर्थः, 'गुरौ तदभावात्' तादृशावच्छेदकत्वाभावनियमात्, तथाच सम्भवत्तदवच्छेदकताकधर्म्मापेक्षया यो गुरुः स न तदवच्छेदक-इतिव्याप्तेरिति पर्य्यवसितार्थः। सम्भवत्तदवच्छेदकताकत्वञ्च तदवच्छेदकत्वबाधकशून्यत्वं, बाधकञ्चावच्छेद्यप्रतियोगितापेक्षया अधिकदेशवृत्तित्वं न्यूनवृत्तित्वञ्च, अतो महानसीयवह्न्याद्यभाव-प्रतियोगितायां वह्नित्वादेरधिकदेशवृत्तितया अवच्छेदकत्व-बाधकसत्वात्तदपेक्षया गुरोरपि महानसीयवह्नित्वादेरच्छेदकत्व-निर्व्वाहः, जात्याद्यत्यन्ताभावस्य समवेतसामान्याभावाद्यभिन्न-तया समवेतादिसामान्यवृत्तितत्प्रतियोगिताभिन्नजात्यादिमात्रवृ-त्तितत्प्रतियोगित्वे मानाभावात् लघुसमवेतत्वादेरेव तदभाव-प्रतियोगितावच्छेदकत्वं न तु जातित्वादेः, एवं घट-पटान्यतरत्वा-वच्छिन्नाभावप्रतियोगितान्यूनवृत्तिघटत्वादेर्न्यूनवृत्तित्वरूपबाधक-सत्वात्तदपेक्षया गुरोरन्यतरत्वादेरवच्छेदकत्वनिर्व्वाहः। सत्ता-त्वादौ विशिष्टसत्तात्वाद्यवच्छिन्नाभावप्रतियोगितावच्छेदकताया-मुक्तबाधकासत्त्वेऽपि प्रतियोगितानिरूपकाभावविरोधितानवच्छेद-कत्वमेव तद्बाधकं, तद्विरोधितानवच्छेदकस्य तत्प्रतियोगिता-वच्छेदकत्वे तदवच्छिन्नवति तदवच्छिन्नाभावसत्त्वप्रसङ्गात्। अत-

एव (१) समवेतत्वस्य पृथिवीसमवेतत्वासमनियतत्वेऽपि समवेतत्वं पृथिवीसमवेताभावप्रतियोगितावच्छेदकमिति पृथिवीसमवेतत्वाद्यवच्छिन्नाभावाप्रसिद्धा कूटघटितलक्षणे सत्तान्यपृथिवीसमवेतशून्यमित्यत्र सत्तान्यपदोपादानं। एवं घट-पटोभयात्वादेर्घटपटान्यतरत्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वे प्रतियोगितान्यूनवृत्तित्वरूपबाधकासत्त्वेऽपि अभावानधिकरणत्वव्यापकतानवच्छेदकत्वरूपमेव बाधकं तादृशस्य प्रतियोगितावच्छेदकत्वे तदभावानधिकरणे तत्प्रतियोगितावच्छेदकावच्छिन्नसत्त्वनियमस्यानिर्व्वाहात्। न चैतादृशबाधकद्वयाभावनिवेशे प्रतियोगित्वासमनैयत्यरूपबाधकाभावनिवेशनमफलमिति वाच्यं। संख्यापरिमाणान्यतरत्वावच्छिन्नभावप्रतियोगितायां संख्यात्व-गुणत्वादेरवच्छेदकत्वे चरमबाधकद्वयासत्त्वेन समनैयत्यरूपबाधकाभावस्यावश्यंनिवेश्यत्वात्। यत्तु स्वावच्छिन्नसमव्यापकतावच्छेदकधर्म्मापेक्षया गुरुत्वमेवावच्छेदकत्वाभावसाधकतया अभिमतं स्वसमनियतसत्तात्वापेक्षया गुरोर्विशिष्टसत्तात्वादेः प्रतियोगितावच्छेदकत्वनिर्व्वाहाय स्वसमनियतत्वमुपेक्ष्य स्वावच्छिन्नसमव्यापकतावच्छेदकत्वनिवेश इति तन्न, घटप्रागभावत्वाद्यवच्छिन्नसमव्यापकतावच्छेदकघटत्वाद्यपेक्षया गुरोर्घटप्रागभावत्वादेरत्यन्ताभावप्रतियोगितावच्छेदकतया जातित्वावच्छिन्नसमव्यापकतावच्छेदकतद्घट-

---

(१) प्रतियोगितानिरूपकाभावविरोधितानव्यवच्छेदकत्वरूपबाधकविरहादेवेत्यर्थः।

कसमवेतत्वाद्यपेक्षया गुरोर्जातित्वादेर्भेदप्रतियोगितावच्छेदकतया च व्यभिचारात्। ननु मेयधूमत्वं स्वावच्छिन्नधर्म्मिविशेषणतापन्नमेयत्वसहितधूमत्वं सामानाधिकरण्यसम्बन्धेन मेयत्वसहितधूमत्वं वा उभयथैव तदवच्छिन्नसाध्यके नातिव्याप्तिप्रसक्तिः शुद्धधूमत्वस्यावच्छेदकत्वे तादृशेऽनवच्छेदकताया दुर्घटत्वात् एकदेशपर्य्याप्तवृत्तेर्व्यासज्यवृत्तिधर्म्मावच्छिन्नानुयोगिताकाभावस्येव विशेष्यपर्य्याप्तवृत्तेर्विशिष्याणान्तरवैशिष्ट्यावच्छिन्नानुयोगिताकाभावानभ्युपगमात्, शुद्धवह्नित्वादौ धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वापर्य्याप्तेर्मेयवह्नित्वादौ तदनवच्छेदकत्वसौलभ्येन मेयवह्निमान् धूमादित्यादावव्याप्तिविरहादित्यरुचेः कम्बुग्रीवादिमत्त्वानुधावनं। न चैवं मेयधूमत्वावच्छिन्नसाध्यकेऽतिव्याप्त्यभिधानमत्यन्तासङ्गतमिति वाच्यं। व्यासज्यवृत्तिधर्म्मावच्छिन्नानुयोगिताकाभावाभ्युपगमेन नानाव्यक्तिदण्डाद्यवच्छिन्नस्य व्यापकतानिर्व्वाहाय प्रतियोगितावच्छेदकापर्य्याप्तविधेयतावच्छेदकतापर्य्याप्तिरनवच्छेदकान्तार्थ इत्याशयेन वा तदभिधानात्। कम्बुग्रीवादिमत्त्वञ्च घटत्वव्यञ्जकसंस्थानविशेषस्तस्य च घटत्वापेक्षया गौरवं संस्थानस्य विजातीयावयवसंयोगरूपस्यानन्त्यात् अनुगमकजातिविशेषसापेक्षत्वाच्च घटत्वस्य चैकजातिरूपस्य निर्व्विशेषणकस्यावच्छेदकत्वे लाघवादिति। न च घटसामान्याभावप्रतियोगितायां संस्थानविशेषणस्यानवच्छेदकत्वेऽपि तत्तत्संस्थानवदभावकूटप्रतियोगितासु प्रत्येकं तेषामवच्छेदकत्वमावश्यकं तत्रातिप्रसक्तस्य घटत्वस्यावच्छेदकत्वासम्भवादित्यनुगत-

रूपावच्छिन्नेष्वपि तेष्वनवच्छेदकत्वं दुर्घटमिति तदवच्छिन्नसाध्यके नातिव्याप्त्यवकाश इति वाच्यं। तत्तत्संस्थानवत्तत्तद्घटाभाव-प्रतियोगितायामपि घटनिष्ठतद्व्यक्तित्वस्यैव साक्षात्सम्बन्धेनाव-च्छेदकत्वसम्भवात् परम्परासम्बन्धेन स्वसमवायिसमवेतत्वात्मकेन तत्तत्संयोगानां गौरवेणानवच्छेदकतया तादृशसम्बन्धेन संस्थान-विशेषावच्छिन्नघटादिसाध्यके व्यभिचारिहेतावतिव्याप्तेर्दुर्व्वार-त्वात्। ननु मृत्पाषाणादिघटसाधारणं घटत्वं नैकं मृत्त्व-पाषाण-त्वादिना सङ्करप्रसङ्गादिति तत्तज्जातिव्याप्यं नानैव तथाच तथा-विधसकलघटानुगमकसंस्थानविशेषावच्छिन्नप्रतियोगितायां न स्वरूपतोघटत्वस्यावच्छेदकतासम्भवः न्यूनवृत्तित्वात् नाप्यनु-गमकरूपान्तरावच्छिन्नस्य, तादृशरूपान्तरप्रवेशेन गौरवादित्य-रुचेर्घ्राणग्राह्यगुणत्वानुधावनं, घ्राणग्राह्यत्वं घ्राणग्रहणयोग्यता गुणत्वन्यूनवृत्तिघ्राणग्राह्यजातिरूपा सा चातीन्द्रियेऽपि गन्धे इति न गन्धत्वस्य दर्शितरूपवत्सामान्याभावप्रतियोगितासम-नैयत्यानुपपत्तिः, तादृशयोग्यतामात्रस्योपादाने गन्धत्व सौरभ-त्वादिरूपायास्तस्याः स्वरूपतोहेतुसमानाधिकरणाभावप्रतियोगि-तावच्छेदकतया तादृशजातित्वावच्छिन्नाया अप्यनवच्छेदकत्वं दुर्लभमिति तद्विशेष्यतया गुणत्वनिवेशनं, द्रव्यत्वादिहेतुकस्थले च गुणत्वस्य शुद्धस्यापि हेतुसमानाधिकरणाभावप्रतियोगितावच्छेद-कत्वासम्भवाद्विशिष्टगुणत्वस्य गन्धत्वसमनियतस्य तादृशप्रतियोगि-तानवच्छेदकत्वमक्षतमेवेत्यतिव्याप्तिसङ्गतिः। अथवा घ्राणग्राह्य-गुणत्वं स्वाश्रयगुणत्वव्याप्यजातिमत्त्वसम्बन्धेन घ्राणजसाक्षात्कार-

विषयतावत्त्वमेव, गुणत्वव्याप्यजातिघटितसम्बन्धलाभाय गुणपदं न तु गुणत्वमपि विशेष्यतया विवक्षितं । एतेन गुणत्वस्य निरुक्त-जातित्वावच्छिन्नगन्धत्वादिविशेष्यतया विवक्षितत्वे स्वरूपतो गन्ध-त्वादेः गुणत्वविशेषणतायामप्यतिव्याप्तिसङ्गतेस्तादृशजातित्वाव-च्छिन्नस्य विशेषणत्वानुधावनं निर्व्वीजमिति दूषणमनवकाशं, घ्राणग्राह्यगुणत्वं यथाश्रुतमेव ग्राह्यगन्धत्वरूपलघुधर्म्मसमनियत-तया न प्रतियोगितावच्छेदकमित्यपि वदन्ति । यत्तु अनवच्छेदकत्वं अवच्छेदकाविषयकप्रतीतिविषयत्वं तथाचावच्छेदकताघटकसम्ब-न्धेन विशेष्यांशे अवच्छेदकप्रकारकप्रतीतिभिन्ना साध्यतावच्छेदकता-घटकसम्बन्धेन यादृशधर्म्मप्रकारिका प्रतीतिस्तादृशधर्म्मावच्छिन्न-सामानाधिकरण्यं व्याप्तिरिति पर्य्यवसितं, एवञ्च प्रमेयधूमत्वादि-प्रकारकप्रतीतेर्धूमत्वादिप्रकारकतानियमात् प्रमेयधूमत्वावच्छिन्न-साध्यकेऽतिव्याप्तिपरीहारः सम्भवति न तु निरुक्तघ्राणग्राह्य-गुणत्वाद्यवच्छिन्नसाध्यके, गन्धत्वादिकमविषयीकृत्य सुरभित्वादिकं सुरभित्वादिकमविषयीकृत्यापि च गन्धत्वादिकं विषयीकृत्य तादृ-शसाध्यतावच्छेदकप्रकारकप्रतीतिसम्भवादिति तन्न, तथासत्युक्तरी-त्या दण्डिमान्द्रव्यत्वादित्यादावतिव्याप्तिः प्रत्येकं सकलदण्डमविष-यीकृत्यैव दण्डत्वावच्छिन्नदण्डात्मकसाध्यतावच्छेदकप्रकारकप्रती-तिसम्भवात् । अथ प्रतियोगितावच्छेदकीभूता ये ये धर्म्मास्तत्तत्-प्रकारकप्रतीतिभेदकूटस्य साध्यतावच्छेदकप्रकारिकायामेव प्रतीतौ असत्त्वात् तथैव च लक्षणे विवक्षितत्वान्नेयमतिव्याप्तिरितिचेत्, तर्हि तादृशरीत्या निरुक्तघ्राणग्राह्यगुणत्वावच्छिन्नसाध्यकेऽपि

नातिव्याप्तेरवकाश इति। 'अतथात्वेन' प्रतियोगितानवच्छेदकत्वेन।

अनुमानदीधितिः।

नाप्यनतिरिक्तवृत्तित्वं प्रतियोगितायाः स्वरूपसम्बन्धात्मिकायाः प्रतिव्यक्तिभिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात्। नच तथाविधयत्किञ्चिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वं तत्, अतएवातिरिक्तसामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदकत्वापातादग्रे तत्साधनमपि साधु सङ्गच्छत इति वाच्यं। वह्नि-घटवृत्तिद्वित्व-तार्णातार्णदहनवृत्तिद्वित्वाद्यवच्छिन्नप्रतियोगिताकाभावप्रतियोगितानतिरिक्तवृत्तिवह्नित्वादावतिप्रसङ्गात्। एतेनान्यूनवृत्तित्वविशेषितमपि परास्तम्। अतएव नानाप्रतियोगिवृत्त्येकप्रतियोगिताङ्गीकारेऽपि न निस्तारः। लघुरूपसमनियतगुरुरूपेण साध्यतायां सद्धेतावव्याप्तिः तादृशतदवच्छिन्नत्वाप्रसिद्धेरितिचेन्न,

अनुमानदीधितिविवृतिः।

'अनतिरिक्तवृत्तित्वमिति स्वव्यापकतत्कत्वमित्यर्थः, तच्छून्यावृत्तित्वविवक्षणे समवायेन प्रमेयसाध्यके व्यभिचारिण्यतिप्रसङ्गात्

प्रमेयसामान्याभावप्रतियोगिताशून्याप्रसिद्धा प्रमेयत्वादेस्तादृशावच्छेदकत्वानिर्व्वाहात्, महानसीयत्वादिविशिष्टवह्नित्वाद्यवच्छिन्नसाध्यके धूमादौ वह्नित्वादेर्महानसीयवह्न्याद्यभावप्रतियोगिताशून्यवह्न्यन्तरवृत्तितया विशिष्टेऽपि तत्र तच्छून्यावृत्तित्वस्य दुर्घटतया अतिप्रसङ्गाच्च । सत्तावत्वान् मेयत्वादित्यादावतिव्याप्तिश्च तत्र सत्तावदभावप्रतियोगिताशून्ये साध्यतावच्छेदकताघटकसम्बन्धेन वृत्तेरप्रसिद्धेः, स्वव्यापकतत्त्वनिवेशने च विशिष्टस्याविशिष्टस्य वा यादृशस्यावच्छेदकत्वमभिमतं तादृशस्यैव स्वपदेनोपादेयतया विशिष्टवह्नित्वादिकं प्रति च विशिष्टवह्न्याद्यभावप्रतियोगिताया व्यापकत्वस्याक्षतत्वेन तादृशस्यावच्छेदकत्वोपपत्तेः । ईदृशं यद्यत् स्वं तत्त्वाभावकूटस्य च साध्यतावच्छेदकविशेषणता बोध्या अतः स्वत्वाननुगमेनैकसामान्याभावनिवेशासम्भवात् यत्किञ्चिदेकावच्छेदकनिष्ठावच्छेदकत्वाभावमादायातिप्रसङ्गस्य नावकाशः । नच स्वपदस्य तत्तद्व्यक्तिपरतया अवच्छेदकनिष्ठतत्तद्व्यक्तित्वमेव पर्य्यवसितं अवच्छेदकत्वं तथाच विशेषणावच्छिन्ननिष्ठतद्व्यक्तित्वस्यापि विशेष्यपर्य्याप्ततया विशिष्टवह्नित्वादेरवच्छेदकत्वे शुद्धस्याप्यनवच्छेदकत्वदुर्भिक्षमिति वाच्यं । शुद्धस्य विशेषणान्तरसहितस्य वा यादृशस्याधिकरणता प्रतियोगितानिष्ठव्यापकताशरीरनिविष्टा तादृशरूपपर्य्याप्तावच्छेदकतापर्य्याप्त्यनधिकरणत्वस्य साध्यतावच्छेदकविशेषणत्वोपगमात् मेयधूमत्वादिपर्य्याप्ताया अभावप्रतियोगितावच्छेदकताया अप्रसिद्धावपि तथाविधाया विषयताद्यवच्छेदकतायाः प्रसिद्धा अतिव्याप्त्यनवकाशात्,

महानसीयत्वादिसहितवह्नित्वादिपर्य्याप्तावच्छेदकतायाः शुद्ध-वह्नित्वादावपर्य्याप्तत्वाद्विशिष्टवह्न्याद्यभावमादाय दोषानवका-शात् । अत्र यदि हेतुसमानाधिकरणाभावप्रतियोगितासामान्या-नतिरिक्तवृत्तित्वं निवेश्यते तदा निखिलवह्न्यादेरेव धूमादि-समानाधिकरणविशेषाभावप्रतियोगितया वह्नित्वादेरपि स्वव्याप-कतावच्छेदकताद्दशप्रतियोगितात्वकत्वरूप-ताद्दशप्रतियोगितासा-मान्यानतिरिक्तवृत्तित्वेन तथाविधप्रतियोगितावच्छेदकत्वानुपप-त्तिरिति ताद्दशयत्किञ्चिदेकप्रतियोगितानतिरिक्तवृत्तित्वं स्वस-मानाधिकरणभेदप्रतियोगितानवच्छेदकताद्दशप्रतियोगिताकत्वरूपं निवेशनीयं तथा सति धूमवान्वह्नेरित्यादौ धूमत्वादेरपि ताद्दशा-वच्छेदकत्वं न स्यात् धूमादिसामान्याभावप्रतियोगिताया अपि धूमादिस्वरूपतया प्रतिधूमादिकं भिन्नत्वेन प्रत्येकं धूमत्वादिसमा-नाधिकरणभेदप्रतियोगितावच्छेदकत्वादिति तत्तद्धूमत्वादेरेव तथात्वादतिव्याप्तिरित्याह, 'प्रतियोगिताया इति, 'स्वरूपसम्बन्धा-त्मिकाया इति प्रतिव्यक्तिभेदप्रयोजकहेतुगर्भविशेषणं, अतिरिक्त-पदार्थरूपप्रतियोगितायाः सिद्धान्तविरुद्धत्वादिति भावः । ताद्दश-प्रतियोगितासामान्यानतिरिक्तवृत्तित्वनिवेशे हेतुसमानाधिकरणा-भावत्वेन ताद्दशाभावनिवेशन एव पूर्व्वोक्तदोषः (१) न तु ताद्दशा-भावस्य प्रातिस्विकरूपेण विवेशने तत्तद्विशेषाभावप्रतियोगितात्वस्य वह्नित्वादिव्यापकतानवच्छेदकत्वादित्याशयेनाशङ्कते, 'नचेति,

---

(१) वह्निमान् धूमादित्यादावव्याप्तिरूपो दोष इत्यर्थः ।

'तथाविधेति तादृशप्रतियोग्यनधिकरणहेतुमद्वृत्तीत्यर्थः, 'यत्किञ्चित्पदं तत्तद्व्यक्तित्वेनाभावनिवेशलाभाय, प्रत्येकस्यापि तथाविधाभावस्य सकलस्य नैकत्रावच्छेदकत्वघटकता किन्त्वेकैकस्यैवेति स्फोरणाय 'एकपदं', तादृशप्रतियोगितासामान्यशून्यावृत्तित्वं स्वव्यापकतावच्छेदकतादृशप्रतियोगितात्वकत्वमतोन पूर्व्वोक्तदोषः । 'अतएव' इदृशावच्छेदकत्वस्य मूलाभिप्रेतत्वादेव, 'अतिरिक्तेति सामान्याभावस्य विशेषाभावकूटातिरिक्तत्वानभ्युपगम इत्यर्थः, 'धूमत्वादेरपीति, विशेषाभावकूटान्तर्गतमेकमभावमुपादाय धूमत्वादौ निरुक्तावच्छेदकत्वोपादानासम्भवादितिभावः । 'तत्साधनमिति सामान्याभावस्यातिरिक्तत्वव्यवस्थापनमितर्थः,'सङ्गच्छत इति स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशे विशेषाभावकूटातिरिक्तसामान्याभावानभ्युपगन्तृमतेऽपि विशेषाभावीयप्रतियोगिताकूटस्यैव सामान्यधर्म्मावच्छिन्नतया धूमत्वादेरपि वह्न्यादिसमानाधिकरणधूमादिविशेषाभावप्रतियोगितावच्छेदकत्वेनातिव्याप्त्यप्रसक्त्या सामान्याभावपार्थक्यव्यवस्थापनस्य तल्लक्षणप्रस्तावे अनुपयुक्ततापत्तेरितिभावः । नचातिरिक्तसामान्याभावाभावे उक्तरीत्या अतिव्याप्तिविरहेऽपि य एव वह्न्यभावाद्धृदादौ वह्निर्नास्तीतिबुद्धिं जनयन्ति प्रत्येकं धूमसमानाधिकरणानां तेषां प्रतियोगितावच्छेदकत्वं वह्नित्वेऽप्यस्तीत्यव्याप्तिर्दुर्वारैवेति तत्साधनसङ्गत्या उपष्टम्भासङ्गतिरिति वाच्यं । हेत्वधिकरणवृत्तित्वावच्छेदेन यादृशधर्म्मावच्छिन्नत्वविशिष्टप्रतियोगिताकत्वं अभावे तादृशत्वस्य साध्यतावच्छेदकविशेषणतां स्वीकृत्य तादृशाव्याप्तेर्वारणसम्भवात्, न हि धूमाधि-

करणवृत्तित्वावच्छिन्ने विशेषाभावे वह्नित्वावच्छिन्नप्रतियोगिताकत्वं, धूमवति वह्निर्नास्तीत्यप्रत्ययात् अपि तु यावद्विशेषाभावाधिकरणह्रदादिवृत्तित्वावच्छिन्न एवेति। इदमापाततः तथाविधाभावीययत्किञ्चिदेकधर्म्मावच्छिन्नप्रतियोगितासामान्यानतिरिक्तवृत्तित्वं निवेश्यानतिरिक्तवृत्तिताक्रूपावच्छेदकताविवक्षापक्षेऽपि धूमत्वादेरवच्छेदकत्वस्य सामान्याभावानतिरिक्ततामते शक्योपपादनत्वात् हेत्वधिकरणवृत्तित्वावच्छिन्ने यद्धर्म्मावच्छिन्नत्वविशिष्टप्रतियोगिताकत्वं तद्धर्म्मावच्छिन्नप्रतियोगितासामान्यानतिरिक्तवृत्तित्वं निवेश्यानतिरिक्तवृत्तित्वरूपावच्छेदकताविवक्षया अव्याप्तेरपि शक्यवारणत्वात्, वह्नित्वस्य वह्नि-घटोभयत्वावच्छिन्नाभावप्रतियोगितानतिरिक्तवृत्तित्वेऽपि न्यूनवृत्तितया अन्यूनानतिरिक्तवृत्तित्वविवक्षया तादृशप्रतियोगितामादाय दूषणस्योद्धारः सम्भवतीति तार्णातार्णदहनोभयत्वावच्छिन्नाभावप्रतियोगितानुसरणं,'अतिप्रसङ्गात्' धूमादिसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रसङ्गात्, तार्णातार्णदहनोभयाभावानुसरणप्रयोजनं स्वयमेव स्फुटयति, 'एतेनेति तार्णातार्णदहनोभयाभावप्रतियोगितामादायातिप्रसङ्गतादवस्थ्येन, 'अन्यूनवृत्तित्वविशेषितमपि' अन्यूनवृत्तित्वविशेषितमनतिरिक्तवृत्तित्वमपि, 'अतएव' दर्शितोभयाभावमादाय वह्नित्वादावतिप्रसङ्गादेव, 'नानाप्रतियोगिवृत्तेरेकप्रतियोगिताङ्गीकारेऽपीति, तथासति यत्किञ्चिदेकाभावप्रतियोगितासामान्यपर्य्यन्तानिवेशेऽपि धूमत्वादेर्धूमादिसामान्याभावप्रतियोगितावच्छेदकत्वोपपादनसम्भवात् इति भावः। उभयत्वादिरूपव्यासज्य-

वृत्तिधर्मावच्छिन्नप्रतियोगितायाः प्रत्यक्षमपि प्रतीतेरव्यासज्य-वृत्तितया स्वपर्य्याप्त्यधिकरणपर्य्याप्तत्वं प्रतियोगितायां निवेश्यापि वह्नित्वादावतिप्रसङ्गवारणासम्भव इत्यवधेयं । प्रतियोगिता-धर्म्मिकोभयाभावघटितव्याप्तिपक्षे मेयधूमवान् वह्नेरित्यादावति-व्याप्तिर्न सम्भवति साध्यतावच्छेदकमेयधूमत्वादिरूपगुरुधर्म्माव-च्छिन्नत्वस्य कुत्रापि प्रसिद्धिविरहेण तद्घटितोभयाभावा-प्रसिद्धेरिति तन्मते मेयवह्निमान् धूमादित्यादावव्याप्तिमाह, 'लघु-रूपेति, 'तादृशतदवच्छिन्नत्वाप्रसिद्धेरिति तादृशसाध्यतावच्छेद-कावच्छिन्नत्वाप्रसिद्धेरित्यर्थः, विषयितासम्बन्धस्य वृत्त्यनियामक-त्वेनाभावप्रतियोगितानवच्छेदकतया तादृशसम्बन्धावच्छिन्नाभाव-प्रतियोगितायां तत्प्रसिद्धिरित्यस्य वक्तुमशक्यत्वात् अन्यथा मेय-धूमवान्वह्नेरित्यादावतिव्याप्तेरेव तादवस्थ्यात् इति भावः ।

---

अनुमानदीधितिः ।

प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विव-क्षितत्वात् । स्वसमानवृत्तिकस्यावच्छेदकं ग्राह्यं तत्त्वञ्च स्वपर्य्याप्त्यधिकरणपर्य्याप्तिवृत्तिकत्वं, यावत्त्वादिकन्तु न तथा, पर्य्याप्तिश्चायमेकोघट इमौ द्वाविति प्रतीति-साक्षिकः स्वरूपसम्बन्धविशेष एव, द्वित्वादिकमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः, घटकस्यावच्छेदकत्वं स्वरूपसम्बन्धविशेषः,

एवञ्च यद्धर्म्मावच्छिन्नेत्यत्र यद्धर्म्मान्यूनवृत्तिधर्म्मावच्छिन्नेति वक्तव्यं तेनोक्ताव्याप्तिनिरासः।

---

अनुमानदीधितिविवृतिः।

'प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्येति, तथाच धूमादिसामान्याभावप्रतियोगितायाः प्रतिधूमादिकं भिन्नत्वेऽपि तत्प्रतियोगितावच्छेदकधूमत्वादेरैक्येन स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकतत्कत्वाद्यात्मकस्वव्यापकतत्कत्वरूपं तदनतिरिक्तवृत्तित्वं धूमत्वादावक्षतमेवेति भावः। न च प्रतियोगितायाः प्रतियोगिस्वरूपतामते सामान्याभावप्रतियोगितायाः विशेषाभावप्रतियोगितातो न भेदः प्रतियोगिनामभेदात् तथाच वह्निमान् धूमादित्यादावव्याप्तिर्दुर्व्वारा धूमसमानाधिकरणविशेषाभावप्रतियोगिताकूटे वह्नित्वादेरवच्छेदकत्वात्तस्य च तदनतिरिक्तवृत्तित्वादिति वाच्यं। सामान्याभाव-विशेषाभावयोः प्रतियोगित्वाभेदेऽपि सामान्याभावीयप्रतियोगितात्वेनैव सामान्यधर्म्मावच्छेद्यत्वात् हेतुसमानाधिकरणाभावप्रतियोगितात्वावच्छिन्नावच्छेदकानतिरिक्तवृत्तित्वविवक्षणेनाव्याप्तिनिरासात् स्वव्यापकतत्कत्वमित्यत्र स्वस्य व्याप्यता साध्यतावच्छेदकताघटकसम्बन्धेन, प्रतियोगितावच्छेदकस्य व्यापकता प्रतियोगितावच्छेदकताघटकसम्बन्धेन बोध्या तेन सम्बन्धसामान्येन धूमत्वादिकं प्रति समवायादिना धूमत्वादेरव्यापकत्वेऽपि समवायादिना वह्नित्वं प्रति कालिकादिसम्बन्धेन घटत्वादेर्व्यापकत्वेऽपि च न क्षतिः। दण्ड-

मान् द्रव्यत्वादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगिताच्छेद-
कोकदण्डादौ दण्डाद्यन्तरसमानाधिकरणभेदप्रतियोगितावच्छेद-
कत्वेऽपि तत्तद्दण्डादिसमानाधिकरणाभावप्रतियोगितानवच्छेदक-
त्वस्याक्षततया सर्व्वत्रैव दण्डादिव्यक्तौ प्रतियोगितावच्छेदका-
नतिरिक्तवृत्तित्वमव्याहतमिति नातिव्याप्तिः दण्डाद्यवच्छिन्नसाध्य-
कसद्धेतावीदृशरीत्या अव्याप्तिरिति तु नाशङ्कनीयं दण्डत्वादौ साध्ये
परम्परासम्बन्धेनाखण्डस्य दण्डत्वादेरेव साध्यतावच्छेदकतायाः
स्वीकृतत्वात्। नन्वेवमपि हेतुसमानाधिकरणाभावप्रतियोगिताव-
च्छेदकवह्नि-घटोभयत्वाद्यनतिरिक्तवृत्तितया वह्नित्वादेरवच्छेद-
कत्वं दुर्व्वारमेव। न चोभयत्वादेरुभयादिपर्य्याप्ततया प्रत्येकं
तदत्यन्ताभावस्तदवच्छिन्नभेदश्च वर्त्तते अयमेकोन द्वाविति
सर्व्वजनसाधारणानुभवस्य दुरपह्नवत्वात् तादृशप्रतीतेरेकत्वादौ
द्वित्वाद्यवच्छेदकत्वाभावावगाहित्वोपगमे मूलावच्छिन्नो वृक्षो न
कपिसंयोगीत्यादिप्रतीतेरपि मूलादौ कपिसंयोगाद्यवच्छेदकत्वा-
भावावगाहितास्वीकारापत्तेः। यदि तत्र बाधकाभावात्
वृक्षाद्यधिकरणककपिसंयोगाद्यभावो विषयस्तदा प्रकृतेऽपि एक-
त्वाद्यवच्छिन्नाधिकरणकद्वित्वाभावादिविषयकत्वं दुर्व्वारमेव
एकत्वावच्छिन्ने द्वित्वादिमत्ताप्रत्ययानुदयेन बाधकविरहस्य तुल्य-
त्वात् प्रत्येकमुभयादौ द्वित्वाभावादिसत्त्वेऽपि द्वित्वादेर्द्वित्वा-
भावाद्यनुयोगितानवच्छेदकतया द्वौ न द्वाविति प्रतीतेर्दुरपवाद-
त्वात् द्वित्वादिसामानाधिकरण्यमात्रेण तदभावप्रत्ययस्य चेष्ट-
त्वात् नञ्पदेनान्वयितावच्छेदकावच्छेदेनाभावबोधनात् द्वित्वादि-

सामानाधिकरण्यमात्रावगाहिन्या अभावप्रतीतेः द्वौ न द्वावित्या-द्याकारकताविरहात् तदाकारकप्रतीतेरेव चानुभवविरुद्धत्वात् तथाच द्वित्वाद्यनतिरिक्तवृत्तिता कथं वह्नित्वादेरिति वाच्यं। एवं सति वह्नि-घटोभयवान् धूमादित्यादौ साध्यतावच्छेदकद्वित्वादे-रवच्छेदकताया दुरपवादत्वात् तत्र प्रतियोगितावच्छेदकपदेन तादृशद्वित्वादिकमुपादायैव तस्यावच्छेदकानतिरिक्तवृत्तित्वस्य सम्पाद्यत्वात् तस्य चोक्तरीत्या असम्भवादिति स्वव्यापकतत्कत्व-रूपतदनतिरिक्तवृत्तित्वघटकव्यापकतायां प्रतियोगिताव्यधि-करणभेदस्य निवेशनीयतया उभयत्वादावपि वह्नित्वनिरूपित-तादृशव्यापकताया अक्षतत्वेन तदवच्छेदकताप्रसङ्गस्य दुर्वार-त्वात्। न हि प्रत्येकवृत्तिरुभयत्वाद्यवच्छिन्नभेदः प्रतियोगिता-व्यधिकरणः, उभयत्वादेर्व्यासज्यवृत्तित्वेऽपि तदवच्छिन्नप्रतियोगि-ताया अव्यासज्यवृत्तितया प्रत्येकमुभयत्वाद्यनधिकरणतावत् तदव-च्छिन्नभेदप्रतियोगितानधिकरणत्वस्यासम्भवात् इत्याशङ्क्या प्रति-योगितावच्छेदकानतिरिक्तवृत्तित्वघटकमवच्छेदकं स्वसमानवृत्ति-कत्वेन विशेषयति, 'स्वेति, तथाच वह्नि-घटोभयत्वादेर्वह्नि-त्वादिसमानवृत्तिकताविरहाद्वह्नित्वादेस्तदनतिरिक्तवृत्तित्वेऽपि न पारिभाषिकावच्छेदकतापत्तिरिति भावः। व्यापकताशरीरे स्व-समानाधिकरणत्वस्य स्वाधिकरणतावच्छेदकावच्छिन्नाधिकरणता-कत्वरूपस्याभावविशेषणत्वोपगमे तु द्वित्वाद्यधिकरणस्य प्रत्येकं द्वित्वाद्यवच्छिन्नभेदाद्यधिकरणत्वेऽपि द्वित्वादेर्द्वित्वादिव्यापकत्वं भेदे प्रतियोगितावैयधिकरण्यमनिवेश्यैवोपपादयितुं शक्यमिति

स्वसमानवृत्तिकत्वनिवेशनमयुक्तं। न चाव्याप्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्याव्याप्यवृत्तितामते संयोगेन दण्डादेर्यत्र साध्यतावच्छेदकता तत्र व्यभिचारिहेतुके हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकदण्डादिकमादाय दण्डादिरूपसाध्यतावच्छेदके पारिभाषिकावच्छेदकत्वं व्यापकताशरीरे प्रतियोगितावैयधिकरण्याप्रवेशे न स्यादिति वाच्यं। अव्याप्यवृत्तिदण्डादिकमादाय दण्डादेः परिभाषिकावच्छेदकत्वासम्भवेऽपि व्यभिचारनिरूपकाधिकरणयत्किञ्चिद्व्यक्त्यवृत्तित्वरूपं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमादाय दण्डादेः साध्यतावच्छेदकस्य तथात्वोपपादनसम्भवात् तदवृत्तौ साध्ये तदवृत्तित्वावच्छिन्नभेदस्य कथमप्यसम्भवादिति ध्येयं। ननु किमिदं समानवृत्तिकत्वं, यद्यन्यूनानतिरिक्तवृत्तित्वं तदा अनतिरिक्तवृत्तित्वान्तरनिवेशवैफल्यं स्वान्यूनवृत्ति यद्यत्तदनतिरिक्तवृत्तित्वस्य स्वस्मिन्नियतत्वात् तार्णातार्णदहनोभयत्वादिकमादाय दहनत्वादेरवच्छेदकत्वापत्तिश्च दुर्वारा, यदिचैकजातीयवृत्तिकत्वमेव तत् तच्च स्वनिष्ठव्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वान्यतररूपवत्त्वं द्वित्वादौ च वह्नित्वादेर्नैतादृशं समानवृत्तिकत्वं वह्नित्वादेरव्यासज्यवृत्तित्वात् इत्युच्यते तदापि वह्नि-धूमोभयवान् धूमादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकवह्नि-धूमघटत्रित्वाद्यनतिरिक्तवृत्तितया साध्यतावच्छेदकद्वित्वादेः पारिभाषिकावच्छेदकतापत्तिदुर्वारैव द्वित्व-त्रित्वाद्योरुभयोरेव व्यासज्यवृत्तितया निरुक्तसमानवृत्तिकत्वस्य सूपपादत्वादित्यत आह,

'तत्त्वञ्चेति स्वसमानवृत्तिकत्वञ्चेत्यर्थः, वह्निनिष्ठयावत्व-ताप्रतीतार्थो-भयत्वादिकमादाय वह्नित्वादावतिप्रसङ्गाभावं स्फुटयति, 'याव-त्त्वादिकमिति, 'आदिना दर्शितद्वित्वादिपरिग्रहः, 'न तथा' न स्वपर्य्याप्त्यधिकरण-पर्य्याप्तत्वरूप-वह्नित्वादिनिरूपितसमानवृत्ति-कत्ववत्, वह्नित्वादेः प्रत्येकवह्न्यादौ पर्य्याप्तत्वात् तस्य चा-तथात्वादिति शेषः, तथाच यावत्त्वादेर्धूमादिसमानाधिकरणा-भावप्रतियोगितावच्छेदकत्वे वह्नित्वाद्यन्यूनानतिरिक्तवृत्तित्वेऽपि च न क्षतिरिति भावः। ननु पर्य्याप्तिराश्रयत्वमेव तथाच वह्नि-त्वादिसमानाधिकरणयावत्त्वादेर्वह्नित्वादिपर्य्याप्त्यधिकरणपर्य्याप्त-त्वमक्षतमेवेत्यत आह, 'पर्य्याप्तिश्चेति अयमेक इत्यनेन अव्या-सज्यवृत्तिघटत्व-वह्नित्वादीनां प्रत्येकमेव पर्य्याप्तिरिति दर्शितं। 'इमौ द्वाविति प्रतीतिकथनेन व्यासज्यवृत्तिद्वित्वादीनां न प्रत्येकं पर्य्याप्तिः तथा सति अयमेको द्वावित्यादिप्रतीत्यापत्तेरिति दर्शितं। यद्यपि समुदायपर्य्याप्तत्वेऽपि तदेकदेशप्रत्येकपर्य्याप्तत्व-मनपवादं समुदायस्यैकदेशानतिरिक्तत्वादिति यावत्त्वादेर्वह्नित्वादि-पर्य्याप्त्यधिकरणप्रत्येकवह्निपर्य्याप्तत्वं दुर्व्वारं, तथापि स्वपर्य्याप्त्यव-च्छेदकावच्छिन्नपर्य्याप्तिकत्वमत्र विवक्षितं इति न दोषः, व्यास-ज्यवृत्त्यव्यासज्यवृत्त्योः समानजातीयवृत्तिकधर्म्मावच्छिन्नपर्य्याप्त-योरेकधर्म्मिणि पर्य्याप्तिसत्त्वेऽप्येकधर्म्मावच्छिन्नेऽपर्य्याप्तेः अन्यथा अयमेको वह्निरितिवदयमेको यावानिति प्रतीत्यापत्तेर्दुर्व्वारत्वात्। अथ घटावित्यादौ यदि घटत्वादिसामानाधिकरण्यमात्रेण द्वित्वादिपर्य्याप्तिर्भासते तदा आकाशावित्याद्याकारकप्रतीतिरपि

प्रमात्वापर्य्याप्तिराकाशत्वादिसामानाधिकरण्येनात्माकाशोभयत्वादि-
पर्य्याप्तिसत्त्वात् अतस्तत्र धर्म्मितावच्छेदकघटत्वाद्यवच्छिन्न-
पर्य्याप्तेरेव विषयत्वमङ्गीकार्य्यं तथाचाव्यासज्यवृत्तेरपि द्वित्वादि-
पर्य्याप्त्यवच्छेदकत्वमायातमिति व्यासज्यवृत्तिधर्म्मस्याव्यासज्यवृत्ति-
समानवृत्तिकत्वं दुर्व्वारमेव। नचानेकवृत्तेरपि व्यासज्यवृत्तिधर्म्म-
पर्य्याप्त्यवच्छेदकत्वमास्तां तादृशधर्म्मस्य च नाव्यासज्यवृत्ति-
पर्य्याप्त्यवच्छेदकत्वं किन्त्वेकमात्रवृत्तेरेवेतिति न व्यासज्यवृत्त्य-
व्यासज्यवृत्त्योरेकधर्म्मावच्छिन्नपर्य्याप्तत्वप्रसङ्ग इति वाच्यं। घटो-
द्रव्यमित्यादिप्रतीत्या तथाविधघटत्वाद्यवच्छेदेन द्रव्यत्वादि-
पर्य्याप्त्यवगाहनादेकमात्रवृत्तेरेवाव्यासज्यवृत्तिधर्म्मपर्य्याप्त्यवच्छेद-
कत्वमित्युक्त्यसम्भवात्, तत्र घटत्वादिसामानाधिकरण्यमात्रेण
द्रव्यत्वादिपर्य्याप्तिर्भासते न तु तदवच्छेदेनेत्युक्तौ अयमेको घट-
इत्यादावपि इदन्त्वादौ घटत्वादिपर्य्याप्त्यवच्छेदकताभाने विवाद-
सम्भवेनाव्यासज्यवृत्तिधर्म्मपर्य्याप्तेरवच्छिन्नत्वस्यैवाप्रसिद्धिप्रसङ्गाद्धूम-
त्वादिपर्य्याप्त्यवच्छेदकाप्रसिद्ध्या तत्रावच्छेदकलक्षणाव्याप्तिप्रस-
ङ्गात्। न च स्वपर्य्याप्त्यवच्छेदकताव्यापकावच्छेदकताकपर्य्याप्ति-
कत्वमेव विवक्षणीयं अव्यासज्यवृत्तिपर्य्याप्त्यवच्छेदकैकमात्रवृत्ति-
धर्म्मे व्यासज्यवृत्तिपर्य्याप्त्यवच्छेदकताविरहान्न तस्या अव्यासज्य-
वृत्तिपर्य्याप्त्यवच्छेदकताव्यापकत्वमिति व्यासज्यवृत्त्यव्यासज्य-
वृत्त्योर्न समानवृत्तिकता इति वाच्यं। एवं सत्यनतिरिक्तवृत्ति-
त्वनिवेशवैफल्यापत्तेः न्यूनवृत्तिमहानसीयवह्नित्वादिपर्य्याप्त्यव-
च्छेदकताव्यापकताविरहेणैव तादृशधर्म्ममुपादाय वह्नित्वादेरव-

च्छेदकतापत्त्यसम्भवादिति चेन्न, अनेकवृत्तिघटत्वादेर्हि तत्तद्-घटत्वादिरूपैकमात्रवृत्तिधर्म्मावच्छिन्नपर्य्याप्तिकूटस्य घटनिष्ठपर्य्या-प्तित्वादिरूपानुगतरूपावच्छिन्नावच्छेदकत्वमेवापेयते न तु घटत्वा-द्यवच्छिन्नं द्रव्यत्वादेर्यावद्घटादिषु पर्य्याप्त्यन्तरं मानाभावात्, एवञ्च एकमात्रवृत्तिधर्म्मावच्छिन्नाया: पर्य्याप्तेरवच्छेदकस्यैव विव-क्षणीयतया अनुगतरूपावच्छिन्नपर्य्याप्तिकूटावच्छेदकानेकवृत्ति-धर्म्मावच्छिन्नपर्य्याप्तिमादाय व्यासज्यवृत्तेर्नाव्यासज्यवृत्तिधर्म्मस-मानवृत्तिकतापत्तिरिति। न च कालाकाशावित्यादिप्रतीत्या एकमात्रवृत्तिकालत्वाकाशत्वादेरपि द्वित्वादिपर्य्याप्त्यवच्छेदक-त्वावगाहनादेकमात्रवृत्तिधर्म्माणामपि व्यासज्यवृत्तिधर्म्मपर्य्याप्त्य-वच्छेदकतया तस्याव्यासज्यवृत्तिधर्म्मसमानवृत्तिकत्वं दुर्व्वार-मेवेति वाच्यं। तादृशप्रतीत्या तथाविधधर्म्मद्वयादौ व्यासज्य-वृत्तेरेव द्वित्वादिपर्य्याप्त्यवच्छेदकताया अवगाहनात् प्रकृते चा-व्यासज्यवृत्त्यवच्छेदकताया एव निवेशनेनातिप्रसङ्गविरहात्। अत्राहु:, अव्यासज्यवृत्तिघटत्वादीनां पर्य्याप्त्याख्यसम्बन्धान्तरे मानाभाव: समवायादिसम्बन्धेनैवोपपत्ते:। न च समवायस्यैक्येन पटादावपि घटत्वादिबुद्धिप्रसङ्ग इति प्रतिनियतप्रतियोगिकपर्य्याप्ति-सम्बन्धस्वीकार इति वाच्यं। प्रतिनियतप्रतियोगिकैकविध-सम्बन्धेनैवोपपत्तेर्द्विविधसम्बन्धसिद्धे: कथमप्यसम्भवात्, एवं द्वित्वा-देरपि पर्य्याप्ति-समवायादिरूपसम्बन्धद्वयकल्पनमयुक्तं अनेकवृत्ति-धर्म्मावच्छिन्नैकविधसम्बन्धेणैव निर्व्वाहात्। न चायमेको द्वित्व-सम्बन्धीति प्रतीतेरेकमात्रवृत्तिधर्म्मावच्छेदेनापि द्वित्वादे: सम्बन्धा-